सागरौघनिभं भीममग्रानीकं महाबलाः ।
कपिसिंहाः प्रकर्षन्तु शतशोऽथ सहस्रशः ॥ ११

गजश्च गिरिसंकाशो गवयश्च महाबलः ।
गवाक्षश्चाग्रतो यान्तु गवां दृप्ता इवर्षभाः ॥ १२

यातु वानरवाहिन्या वानरः प्लवतां पतिः ।
पालयन्दक्षिणं पार्श्वमृषभो वानरर्षभः ॥ १३

गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः ।
यातु वानरवाहिन्याः सव्यं पार्श्वमधिष्ठितः ॥ १४

यास्यामि बलमध्येऽहं बलौघमभिहर्षयन् ।
अधिरुह्य हनूमन्तमैरावतमिवेश्वरः ॥ १५

अङ्गदेनैष संयातु लक्ष्मणश्चान्तकोपमः ।
सार्वभौमेन भूतेशो द्रविणाधिपतिर्यथा ॥ १६

जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ।
ऋक्षराजो महासत्त्वः कुक्षिं रक्षन्तु ते त्रयः ॥ १७

राघवस्य वचः श्रुत्वा सुग्रीवो वाहिनीपतिः ।
व्यादिदेश महावीर्यान्वानरान्वानरर्षभः ॥ १८

ते वानरगणाः सर्वे समुत्पत्य युयुत्सवः ।
गुहाभ्यः शिखरेभ्यश्च आशु पुप्लुविरे तदा ॥ १९

G. 5. 73. 31
B. 6. 4. 22
L. 5. 71. 21

युध्यन्ते तेषामेव नान्येषामित्यर्थः । विक्रमेणोपयुज्यतामिति पाठे विक्रमेणोपयुज्यमानानाम् । विक्रमयुक्तानामित्यर्थः । क्रियापदत्वे संप्रधारणायां लोट् वेदितव्यः. ❀ ]

11 $^{a}$) Ñ2 वारणौघ- (for सागरौघ-). Ñ V1.3 B D1.4.9 घोरम् (for भीमम्).—$^{b}$) Ś1 Ñ1 D12 अथानीकं; B4 D8 G3 उग्रा°; D7 महा°; T2 अग्रेनीकं (for अग्रा°). —D9 om. (hapl.) $11^{c}$ – $12^{b}$.—$^{d}$) Ś1 Ñ V1.3 B D1–4.8.12 सर्वे(Ñ2 V1.3 B सिंहाः) कुक्षिं गिरेरिव(Ś1 Ñ1 D1.3.4.8.12 °रपि; D2 °गिरे [sic]).

12 D9 om. $12^{ab}$ (cf. v.l. 11).—$^{a}$) Ñ2 V1 B गयश्च. Ś1 Ñ1 D1–4.8.12 गज- (for गिरि-).—$^{b}$) Ñ1 बलोत्कटैः (sic) (for महाबलः). Ś1 D1–4.8.12 शरभ(Ś1 °भा)श्च रणोत्कटः(Ś1 °टाः).—$^{c}$) Ś1 D12 गवयश् (for गवाक्षश्). Ś1 Ñ V1.3 B3.4 D1-4.6-8.10–12 T1 G1 Ct यातु (for यान्तु).—$^{d}$) Ś1 D3.12 वृष; Ñ1 D1.2.4.8 पृष्ठ; V1 B3 D10.11 M3 Ct दृप्त; V3 D9 दृष्ट्वा (for दृप्ता). Ś1 Ñ1 D1–4.8.10–12 Ct इवर्षभः; Cg as in text.

13 $^{a}$) Ś1 Ñ1 D1–4.8.12 वीरो (for यातु). D4 G3 -वाहिन्यां.—Ś1 Ñ1 om.(hapl.) $13^{b}$ – $14^{c}$. D12 reads erroneously $14^{d}$ (see var.) in place of $13^{b}$, repeating it in its proper place.—$^{b}$) M5 वानरौघवतां. T1 M3 वरः (for पतिः). Ñ2 V1.3 B2.3 D9 वानरौघवृतः (B3 °पतिः) कपिः; B1.4 वानरो वै महाकपिः(B4 °बलः); D1.2.4.8 G1 वानरौघवता यथा(G1 °समावृतः); D3 वीरांश्चैव प्रहर्षयन्.—$^{c}$) D1 बलेन; D2.4.8.12 बलस्य; D3 सैन्यस्य; T3 प्लावयन् (for पालयन्).—$^{d}$) D2–4.8.12 परि(D3 चैव)रक्षतु.

14 Ś1 Ñ1 D4 om. $14^{abc}$ (for Ś1 Ñ1, cf. v.l. 13). —$^{a}$) D1.7 च (for [इ]व).—$^{c}$) G1 पातु (for यातु). —$^{d}$) Ś1 Ñ1 D1–4.8.12 वामं (for सव्यं). Ñ1 D1.2.4.8 अनुष्ठितः; Ñ2 V1.3 B D3.9 अव(V3 D3 उप)स्थितः (for अधिष्ठितः).

15 $^{b}$) Ś1 Ñ V1 B D1–4.8.9.12 अनु(Ñ2 V1 B1–3 °भि; B4 परि)पालयन्; V3 °चोदयन् (for अभिहर्षयन्). —$^{d}$) T2 गवां पतिम् (for ऐरावतम्). Ś1 Ñ1 D1–4.8.12 ऐरावणमिवारि(D1.4 °द्रि)हा.

16 T2 om. $16^{ab}$.—$^{a}$) D7 G2.3 M5 [ए]व (for [ए]ष).—For $16^{ab}$, Ś1 Ñ V1.3 B D1–4.8.9.12 subst.:

60* अङ्गदं चाधिरूढश्च लक्ष्मणोऽनन्तरं मम ।

[B4 तु (for च). Ś1 Ñ1 D1.2.4.8.12 अंगदेने(D1.4 °दस्ये)पुमात्रेण; D3 अंगदेन कुमारेण (for the prior half). D8 तथा (for मम). B4 यात्वनंतरं (for ऽनन्तरं मम).]

—$^{c}$) Ś1 Ñ V1 D1–4.8.12 भूतयानेन (for सार्वभौमेन). D5 T1 M5 नागेन; D6 T2 करिणा (for भूतेशो).

17 $^{a}$) Ñ1 युवराजः; D3 स जांबवान् (for जाम्बवांश्च).—$^{b}$) B4 राघवः(sic) (for वानरः). D3 वेगवान्दृश वानराः.—$^{c}$) Ś1 Ñ1 D1–4.8.12 च(D4 तु) दुर्धर्षः; Ñ2 V1.3 B D9 महात्मा च; D7.10.11 °बाहुः (for महासत्त्वः).—$^{d}$) Ś1 Ñ1 D1–4.8.12 कक्षां; Ñ2 V1.3 B1.3.4 D9 पृष्ठं (for कुक्षिं). Ś1 D1–4.8.12 मे स्वयं; Ñ1 मे सुखं; Ñ2 V1.3 B1–3 D9 नस्त्रयः (for ते त्रयः).—After 17, Ś1 Ñ1 D1–4.8.12(l. 1 only) ins.:

61* यदि मे सागरो मार्गं प्रस्थितस्य न दास्यति ।
ममास्त्रबलनिर्दग्धो भविष्यत्यपरो मरुः ।

[(l. 2) Ś1 परो; Ñ1 महा- (for [अ]परो).];

while D7 ins. after 17:

62* पश्चार्धमिव लोकस्य प्रचेतास्तेजसा वृतः ।
जघनं कपिसेनायाः कपिराजोऽभिरक्षतु ।

18 Ś1 Ñ1 D1–4.8.12 om. 18.—$^{b}$) G1 om. सुग्रीवो.—$^{c}$) T2.3 आदिदेश. B1.2 D7.10.11 महावीर्यां; M5 °भागान् (for °वीर्यान्).

19 $^{a}$) B1.3 -वराः (for -गणाः). D3 तच्छ्रुत्वा वानराः सर्वे; D5 ते वानरा गताः सर्वे.—$^{b}$) Ś1 Ñ1 D1–4.8.12 संमंत्र्य

G. 5. 73. 32
B. 6. 4. 23
L. 5 71. 25

ततो वानरराजेन लक्ष्मणेन च पूजितः ।
जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम् ॥ २०

शतैः शतसहस्रैश्च कोटीभिरयुतैरपि ।
वारणाभैश्च हरिभिर्ययौ परिवृतस्तदा ॥ २१

तं यान्तमनुयाति स्म महती हरिवाहिनी ॥ २२

हृष्टाः प्रमुदिताः सर्वे सुग्रीवेणाभिपालिताः ।
आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवंगमाः ।

क्ष्वेलन्तो निनदन्तश्च जग्मुर्वै दक्षिणां दिशम् ॥ २३

भक्षयन्तः सुगन्धीनि मधूनि च फलानि च ।
उद्वहन्तो महावृक्षान्मञ्जरीपुञ्जधारिणः ॥ २४

अन्योन्यं सहसा दृप्ता निर्वहन्ति क्षिपन्ति च ।
पतन्तश्चोत्पतन्त्यन्ये पातयन्त्यपरे परान् ॥ २५

रावणो नो निहन्तव्यः सर्वे च रजनीचराः ।
इति गर्जन्ति हरयो राघवस्य समीपतः ॥ २६

---

(D4 समंत्रं) च (for समुत्पत्य). D7.10.11 महौजसः (for युयुत्सवः). —Ñ1 om. $19^{cd}$. —$^{d}$) Ś1 D1–4.8.12 ततः; Ñ2 V1.3 B D9 तस्मात्; M5 ह्याशु (for आशु). B4 दुद्रुविरे; D8 पुप्लुवते (for पुप्लुविरे). Ś1 D1–4.8.12 द्रुतं; Ñ2 V1.3 B D9 क्षणात् (for तदा). —After 19, Ś1 Ñ1 (after $19^{ab}$ owing to om.) D1–4.8.12 read st. 35–37.

**20** D5–7.10.11 S repeat 20 after 37. —$^{a}$) L(ed.) सर्व- (for ततो). —$^{b}$) Ñ1 प्र-; D7.10.11 T3 M1 (D7 first time; D10.11 M1 second time; T3 both times) सु- (for च). —$^{d}$) T3(second time) ससैन्यं.

**21** D1–4.8 read 21 after 23. —$^{a}$) G3 सह (for शत-). D3 तु (for च). D9 -सहस्राणां (for -सहस्रैश्च). D9 om. $21^{b}$–$23^{a}$. —$^{b}$) Ś1 Ñ V1.3 B2.4 D2–5.7–12 G1 M3 कोटिभिश्च (for कोटीभिर्). Ś1 D12 च समंततः; Ñ V1 B2–4 D7.10.11 चायुतै(B3 अर्बुदै)रपि; L(ed.) च सहस्रशः (for अयुतैरपि). —After $21^{ab}$, D1–4.8 ins.:

63* अर्बुदैरर्बुदशतैर्वानरेन्द्रो महाबलः ।

[D2 चार्बुदशतैर् (for अर्बुद°).]

—$^{cd}$) V1.3 B वारणाभैः(B4 °भिः) स; G2 वारणैश्चैव. Ñ2 B2 प्रययौ परिवारितः; V1.3 B1.3.4 ययौ स(B3.4 सु) परिवारितः (for $^{d}$). Ś1 Ñ1 D1–4.8.12 वानराणां सुघोराणां श्रीमतां परिवारितः. —After 21, D1–4.8 ins., while Ś1 Ñ1 D12 ins. after 23:

64* हृष्टाः किलकिलायन्तः शिलापादपयोधिनः ।

[D2.12 किलकिलावंतः.];

**22** D9 om. 22 (cf. v.l. 21). —$^{a}$) V3 यं (for तं). Ś1 D12 ततस्तम्. Ñ2 V1.3 B D10.11 अनुयांति स्म (D10.11 °ती सा) (for °याति स्म). —$^{b}$) D1–4.8 कपि- (for हरि-). Ñ2 V1.3 B हरयः सुमहाबलाः. —After 22, Ś1 D12 ins.:

65* सा स्म याति दिवारात्रं प्रवहन्ती नदी यथा ।
ते विन्ध्यगिरिमासाद्य मलयं च महागिरिम् ।

[D12 om. the post. half of l. 1. —(l. 2) D12 संविंध्यं (for ते विन्ध्य-).]

**23** $^{a}$) D9 om $23^{a}$ (cf. v.l. 21). Ñ1 D4 प्रहृष्टा; D1–3.8 प्रहृष्ट-; D6 M3 दृप्ताः प्र- (for हृष्टाः प्र-). Ñ2 V1.3 B चैव; D2.4.8 M1.2 सर्वा (for सर्वे). Ś1 D12 सु(D12 प्र)-हृष्टाश्च प्रमत्ताश्च. —$^{b}$) Ñ2 V1.3 B D9 [अ]भिरक्षिताः; G M1 [अ]पि पालिताः (for [अ]भि°). Ñ1 D2–4.7.8 सुग्रीव (D7 सुखेन)परिपालिता(Ñ1 D4 °ताः). —$^{c}$) V1.3 B1 (marg.) आ(B1 अ)प्रमत्ताः (sic); D3.8.11 T3 आप्लुवंतः; Cm.g.k.t as in text. V1.3 B1(m.) प्रमत्ताश्; Cm.k.t as in text (for प्लु°). —$^{d}$) Ñ2 नंदंतश्; D1.3 नर्दंतश्; D2.4.8 नदंतश् (for गर्जन्तश्). —$^{e}$) Ś1 V3 D1–4.8.12 क्ष्वेडंतो; Ñ2 B2 D9 खेलंतो (for क्ष्वेलन्तो). Ś1 D12 M3 धावमानाश्च(M3 °स्ते); Ñ1 B2.4 D1–6.8 T1 G3 M1.5 वि(D5 T1 [अ]पि)नदं(D2.8 °रुवं; D3 °चरं)तश्च (D5 T1 °स्ते); Cg.t as in text (for निनदन्तश्च). D6 T2.3 क्ष्वेलयंतो नदंतस्ते. —$^{f}$) Ñ1 D1–4.8 जग्मुरते; Ñ2 B2 D9 प्रययुर्; V1.3 B1.3.4 प्रजग्मुर् (for जग्मुर्वै). L(ed.) च प्रदक्षिणं (for दक्षिणां दिशम्). Ś1 D12 व्रजंतश्च(D12 °ति च) दिवानिशं. —After 23, Ś1 Ñ1 D12 ins. 64*; while D1–4.8 read 21(including star passages) after 23.

**24** $^{b}$) Ñ V1 B D1–4.8.9 मूलानि (for मधूनि). —Ñ1 om. $24^{cd}$. —$^{c}$) Ś1 D12 उद्धरंतो (for उद्वहन्तो). —$^{d}$) M5 -पुष्प- (for -पुञ्ज-). Ś1 D12 शैलशृंगाणि चैव हि; Ñ2 V1.3 B D9 शैलखंडांस्तथैव च(B1 °डाश्च सर्वशः); D1–4.8 शैलगंडोपला(D4 °मा)नपि(D1.3 °नि च).

**25** $^{a}$) G तरसा (for सहसा). B2.4 D9 हृष्टा; D1.4 दृष्ट्वा (for दृप्ता). —$^{b}$) Ñ2 V1.3 B D9 निर्भर्त्संति; D2 निर्भुंजंति; D3 विद्रवंति; D4.8 निर्वपंति (for निर्वहन्ति). Ś1 D12 भुजैराहत्य पातिताः. —$^{c}$) Ś1 Ñ V1.3 B3.4 D9.12 पतितानुत्क्षि(Ñ1 °तांश्चाक्षि; V3 °तानाक्षि)पंति; D1–4.8 पतितांश्चो(D3 °तं चो)त्क्षिपंति; T2 प्रपतंत्युत्पतंति; G3 पतंतो निपतंति; M3 Cg पतंतश्चाक्षिपंति; Ct as in text. —$^{d}$) Ś1 D12 पातयंतस्तथा परान्; Ñ1 D2–4 पातयंत्यपि चापरे; D1.11 पातयंति तथा (D11 °यन्समरे) परान्; G2 पातयंतः परे परान्. —After 25, Ś1 Ñ1 D1–4.8.12 ins., while Ñ2 D9 ins. after $26^{ab}$:

66* मैथिलीमानयिष्यामो हत्वा तं रावणं रणे ।

पुरस्तादृषभो वीरो नीलः कुमुद एव च ।
पन्थानं शोधयन्ति स्म वानरैर्बहुभिः सह ॥ २७

मध्ये तु राजा सुग्रीवो रामो लक्ष्मण एव च ।
बहुभिर्बलिभिर्भीमैर्वृताः शत्रुनिबर्हणाः ॥ २८

हरिः शतबलिर्वीरः कोटीभिर्दशभिर्वृतः ।
सर्वामेको ह्यवष्टभ्य ररक्ष हरिवाहिनीम् ॥ २९

कोटीशतपरीवारः केसरी पनसो गजः ।
अर्कश्चातिबलः पार्श्वमेकं तस्याभिरक्षति ॥ ३०

सुषेणो जाम्बवांश्चैव ऋक्षैर्बहुभिरावृतः ।
सुग्रीवं पुरतः कृत्वा जघनं संररक्षतुः ॥ ३१

तेषां सेनापतिर्वीरो नीलो वानरपुंगवः ।
संपतन्पततां श्रेष्ठस्तद्बलं पर्यपालयत् ॥ ३२

G. 5. 73. 0
B. 6. 4. 35
L. 5. 71. 38

---

[ Ś1 Ñ1 D12 रावणमाहवे ( for तं रावणं रणे ).]

—Thereafter Ś1 Ñ2 D9 cont. 67*.

**26** $^{a}$) V3 T3 M1.2 च; B2 वि-; Cg.t as in text ( for नो ). V3 [ अ ]भि-; B3 हि ( for नि- ). ❀ Cg.k : नः अस्माभिरित्यर्थः ।; so also Ct which adds ‘ कृत्यानां कर्तरि वा ’ इति षष्ठी. ❀ —For $26^{ab}$, Ñ1 D1–4.8.12 subst.; while Ś1 Ñ2 D9 cont. after 66* :

67* लङ्कां च विधमिष्यामः सर्वांश्च रजनीचरान् ।

—After $26^{ab}$, Ñ2 D9 ins. 66*. —Ñ1 om. $26^{cd}$. —$^{d}$) D1–3 [ अ ]थ( D2 तु; D3 च ) संनिधौ; D8 सुसंनिधौ; T1 महात्मनः ( for समीपतः ). D4 रामलक्ष्मणसंनिधौ.

**27** $^{ab}$) Ś1 Ñ1 D1–4.8.12 पनसो ( for ऋषभो ). M1.2 मैंदो ( for वीरो ). Ñ2 V1.3 B1–3 D9 पुरस्तात्त( D9 °द )स्य सैन्यस्य; B4 पुरस्ताद्धनुमान्वीरो ( for $^{a}$ ). Ś1 Ñ V1.3 B D2.3.8.12 नलः ( for नीलः ). D10.11 नीलो वीरः ( by transp. ). —After $27^{ab}$, V1 ins. :

68* गयश्च गवयश्चैव गवाक्षश्चैव वानरः ।

—Ñ1 om. $27^{c}$–$28^{b}$. —$^{c}$) B3 शोधयंत्यश्; D5.6 T1 चोद( D6 शोभ )यंति ( for शोध° ). B3 च ( for स्म ). —$^{d}$) V1.3 B4 D1–4.6.8 T2.3 G1 M1.2 वृताः( V3 °तैः ) ( for सह ).

**28** Ñ1 om. $28^{ab}$ (cf. v.l. 27 ). —$^{a}$) Ś1 V1 B1–3 D2.4.8.9.12 T3 G3 राजा तु ( by transp. ); Ñ2 D8 राजा च. —$^{c}$) Ñ1 D1–4.8 बलिभिर्हरिभिर्; Ñ2 V1.3 B D9.12 G2 हरिभिर्बहुभिर्; D7.10.11 G1 M1.2 बलिभिर्बहुभिर् ( by transp. ). Ñ2 V1.3 B D1.4 T2 M2 वीरैर् ( for भीमैर् ). D9 om.( hapl. ) $28^{d}$– $29^{a}$. —$^{d}$) M5 -निबर्हणैः. Ś1 Ñ1 B1.3 D1.2.4.10.11 वृतः शत्रुनिबर्हणः( Ś1 B1 D2 °णैः ).

**29** D9 om. $29^{a}$ ( cf. v.l. 28 ). —$^{a}$) D5 T M5 कपिः ( for हरिः ). D4 शतबली. Ś1 Ñ1 D1–4.8 भीमः; D12 भीमैः ( for वीरः ). —$^{b}$) Ś1 Ñ2 V1.3 B D1.2.5.8–11 T1.2 G2 Cr कोटिभिर्. Ñ1 अभिसं- ( for दशभिर् ). —$^{c}$) Ś1 Ñ V1.3 B D2.3.8.9.12 दक्षिणं पार्श्वं( Ś1 D12 पक्ष )मासाद्य( Ś1 D12 °श्रित्य ); D1.4 पार्श्वमेकमवष्टभ्य. —$^{d}$) D2 कपि- ( for हरि- ).

**30** $^{a}$) V1 -परीवारैः ( for °रः ). —D9 reads $30^{b}$–$31^{b}$ in marg. —$^{b}$) Ñ2 V3 B D9 वानरोत्तमः; V1 नाम वानरः ( for पनसो गजः ). —$^{c}$) Ś1 Ñ2 V1.3 B D1–4.9.12 ऋक्षस् ; Ñ1 अंकुश् ; D8 दक्षश् ( for अर्कश् ). Ñ1 चाभिबलः; Ñ2 D9 सेनापतिः; D8 °बली; D10.11 च बहुभिः ( for चातिबलः ). D5 T1 सेनां; Cv as in text ( for पार्श्वम् ). —$^{d}$) Ś1 D12 एकं सैन्यस्य चावृणोत् ; Ñ1 सव्यं सव्यं व्यपालयत् ; Ñ2 V1.3 B सव्यं( V3 °वं ) सैन्यस्य( V1 °म- ) पालयत्( Ñ2 V1.3 B4 °न् ); D1 एकसैन्ये ह्यपालयत् ( sic ); D2–4 सैन्यस्यैक( D2 °मध्य )मपालयत् ; D5 T1 रक्षत्युभयपार्श्वयोः; D8 सव्ये सैन्यमपालयत् . ❀ Cg : अभिरक्षतीत्यस्य प्रत्येकमभिसंबन्धः । व्यत्ययेन लट् ।; Ct : केसर्यादीनां चतुर्णां द्वौ द्वौ तस्य बलस्य दक्षिणं वामं चैकैकं पार्श्वमभिरक्षत इत्यर्थ इति कतकः । एष गजः पूर्वभागनियुक्तादन्य इति तीर्थः. ❀

**31** D9 reads $31^{ab}$ in marg. ( cf. v.l. 30 ). —$^{a}$) Ś1 D12 अंगदो ( for सुषेणो ). Ñ1 D1–4.8 जांबवान्कुमुदश्चैव. —$^{b}$) D1.6.7.10.11 T2.3 G M आवृतौ( D1 °तैः ) ( for °तः ). Ś1 D12 वानरर्क्षसमन्वितौ; Ñ1 D2–5.8 T1 M3 ऋक्षैश्च बहुभिर्वृतौ( D2 °तैः ); M1.2 तावृक्षैर्बहुभिर्वृतौ ( for $^{b}$ ). —For $31^{ab}$, Ñ2 V1.3 B D9 subst. :

69* जाम्बवांश्च सुषेणश्च दीर्घदर्शी च वानराः ।

[ Ñ2 V3 वेग-; B2 वेद-; D9 वीर- ( for दीर्घ- ). V1 B4 वानरर्क्षसमावृतौ ( for the post. half ).]

—$^{d}$) D4 जघन्यं. Ñ1 D6 T3 G2 तौ र( D6 T3 परि )-रक्षतुः; Cv.r.m.t as in text ( for संररक्षतुः ). Ñ2 V1.3 B1–3 D9 ररक्षुः पृष्ठमाग( V3 B1 °वृ; B2 °ह )तः ( B3 सुसमाहिताः ).

**32** Ś1 D12 transp. 32 and 33; D2.8 transp. 32 and $33^{ab}$ ( including star passages ). —$^{a}$) D6 एषां. D8 सर्वतस्ते ययुर्वीरो ( corrupt ). —$^{c}$) D1 संपातः; D6.7 T2.3 G2 समंतात् ; D10.11 संयतश् ; Cg as in text ( for संपतन् ). Ś1 D1–4.6.8.12 T2.3 M5 प्लवतां( D1 °गाः ); D10.11 चरतां ( for पततां ). —$^{d}$) Ś1 D3.12 स्व( D3 तं )बलं; G2 बलं तद् ( by transp. ). Ñ2 B1–3 D9 प्रत्यपालयत् ; D1.3.7.10.11 T1.3 G3 Ct °वारयत् ; Cr.g as in text. —After 32, D2.8 ins. :

70* उल्कामुखः प्रभासश्च इन्द्रजानुर्यथा कपिः ।
[ D2 तथा ( for यथा ).]

G. 5. 73. 44
B. 6. 4. 56
L. 5. 71. 39

दरीमुखः प्रजङ्घश्च जम्भोऽथ रभसः कपिः ।
सर्वतश्च ययुर्वीरास्त्वरयन्तः प्लवंगमान् ॥ ३३

एवं ते हरिशार्दूला गच्छन्तो बलदर्पिताः ।
अपश्यंस्ते गिरिश्रेष्ठं सह्यं द्रुमलतायुतम् ॥ ३४

सागरौघनिभं भीमं तद्वानरबलं महत् ।
निःससर्प महाघोषं भीमवेग इवार्णवः ॥ ३५

तस्य दाशरथेः पार्श्वे शूरास्ते कपिकुञ्जराः ।
तूर्णमापुप्लुवुः सर्वे सदश्वा इव चोदिताः ॥ ३६

कपिभ्यामुह्यमानौ तौ शुशुभाते नरर्षभौ ।
महद्भ्यामिव संस्पृष्टौ ग्राहाभ्यां चन्द्रभास्करौ ॥ ३७

तमङ्गदगतो रामं लक्ष्मणः शुभया गिरा ।
उवाच प्रतिपूर्णार्थः स्मृतिमान्प्रतिभानवान् ॥ ३८

---

33 Ś1 D12 transp. 32 and 33; D2.8 transp. 32 and $33^{ab}$ (including star passages). —$^{a}$) Ś1 B1.3 D12 M3 दर्षी-; Cg as in text (for दरी-). Ñ1 कुंजरश्; T3 त्रिजंघश् (for प्रजङ्घश्). D1 तु (for च). —V1 illeg. from $33^{b}$ up to the prior half of 71*. —$^{b}$) Ñ V3 B D3.4.7.9 T1 M रं(D7 दं; M1.2 डं)भोथ; D1 पनसः (for जम्भोऽथ). Ś1 Ñ B D1–4.7.8.12 शरभः; V3 पनसस्; G1.3 M1 भरतः (for रभसः). Ñ2 V3 B D9 तथा (for कपिः). —$^{c}$) D4 सर्वशः (for सर्वतश्). Ñ1 तु; D1–1.8 ते; G1 प्र- (for च). —$^{d}$) Ñ1 D8 G3 प्लवंगमाः. —For $33^{cd}$, Ś1 Ñ2 V1.3 B D9.12 subst., while D2 ins. after $33^{ab}$:

71* सर्वे पार्श्वाण्यधावन्त रक्षणार्थं नृपाज्ञया ।

[ V1 illeg. for the prior half. V3 B2.4 D9 पार्श्वान् (for पार्श्वाणि). ]

—Thereafter, B4 reads for the first time 53 repeating it in its proper place.

34 Ś1 Ñ1 V1 D1–4.8.12 read 34 (Ś1 Ñ1 om. $34^{ab}$) after 54. —$^{a}$) D3 वदंतो (for एवं ते). —$^{b}$) B3 गजंतो; D7.10.11 G2.3 Ct गच्छंति (for गच्छन्तो). B1 वेगहर्षिताः; G2 मदद्दर्पिताः (for बल°). —$^{c}$) Ś1 Ñ1 V1 D1–4.8.12 पश्यंति स्म; Ñ2 V3 B D9–11 G3 Ct अपश्यंत(G3 °तो) (for अपश्यंस्ते). G2 हरि- (for गिरि-). —$^{d}$) Ñ2 V1.3 B D1–4.8.12 विंध्यं; D9 सर्व- (for सह्यं). V3 D10.11 गिरि- (for द्रुम-). D2.7.10.11 T2.3 G1 -शत- (for -लता-). Ñ2 V1 B2–4 D1–4.8.9.12 -[आ]कुलं; V3 B1 D6 T2 -वृतं (for -युतम्). —After 34, Ñ2 V1 D9 ins.; while B1 ins. after 54 an additional Colophon. [ *Sarga name*: Ñ2 B1 D9 वानरानीकप्रयाणं; V1 सैन्यप्रयाणं. —*Sarga no.*: Ñ2 D9 76; V1 71; B1 95. ]

—After 34, D5–7.10.11 S ins.:

72* सरांसि च सुफुल्लानि तटाकानि महान्ति च ।
रामस्य शासनं ज्ञात्वा भीमकोपस्य भीतवत् ।
वर्जयन्नगराभ्याशांस्तथा जनपदानपि ।

[ (l. 1) D7 प्रफुल्लानि (for सु°). D6.7 तडाग्र(D7 °गा)नि. D5.10.11 T1 G1 M5 वराणि; M1–3 वनानि (for महान्ति). —(l. 2) D6 G3 भीमवत्; Cm.g.k.t as above (for भीत°). ❀ Cm: भीतवत् भीतार्हम् ।; Cg: भीतवत् भीतम् ।; Ck.t: भीतवत् भीताः सन्त इत्यर्थः. ❀ —(l. 3) G3 जानपदान्. ]

35 Ś1 Ñ1 (after $19^{ab}$) D1–4.8.12 read 35–37 after 19. —$^{a}$) Ñ2 V1.3 B1.3.4 D3.4.9.12 घोरं; B2 घोषं (for भीमं). —$^{b}$) V3 वानरस्य; M1.2 वानराणां (for तद्वानर-). B4 बली (sic) महत्; M1.2 महद्बलं (by transp.). —V3 om. $35^{c}$–$36^{b}$. —$^{c}$) Ś1 Ñ2 V1 B1–3 D2–4.8.9.12 वि-; D1 प्र- (for निः-). T3 निःसपत्नं; M3 उत्ससर्प. Ś1 D1–4.8.12 -वेगं; Ñ2 V1 B1–3 D9 -घोषो; B4 D6.7.10.11 T1.2 M1.5 -घोरं(B4 °रो) (for -घोषं). —$^{d}$) D5 T1.2 G1.2 M -घोष; D6.7.10.11 -घोषम्; T3 -वेगम् (for -वेग). D8 महार्णवः (for इवा°). D6.7.10.11 T3 M2 Ct [अ]र्णवं (for °वः).

36 For sequence in Ś1 Ñ1 D1–4.8.12 cf. v.l. 35. V3 om. $36^{ab}$ (cf. v.l. 35). —$^{a}$) Ś1 Ñ1 D1–4.8.12 दाशरथी(D1 °थिर्) (for °रथेः). Ś1 Ñ1 B1.4 D1–4.8.12 मध्ये; Ñ2 V1 B2.3 D9 अर्थे (for पार्श्वे). —$^{b}$) Ś1 Ñ1 D1–4.8.12 बलस्य; T1 शूराश्च (for शूरास्ते). Ś1 Ñ1 D2–4.12 कपिकुंजरौ; V1 हरियूथपाः; B1.4 हरिपुंगवाः; D8 नरकुंजरौ (for कपिकुञ्जराः). —V1 illeg. for $^{c}$. —$^{c}$) Ś1 Ñ1 D12 पुप्लुवाते तु विक्रम्य; D1 आरुह्य जग्मतुर्वीरौ; D2.8 आपुप्लुवाते तूर्णं तौ; D3.4 आप्लुवातेधिरुह्य ते(D4 °ते तूर्णवेगौ) (sic). —$^{d}$) B1 नोदिताः (for चो°). Ś1 Ñ1 D1–4.8.12 सदश्वाविव वेगिनौ(Ś1 Ñ1 D8.12 °तौ).

37 For sequence in Ś1 Ñ1 D1–4.8.12 cf. v.l. 35. D1 om. $37^{ab}$. —$^{a}$) Ś1 D12 आरुहंतौ (sic) (for उह्यमानौ). —$^{b}$) D5.6 T M3 नरोत्तमौ (for नरर्षभौ). —$^{c}$) D4 इह (for इव). G3 महक्षुभ्यामि (corrupt). Ś1 V1.3 B D1.2.4.8.9.12 G3 M1.2 संहृ(Ś1 D12 °सृ; V1.3 B D9 °श्लि)ष्टौ; G1 सुस्पृष्टौ (for सं°). —$^{d}$) M5 इव (for चन्द्र-). ❀ Cr: महद्भ्यामिव संस्पृष्टौ ग्रहाभ्यां चन्द्रभास्करावितिति पाठः ।; Ct: 'महद्भ्यामर्धसंस्पृष्टौ' इति पाठान्तरम्. ❀ —After 37, D5–7.10.11 S repeat st. 20.

38 $^{a}$) Ś1 Ñ1 D2–4.8.12 अथ; Ñ2 V1.3 B D9 ततो; D1 तथा (for तम्). —$^{b}$) Ś1 D1–4.8.12 परवीरहा; Ñ1 चारिसैन्यजित् (for शुभया गिरा). —$^{c}$) Ś1 Ñ V1.3 B D1–4.8–12 G M3.5 Cg.t परि(V3 प्रीति; G M5 प्रति)पूर्णार्थं (M3 Cg °र्थः); D7 T2.3 च महाप्राज्ञः (for प्रतिपूर्णार्थः). ❀ Ct: परिपूर्णार्थमिति रामविशेषणम्. ❀ —$^{d}$) Ś1 Ñ V1.3

हृतामवाप्य वैदेहीं क्षिप्रं हत्वा च रावणम् ।
समृद्धार्थः समृद्धार्थामयोध्यां प्रतियास्यसि ॥ ३९

महान्ति च निमित्तानि दिवि भूमौ च राघव ।
शुभानि तव पश्यामि सर्वाण्येवार्थसिद्धये ॥ ४०

अनु वाति शुभो वायुः सेनां मृदुहितः सुखः ।
पूर्णवल्गुस्वराश्चेमे प्रवदन्ति मृगद्विजाः ॥ ४१

प्रसन्नाश्च दिशः सर्वा विमलश्च दिवाकरः ।
उशना च प्रसन्नार्चिरनु त्वां भार्गवो गतः ॥ ४२

ब्रह्मराशिर्विशुद्धश्च शुद्धाश्च परमर्षयः ।
अर्चिष्मन्तः प्रकाशन्ते ध्रुवं सर्वे प्रदक्षिणम् ॥ ४३

त्रिशङ्कुर्विमलो भाति राजर्षिः सपुरोहितः ।
पितामहवरोऽस्माकमिक्ष्वाकूणां महात्मनाम् ॥ ४४

विमले च प्रकाशेते विशाखे निरुपद्रवे ।
नक्षत्रं परमस्माकमिक्ष्वाकूणां महात्मनाम् ॥ ४५

नैर्ऋतं नैर्ऋतानां च नक्षत्रमभिपीड्यते ।
मूलं मूलवता स्पृष्टं धूप्यते धूमकेतुना ॥ ४६

सर्वं चैतद्विनाशाय राक्षसानामुपस्थितम् ।
काले कालगृहीतानां नक्षत्रं ग्रहपीडितम् ॥ ४७

G. 5. 73. 58
B. 6. 4. 52
L. 5. 71. 49

B D1.2.4.8.9.12 G3 M5 वचनं; D10.11 Ct पूर्णार्थ-; G2 M1.2 पूर्णार्थं; Cm.g as in text (for स्मृतिमान्). D3 वचनं चातिबुद्धिमान्.

39 [a]) Ś1 Ñ1 D1-4.8.12 अवाप्य सीतां (for हृताम-वाप्य). —[b]) Ś1 Ñ1 D1.2.4.8.12 हत्वा रावणमाहवे; D3 हत्वा तं रावणं रणे. — G3 damaged for [d]. —[c]) Ś1 Ñ1 D1-4.8.12 समृद्धार्थां (Ñ1 D1.3 °र्थाः) समृद्धार्था (Ñ1 D1 (also सुसंपूर्णां).3 °र्थां). —[d]) D1 यास्यामो नगरीं ततः.

40 [a]) Ś1 Ñ1 D1-4.8.12 [इ]ह (for च). —[b]) D9 दिवि भूमौत्तराणि च (sic). —[c]) Ś1 Ñ1 D1.2.4.8.12 दृश्यंते (for पश्यामि). D3 शुभानि चात्रदृश्यंते. —[d]) Ś1 Ñ1 D1-4.8.12 प्रसन्नानि (for सर्वाण्येव).

41 [a]) B1 अथ (for अनु). D3 -यायी; D4 याति (for वाति). Ś1 Ñ1 V1 D1-4.7.8.10-12 G M1.2.5 Cr.m शि(D2 च [sic])वो; T2.3 सुखो; Cg as in text (for शुभो). —[b]) Ñ2 V1.3 B D9 T2.3 शुभः; G1.2 M1.5 सुखं; Cg as in text (for सुखः). Ś1 Ñ1 D1-4.8.12 सेनाया विजयावहः. —[c]) D1 पूर्वं; D2.3 पूर्व- (for पूर्ण-). Ñ1 -फल्गु-; Ñ2 V3 B1-3 -वर्ण-; D9 -[अ]वर्ण- (for -वल्गु-). M1.2 -स्वनाश्च; Cg.k.t as in text (for -स्वराश्च). Ñ1 D1-3.8 हीमे; D7 चामी; D9 चोग्रं; T3 चैव; M5 चापि (for चेमे). Ś1 D12 पूर्वफल्गुन्युत्तराभ्यां; D4 सुसंपूर्णस्वरा हीमे. —[d]) B2 नृप (for मृग-). D3 प्रचरंति मृगा द्विजाः.

42 [b]) Ñ1 D1-4.8.12 प्रसन्नश्च; B1 निर्मलश्च (for विमलश्च). —[c]) V1.3 B4 हुताशनः (B4 °श्च); B2 D2.4.7.12 M Cm.g उशनाश्च; D8 उत्सन्नाश्च; Ct as in text (for उशना च). —[d]) Ś1 Ñ D1-4.8.9.12 विमलो; V3 B अनु त्वं (for अनु त्वां). D2 भार्गवं. Ś1 Ñ D1-4.8.12 स्थितः (for गतः).

43 [ab]) D6 T2.3 M1.2.5 विशुद्धाः; D7 विमुक्ताः (for शुद्धाश्च). Ñ2 V1.3 B D9 ब्रह्मराशि(B1 °वेद)विदः सर्वे विशुद्धाश्च महर्षयः (B4 °द्धाः परमर्षयः). — For 43[ab], Ś1 Ñ1 D1-4.8.12 subst.:

73* तेजसा च प्रदीप्यन्ते प्रविशुद्धा महर्षयः ।

[Ś1 D12 (both with hiatus) अतिशुद्धा; D3 प्रसिद्धा ये; D8 विशुद्धाश्च (for प्रविशुद्धा).]

—[c]) Ś1 Ñ1 D1-4.8.12 च संयांति (for प्रकाशन्ते).

44 [ab]) D2 च (for स-). —[c]) B1.4 D6.7 पितामहः. Ś1 Ñ1 B3 D3.4.8.10-12 T3 Ct पितामहः पुरो; B2 पितावर-वरो (sic); Cr.m.g as in text (for पितामहवरो). ❀ Ck: पुरोऽस्माकमिति पाठः. ❀ —[d]) Ñ2 V1.3 B D9 पितामहः (for महात्मनाम्). Ś1 D12 भवाय तव धिष्ठितः; Ñ1 D1-4.8 तव भावा(Ñ1 °वे; D1 भ्राता)य(Ñ1 °व) धिष्ठितः (sic).

45 D7 M1.2 om. (hapl.) 45. —[a]) Ś1 विमलेन; L(ed.) विमले ते (for विमले च). Ś1 D1-4.8.12 विरोचेते; Ñ1 विराजेते (for प्रकाशेते). —[b]) G2 निशाखे; Cg as in text (for विशाखे). G3 Cg निरुपप्लवे; Cr.m as in text (for °द्रवे). ❀ Cg: विशाखे इति द्विवचनम्। नक्षत्रद्वयात्मकत्वात्. ❀ — Ś1 D12 om. 45[cd]. —[c]) D2 T3 G3 वरम् (for परम्). D1.3.4.6 M3 नक्षत्रवरम्; Ck.t as in text. T3 अस्तोकम् (for अस्माकम्). D8 नक्षत्राणां वरोस्माकम्. —[d]) Ñ1 D1-4.8 महारथः (for महात्मनाम्).

46 [a]) Ś1 नैर्ऋतः; B4 नैर्ऋते; L(ed.) नैर्ऋत्यां (for नैर्ऋतं). Ś1 निर्ऋतानां; D12 निंदतानां (sic) (for नैर्ऋतानां). —[b]) Ś1 उपयुज्यते; Ñ1 उपरक्ष्यते; Ñ2 V1.3 B D9 उपपीड्यते; D1.2 उ(D2 अ)पराजते; D3 उपभुज्यते; D4.8.12 अपरज्यते; D6.7 G2 अपि पीड्यते; D10.11 G1.3 M1.2 Cv.k.t अति पीड्यते; T3 अपि विद्यते (for अभिपीड्यते). —[c]) Ñ2 V1.3 B D9 मूलो(Ñ2 V1 °लं) मूलवतामृक्षो(Ñ2 V1 °क्षं); D6.7.10.11 T2.3 G1.3 M3 Cm.g.k.t मूलो मूलवता स्पृष्टो; G2 M5 मूलं मूलवतां श्रेष्ठ. ❀ Ct: मूलः मूलमिति यावत्। आर्षं पुंस्त्वम्. ❀ —[d]) Ś1 D1-4.8.12 दीप्यते; B4 धूम्यते (for धूप्यते).

47 [ab]) Ś1 Ñ V1.3 B D1-4.8.9.12 सर्वेषां(Ñ2 V1.3 B D9 °व) विनाशोयं(D8.9 °शाय) राक्षसानामुपस्थितः. —[c]) Ś1 चिर-; Ñ2 V3 B1.2.4 D1-4.8.9 कालः; D12 om. (for काले). V3 B1.4 कलि-; G3 M5 काले (for काल-). Ś1 Ñ1

G. 5. 73. 59
B. 6. 4. 53
L. 5. 71. 50

प्रसन्नाः सुरसाश्चापो वनानि फलवन्ति च ।
प्रवान्त्यभ्यधिकं गन्धा यथर्तुकुसुमा द्रुमाः ॥ ४८
व्यूढानि कपिसैन्यानि प्रकाशन्तेऽधिकं प्रभो ।
देवानामिव सैन्यानि संग्रामे तारकामये ॥ ४९
एवमार्य समीक्ष्यैतान्प्रीतो भवितुमर्हसि ।
इति भ्रातरमाश्वास्य हृष्टः सौमित्रिरब्रवीत् ॥ ५०
अथावृत्य महीं कृत्स्नां जगाम महती चमूः ।
ऋक्षवानरशार्दूलैर्नखदंष्ट्रायुधैर्वृता ॥ ५१
कराग्रैश्चरणाग्रैश्च वानरैरुद्धतं रजः ।
भौममन्तर्दधे लोकं निवार्य सवितुः प्रभाम् ॥ ५२

---

D$_{1-4.8.12}$ -परीतानां (for -गृहीतानां). —$^d$) Ñ$_1$ नक्षत्र- (for °त्रं). Ñ$_2$ V$_3$ D$_9$ -पीडनात् (for -पीडितम्). B नक्षत्र-ग्रहपीडनात्; D$_{1-4.8.12}$ नक्षत्रे ग्रहपीडिते.

48 $^a$) D$_7$ प्रपन्नाः (for प्रसन्नाः). B$_1$ D$_7$ G$_2$ M$_{1.2}$ Ck सरसाश्; Ct as in text (for सुरसाश्). D$_6$ T$_{2.3}$ प्रसन्नाश्च(T$_2$ °नि) सरांस्यापो. —$^b$) D$_9$ G$_2$ च फलानि (for फलवन्ति). —V$_1$ illeg. for 48$^c$–49$^b$. —$^c$) Ñ$_1$ D$_{1.4}$ प्रवाति; B$_2$ स्रवंतो (for प्रवान्ति). D$_{6.7}$ T$_{2.3}$ G M$_{1.2}$ [अ]भ्यधिका(D$_7$ °को). Ñ$_1$ B$_1$ D$_{1-4}$ गंधम्(B$_1$ °धाः); D$_5$ T$_1$ गंधान्; Ck as in text (for गन्धा). Ś$_1$ D$_{8.12}$ प्रवात्य(D$_8$ °तो)भ्यधिको गंधो(D$_8$ °धैः); B$_4$ प्रवात्यभ्यधिकं गंधः; D$_{10.11}$ Ct प्रवांति नाधिका गंधा; M$_5$ प्रवहंत्यधिकान्गंधान्. ❀ Ck.t : गन्धा अजन्तः । गन्धवन्तः. ❀ —$^d$) Ś$_1$ D$_{8.12}$ वर्ते(Ś$_1$ °र्तं)ते; Ñ$_1$ D$_{1-4}$ आर्तवं; B$_1$ सर्वर्तु-; B$_4$ प्रत्यर्तु-; M$_5$ यथावत् (for यथर्तु-). Ś$_1$ Ñ V$_3$ B D$_{1-4.8.9.12}$ -पुष्पिता; D$_5$ T$_3$ G$_{1.3}$ M$_{1\,2.5}$ -कुसुम-; Cg as in text (for -कुसुमा).

49 V$_1$ illeg. for $^{ab}$ (cf. v.l. 48). —$^a$) Ś$_1$ Ñ$_1$ D$_{2-4.8.12}$ व्यू(D$_3$ गू)ढानां; Ñ$_2$ V$_3$ B D$_9$ व्यूहेषु (for व्यूढानि). Ś$_1$ Ñ V$_3$ B$_{2.4}$ D$_{2-4.8.9.12}$ -सैन्यानां; B$_{1.3}$ -मुख्यानां (for -सैन्यानि). D$_1$ व्यूढानां हरिवीराणां. —$^b$) G$_1$ विभो (for प्रभो). Ś$_1$ Ñ V$_3$ B D$_{1-4.8.9.12}$ प्रकाशो वि(Ñ$_1$ B$_2$ D$_2$ °ति; Ñ$_2$ V$_3$ B$_{1.3}$ D$_9$ °भि)प्रकाशते. —$^c$) Ś$_1$ D$_{3.8}$ दैवानाम्. V$_3$ B$_1$ अपि (for इव). Ś$_1$ Ñ$_2$ V$_{1.3}$ B D$_{1-4.8.9.12}$ सैन्यानां.

50 $^a$) Ñ$_1$ D$_{1-4.8}$ एतद् (for एवम्). Ñ V$_{1.3}$ B D$_{1-4.8}$ G$_3$ M$_5$ समीक्ष्य त्वं; D$_{10.11}$ समीक्ष्यैतत् (for °तान्). Ś$_1$ D$_{12}$ एतदाश्चर्यमीक्ष्य त्वं. —V$_1$ illeg. for 50$^{cd}$. —$^c$) T$_3$ एवं (for इति). B$_1$ आसाद्य; D$_{10.11}$ G$_2$ आश्वस्य; G$_1$ आभाष्य; Cm.g as in text (for आश्वास्य). ❀ Ck : आश्वस्येति पाठः ।; Ct : 'आश्वास्य' इति पाठः. ❀ —$^d$) Ś$_1$ Ñ$_1$ D$_{1-4.8.12}$ प्रणयाल्लक्ष्मणोन्वयात्(Ñ$_1$ °ब्रवीत्). —After 50, Ś$_1$ Ñ D$_{1-4.8.9.12}$ ins. :

74* निमित्तानि च संप्रेक्ष्य रामः प्रमुदितोऽभवत् ।

[Ś$_1$ D$_{12}$ लक्षणानि (for निमित्तानि). D$_3$ तदा (for ऽभवत्).]

—Thereafter Ś$_1$ Ñ D$_{1-4.8.12}$ read an addl. colophon.

[*Sarga name* : Ñ$_2$ om. Ś$_1$ D$_{12}$ सेनाकर्षणं; Ñ$_1$ प्रयाणः; D$_1$ सेनाप्रहर्षः; D$_2$ सेनापकर्षणं; D$_{3.8}$ सेनाप्रकर्षणः; D$_4$ सेनाकर्षणः. —*Sarga no.* (figures, words or both): Ñ$_1$ D$_{1.2.4.8.9.12}$ om.; Ś$_1$ 72; Ñ$_2$ 3; D$_3$ 78. —After colophon, D$_2$ concludes with राम.]

51 $^a$) D$_{6.7}$ T$_{2.3}$ M$_5$ आवृत्य च (for अथावृत्य). Ś$_1$ D$_{12}$ सर्वां (for कृत्स्नां). D$_4$ आवृत्य जगतीं कृत्स्नां. —$^b$) D$_{7.10.11}$ हरिवाहिनी (for महती चमूः). Ñ$_2$ B$_2$ D$_9$ प्रजगाम महाचमूः. —$^c$) Ś$_1$ Ñ$_1$ D$_{1-4.8.12}$ -संपूर्णा; D$_7$ M$_{1.2}$ -गोपुच्छैर् (for -शार्दूलैर्). —$^d$) D$_{1.2}$ -दंष्ट्र- (sic) (for -दंष्ट्रा-). Ś$_1$ Ñ$_1$ D$_{1-4.8.12}$ -प्रहारिणी(D$_8$ °णं); D$_{7.10.11}$ T$_3$ -[आ]युधैरपि (T$_3$ °र्वृतैः) (for °र्वृता).

52 $^a$) D$_1$ च नखाग्रैश्; T$_3$ च पदाग्रैश् (for चरणाग्रैश्). —$^b$) D$_{12}$ उद्गतं; M$_3$ उत्थितं (for उद्धतं). —$^c$) Ś$_1$ Ñ$_1$ B$_{1.3.4}$ D$_{1-5.7-12}$ T$_1$ G M$_{3.5}$ Ck.t भीमम्; D$_6$ T$_{2.3}$ M$_{1.2}$ महीम् (for भौमम्). D$_6$ T$_2$ सर्वां; T$_3$ वीर; M$_{1.2}$ भीमं; Ck.t as in text (for लोकं). —$^d$) V$_3$ B$_{1-3}$ D$_9$ आवृत्य(V$_3$ °वर्ते); B$_4$ आवार्य; D$_6$ प्रच्छाद्य (for निवार्य). —After 52, D$_{5-7.10.11}$ S ins.; Ñ$_2$ V$_{1.3}$ B D$_9$ ins. l. 21-22 only after 52 :

75* सपर्वतवनाकाशां दक्षिणां हरिवाहिनी ।
छादयन्ती ययौ भीमा द्यामिवाम्बुदसंततिः ।
उत्तरन्त्यां च सेनायां सततं बहुयोजनम् ।
नदीस्रोतांसि सर्वाणि सस्यन्दुर्विपरीतवत् ।
सरांसि विमलाम्भांसि द्रुमाकीर्णांश्च पर्वतान् । [5]
समान्भूमिप्रदेशांश्च वनानि फलवन्ति च ।
मध्येन च समन्ताच्च तिर्यक्चाधश्च साविशत् ।
समावृत्य महीं कृत्स्नां जगाम महती चमूः ।
ते हृष्टमनसः सर्वे जग्मुर्मारुतरंहसः ।
हरयो राघवस्यार्थे समारोपितविक्रमाः । [10]
हर्षवीर्यबलोद्रेकान्दर्शयन्तः परस्परम् ।
यौवनोत्सेकजान्दर्पान्विविधांश्चक्रुरध्वनि ।
तत्र केचिद्द्रुतं जग्मुरुत्पेतुश्च तथापरे ।
केचित्किलकिलां चक्रुर्वानरा वनगोचराः ।
प्रास्फोटयंश्च पुच्छानि संनिजघ्नुः पदान्यपि । [15]
भुजान्विक्षिप्य शैलांश्च द्रुमानन्ये बभञ्जिरे ।
आरोहन्तश्च शृङ्गाणि गिरीणां गिरिगोचराः ।
महानादान्विमुञ्चन्ति क्ष्वेलामन्ये प्रचक्रिरे ।
ऊरुवेगैश्च ममृदुर्लताजालान्यनेकशः ।
जृम्भमाणाश्च विक्रान्ता विचिक्रीडुः शिलाद्रुमैः । [20]
शतैः शतसहस्रैश्च कोटिभिश्च सहस्रशः ।
वानराणां सुघोराणां यूथैः परिवृता महीं ।

सा स्म याति दिवारात्रं महती हरिवाहिनी ।
हृष्टप्रमुदिता सेना सुग्रीवेणाभिरक्षिता ॥ ५३
वानरास्त्वरितं यान्ति सर्वे युद्धाभिनन्दिनः ।
मुमोक्षयिषवः सीतां मुहूर्तं क्वापि नासत ॥ ५४
ततः पादपसंबाधं नानामृगसमायुतम् ।
सह्यपर्वतमासेदुर्मलयं च महीधरम् ॥ ५५
काननानि विचित्राणि नदीप्रस्रवणानि च ।
पश्यन्नति ययौ रामः सह्यस्य मलयस्य च ॥ ५६
चम्पकांस्तिलकांश्चूतानशोकान्सिन्दुवारकान् ।
करवीरांश्च तिमिशान्भञ्जन्ति स्म प्लवंगमाः ॥ ५७

G. 5. 74. 3
B. 6. 4. 72
L. 5. 72. 8

[ G3 M5 (repeats l. 1 after l. 8) read l. 1–4 after l. 8. —(l. 1) D10.11 -[आ]काशं (for °शां). —(l. 2) D7 महीं (for ययौ). G1 भूमिं (for भीमा). T2 -संहतिः (for -संततिः). —(l. 3) D7 G2 तु (for च). D10.11 सेनायाः (for °यां). —(l. 5) D7 विपुल- (for विमल-). —(l. 6) G2 निम्न- (for भूमि-). —(l. 7) G2 चैवाथ (for चाथश्च). T2 संविशत् (sic); G2 सा दिशः; Ct as above (for साविशत्). —(l. 8) cf. 46ab. G3 M5 अथ (for सम्-). T2 सर्वां (for कृत्स्नां). D5.6 महतीं. D7 चमूं (for चमूः). —(l. 9) D7.10.11 -वदनाः (for -मनसः). —G1 om. from the post. half of l. 9 up to the prior half of l. 10. —(l. 10) T3 समरोपेत (sic) (for समारोपित-). —(l. 11) D5.7.10.11 हर्षं वीर्यं; G1 हर्षवेग- (for हर्षवीर्य-). —(l. 13) G2 अत्र (for तत्र). —(l. 14) D5.6 T M2.5 किलिकिलां; Cg.t as above. D6.7 T2 M5 वारणोपमाः; T3 वासवोपमाः (for वनगोचराः). —M1.2 transp. l. 15 and l. 18. —(l. 15) T2.3 G3 आस्फोटयंश्; Cm.g.t as above (for प्रा°). G3 पदानि च; M2 परानपि (for पदान्यपि). —(l. 16) G1 M1.2 चान्ये (for अन्ये). —(l. 17) T3 आपातयंति; G2 आरूढाश्चैव (for आरोहन्तश्च). —(l. 18) D6 T2.3 G3 महानादं. D7 प्रमुंचंतः; D10.11 प्रमुंचंति; M5 विमुंचंतः (for विमुञ्चन्ति). D6.7.10.11 क्ष्वेडाम् (for क्ष्वेलान्). —(l. 19) G1.3 M5 Ck -जातानि (for -जालानि). —(l. 21) D6 श्रीमच्; D10.11 ततः (for शतैः). V3 तु (for च). B2 D6.7.9 G1 M1.2.5 कोटीभिश्. M1.2 समंततः (for सहस्रशः). —(l. 22) D9 M3 तु घोराणां; G1 सुघोषाणां (for सुघोराणां). D10.11 G1 M3 श्रीमत्- (for यूथैः). Ñ2 V1.3 B D9 श्रीनान्परिवृतो ययौ (for the post. half). ❀ Ck : श्रीमदिति लुप्ततृतीयान्तं पदम् । श्रीमद्भिरित्यर्थः ।; so also Ct. ]

53 B4 repeats 53 here (cf. v.l. 71*). G2 om. 53–54; Ś1 om. 53. —a) D7.12 प्रयाति (D12 °ता); T3 स्म भाति; G3 याति च; Cm.g as in text (for स्म याति). Ñ2 V1.3 B1.2 D1–4.8.9 रात्रौ (for -रात्रं). —b) B4 सुग्रीवपरिपालिता. —cd) Ñ1 D3.4.8.10–12 प्रहृष्ट- (D4.12 °ष्टा; D8 °ष्टं); Ñ2 V1.3 B1–3 D9 T G1 M1.2.5 हृष्टा प्र- (for हृष्टप्र-). Ñ V1.3 B1–3 D1.3.4.8.12 सर्वा; D10.11 M1.2 सर्वे; Cm.g as in text (for सेना). ❀ Cr : सेना इनेन स्वामिना सह वर्तत इति सेना ।; so also Cm.g. ❀ Ñ V1.3 B1–3 D1.3.4.7–12 G1 M1.2.5 -पालिता (V1 D7.10.11 M1.2 °ताः) (for -रक्षिता). B4 हृष्टा प्रमुदिता सर्वा श्रीमती हरिवाहिनी; D2 संहृष्टमुदिताः सर्वाः सुग्रीवेणाभिपालिताः.

54 G2 om. 54 (cf. v.l. 53). —a) Ś1 Ñ V1.3 B D1–4.8.9.12 जवेन (for वानरास्). Ś1 Ñ V3 B2 D4.9.11.12 T2.3 G1.3 M1.2.5 त्वरिता (for त्वरितं). Ñ2 V1.3 B D9.11 याता; D5 T1 यांतः (for यान्ति). —b) Ñ2 V1.3 B D9 सर्वा (for सर्वे). Ñ2 V1.3 B1.2.4 D9 -नंदिनी; B3 -कांक्षिणी (for -नन्दिनः). Ś1 Ñ1 D1–4.8.12 वानरा बलदर्पिताः. —c) Ś1 Ñ1 D2.8.12 समानिनीषवः; Ñ2 V1.3 B D9 सा मुमोचयिषुः; D1.3.4 आनयिष्यामहे; D6.10.11 M3 Cg.k.t प्रमोक्षयिषवः (for मुमोक्षयिषवः). ❀ Cg : प्रमोक्षयिषवः मोचयितुमिच्छवः । सनि द्विर्वचनाभाव आर्षः ।; Ck.t : मोक्षशब्दात् 'तत्करोति-' इति णौ (Ck णिचि) सन्यार्षेऽभ्यासलोपे उप्रत्यये च रूपम्. ❀ —d) Ś1 V1 B D12 मुहूर्तान्. M5 चापि. D7 G3 नासते; D10.11 M1.2 Ct नात्रसन् (for नासत). Ś1 Ñ D1.2.4.8.9 नाश्व (Ñ1 °व) सन्क्वचित्; V1 B2.4 संभ्रमादिव; V3 संभ्रमादिव; B1 संप्रदादपि; B3 संप्रदादिव; D12 आशु सत्क्वचित् (for क्वापि नासत). D3 मुहूर्तेनैव सत्वराः. —After 54, Ś1 Ñ1 V1 D1–4.8.12 read 34 (Ś1 Ñ1 om. 34ab); while, B1 ins. an additional colophon after 54. [ इति सुन्दरकाण्डे वानरानीकप्रयाणम् . 95. ]

55 D2.8 om. 55ab. D1.3.4 transp. ab and cd. —b) Ñ2 D10.11 -वन-; B2–4 D5.7.9 T1 G2.3 M1.2.5 -नग-; D6 -द्विज- (for -मृग-). Ś1 नानाद्विजसमाकुलं; Ñ1 D1.3.4 °द्रुमलताकुलं; V1.3 °द्रुमलतायुतं; B1 °नगसमावृतं; D12 °द्विजगणाकुलं. —D10 om. 55cd. —c) Ś1 Ñ1 V3 B1–3 D1.3.8.9.12 विंध्य-; Ñ2 V1 B4 D2.4 विंध्यं; D6 T3 सह्यं (for सह्य-). Ś1 Ñ V1.3 B D1–4.6.8.9.11.12 T2.3 G2.3 M1.2.5 Ck आसाद्य; D5 T1 G1 आपेतुर् (for आसेदुर्). —d) Ś1 वानरास्तं समावहन्; Ñ1 D1–4.8 समारूढाः प्लवंगमाः; Ñ2 V1.3 B D6.9.11.12 T2.3 G2.3 M1.2.5 Ck वानरास्ते समारुहन्. ❀ Cr.m.t : 'सह्यपर्वतमासेदु (Cr °पेतु)-र्मलयं च महीधरम्' इति पाठः (Ct पाठान्तरं तीर्थसंमतम्). ❀

56 b) Ś1 Ñ V1 B D12 T3 नदीः; V3 दरी- (for नदी-). —c) Ś1 Ñ V1 B3 D2.7.10–12 अपि; V3 B1.2.4 D6.9 अभि; D1.3.4.8 अथ (for अति). —d) Ś1 Ñ V1.3 B D2.3.8.9.12 विंध्यस्य; D1.4 वंध्यस्य (for सह्यस्य).

57 D1 om. 57. —a) Ñ V1.3 B D9 चंदनांस्; M3 Cg बकुलांस्; Cr as in text (for चम्पकांस्). D2–4.8 तिलक- (for तिलकांश्). Ñ B2 D9 तालान्; D2–4.8 -[अ]शोकान् (for चूतान्). —b) Ñ1 पलाशान्; B4 D10.11 प्रसेकान्;

$D_{3.4.8}$ पिप्पली:( $D_8$ °लान् ); $D_3$ पिष्यती ( sic ) ( for अशोकान् ). $Ś_1$ $Ñ_2$ $D_{2.4.6.8.9.12}$ $T_{2.3}$ Cg सिंधुवारकान्. —$^c$ ) Ñ $D_{2-4.9}$ तमालांश्च; $V_{1.3}$ $B_{1.3.4}$ तिमीरांश्च; $B_2$ जिरीशांश्च ( for च तिमिशान् ). $Ś_1$ $D_{12}$ तिंदुकान्करवीरांश्च; $D_{7.10.11}$ $G_{1.2}$ $M_{1.2.5}$ तिमि( $M_2$ °नि )शान्करवीरांश्च; $D_8$ विंध्यपर्वतमासाद्य. —$^d$ ) $Ś_1$ $D_{12}$ रुजंति स्म( $D_{12}$ सद्- ); Ñ $B_{2.4}$ $D_9$ बभंजुस्ते( $Ñ_1$ °श्च ); $V_1$ भजंतस्ते; $V_3$ $B_{1.3}$ $D_{2-4.8}$ भंजंतस्ते( $D_{2-4.8}$ °श्च ); $D_{5.11}$ T $G_{1.3}$ $M_5$ भजंति स्म ( for भञ्जन्ति स्म ). —After 57, $Ñ_2$ $V_{1.3}$ B $D_9$ ins.:

77* कर्णिकारान्कुरबकांश्चम्पकानतिमुक्तकान् ।
कदम्बपादपान्नीपान्केशरोद्दालकान्धरान् ।
शालांस्तालांस्तमालांश्च लवलीश्च समन्ततः ।
वल्गुवाग्भिर्द्विजैश्चित्रैर्नानासत्त्वैश्च सेवितान् ।

[ (l. 2) $B_3$ अन्यान् ( for नीपान् ). $V_3$ -[ उ ]द्दणिकान्; $B_2$ -[ उ ]द्दालिकान् ( for -[ उ ]द्दालकान् ). $B_{1.3}$ नहान्; $B_4$ वटान् ( for धरान् ). —(l. 3) $B_1$ चंदनांश्; $B_2$ $D_9$ कदलीश्; $B_3$ लवंगांश्; $B_4$ लवलींश् ( for लवलीश् ). —(l. 4) $V_3$ वर्णराड्भिर् ( sic ) ( for वल्गुवाग्भिर् ). ];

while $D_{5-7.10.11}$ S ins. after 57:

78* अङ्कोलांश्च करञ्जांश्च प्लक्षन्यग्रोधतिन्दुकान् ।
जम्बुकामलकान्नागान्भञ्जन्ति स्म प्लवंगमाः ।
प्रस्तरेषु च रम्येषु विविधाः काननद्रुमाः ।
वायुवेगप्रचलिताः पुष्पैरवकिरन्ति गाम् ।
मारुतः सुखसंस्पर्शो वाति चन्दनशीतलः । [ 5 ]
षट्पदैरनुकूजद्भिर्वनेषु मधुगन्धिषु ।
अधिकं शैलराजस्तु धातुभिः सुविभूषितः ।
धातुभ्यः प्रसृतो रेणुर्वायुवेगविघट्टितः ।
सुमहद्वानरानीकं छादयामास सर्वतः ।
गिरिप्रस्थेषु रम्येषु सर्वतः संप्रपुष्पिताः । [ 10 ]
केतक्यः सिन्दुवाराश्च वासन्त्यश्च मनोरमाः ।
माधव्यो गन्धपूर्णाश्च कुन्दगुल्माश्च पुष्पिताः ।
चिरिबिल्वा मधूकाश्च बकुला वञ्जुलास्तथा ।
स्फूर्जकास्तिलकाश्चैव नागवृक्षाश्च पुष्पिताः ।
चूताः पाटलयश्चैव कोविदाराश्च पुष्पिताः । [ 15 ]
मुचुलिन्दार्जुनाश्चैव शिंशपाः कुटजास्तथा ।
धवाः शाल्मलयश्चैव रक्ताः कुरबकास्तथा ।
हिन्तालास्तिमिशाश्चैव चूर्णका नीपकास्तथा ।
नीलाशोकाश्च वरणा अङ्कोलाः पद्मकास्तथा ।
प्लवमानैः प्लवंगैस्तु सर्वे पर्याकुलीकृताः । [ 20 ]
वाप्यस्तस्मिन्गिरौ शीताः पल्वलानि तथैव च ।
चक्रवाकानुचरिताः कारण्डवनिषेविताः ।
प्लवैः क्रौञ्चैश्च संकीर्णा वराहमृगसेविताः ।
ऋक्षैस्तरक्षुभिः सिंहैः शार्दूलैश्च भयावहैः ।
व्यालैश्च बहुभिर्भीमैः सेव्यमानाः समन्ततः । [ 25 ]
पद्मैः सौगन्धिकैः फुल्लैः कुमुदैश्चोत्पलैस्तथा ।
वारिजैर्विविधैः पुष्पै रम्यास्तत्र जलाशयाः ।
तस्य सानुषु कूजन्ति नानाद्विजगणास्तथा ।
स्नात्वा पीत्वोदकान्यत्र जले क्रीडन्ति वानराः ।
अन्योन्यं प्लावयन्ति स्म शैलमारुह्य वानराः । [ 30 ]

[ $D_5$ $T_1$ $G_1$ om. l. 1–2. —(l. 1) $D_{10.11}$ $M_5$ अशोकांश् ( for अङ्कोलांश् ). $G_3$ कराश्चैव; Cg as above ( for करञ्जांश्च ). $D_{10.11}$ -पादपान्; Cr.g as above ( for -तिन्दुकान् ). —(l. 2) $D_3$ $T_2$ $M_5$ जंबून्; $M_{1.2}$ जंबूर् ( for जम्बुक- ). $G_2$ पूतान्; $M_3$ नीपान् ( for नागान् ). $D_{11}$ $G_{2.3}$ $M_5$ भजंति. —(l. 3) $T_3$ कनकद्रुमाः ( for कानन° ). —(l. 4) $D_7$ उरुवेगैः; $G_2$ वायुवेगैः; Cg as above ( for वायुवेग- ). $D_{6.10.11}$ $T_2$ $M_3$ तां ( for गाम् ). —(l. 6) $G_3$ उप- ( for अनु- ). $M_5$ मद- ( for मधु- ). —$G_2$ reads l. 7 twice. —(l. 7) $D_{5.7}$ $T_1$ $G_3$ $M_5$ स; B(ed.) तु ( for सु- ). —(l. 8) $D_{10.11}$ $T_{1.3}$ -वेगेन ( for -वेगवि- ). —(l. 9) $D_6$ $T_3$ $M_3$ पर्वतः; $G_{1.2}$ $M_{1.2}$ सर्वशः ( for सर्वतः ). —$G_1$ om. ( hapl. ) l. 11–14. —(l. 11) $D_6$ $T_{2.3}$ सिंधु- ( for सिन्दु- ). —(l. 12) $D_{11}$ -पूर्वाश् ( for -पूर्णाश् ). $D_7$ स्फूर्जाः कुंदाश्; Cr °कुंजाश् ( for कुन्दगुल्माश् ). —(l. 13) $D_{6.7}$ $T_3$ चि( $T_3$ ची )रबिल्वा. $D_{7.10.11}$ $T_2$ $G_3$ $M_{1.2.5}$ Ct वंजुला बकुलास् ( by transp. ); $M_3$ बकुलाः प्रियकास्. —(l. 14) $D_{5.6}$ $T_{1.3}$ भूर्जकास्; $D_{7.10.11}$ रंजकास्; $G_2$ रजतास्; $M_{1.2}$ करंजास्; Cg as above ( for स्फूर्जकास् ). $M_2$ किलकाश् ( for ति° ). $T_3$ चूता ( for चैव ). —After the prior half of l. 14, $G_3$ ins:

78(A)* पूर्णकाननकास्तथा ।
कुरण्डास्तिलकाश्चापि.

—$M_{1.2}$ read l. 15 twice. —(l. 15) $D_{7.10.11}$ $G_{2.3}$ $M_5$ पाटलिकाश्चैव; $G_1$ च पाटलीकाश्च; Cg as above ( for पाटलयश्चैव ). $M_{1.2}$( both first time ) नागवृक्षाश् ( for कोविदाराश् ). —(l. 16) $D_7$ मुचुकुंद-; Cg as above ( for मुचुलिन्द- ). $D_6$ $T_3$ मुचिलिंदोर्जुनश्. $D_{5-7}$ $M_3$ सिं( $M_3$ शिं )शुपाः ( for शिंशपाः ). $G_2$ शिरीषाः शिंशुपास्तथा ( for the post. half ). —After l. 16, $D_7$ ins:

78(B)* धवाश्च तूर्णकाश्चैव नीपावरणपद्मकाः ।

—$D_{10.11}$ $G_2$ om. ( hapl. ) l. 17. $M_5$ reads l. 17 after l. 13. —(l. 17) $D_6$ $T_{2.3}$ तथा; $M_5$ वंशाः ( for धवाः ). $D_7$ शलालयश्; $M_5$ शल्मलयश् ( for शाल्म° ). $M_{1.2}$ शल्मलयश्च पलाशाश्च ( for the prior half ). $M_2$ कुरवतास्. —(l. 18) $D_{5.7}$ तिनिशाश्; $D_6$ $T_{2.3}$ $G_2$ $M_{1.2}$ तिलकाश् ( for तिमि° ). $G_1$ पुंनगाः; $G_2$ चूर्णिता; $G_3$ $M_5$ चूर्णिका ( for चूर्णका ). $D_6$ $T_{2.3}$ $G_1$ पारिभद्रकाः; $G_3$ $M_3$ नीपि( $M_3$ दीप )कास्तथा ( for नीपका° ). —$G_2$ om. ( hapl. ) l. 19. —(l. 19) $D_6$ $T_{2.3}$ $G_3$ वरुणा; $D_{10.11}$ सरला ( for वरणा ). $G_3$ पनसास् ( for पद्मकास् ). —(l. 20) $D_{10.11}$ Ct प्रीयमाणैः ( for प्लवमानैः ). $D_7$ $G_3$ च; $G_1$ $M_5$ तैः ( for तु ). $G_3$ ते व्याकुलीकृताः; Cg as above ( for पर्या° ). ❀ Cv : प्लवमानैः पतङ्गैस्तु सर्वे पर्याकुलीकृता इति समीचीनः पाठः. ❀ —(l. 21) $D_{10.11}$ रम्याः ( for शीताः ). —(l. 22) $G_2$ कारंडैश्च; Cm.g as above

फलान्यमृतगन्धीनि मूलानि कुसुमानि च ।
बुभुजुर्वानरास्तत्र पादपानां बलोत्कटाः ॥ ५८
द्रोणमात्रप्रमाणानि लम्बमानानि वानराः ।
ययुः पिबन्तो हृष्टास्ते मधूनि मधुपिङ्गलाः ॥ ५९
पादपानवभञ्जन्तो विकर्षन्तस्तथा लताः ।
विधमन्तो गिरिवरान्प्रययुः प्लवगर्षभाः ॥ ६०
वृक्षेभ्योऽन्ये तु कपयो नर्दन्तो मधुदर्पिताः ।
अन्ये वृक्षान्प्रपद्यन्ते प्रपतन्त्यपि चापरे ॥ ६१
बभूव वसुधा तैस्तु संपूर्णा हरिपुंगवैः ।
यथा कलमकेदारैः पक्वैरिव वसुंधरा ॥ ६२
महेन्द्रमथ संप्राप्य रामो राजीवलोचनः ।
अध्यारोहन्महाबाहुः शिखरं द्रुमभूषितम् ॥ ६३
ततः शिखरमारुह्य रामो दशरथात्मजः ।
कूर्ममीनसमाकीर्णमपश्यत्सलिलाशयम् ॥ ६४

G. 5. 74. 13
B. 6. 4. 93
L. 5. 72. 17

(for °ऽड्व-).—(l. 23) G$_3$ M$_{1.2}$ संपूर्णा (for संकीर्णा).—(l. 24) T$_2$ तरुक्षुभि:. D$_5$ सिद्धैः (for सिंहै:).—(l. 25) G$_3$ व्याधैश् (for व्यालैश्). D$_7$ G$_1$ M$_{1.2.5}$ ततस्तत: (for समन्तत:).—(l. 26) D$_6$ तदा; G$_3$ अपि (for तथा).—(l. 27) D$_6$ विमलै: (for विविधै:).—(l. 29) D$_6$ T$_{2.3}$ [उ]दकान्यन्ये. G$_3$ M$_5$ पीत्वोदकं तत्र; M$_{1.2}$ पीतोदकास्तत्र (for पीत्वोदकान्यत्र). G$_3$ जलै: (for जले).—G$_1$ om. (hapl.) from l. 30 up to 59$^{b}$.]

58 G$_1$ om. 58 (cf. v.l. 77*).—$^{a}$) B$_2$ [अ]द्भुत- (for [अ]मृत-). Ś$_1$ Ñ$_2$ V$_{1.3}$ B$_{1.2.4}$ D$_9$ G$_3$ -कल्पानि; B$_3$ -रूपाणि; Cg.k.t as in text (for -गन्धीनि).—$^{b}$) Ś$_1$ D$_{12}$ सुरभीणि च; Ñ$_2$ V$_{1.3}$ B$_{2-4}$ D$_9$ च लतास्तथा; B$_1$ च फलानि च; D$_7$ सुबहूनि च (for कुसुमानि च). D$_6$ T$_{2.3}$ कुसुमानि समंतत: (T$_3$ मधूनि च).—For 58$^{ab}$, D$_{1-4.8}$ subst.; Ś$_1$ D$_{12}$ cont. after 80*:

79* पुष्पाण्यतिसुगन्धीनि मूलानि च फलानि च ।
[D$_{1.3}$ [अ]पि (for [अ]ति-).]

—After 58$^{ab}$, Ś$_1$ D$_{12}$ ins.:

80* भक्षयन्तो महावेगाः प्रययुस्तत्र वानराः ।

—$^{c}$) Ś$_1$ Ñ V$_{1.3}$ B D T$_{2.3}$ G$_{2.3}$ M$_{1.2.5}$ बभंजुर् (for बुभुजुर्). Ñ$_1$ दर्पात् (for तत्र).—$^{d}$) Ñ$_2$ V$_{1.3}$ B D$_9$ पादपांश्च; D$_6$ पादपांस्तान् (for पादपानां). Ś$_1$ Ñ$_1$ D$_{1.7.10-12}$ T$_1$ G$_2$ M$_3$ मदोत्कटा:; V$_3$ °टान् (for बलोत्कटा:).—After 58, Ñ$_2$ V$_1$ B D$_9$ ins.:

81* पश्यन्तश्चारुरूपाणि ययुः शीघ्रमरिंदमाः ।

59 G$_1$ om. 59$^{ab}$ (cf. v.l. 77).—$^{c}$) V$_1$ पुन: (for ययु:). Ś$_1$ D$_{12}$ मिष्टानि; Ñ V$_{1.3}$ B D$_9$ स्वादूनि; D$_{1-4.8}$ संहृष्टा; D$_{10.11}$ स्वस्थास्ते (for हृष्टास्ते).

60 D$_9$ om. 60$^{ab}$.—$^{a}$) Ś$_1$ अवभंजंते; D$_1$ एव भंजंत:; D$_4$ च प्रभंजंतो (for अवभञ्जन्तो).—$^{b}$) D$_8$ विकर्षंत.—$^{c}$) Ś$_1$ D$_{12}$ गिरिवरं.—$^{d}$) D$_{1-4.8}$ ययुस्ते (for प्रययु:). Ś$_1$ Ñ$_2$ B$_2$ D$_{9.12}$ वानरर्षभा:; D$_6$ T$_{2.3}$ ते प्लवंगमा:.

61 Ñ$_1$ om. 61$^{ab}$.—$^{a}$) Ñ$_2$ V$_{1.3}$ B D$_9$ वृक्षानेकत्र; D$_2$ वृक्षाश्चैकेति (sic); D$_8$ वृक्षांश्चैकेषु (sic) (for वृक्षेभ्योऽन्ये तु). Ś$_1$ वृक्षानेकानुमर्दंत:; D$_1$ वृक्षानारुरुहे केचित् (sic); D$_3$ वृक्षांके निपतंतोन्ये; D$_4$ वृक्षांश्चैके तूत्पतंति; D$_{12}$ वृक्षानेके तु मंदंतं (sic).—$^{b}$) Ś$_1$ D$_{1.4.12}$ कपयो; Ñ$_2$ V$_3$ B$_3$ D$_{2.3.6.10.11}$ G$_1$ न(D$_{10}$ नं)दंतो (for नर्दन्तो). V$_3$ मद-; D$_{3.4}$ बल- (for मधु-). D$_{6.7}$ -तर्पिता: (for -दर्पिता:).—$^{c}$) T$_3$ M$_{1.5}$ अन्यान् (for अन्ये).—G$_1$ damaged for $^{d}$.—$^{d}$) D$_{6.10.12}$ T$_{2.3}$ प्रपिबंति (for °पतन्ति).—For 61$^{cd}$, Ś$_1$ Ñ V$_3$ B D$_{1-4.8.9.12}$ subst.:

82* वृक्षेभ्यो निपतन्ति स्म प्रलम्बन्त्यपि चापरे ।

[Ñ$_2$ V$_3$ B D$_9$ अन्यस्मिन् (for वृक्षेभ्यो). Ñ$_1$ विनदंति; D$_1$ न्योपतंति (sic). Ś$_1$ D$_{12}$ प्लवमाना: प्लवंगमा:; Ñ$_2$ V$_3$ B D$_9$ प्रलंबं(B$_3$ °वर्धं)ते त(B$_3$ D$_9$ य)थापरे (for the post. half).]

62 $^{a}$) V$_3$ D$_8$ बभूवुर् (sic).—$^{b}$) D$_3$ संकुला (for संपूर्णा). Ś$_1$ Ñ V$_3$ B D$_{1-4.8.9.12}$ मधुपिंगलै:; D$_5$ T$_1$ G$_3$ M$_3$ °यूथपै: (for हरिपुंगवै:).—After 62$^{ab}$, Ñ$_1$ reads 65.—$^{c}$) D$_7$ युक्ता (for यथा). V$_3$ B$_{1.3}$ D$_4$ T कमल- (meta.?) (for कलम-).—$^{d}$) Ś$_1$ D$_{12}$ पक्वाग्रैश्च; Ñ V$_3$ B D$_{1-4.8.9.12}$ परिपक्वै: (for पक्वैरिव). Ñ$_1$ D$_{1-4.8}$ समावृता (for वसुंधरा).—After 62, Ś$_1$ Ñ$_1$ (after 62$^{ab}$) D$_{1-4.8.12}$ read 65.

63 D$_1$ reads 63–64 after 67$^{ab}$.—$^{a}$) D$_2$ अयम्; D$_4$ इव (for अथ). D$_2$ आसाद्य (for संप्राप्य). B$_3$ महेंद्र: प्रथमं प्राप्य.—$^{c}$) D$_2$ अध्याहारो (sic); D$_{7.10.11}$ G$_3$ आरुरोह (for अध्यारोहन्).—$^{d}$) Ś$_1$ Ñ V$_3$ B D$_{1-4.8.12}$ शिखराग्रं सुपुष्पितं.

64 D$_1$ reads 63–64 after 67$^{ab}$.—$^{a}$) Ś$_1$ Ñ V$_3$ B D$_{1.9.12}$ स तच्; D$_{2.4.8}$ स तं (for तत:). Ś$_1$ Ñ$_2$ V$_3$ B D$_{1.9.12}$ आसाद्य (for आरुह्य).—$^{b}$) Ñ$_1$ D$_4$ सुग्रीवमब्रवीत्; G$_3$ राजीवलोचन: (for दशरथात्मज:).—$^{c}$) D$_1$ कृत्स्नं; T$_{2.3}$ नक्र- (for कूर्म-). Ś$_1$ M$_5$ -झषा-; Ñ V$_3$ B$_4$ -गण-; B$_2$ -नग- (for -सम-).—$^{d}$) Ñ D$_4$ पश्येयं(D$_4$ °मं) (for अपश्यत्). Ś$_1$ Ñ$_1$ D$_{10-12}$ M$_3$ सलिलाकरं(Ñ$_1$ °शयं; D$_{10.11}$ °कुलं); Ñ$_2$ V$_3$ B D$_9$ वरुणालयं; T$_2$ स महार्णवं (for सलिलाशयम्).—After 64, Ñ$_2$ V$_3$ B D$_{5-7.9.11}$ S ins.; while Ś$_1$ Ñ$_1$ (after 62$^{ab}$) D$_{1-4.8.12}$ ins. after 62:

G. 5. 74. 13
B. 6. 4. 94
L. 5. 72. 14

ते सह्यं समतिक्रम्य मलयं च महागिरिम् ।
आसेदुरानुपूर्व्येण समुद्रं भीमनिःस्वनम् ॥ ६५

अवरुह्य जगामाशु वेलावनमनुत्तमम् ।
रामो रमयतां श्रेष्ठः ससुग्रीवः सलक्ष्मणः ॥ ६६

अथ धौतोपलतलां तोयौघैः सहसोत्थितैः ।
वेलामासाद्य विपुलां रामो वचनमब्रवीत् ॥ ६७

एते वयमनुप्राप्ताः सुग्रीव वरुणालयम् ।
इहेदानीं विचिन्ता सा या न पूर्वं समुत्थिता ॥ ६८

अतः परमतीरोऽयं सागरः सरितां पतिः ।
न चायमनुपायेन शक्यस्तरितुमर्णवः ॥ ६९

तदिहैव निवेशोऽस्तु मन्त्रः प्रस्तूयतामिह ।
यथेदं वानरबलं परं पारमवाप्नुयात् ॥ ७०

इतीव स महाबाहुः सीताहरणकर्शितः ।
रामः सागरमासाद्य वासमाज्ञापयत्तदा ॥ ७१

---

65 D9 om. $65^{ab}$. —$^{a}$) V3 च विंध्यम् ; B विंध्यं सम्- ( B4 अन्- ); G1 च सह्यम् ( for सह्यं सम्- ). Ś1 Ñ1 D1–4.8.12 स विंध्यं गिरिमासाद्य. —After $65^{ab}$, Ś1 Ñ1 D1–4.8.12 ins.:

83* वनानि चाप्यतिक्रम्य नदीश्च विमलोदकाः ।

[ D2.8 [अ]भि- ( for [अ]ति- ). ]

—$^{c}$) Ś1 Ñ1 D1.3.4.8.12 आससादानु-; D2 असमासानु- (sic) ( for आसेदुरानु- ). —$^{d}$) M1.2 सागरं ( for समुद्रं ). D1.2.4.5.8.10.11 T1 G M भीमनिस्वनं( D1.4.8 °दर्शनं ); D3 भीमनिःस्वनः; D6 T2.3 मकरालयं.

—After 65, Ś1 Ñ1 D1–4.8.12 read $88^{cd}$.

66 Ñ1 D4 om. 66 – $68^{b}$. D1 om. $66^{ab}$. —$^{a}$) Ś1 D12 अवतीर्य; Ñ2 आरुरुह्य (sic) ( for अवरुह्य ). D2.3.8 ततश्च ( for जगाम ). M1.2 [अ]थ ( for [आ]शु ). —D8 om. from $66^{b}$ up to the prior half of 84*. —B1 -[अ]चलम् ( for -वनम् ). D2.3 उपागमन् ( for अनुत्तमम् ). —$^{d}$) Ś1 V3 B1–3 D7.9.12 सुग्रीवश्च स( D7 °वः स च ); Ñ2 M2 ससुग्रीवश्च( M2 °वः सह- [ hypm. ] ); B4 D2 G2.3 M3 सुग्रीवः सह-; D1 सुग्रीवो हि स- ( for ससुग्रीवः स- ).

67 Ñ1 D4.8 om. 67 ( cf. v.l. 66 ). —$^{a}$) Ñ2 ( m. ) V3 B D9 -[अ]मल- ( for -[उ]पल- ). Ś1 Ñ2( m. ) V3 B1.2.4 D1–3.9.12 -शिलां; T3 -तलं ( for -तलां ). —$^{b}$) Ñ2 V3 B D1.2 तोयौघ- ( for °घैः ). Ś1 D12 सहसावृतां; Ñ2 V3 B D9 -समभिप्लुतां; D1 -द्रुममंडितां; D2 °त्थितां; T2.3 °द्द( T3 °द्धि )तैः ( for सहसोत्थितैः ). —$^{cd}$) D6 T2.3 सहसा ( for विपुलां ). B3 विपुलां वेलामासाद्य ( by transp. ). B4 D2.3 सुग्रीवम् ( for वचनम् ). D1 प्राप्य रामस्तदा भूमिं सुग्रीवमिदमब्रवीत्.

68 Ñ1 D4 om. $68^{ab}$; D8 om. up to the prior half of 84* ( for all, cf. v.l. 66 ). —$^{b}$) Ñ2 D9 लवणांभसि; V3 B D1–3 लवणोदधिं ( for वरुणालयम् ). —After $68^{ab}$, D1 reads 63 – 64( preceded by 85* ). —$^{c}$) D5 T1 G3 विचिंत्या सा; D6 विचिंत्यामः ( metri causa ) ( for विचिन्ता सा ). —$^{d}$) D7.10.11 Ct उपस्थिता ( for समुत्थिता ).

—For $68^{cd}$, Ś1 Ñ1 D1–4.8.12 subst. and all ( except D8 ) read after $72^{ab}$ :

84* इहेदानीं विचिन्त्यो हि न यः पूर्वं समाहितैः ।

[ D8 om. the prior half. Ñ1 सर्वं ( for पूर्वं ). D1 समाहितः. ]

—For $68^{cd}$, Ñ2 V3 B D9 subst.; Ś1 D1–3.12 ins. after $68^{ab}$ :

85* संतारश्चिन्त्यतामत्र पूर्वं यः परिचिन्तितः ।

[ B4 अस्य ( for अत्र ). D1 यः पूर्वं ( by transp. ). Ś1 प्रसमुत्थितः; V3 प्रश*न्वितः; B1 प्रसमीक्षितः; B3 D2.3.12 प्रसमर्थि( D3 °र्पि )तः; B4 सममर्थितः; D1 मनसि स्थितः ( for परिचिन्तितः ). ]

69 D8 om. $69^{ab}$. —$^{a}$) Ñ1 B3 ततः ( for अतः ). Ś1 Ñ V3 B D2.9.12 परमगाधो; D1.3.4 G2 °पारो; T3 °धीरो; Cm.g.k.t as in text ( for परमतीरो ). —After $69^{ab}$, Ś1 D1–4.12 read $72^{ab}$. —$^{c}$) D3 अनयेनेह ( for अनुपायेन ). Ñ1 स चाययंसपायेन ( corrupt ). —$^{d}$) Ś1 Ñ1 D1–4.8.12 शक्यस्त( Ś1 °स्ती )र्तुं( D8 °त्र ) कथंचन. Ñ2 V3 B D9 तरितुं शक्यतेर्णवः( V3 °स्तुतः ).

70 Ś1 D12 om. 70. —$^{ab}$) D4 इमं हि ( for इहैव ). Ñ1 D1–4.8 समावि( D8 °दि )श्य ( for निवेशोऽस्तु ). Ñ1 D1–4.8 मंत्रः संचिंत्यतां सखे ( for $^{b}$ ). Ñ2 V3 B D9 निवेशमिह कृत्वा तु मन्त्र( Ñ2 B2 D9 चिंत )यध्वं हितं मम. —$^{c}$) D1.8 यदेव; G2 यथैतद् ( for यथेदं ). D1 उपाप्नुयात्; D2 अवाप्नुयुः ( sic ) ( for अवाप्नुयात् ).

71 Ś1 D1–4.8.12 transp. 71 and $72^{cdef}$ ( Ś1 D12 om. $72^{cd}$ ). Ñ1 transp. 71 and 72. —$^{a}$) Ś1 Ñ V3 B D1–4.8.9.12 इत्येवं स( Ñ2 V3 B D9 एवमुक्त्वा ) महाभागः( Ś1 D2.12 °बाहुः ). —$^{b}$) Ś1 Ñ2 V3 B1.2 D2.6.7.9 -कर्षितः; D12 -कारितः ( sic ) ( for -कर्शितः ). —$^{d}$) B1 रामम् ( sic ); B2.3 सेनाम् ( for वासम् ). Ś1 D12 च सः ( for तदा ). —After 71, Ñ V3 B D5–7.9–11 S ins.:

86* सर्वाः सेना निवेश्यन्तां वेलायां हरिपुंगव ।

[ V3 B D5.7.9 T1 G2 हरिपुंगवाः. ❀ Cr : सर्वाः सेना निवेश्यन्तां वेलायां हरिपुंगवेति पाठः. ❀ ]

संप्राप्तो मन्त्रकालो नः सागरस्येह लङ्घने ।
स्वां स्वां सेनां समुत्सृज्य मा च कश्चित्कुतो व्रजेत् ।
गच्छन्तु वानराः शूरा ज्ञेयं छन्नं भयं च नः ॥ ७२

रामस्य वचनं श्रुत्वा सुग्रीवः सहलक्ष्मणः ।
सेनां न्यवेशयत्तीरे सागरस्य द्रुमायुते ॥ ७३

विरराज समीपस्थं सागरस्य तु तद्बलम् ।
मधुपाण्डुजलः श्रीमान्द्वितीय इव सागरः ॥ ७४

वेलावनमुपागम्य ततस्ते हरिपुंगवाः ।
विनिविष्टाः परं पारं काङ्क्षमाणा महोदधेः ॥ ७५

सा महार्णवमासाद्य हृष्टा वानरवाहिनी ।
वायुवेगसमाधूतं पश्यमाना महार्णवम् ॥ ७६

G. 5. 74. 27
B. 6. 4. 108
L. 5. 73. 2

---

72 D8 om. $72^{ab}$; Ś1 D1–4.12 read $72^{ab}$ after $69^{ab}$. —$^{a}$) G2 प्रयातो (for संप्राप्तो). D2 चात्र (for मन्त्र-). —$^{b}$) B2 D6 समुद्रस्य (for सागरस्य). Ś1 D2–4.6.12 च; Ñ1 वि-; D1 [अ]पि; D5 T M [अ]स्य; G3 [इ]व (for [इ]ह). —After $72^{ab}$, Ś1 Ñ1 D1–4.12 read 84*. —Ś1 D1–4.8.12 transp. 71 and $72^{cdef}$ (Ś1 D12 om. $72^{cd}$). Ñ1 transp. 71 and 72. —$^{c}$) D2.4 अतिक्रम्य; D3.8 परिक्रम्य (for समुत्सृज्य). —B1 reads $72^{d}$ in marg. —$^{d}$) D2 यावत्; D3 मां च (for मा च). D1–4.8 केचित्; T3 गच्छेत् (for कश्चित्). Ñ V1 B D6 T2.3 G2 M1.2 कुतश्चन; V3 कुतः पुनः; D1–4.8 कथंचन; G1 व्रजेत्कुतः (by transp.); Cr.m.k.t as in text. —$^{e}$) Ñ2 V1.3 B D9 M1.2 गच्छेयुः (B1.3 °त; B4 °न्तु; M1.2 °न्तु); G3 गच्छंतो; Cm.g.k.t as in text (for गच्छन्तु). Ś1 स्वैरं (for शूरा). —$^{f}$) D1 छिन्नं; D8 छिन्नैः (for छन्नं). B2 D5 T3 M बलं; Cg.k.t as in text (for भयं). Ñ D1–4.8.9 हि नः; V1.3 B1 बलं; B3 वनं; B4 यतः (for च नः). Ś1 D12 वासार्थं सुसमाहिताः.

73 $^{a}$) V1.3 B D9 तद्वचः; D1–3.8 तु (D1 च) वचः (for वचनं). D4 राघवस्य वचः श्रुत्वा. —$^{b}$) Ś1 Ñ1 D2–4.8.12 ससुग्रीवा (D3.8 °वः) सलक्ष्मणा (D3.8 °णः). —After $73^{ab}$, Ś1 D2.8.12 ins.; while Ñ1 D1.4 cont. after 88*; whereas D3 ins. after $75^{ab}$:

87* भीमगम्भीरनिर्घोषा प्राज्यसत्त्वा महाबला ।

[Ś1 Ñ1 D12 -निर्घोषगंभीरा. Ñ1 भयावहा; D1.2.4.8 महाभया (D1 °रुपा) (for °बला).]

—$^{c}$) D6.10 T3 निवेशयत् (sic). Ñ2 V1.3 B D9 न्यवेशयद्बलं तीरे. —$^{d}$) Ñ2 B2 D9 द्रुमान्विते (for °युते). —For $73^{cd}$, Ś1 Ñ1 D1–4.8.12 subst.:

88* सेना सा न्यवसत्तीरे दक्षिणस्य महोदधेः ।

[Ś1 D3.12 सा सेना (by transp.). L(ed.) ससैन्यकोवसत्तीरे (for the prior half).]

74 $^{a}$) Ñ2 V1.3 B D9 गिरिराज- (for विर°). —$^{b}$) Ś1 बलं महत्; D3.4.10.11 G2 M3 च तद्बलम् (for तु त°). Ñ2 V1.3 B D9 हरीणां तद्बलं बभौ. —$^{c}$) L(ed.) साधुवीर- (for मधुपाण्डु-). D12 G1 -जलं (for -जलः). ❀ Cr.m : मधुपानोत्कटं श्रीमान्द्वि (Cm °मद्वि)तीय इव सागर इति (Cm °ति वा) पाठः ।; Ct : मधुशब्दसमभिव्याहारात्पाण्डुशब्दः पिङ्गलवर्णवाची ज्ञेयः. ❀ —$^{d}$) Ś1 भास्करः (for सागरः).

75 $^{b}$) D3 तस्थुस् (for ततस्). G2 M1.2 तद् (for ते). Ñ2 V1.3 B D9 T2 -यूथपाः (for -पुंगवाः). —After $75^{ab}$, D3 ins. 87*. —$^{c}$) Ñ2 V1.3 B D9 संनिविष्टाः; D3 विनिविशुः (sic); D7.10.11 M1.2 निविष्टास्ते (D10.11 °श्च) (for विनिविष्टाः). —$^{d}$) D3.4 वीक्ष्यमाणा (for काङ्क्ष°). —After 75, Ś1 D1–4.12 ins. an additional colophon.

[Colophon. —*Kāṇḍa name* : D1–4.12 सुन्दरकाण्डे. —*Sarga name* : Ś1 D12 समुद्रतीरनिवासः; D1.4 समुद्रतीरगमनं (D4 °नः); D2 समुद्रतीराभिगमनं; D3 समुद्रतीरवासः. —*Sarga no.* (figures, words or both) : D1.2.4.12 om.; Ś1 73; D3 79; L(ed.) 72. —After colophon, D2 concludes with राम.]

—After 75, D5–7.10.11 S ins.; Ñ2 V1.3 B1 (l. 4 only)–4 D9 ins. l. 3–4 only after 75:

89* तेषां निविशमानानां सैन्यसंनाहनिःस्वनः ।
अन्तर्धाय महानादमर्णवस्य प्रशुश्रुवे ।
सा वानराणां ध्वजिनी सुग्रीवेणाभिपालिता ।
त्रिधा निविष्टा महती रामस्यार्थपराभवत् ।

[(l. 1) D5 T3 G3 निवेश (T3 °विश्य)मानानां (for निवि°). —D5 om. (hapl.?) from महानादम् in l. 2 up to महार्ण in $76^{a}$. —(l. 3) D6 G1 [अ]भिरक्षिता (for °पालिता). —(l. 4) V3 [अ]र्थे (for [अ]र्थ-). M5 सती (also) (for [अ]भवत्). B2 रामस्यापरमामवत् (sic) (for the post. half). ❀ Cv : त्रिधा निविष्टाः ।; ऋक्षवानरगोपुच्छविभागेन निविष्टाः ।; so also Cr.m.t (Ct further adds त्रिधा निविष्टा त्रिवलया निविष्टेत्यन्ये); Cg : त्रेधा त्रिप्रकारैः । वलयत्रयाकारेणेति यावत् । वानरगोपुच्छभल्लूकभेदेन त्रेधेति वा. ❀ ]

76 D5 om. up to महार्ण in $^{a}$ (cf. v.l. 89*). —$^{b}$) Ś1 Ñ1 D1–4.8.12 तस्थौ (for हृष्टा). Ñ1 D8 L(ed.) वा (D8 च; L[ed.] वै) हरि- (for वानर-). —$^{c}$) Ś1 Ñ1 D1–4.12 वातवेग-; B4 °वेगे; D8 कतवेवा (sic) (for °वेग-). Ś1 Ñ V1.3 B D1–4.8.9.12 -समुद्धू (Ñ2 V1 B D1.9 °द्भू)तं (for -समाधूतं). —$^{d}$) Ś1 Ñ V1.3 B D1–4.8.9.12 प्रेक्ष्यमाणा (B1 °णो [sic]) (for पश्यमाना). Ś1 Ñ1 D1–4.8.12 -[उ]दधिं (for -[अ]र्णवम्).

एष चैषामधिपतिर्मध्ये तिष्ठति वीर्यवान् ।
नाम्ना पृथिव्यां विख्यातो राजञ्शतबलीति यः ।
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ ३९

गजो गवाक्षो गवयो नलो नीलश्च वानरः ।
एकैक एव यूथानां कोटिभिर्दशभिर्वृतः ॥ ४०

तथान्ये वानरश्रेष्ठा विन्ध्यपर्वतवासिनः ।
न शक्यन्ते बहुत्वात्तु संख्यातुं लघुविक्रमाः ॥ ४१

सर्वे महाराज महाप्रभावाः
सर्वे महाशैलनिकाशकायाः ।
सर्वे समर्थाः पृथिवीं क्षणेन
कर्तुं प्रविध्वस्तविकीर्णशैलाम् ॥ ४२

G. 6. 3. 51
B. 6. 27. 48
L. 6. 3. 45

इति श्रीरामायणे युद्धकाण्डे अष्टादशः सर्गः ॥ १८ ॥

---

39 For $39^{ab}$, Ś Ñ V B ( B2 subst. and reads after 393* ) D0–4.8.12.13 subst.:

395* कामरूपी महावीर्यः संहर्षात्समरोद्धतः।

[ Ñ V2 B स एष( B3 °व ) ; L (ed.) संहर्षः ( for संहर्षात् ). Ś D8.12 समरोद्धतः . ]

—After $39^{ab}$, D5–7.9–11 S ins. :

396* जयार्थी नित्यमादित्यमुपतिष्ठति वीर्यवान्।

[ D9.11 राज्यार्थी ( for जयार्थी ). T3 सत्यम् ( for नित्यम् ). D5.6 T2.3 M3 बुद्धिमान् ; G1 वानरः ( for वीर्यवान् ). ❀ Cg :उपतिष्ठति उपतिष्ठते. ❀ ]

—Thereafter, G1 M5 cont. l. 2 of 393*.

—$^{c}$ ) Ñ V B3 D0–2.4.13 राजन् ( for नाम्ना ). G3 संख्यातो ( for विख्यातो ). Ś D8.9.12 यः पृथिव्यां तु विख्यातो; B1.2.4 राजा वानरमुख्यानां. —$^{d}$ ) B2.4 नाम्ना; T3 राजा ( for राजञ् ). Ś Ñ V B1 D0–4.8.12.13 नाम्ना( D3 वीरः ) शतबलिस्तु ( Ś D8.12 °श्च ) यः( Ñ V2 °लिर्हरिः ; V1.3 °लीति च; B1 °लिर्बलिः ; D3 °ली तु सः ) ; B3 नाम्ना शंकुबलिर्हरिः. —After $39^{cd}$, Ś Ñ V1.3 B1.2.4 D0–4.8.12.13 ins.; while B3 ins. l. 1 after $39^{cd}$ and l. 2 in marg. after $40^{ab}$ :

397* वृतः कोटीसहस्रेण लङ्कां प्रार्थयते हरिः।
उल्कामुखश्च ऋषभः शरभो गन्धमादनः।

[ ( l. 1 ) Ñ2 V1.3 B1 D0.2.13 कोटि- ( for कोटी- ). Ś V1 D0–2.4.8.12.13 -सहस्रैस्तु( V1 D4 °श्च ). Ñ V3 B1.3 ह्यसौ ( for हरिः ). —Ñ B1.2.4 D3 om. l. 2. —( l. 2 ) Ś V1 D0.8.12 वृषभः ; G ( ed. ) दुर्धर्षः ( for ऋषभः ). ]

—D8 om. $39^{ef}$–$40^{ab}$. Ñ V2 B1.2.4 om. $39^{ef}$. Ś D0.2–4.13 (after 29 owing to om. of 30–$31^{ab}$) read $39^{ef}$ for the first time after $31^{ab}$, repeating it after 34. V1.3 D1.12 read $39^{ef}$ after $31^{ab}$. B3 reads $39^{ef}$ (marg.) for the first time after 28 repeating it (marg.) after 31. —$^{e}$ ) Ś D0.2–4.12.13( Ś D0.4 both times ; D2.3 second time ; D13 first time )एषोपि; D8 एष वा; D13 ( second time ) सैषोपि ( for एषैव ). G1 M1.2.5 आशंसते ( for [ ए ]वाशंसते ). ❀ Cr.g : एषैवेत्यत्र ( Cg °वेति )सन्धिरार्षः . ❀ —$^{f}$ ) D1 धर्षितुं ( for मर्दितुम् ). —After 39, D5–7.9–11 S ins. :

398* विक्रान्तो बलवाञ्शूरः पौरुषे स्वे व्यवस्थितः।
रामप्रियार्थं प्राणानां दयां न कुरुते हरिः।

[ ( l. 1 ) M5 वीरः ( for शूरः ). G2 पौरुषेषु ( for °षे स्वे ). G1 पौरुषे पर्यवस्थितः ( for the post. half ). ]

40 Ś V1.3 D0–2.4.8.12.13 om. $40^{ab}$ ( for D8, cf. v.l. 39). D5 T1 om. 40. —$^{a}$ ) Ñ2 B गयो ( for गजो ). —$^{b}$ ) B1.2.4 यूथपः ( for वानरः ). —After $40^{ab}$, B3 ins. l. 2 of 397*. —V1 illeg. for $^{c}$. —$^{c}$ ) B3 D7.9–11 G1 एकैकम् ( for एकैक ). Ś B4 D3.8.12 एष; Ñ V2 B1–3 D2 एषां; G एते ( for एव ). Ś Ñ V2 B D2.3.8–12 M5 योधानां ( for यूथानां ). V3 D0.4 विजय( D4 °या )श्चैव एषां वै ( D0 °तेषां ) ; D1 विजयश्चैकपादश्च; D13 विजयश्चैर्दशभिकः (sic). —$^{d}$ ) Ś2 D1.3.8 G1 M1.3 कोटीभिर् ( for कोटिभिर् ).

41 $^{a}$ ) D1 अथ ( for तथा ). Ś D8.12 ये; D4 च ( for [अ]न्ये ). Ś D2.8.12 वानराः ( for वानर- ). —$^{cd}$ ) B3 transp. न and शक्यन्ते. D0.4 महत्त्वात् ( for बहुत्वात् ). M5 च ( for तु ). Ś D8.12 transp. बहुत्वात् and तु संख्यातुं. —After 41, Ñ V2 B1–3 D13 ins. :

399* अयं च सुग्रीवबलस्य नायको
युवाङ्गदो राघवपार्श्वतः स्थितः।
महाबलः काञ्चनशैलसंहतो
वलीमुखः काञ्चनपर्वतोपमः।

[ ( l. 1 ) Ñ1 V2 तु ( for च ). —( l. 2 ) V2 lacuna from रा up to स्थितः . —( l. 3 ) Ñ2 B1 -संनिभो ( for -संहतो ). —( l. 4 ) V2 -पर्वतान्नमः ( sic ) ( for -पर्वतोपमः ).

42 B1.3 ( in marg. ) repeat $42^{ab}$ after $42^{cd}$. —$^{a}$ ) Ś Ñ V B1( second time ).3 ( both times )

# १९

G. 6. 4. 1
B. 6. 8. 1
L. 6. 4. 1

सारणस्य वचः श्रुत्वा रावणं राक्षसाधिपम् ।
बलमालोकयन्सर्वं शुको वाक्यमथाब्रवीत् ॥ १
स्थितान्पश्यसि यानेतान्मत्तानिव महाद्विपान् ।
न्यग्रोधानिव गाङ्गेयान्सालान्हैमवतानिव ॥ २
एते दुष्प्रसहा राजन्बलिनः कामरूपिणः ।
दैत्यदानवसंकाशा युद्धे देवपराक्रमाः ॥ ३
एषां कोटिसहस्राणि नव पञ्च च सप्त च ।
तथा शङ्कुसहस्राणि तथा वृन्दशतानि च ॥ ४
एते सुग्रीवसचिवाः किष्किन्धानिलयाः सदा ।
हरयो देवगन्धर्वैरुत्पन्नाः कामरूपिणः ॥ ५
यौ तौ पश्यसि तिष्ठन्तौ कुमारौ देवरूपिणौ ।
मैन्दश्च द्विविदश्चोभौ ताभ्यां नास्ति समो युधि ॥ ६

---

D0–4.8.12.13 एते (for सर्वे). Ś V3 B3 (second time) D0–4.8.13 महानुभावा; B4 सम°; D13 महाबलाश्च ये (for महाप्रभावाः). —$^b$) M5 -रूपाः (for -कायाः). Ś Ñ V B1.3 (both second time) D0–4.8.12.13 महाबला(D13 यूथाधिपा)श्चाप्रतिमाश्च यु(Ñ2 °माः सुयु)द्धे. —$^d$) B2 परिध्वस्त-. B1–3 -विशीर्ण- (for -विकीर्ण-). G1.2 -शैलः (for -शैलाम्). B4 कर्तुं प्रध्वंसितशीर्णशैलां. —For $42^{cd}$, Ś Ñ V D0–4.8.12.13 subst.; while B1.3 (in marg.) ins. after $42^{ab}$ (r.):

400* शाखामृगाः पर्वतसंनिकाशाः
प्रकीर्तिता मुख्यतमाः पृथिव्याम् ।

[ (l. 2) B1 मुख्यवशाः (for मुख्यतमाः). ]

Colophon.—*Kāṇḍa name*: D8 om.; Ñ V2 B D2.12.13 लंका°; D0.4 सुंदर°.—*Sarga name*: Ś1 सारणदर्शनं; Ś2 Ñ V1.2 B1.3 D0.4.8.12.13 सारणवाक्यं; V3 वानरवर्णनं; B2.4 अनीकदर्शनं(B4 °नः); D1 सैन्यवर्णनः; D3 सैन्यवर्णने सारणवाक्यं; D3 सैन्यदर्शनं (also in marg. सारणवचनं).—*Sarga no.* (figures, words or both): Ś1 V2 B2 D0.2.4.12.13 om.; Ś2 Ñ V1.3 B1.3.4 D3.8.9 3; D1 5; D5–7.10.11 T1.3 G M 27; T2 26.—After colophon, G1.3 M1.2.5 concludes with श्रीरामाय नमः.

## 19

1 Cv is missing from 6.19.1 up to 6.20.5. —$^a$) Ś Ñ1 V B1 D0–4.8.12.13 [अं]तरं दृष्ट्वा; Ñ2 B2–4 [उ]त्तरं श्रुत्वा (for वचः श्रुत्वा). —$^b$) Ś Ñ V B D0–2.4.8.12.13 राक्षसस्य महाबलः(Ñ1 V2.3 B D1.4 °त्मनः); D3 रावणस्य दुरात्मनः. —$^c$) D5–7.9–11 T M Cm.g.k.t आदिश्य तत् (for आलोकयन्). Ś D0.2–4.8.12.13 बलमालोक्य(D0.2–4.13 °क)मानं च(D3 स); M5 बलमाश्रित्य तिष्ठंतं. —$^d$) Ś Ñ V2 B2–4 D0.2.3.8.12.13 रावणम्; V1.3 B1 D1.4 G M5 वचनम् (for वाक्यमथ).

2 $^a$) D3 स्थिरान्; D5–7 स्फीतान् (for स्थितान्). —$^b$) D0 महाबलान्; T2 G3 °गजान्; G2 °जवान् (for °द्विपान्). —After $2^{ab}$, Ñ2 B1.2.4 ins.:

401* हृष्टानमर्षणाञ्शूरान्युद्धे च कृतलक्षणान् ।

[ Ñ2 अमर्षिणः. B1 हृष्टानमर्षाञ्शूरांश्च (for the prior half). Ñ2 युद्धेषु (for युद्धे च). ]

—$^c$) D13 निःसृतान् (for न्यग्रोधान्). Ś D8.12 तुंगाग्रान्; B4 गंगायां (for गाङ्गेयान्). ❀ Cm.g.k.t: गाङ्गेयान् गङ्गातटरुहान् (Ck.t °टोत्पन्नान् । अनपत्येऽपि ढगार्षः). ❀ —$^d$) Ś D8.12.13 शैलान्; Ñ V2.3 B D1–4.9 शालान् (for सालान्). V3 D0 हैमवतीम् (sic).

3 $^a$) V D0–4.9.13 दुःप्रसहा; B2 दुर्विषहा. —$^c$) D3.4 देव- (for दैत्य-). —$^d$) B2 M1.2 सत्य-; B4 बहु- (for देव-). Ñ2 V2 B3 -[अ]सुरोपमाः; B2 -परायणाः (for -पराक्रमाः). V1 D1 दरीविक्राश्च वानराः.

4 $^a$) D1.3.8.12 कोटी-. —$^b$) Ñ1 D2 transp. पञ्च and सप्त. —Ñ1 om. (hapl.) $4^{cd}$. —$^c$) Ś1 नव शंख-; Ś2 D0.2–4.8 नव शंकु-; B3 D6 T2.3 M3 तथा शंख-; B4 om. (for तथा शङ्कु-). —$^d$) Ś V1 B D0–4.8.12.13 दशा(V1 B D1 तथा)बुंद-; Ñ2 illeg.; G2 वृता वृंद- (for तथा वृन्द-).

5 V1.3 D1.3 read 5 before 9. B3 repeats 5 (both times in marg.) after 7. —$^a$) Ñ1 -चरिताः; B1.2 (both times) -सहिताः (for -सचिवाः). —$^b$) Ś1 Ñ1 V3 D0.2.4.8.12.13 शुभाः; V1.3 D1.3 तथा; T2 तद्रा (for सदा). —$^c$) D13 -संकाशा; T3 -गंधर्व-; Cg as in text (for -गन्धर्वैर्). —$^d$) T3 -संपन्नाः (for उत्पन्नाः). Ś Ñ V B1.2 D1.2.4.8.12.13 दानवैस्तथा(D1 °रपि); B3 (both times) D0 दानवैः सह(D0 शुभैः); D3 पन्नगैस्तथा (for कामरूपिणः). ❀ Cg: उत्पन्नाः कामरूपिण इति । कामरूपित्वेन उत्पन्ना इत्यर्थः । पूर्वं कामरूपित्वमुक्तम् । तस्य इदानीमौत्पत्तिकत्वमुच्यते इति न पुनरुक्तिः. ❀ —After 5, G1 reads $7^{cd}$ for the first time, repeating it in its proper place.

6 $^a$) Ś Ñ V1.2 B1.2.4 D2.6.8.12.13 T2 तु; V3 B3 च; D0.3.4 नु; Cg.k.t as in text (for तौ). D2 दीप्यंतौ (for तिष्ठन्तौ). —$^b$) D9–11 समानौ (for कुमारौ). ❀ Cg: देवेति रावणं प्रति संबुद्धिः. ❀ —$^c$) D13 मेदश्च. Ś D5.8 G2 द्विविधश्च; Cg as in text (for द्विविदश्च). Ś Ñ1 D0.2.4.8.12.13 चैतौ; Ñ2 B1.2.4 D3.10.11 G2.3 चैव;

ब्रह्मणा समनुज्ञातावमृतप्राशिनावुभौ ।
आशंसेते युधा लङ्कामेतौ मर्दितुमोजसा ॥ ७

यावेतावेतयोः पार्श्वे स्थितौ पर्वतसंनिभौ ।
सुमुखो विमुखश्चैव मृत्युपुत्रौ पितुः समौ ॥ ८

यं तु पश्यसि तिष्ठन्तं प्रभिन्नमिव कुञ्जरम् ।
यो बलात्क्षोभयेत्क्रुद्धः समुद्रमपि वानरः ॥ ९

एषोऽभिगन्ता लङ्काया वैदेह्यास्तव च प्रभो ।
एनं पश्य पुरा दृष्टं वानरं पुनरागतम् ॥ १०

ज्येष्ठः केसरिणः पुत्रो वातात्मज इति श्रुतः ।
हनूमानिति विख्यातो लङ्घितो येन सागरः ॥ ११

कामरूपी हरिश्रेष्ठो बलरूपसमन्वितः ।
अनिवार्यगतिश्चैव यथा सततगः प्रभुः ॥ १२

G. 6. 4. 13.
B 6. 28. 11.
L. 6. 4. 13.

---

D7.9 चेति (for चोभौ). —Ñ2 illeg for $^{c}$. —$^{d}$) G1 तयोर्; G2 M5 याभ्यां; Cg as in text (for ताभ्यां). B2 महान् (for युधि). Ś Ñ1 V B3 D0–3.8.12.13 नै( B3 D2 न )तयोर्विद्यते समः; G (ed.) न समोस्त्यनयोर्युधि.

7 $^{b}$) Ś Ñ1 V1 D2.4–6.8.13 G1.3 M5 अमृतप्राशनात्. ❀ Ct: समनुज्ञाता इत्यत्र 'लोपः शाकल्यस्य' इति लोपः। समनुज्ञातावित्यर्थः. ❀ Ś Ñ2 V1 B1.2 D0–2.4.8.12.13 repeat $7^{cd}$ after 402*. V3 repeats $7^{cd}$ in place of $8^{cd}$. D8 repeats $7^{cd}$ after 8. G1 reads $7^{cd}$ for the first time after 5, repeating it here. —$^{c}$) D13 (second time) आशंसेतां; G1 (first time) आशंसंते. Ś Ñ V B D0–3.8.12.13 (Ś Ñ2 V1.3 B1.2 D0–4.8.12.13 both times) पुरीं; D5–7.9–11 T1.3 G1 (both times).2.3 यथा; T2 तदा (for युधा). Ś Ñ2 B1.2 D0.2.8.12 (all second time) एतौ (for लङ्काम्). —$^{d}$) Ñ2 B1.2 (all second time) स्वेन; G1 (first time) एतां (for एतौ). Ś Ñ1 D0–2.4.8.12.13 (all except Ñ1 second time) म( Ñ1 D13 अ )र्दितुं स्वेन तेजसा; V1.3 G1 (all second time) स्वेनानीकेन मर्दितुं. —After 7, B3 repeats 5 (both times in marg.).

8 V2 B3.4 D5–7.9–11 T G M1.2 om. 8. K (ed.) reads 8 within brackets. —$^{a}$) Ñ1 V1.3 उभाव् (for एताव्). G(ed.) अनयोः (for एतयोः). —$^{b}$) Ñ1 संस्थितौ पर्वतोपमौ; Ñ2 B1 स्थितौ तु वानरर्षभौ. —V3 repeats $7^{cd}$ in place of $8^{cd}$. —$^{c}$) D4 M3 समुखो. Ñ2 B1 दुर्मुखश्च; M3 सुमुखश्च (for विमुखश्च). —After 8, Ś Ñ V1 B1.2 D0–2.4.8.12.13 K(ed., within brackets) ins.; while D8 ins. after the second occurrence of $7^{cd}$ after 8):

402* प्रेक्षन्तौ नगरीं लङ्कां कोटिभिर्दशभिर्वृतौ।

[ D1.12 कोटीभिर्. ]

—Then Ś Ñ2 V1 B1.2 D0–2.4.8.12.13 repeat $7^{cd}$.

9 Before 9, V1.3 D1.3 read 5. —$^{a}$) B2 त्वं; B3 च (for तु). —$^{b}$) D13 प्रच्छन्नम् (for प्रभिन्नम्). —After $9^{ab}$, Ś2 Ñ1 V2 D0.4.8.12.13 ins.; while D2 ins. after 10:

403* वातेनैवोद्धतं तूलं यस्य रूपं महात्मनः।

[ D2.8.12 वातेनैव. Ś2 D8.12 मूलं; Ñ1 यस्य; D0 नाल; D4 तुल्यं (for तूल). V2 [ उ ]द्धनकृत (sic) (for [ उ ]द्धतं तूल). Ñ1 कृतं (for यस्य). D2 यमेनं परिपश्यसि (for the post. half). ]

—$^{c}$) Ñ1 D13 क्षोभने (for क्षोभयेत्). D3 बलानि क्षोभयन्येषः D4 बलात्क्षोभयने क्रुद्धः. —$^{d}$) D3–5 इव (for अपि). Ś D0.4.8.12.13 वेगवान्; Ñ V B3 D1–3 तेजसा (for वानरः). —After 9, G2 reads $12^{ab}$ for the first time, repeating it in its proper place.

10 $^{a}$) B2 हंता न (for ऽभिगन्ता). D6 T3 M5 एषो हि गंता (sic). B2 D5.7.10.11 T2 G M5 लंकायां. —$^{b}$) B3 रक्षसां तु वरोजतः. —For $10^{ab}$, Ś Ñ V B1.3.4 D0–4.8.12.13 subst.:

404* एष धर्षितवाँल्लङ्कां पूर्वं सीतां च दृष्टवान्।

[ D1 एको (for एष). Ñ2 B1.3.4 transp. लङ्कां and पूर्वं. Ñ1 V2 सीतां पूर्वं (by transp.). D3 सीतां च दृष्ट्वान्हरिः (for the post. half). ]

—$^{c}$) Ñ2 तं पश्य च; V1.3 D2 T2.3 एनं( D2 एतं ) पश्य. D0 दूराधर्षं; M1.2 पुरा दृष्टुं (for पुरा दृष्टं). —$^{d}$) Ś Ñ V B D0–4.8.12.13 कापं प्रत्यागतं पुनः. —After 10, D2 ins. 403*.

11 $^{a}$) Ñ1 V B3 D1–3 श्रेष्ठः (for ज्येष्ठः). B3 D9.11.13 केशरिणः. V3 क्षेत्रे (for पुत्रो). ❀ Cg: ज्येष्ठ इति। अत्र एष इत्यध्याहार्यम् । केसरिणः पुत्रः तस्य क्षेत्रजः पुत्रः. ❀ —$^{b}$) D0–4.8.13 वाताजात (for वातात्मज). Ñ1 V2.3 B3 D1.3.8.12.13 श्रुतिः; B2.4 स्मृतिः; D0 श्रुतेः (for श्रुतः). —D0 om. $11^{c}$ – $12^{b}$. D3 om. $11^{cd}$.

12 D0 om. $12^{ab}$ (cf. v.l. 11). G2 reads $12^{ab}$ for the first time after 9, repeating it here. —$^{a}$) B2 D9–11 कामरूपो. V1.3 B3 D1.3 बली चैव; D3 बलैश्चैव; T3 हरिः श्रेष्ठो (for हरिश्रेष्ठो). Ś Ñ1 V2 D1.8.12.13 कामरूपधरश्चैव( D13 °ष ). —$^{b}$) Ñ2 B1.2.4 D7 G2 (both times) M1.2 -वीर्य- (for -रूप-). Ś Ñ1 V B3 D1.2.4.8.12.13 कामगश्चैव( V B3 D1.4 °श्चापि; D2 °श्चैव ) वानरः; D3 बलवान्वानरर्षभः. —$^{c}$) Ś D8 अनिवार्यो; D0 अनावार्य-; D1 अविचार्य-; D9 अतिवीर्य-; G1 अनिरुद्ध- (for अनिवार्य-). Ś D8.12 चास्य; D0 चैष (for चैव). —$^{d}$) D6 वायुर्महा-

G. 6. 4. 14
B. 6. 28. 12
L. 6. 4. 14

उद्यन्तं भास्करं दृष्ट्वा बालः किल पिपासितः ।
त्रियोजनसहस्रं तु अध्वानमवतीर्य हि ॥ १३
आदित्यमाहरिष्यामि न मे क्षुत्प्रतियास्यति ।
इति संचिन्त्य मनसा पुरैष बलदर्पितः ॥ १४
अनाधृष्यतमं देवमपि देवर्षिदानवैः ।
अनासाद्यैव पतितो भास्करोदयने गिरौ ॥ १५
पतितस्य कपेरस्य हनुरेका शिलातले ।
किंचिद्भिन्ना दृढहनोर्हनूमानेष तेन वै ॥ १६
सत्यमागमयोगेन ममैष विदितो हरिः ।
नास्य शक्यं बलं रूपं प्रभावो वानुभाषितुम् ।
एष आशंसते लङ्कामेको मर्दितुमोजसा ॥ १७
यश्चैषोऽनन्तरः शूरः श्यामः पद्मनिभेक्षणः ।
इक्ष्वाकूणामतिरथो लोके विख्यातपौरुषः ॥ १८

(for सततग:). Ś Ñ V$_{2.3}$ B$_{1.2.4}$ D$_{0.1.4.8.12.13}$ यथा (Ñ$_1$ °श्चा)निलगतिस्तथा; V$_1$ B$_3$ D$_{2.3}$ यथानलसखस्तथा.

13 $^{a}$) Ś Ñ$_2$ V$_{1.3}$ B$_3$ D$_{0-4.8.12.13}$ बालो (for दृष्ट्वा). —$^{b}$) D$_7$ बाल्ये (for बाल:). D$_{10.11}$ G$_{1.2}$ M$_{1.2}$ बुभुक्षित: (for पिपासित:). Ś D$_{0.4.8.12.13}$ दृष्ट्वोत्थाय(D$_{13}$ °त्थातुं [sic]) पुरा कपि:; Ñ$_1$ बाल्ये एवागमत्कपि:; Ñ$_2$ दृष्ट्वाभिगत: किल; V$_{1.3}$ B$_2$ D$_{1-3}$ दृष्ट्वैवोत्पतित: किल; V$_2$ बाले बालो नयत्कपि: (sic); B$_{1.2.4}$ बाल्यात्कपि: प्र(B$_2$ °त्किंचिच्च; B$_4$ °त्किंचित्प्र)धावित:. ❀ Cg : पिपासित: स्तन्यापेक्ष:। क्षुधित इति यावत्. ❀ —Note hiatus between $^{c}$ and $^{d}$. —$^{c}$) Ś V$_3$ B$_{3.4}$ D$_{0.2.4.8.12.13}$ -सहस्रांतम्; V$_1$ D$_{1.3}$ -सहस्राणि (with hiatus); B$_2$ -सहस्राणाम्; T$_3$ -सहस्रं च (with hiatus) (for -सहस्रं तु). Ñ$_2$ B$_1$ त्रिंशद्योजनसाहस्रम्; V$_2$ शतयोजनसहस्राणाम् (hypm.). —$^{d}$) Ñ$_1$ M$_5$ (to avoid hiatus) चा(M$_5$ ह्य)ध्वानं. Ś Ñ$_1$ V B$_3$ D$_{0-4.8.12.13}$ समभिप्लुत:; Ñ$_2$ B$_{1.2.4}$ M$_5$ समतीत्य च(B$_1$ य:; M$_5$ हि) M$_{1.2}$ अतिलंघ्य तु (for अवतीर्य हि).

14 $^{a}$) D$_4$ ह गमिष्यामि; D$_6$ हरिष्यामि (subm.). —$^{b}$) Ñ V B D$_{0.1.4}$ ममोपरि (for मे क्षुत्प्रति-). M$_1$ -शाम्यति (for -यास्यति). Ś D$_{2.3.8.12.13}$ नभस: परिपश्यत:(D$_{2.3.13}$ °यास्यति). —D$_{1.3}$ om. 14$^{c}$ – 15$^{b}$. —$^{c}$) Ś Ñ V$_{2.3}$ B D$_{0.2.4.7-13}$ G M$_5$ निश्चित्य (for संचिन्त्य). —$^{d}$) Ś Ñ$_1$ D$_{0.2.4.8.12.13}$ किलैष; V$_1$ illeg.; V$_2$ B$_3$ प्लुतोसौ; B$_{1.4}$ पुरैव; D$_{6.9-11}$ T$_2$ पुप्लुवे (for पुरैष). D$_4$ मद- (for बल-). V$_3$ पु * * * ल- (moth-eaten).

15 D$_{1.3}$ om. 15$^{ab}$ (cf. v.l. 14). —$^{ab}$) Ś D$_{0.2.4.8.12.13}$ भानुम्; V$_3$ देशं (for देवम्). V$_1$ दैवतैरपि; V$_{2.3}$ B$_3$ देवगंधर्व- (for अपि देवर्षि-). D$_{2.4}$ -मानवै:; D$_{7.9-11}$ -राक्षसै: (for -दानवै:). Ś D$_{8.12}$ स देवऋषिवानरै: (metri causa); D$_{13}$ सह देवर्षि वानरै: (for $^{b}$). Ñ$_1$ अवध्यतां स देवैश्च दानवैश्च तथा स्वयं. —$^{c}$) V$_3$ moth-eaten; D$_1$ च (for [ए]व). —$^{d}$) V$_3$ भास्करोदयतो; B$_3$ D$_9$ भास्करस्यो(D$_9$ °राद्)दये; D$_4$ भास्करोदयिते (sic); G$_1$ वज्रीवज्रहतो. ❀ Cm.k.t: भास्करोदयन इति बहुव्रीहि:।; so also Cg which adds अनासाद्येत्यत्र तत्तेजसेत्युपस्कार्यम्। "तेजसा तस्य निर्धूत:" इति किष्किन्धाकाण्डोक्ते:। यद्यप्युत्तरकाण्ड इन्द्रवज्रेण पतनमुक्तं तथापि तदपि हेत्वन्तरमिति ज्ञेयम्. ❀

16 $^{a}$) V$_1$ हरेर्; M$_5$ गिरेस्. Ś D$_{0.8.12.13}$ एको; G$_3$ M$_5$ तस्य (for अस्य). —$^{b}$) Ś D$_{8.12.13}$ एव; Ñ$_1$ V$_1$ B$_4$ D$_{1-4}$ T$_1$ एक:; D$_0$ अस्य; D$_5$ एक- (for एका). —Ñ$_1$ reads 16$^{cd}$ twice (first time in marg.). —$^{cd}$) Ś Ñ$_1$ (first time) V$_1$ D$_{0-4.8.12.13}$ भग्नो; Ñ$_2$ V$_{2.3}$ B$_{2.3}$ G$_{1.2}$ M$_5$ भग्ना; B$_4$ भिन्नो (for भिन्ना). Ś Ñ$_1$ (first time) V$_3$ B$_4$ D$_{6.8-13}$ T$_2$ M$_1$ दृढहनुर्; V$_{1.2}$ B$_3$ D$_{0.1.4}$ दृढतरो; D$_{2.3}$ °हतो; D$_7$ °हनूर्; G(ed.) °तनोर् (for दृढहनोर्). D$_5$ T$_1$ किंचिद्भिन्नास्त्वथ हनोर् (for $^{c}$). B$_2$ नाम; D$_3$ G M$_5$ इति; D$_8$ एव (for एष). Ś V$_{1.3}$ D$_{0-2.8.12.13}$ तेन च; D$_4$ वानर: (for तेन वै). Ñ$_1$ (second time) किंचिद्भग्नोथ ददृशे बलवानेष वानर:.

17 $^{a}$) Ś Ñ$_1$ V$_1$ B$_{1-3}$ D$_{0.1.3.4.8.12.13}$ इत्येव; Ñ$_2$ V$_{2.3}$ B$_4$ इहैव (for सत्यम्). Ñ$_2$ B$_{1.2.4}$ -युक्तेन; D$_3$ -योगेषु (for -योगेन). D$_2$ आगतो रामयोगेन. —$^{b}$) Ś V$_1$ G$_2$ मयैवं (V$_1$ G$_2$ °व); Ñ$_2$ B$_1$ तवैष; B$_2$ D$_{1.8.12.13}$ G$_{1.3}$ M$_5$ मयैष (for ममैष). D$_2$ कपि:. —$^{c}$) D$_1$ तस्य किंचिद्; D$_{13}$ नास्य शब्दं (for नास्य शक्यं). Ś D$_{8.12}$ वीर्यं (for रूपं). —$^{d}$) Ñ$_2$ V B D$_5$ T$_1$ प्रभावं. Ś Ñ$_1$ V$_{1.3}$ B$_3$ D$_{0-4.8.12.13}$ चोप(D$_{0.4}$ चैव)लक्षितुं(D$_1$ °त:); Ñ$_2$ B$_{1.2.4}$ G(ed.) चोप(G[ed.] वापि)वर्णितुं; V$_2$ चोप * * * (illeg.); D$_5$ T$_1$ M$_{3.5}$ चानु(M$_{3.5}$ वापि)भाषितुं; G$_2$ वाभितापितुं (sic) (for वानुभाषितुम्). —B$_4$ om. 17$^{ef}$. —$^{e}$) G$_{2.3}$ एकै(G$_3$ °षै)वा- (for एष आ-). Ś Ñ$_1$ D$_{0-2.4.8.12.13}$ आशंसत्येष (D$_8$ °व) चैवैको(Ñ$_1$ वै लंकां); Ñ$_2$ V B$_{1-3}$ D$_3$ आशंसत्येष (B$_1$ °ते स) एको वै (V$_{1.3}$ B$_1$ D$_3$ एवैको; V$_2$ वा लंकां). —$^{f}$) Ś Ñ$_2$ V$_{1.3}$ B$_{1-3}$ D$_{0-4.8.12.13}$ लंकां; D$_6$ एतां (for एको). D$_{9-11}$ मथितुम् (for मर्दितुम्). Ñ$_1$ V$_2$ मर्दितुं स्वेन तेजसा(V$_2$ कर्मणा). —After 17, D$_{7.9-12}$ K(ed., within brackets) ins.:

405* येन जाज्वल्यतेऽसौ वै धूमकेतुस्तवाद्य वै ।
　　लङ्कायां निहितश्चापि कथं विस्मरसे कपिम् ।

[(l. 1) D$_7$(after corr. *sec. m.* as above) सौम्य (for ऽसौ वै).]

18 $^{a}$) Ś V$_{1.3}$ D$_{0-4.8.12.13}$ यस्त्वस्य; Ñ$_2$ V$_2$ यस्त्वथो; B$_1$ एतस्य; B$_2$ D$_{10.11}$ G$_{2.3}$ Cm.k.t यस्यैषो; B$_3$ यस्तस्य; B$_4$ एष यो; D$_7$ G$_1$ यस्त्वेषो; Cg as in text (for यश्चैषो).

यस्मिन्न चलते धर्मो यो धर्मं नातिवर्तते ।
यो ब्राह्ममस्त्रं वेदांश्च वेद वेदविदां वरः ॥ १९
यो भिन्द्याद्गगनं बाणैः पर्वतांश्चापि दारयेत् ।
यस्य मृत्योरिव क्रोधः शक्रस्येव पराक्रमः ॥ २०
यस्य भार्या जनस्थानात्सीता चापहृता त्वया ।
स एष रामस्त्वां योद्धुं राजन्समभिवर्तते ॥ २१
यश्चैष दक्षिणे पार्श्वे शुद्धजाम्बूनदप्रभः ।
विशालवक्षास्ताम्राक्षो नीलकुञ्चितमूर्धजः ॥ २२
एषोऽस्य लक्ष्मणो नाम भ्राता प्राणसमः प्रियः ।
नये युद्धे च कुशलः सर्वशास्त्रविशारदः ॥ २३
अमर्षी दुर्जयो जेता विक्रान्तो बुद्धिमान्बली ।
रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः ॥ २४
न ह्येष राघवस्यार्थे जीवितं परिरक्षति ।
एषैवाशंसते युद्धे निहन्तुं सर्वराक्षसान् ॥ २५

G. 6. 4. 28
B. 6. 28. 25
L. 6. 4. 26

D1.3.4 [अ]नंतरं. Ś2 D8 G2.3 श्यामः; D12 श्याम-; G1 वीरः (for शूरः). Ñ1 यस्त्वस्यांत(m. also °स्त्वेषोंत)-रतः शूरः.—b) Ś2 D8.13 पद्मपत्र-; D0.6 पश्य पद्म-; D11 श्यामपद्म-; G2.3 शूरः पद्म- (for श्यामः पद्म-). Ñ2 V1.3 B1–3 D0.1.6 -श्लेक्षणः; B4 -[आ]यतेक्षणः.—d) Ś Ñ V1.3 B1.2 D0–4.7–13 G M5 विश्रुत- (for विख्यात-). V2 B3 लोके पौरुषविश्रुतः; B4 धनुष्मान्कवची शरी.

19 a) B2.3 यस्मात्. Ś Ñ1 V1.2 D0–4.8.12.13 सनातनो (for न चलते). V3 अस्य चानुरणो धर्मो.—b) B2 धर्मान्; B3 धर्म्यान् (for धर्मं). D2 [अ]भि-; M3 [अ]नु- (for [अ]ति-). Ñ1 V2 यो धर्मे वि(V2 °र्मेभि)रतः सदा.—Ñ2 reads 19$^{cd}$ after 20.—c) Ñ2 V2 दिव्यम्; D6 T2 ब्राह्ययम् (for ब्राह्मम्). Ñ2 V2 ब्राह्मं वै(V2 च); B1.4 दिव्यं च; B3 विद्यां च (for वेदांश्च). Ś D8.12.13 यो ब्रह्मास्त्रं च दैवं च(Ś2 D8 चैव दैवं; D13 च जानाति).—d) Ś V3 B1.3.4 D5.8.12 T1 वेत्ति; D13 तथा (for वेद). ❀ Cg: ब्राह्ममस्त्रं ब्रह्मास्त्रमन्त्रं वेदांश्च वेद जानाति। ब्रह्मास्त्रमन्त्रस्य वेदान्तर्गतत्वेऽपि प्राधान्यात्पृथगुक्तिः। वेदविदां वेदार्थविदां वरः उपदेष्टृभ्यो वसिष्ठादिभ्योऽप्युत्कृष्टः. ❀ —For 19$^{cd}$, Ñ1 V1.3 B2 D0–4 subst.; while Ś V2 (reads wrongly twice) D8.12.13 ins. after 19; Ñ2 ins. after 19$^{ab}$; B1.4 ins. after 20:

406* अस्त्रग्रामः ससंहारो यस्मिन्वीरे प्रतिष्ठितः ।

[Ñ1 (m. gloss) अस्त्रसमूहः (for अस्त्रग्रामः). Ś D8.13 एव (for वीरे).]

20 a) Ś D12 भिदन्; D8 विंदन्. B2 अचलं; D5 T1 मेदिनीं (for गगनं). Ñ2 यो विभिंद्यान्नगं बाणैर्.—b) Ñ V B3 D1 वसुधां चैव(Ñ2 V1 D1 चाव-); B1.2.4 D2 वसुधामपि(B2 °व-); D0.3.4 वसुधां वापि(D3 च वि-); D7.9–11 G M5 मेदिनीं वापि(D7 चैव; G M5 चापि); M1.2 पृथिवीमपि; M3 पर्वतानपि (for पर्वतांश्चापि). D6 चालयेत्; G2 धारयेत् (for दारयेत्). Ś D8.12.13 वसुधां च वि(D12 नि)वर्तयेत् (D13 °दारयन्); D6 T2.3 पृथिवीं चैव(T3 च प्र) दारयन्.—c) D2 मृत्युसमः (for मृत्योरिव).—d) D9 पराक्रमाः.—After 20, Ñ2 reads 19$^{cd}$, while B1.4 ins. 406*.

21 Ñ1 reads 21$^{ab}$ twice (second time marg.).—a) Ñ1 (first time) अनासाद्य (for यस्य भार्या).—b) Ś D8.12 नाम हृता; Ñ1(first time).2 V2 B2.4 D0–4.13 प्रमथिता; V1 G2 त्वपहृता; V3 D7.9–11 चापि हृता; B3 प्रमृषिता (for चापहृता). Ñ1 (second time) आनीता प्राक्त्वयाश्रमात्; B1 आनीता प्रथिता त्वया.—cd) D5 त्वा (for त्वां). D7.9–11 transp. योद्धुं and राजन्. D5 समनुवर्तते.—For 21$^{cd}$, Ś Ñ V B D0–4.8.12.13 subst.:

407* सोऽयं दाशरथी रामो योद्धुं त्वामभिवर्तते ।

[B1 एष; B4 सैष (for सोऽयं). Ñ2 B2 transp. योद्धुं and त्वाम्. V2 त्वामनुवर्तते; V3 समभिवर्तते.]

22 a) Ś V1.3 D4.8 यस्यैव; Ñ1 D13 योस्यैव; Ñ2 V2 B1.3.4 D2.9–11 M3 यस्यैष; B2 य एष; D1 अस्यैव; D3 यस्त्वेष; D7.12 त(D12 यो)स्यैष (for यश्चैष).—b) V3 तप्त-; D2 शुभ्र- (for शुद्ध-).—D9 om. 22$^{cd}$.—c) D13 कंजाक्षो; T3 G3 M1.2 ताम्रास्यो.

23 a) Ñ1 अन्यैष (metri causa); Ñ2 V3 B2.3 अस्यैव; D7.9–11 एषो हि; M5 स एष.—b) Ś V2.3 B1.4 D0.2.4.8.12.13 हितः; Ñ B3 [ऽ]रिहा; V1(m. also हितः) D1.3 हि सः; B3 महान् (for प्रियः). D7.9–11 भ्रातुः प्रियहिते रतः.—c) B2 न्याय्य- (for नये). B1 च युद्धे (by transp.); D0 युद्धेषु. Ś D8.12.13 वेदवेदांग- (for नये युद्धे च).—d) G1.3 -शस्त्र- (for -शास्त्र-). Ś Ñ V1.3 B D0–4.8.12.13 सर्वास्त्रविधि(D2 °स्त्रेषु च)पारगः; V2 D7.9–11 M1.2 सर्वशस्त्रभृतां(D7 °विदां) वरः. ❀ Cg: सर्वेति। शास्त्रशब्दो नीतिशास्त्रव्यतिरिक्तशास्त्रपरः. ❀

24 b) Ś Ñ V B D0–4.8.12.13 समरे बली; D6 चपलो बली; D7 बलसंयुतः; D9–11 T3 च जयी (T3 वरो) बली; G2 बलवान्वशी.—d) B1.4 नित्यमुद्य(B1 °द्ग)तकार्मुकः.—After 24, Ś Ñ V B D0.3.4.8.12.13 ins.:

408* नित्यं संग्रामशीलश्च नित्यमुद्यतकार्मुकः ।

[Ś D8.12.13 उत्तम- (for उद्यत-). B4 प्रचंडश्चपलो नृपः (for the post. half).]

25 a) B2 (marg.; orig. as in text) लक्ष्मणो; D9 न ह्येव (for न ह्येष). D2.9 [अ]र्थं.—b) D1 परित्यक्ष्यति;

G. 6. 4. 28
B. 6. 28. 26
L. 6. 4. 27

यस्तु सव्यमसौ पक्षं रामस्याश्रित्य तिष्ठति ।
रक्षोगणपरिक्षिप्तो राजा ह्येष विभीषणः ॥ २६
श्रीमता राजराजेन लङ्कायामभिषेचितः ।
त्वामेव प्रतिसंरब्धो युद्धायैषोऽभिवर्तते ॥ २७
यं तु पश्यसि तिष्ठन्तं मध्ये गिरिमिवाचलम् ।
सर्वशाखामृगेन्द्राणां भर्तारमपराजितम् ॥ २८
तेजसा यशसा बुद्ध्या ज्ञानेनाभिजनेन च ।
यः कपीनति बभ्राज हिमवानिव पर्वतान् ॥ २९
किष्किन्धां यः समध्यास्ते गुहां सगहनद्रुमाम् ।
दुर्गां पर्वतदुर्गस्थां प्रधानैः सह यूथपैः ॥ ३०
यस्यैषा काञ्चनी माला शोभते शतपुष्करा ।
कान्ता देवमनुष्याणां यस्यां लक्ष्मीः प्रतिष्ठिता ॥ ३१
एतां च मालां तारां च कपिराज्यं च शाश्वतम् ।
सुग्रीवो वालिनं हत्वा रामेण प्रतिपादितः ॥ ३२

---

T3 परिरक्षितः. —$^c$) Ś D8.12.13 एषो हि; Ñ V3 B3.3 एष च( V3 B3 तु ) ; V1.3 B1.4 D0.1.3 एकोपि; D2.4 एषोपि. G1 M1.3.5 आशंसते ( for [ए]वाशंसते ). B1.4 D3 G1 लंकां ( for युद्धे ). —$^d$) D13 विहंतुं. G ( ed. ) -राक्षसं ( for -राक्षसान् ). B1.4 योद्धुं सैन्यैस्त्वया सह.

26 $^a$) Ñ1 यश्च; Ñ2 B1.3.4 D0.6.9–11 यस्य. Ñ B1.3.4 पार्श्वम्; D3 मध्यम् ( for सव्यम् ). Ś V D0.2–4.8.12.13 G M5 पार्श्वं; Ñ1 B3.4 सव्यं; D1 पार्श्वे; Cg as in text ( for पक्षं ). B3 यस्य रामस्य पार्श्वे वै. —$^b$) Ś D4.8.12 रामस्यावृत्य; Ñ1 B3 रामस्याक्रम्य; B2 सव्यमाक्रम्य; D1 रामस्य परि-; D3 सदा रामस्य. —$^c$) D3 -गणैर्; G1 -जन-; Cg.k.t as in text ( for -गण- ). Ś Ñ V B1–3 D0–4.8.12.13 -वृ( B3 -[आ]वृ )तो भ्राता ( for -परिक्षिप्तो ). B4 राक्षसाधिपतिक्षिप्तो. ❀ Cg : रक्षोगणेति । चतुर्णामेव रक्षसां गणतुल्यविक्रमत्वात्तथोक्तम् । ; so also Ck.t. ❀ —$^d$) Ś Ñ V B1.2 D0.1.4.8.12.13 तवष स( B2 च ); B3 D3 तवैव स; B4 युवराजो; D2 तवैवैष; G1 राजचैष ( for राजा ह्येष ).

27 $^a$) Ś D8.12.13 तव राज्येन; D3 रामराजेन; G2 M5 राजपुत्रेण. —$^c$) Ñ1 M1.2 एष; D7.9–11 असौ ( for एव ). V1.3 त्वामेवममि-. T3 -संयोद्धुं ( for -संरब्धो ). —$^d$) M1.2 [ए]व ( for [ए]षो ). Ś Ñ V B D0–4.8.12.13 रामसान्निध्य- ( B1.4 °सांनिध्य )माग( B1 D4 °श्रि )तः. —After 27, Ś Ñ V2.3 B( B3.4 reading st. 28 erroneously for the first time before the passage ) D2( marg. ).8.12.13 ins. a passage relegated to App. I ( No. 17 ).

28 $^a$) D9 तं; G1 त्वं ( for तु ). D0.5 पश्यति. —$^b$) Ś Ñ V B D0–4.8.12.13 लक्ष्मणात्समम( D1 °णस्याप्य )नंतरं. —Ś D8.12 om. 28$^c$–30$^b$. B4 om. 28$^{cd}$. —$^c$) D5 -मृगाणां ( subm. ) ( for -मृगेन्द्राणां ). —$^d$) D7.9–11 अमितौजसं.

29 Ś D8.12 om. 29 ( cf. v.l. 28 ). —$^b$) Ñ V B D0–4.6.7.9–11 G2.3 M5 बलेन; G1 नयेन ( for ज्ञानेन ). B3 ( orig. ) [अ]भिन( *sup. lin.* °ज )येन ( for [अ]भिजनेन ). G1 यः ( for च ). D13 यः सर्वेषां समाधिकः. —$^c$) D13 कपीनाम् ( for यः कपीन् ). Ñ1 B2 D0–3.13 अभिसंधत्ते; Ñ2 V B1.3.4 अभिसंधा( B4 °धे )तु; D4 अभिसंपन्नो; D5 T3 G2 M5 अति बभ्राजे; G3 अपि बभ्राज ( for अति बभ्राज ). G1 कपीनतीत्य बभ्राज. ❀ Cm.k.t : अतिबभ्राज अतिक्रम्यातिशयेन बभ्राजेत्यर्थः । ; so also Cg. ❀ —$^d$) D7 अति; G1 इति ( for इव ). Ñ2 V3 D0.9–11 पर्वतः ( for पर्वतान् ). T3 transp. इव and पर्वतान्.

30 Ś D8.12 om. 30$^{ab}$ ( cf. v.l. 28 ). —$^a$) G3 **** स्ते; M5 सोयमध्यास्ते ( for यः समध्यास्ते ). —$^b$) D9–11 दुर्गां ( for गुहां ). G3 सु- ( for स- ). Ñ V B D0–4.13 गुहां वानरसंकुलां; G1 M5 गुहां ( M5 दुर्गां )सुगहनां द्रुमैः. —D13 reads 30$^{cd}$ twice( var. ). —$^c$) B4 दुर्ग-; D13 ( first time ) गुहां ( for दुर्गां ). Ñ B1.4 D5 T1 G2 M5 -मध्यस्थां; V B2.3 D10 M2 -दुर्गम्यां; Cg as in text ( for -दुर्गस्थां ). Ś D8.12.13 ( second time ) सुवेलदुर्गमध्यस्थः. —$^d$) Ś V1.3 B1.2.4 D0–4.8.12.13 ( both times ) कामरूपी( D13 [ first time ] °पो ) महाबलः.

31 $^a$) Ś D8.12.13 अस्यैका( D13 °षा ). D13 स्रग्विणी ( for काञ्चनी ). —$^b$) T2.3 शतपुष्कला. —$^d$) Ś2 V3 D0–4.8.13 यत्र ( for यस्यां ).

32 $^a$) Ñ2 V B1.2.4 D0–4.7.9–11.13 M5 मालां च ( by transp. ). B3 राज्यं ( sic ) ( for तारां ). Ś D8.12 एषा माला च तारा च. —$^b$) D2.3 सर्वशः ( for शाश्वतम् ). —$^{cd}$) Ś V1.3 D0–4.8.12.13 रामेण; Ñ2 V2 B1.2 सुग्रीवे ( for सुग्रीवो ). G1 damaged for वालिनं ह. B3 reads हत्वा in marg. D0.4 सुग्रीवः ( for रामेण ). Ñ2 V2 B1.2 प्रतिपादितं. Ś V1.3 D1–3.8.12.13 सुग्रीवे प्रतिपादितं ( for $^d$ ). —After 32, Ñ V2 B D13 ins. :

409* स एषोऽवस्थितो युद्धे बहुभिः किं प्रयोजनम् ।

[ B4 योद्धुं ( for युद्धे ). ]

—Thereafter D13 cont. :

410* अस्यानुगा महात्मानः सर्वे सुग्रीवविक्रमाः ।
अष्टादशमहापद्मं तथा वानरपार्थिवाः ।

—D13 further cont. ; Ñ V2 B cont. after 409* ; whereas Ś V1.3 ( preceded by an illeg. line ) D0–13 S ins. after 32 :

एवं कोटिसहस्रेण शङ्कूनां च शतेन च । | सुग्रीवो वानरेन्द्रस्त्वां युद्धार्थमभिवर्तते ॥ ३३

G. 6. 4.61
B. 6. 28. 41
L. 6. 4.56

411* शतं शतसहस्राणां कोटिमाहुर्मनीषिणः ।
शतं कोटिसहस्राणां शङ्कुरित्यभिधीयते ।
शतं शङ्कुसहस्राणां महाशङ्कुरिति स्मृतः ।
महाशङ्कुसहस्राणां शतं वृन्दमिहोच्यते ।
शतं वृन्दसहस्राणां महावृन्दमिति स्मृतम् । [5]
महावृन्दसहस्राणां शतं पद्ममिहोच्यते ।
शतं पद्मसहस्राणां महापद्ममिति स्मृतम् ।

[ $V_3$ om.(hapl.) l. 1. —(l. 1) $D_{12}$ om.(hapl.) from the post. half up to the prior half of l. 6. $Ś_3$ om.(hapl.) from the post. half up to the prior half of l. 5. $D_{1.11}$ कोटीम्. $D_1$ विचक्षणाः (for मनीषिणः). —$Ś_1$ $V_1$ $D_8$ om.(hapl.) l. 2–4. $B_1$ om.(hapl.) l. 2. —(l. 2) $D_{6.11}$ शत-. $D_1$ कोटी-. $D_6$ $T_{2.3}$ शंखमिति; $M_3$ शंख इति (for शङ्कुरिति). $D_2$ शंकुमाहुर्मनीषिणः (for the post. half). —$D_3$ om.(hapl.?) l. 3–6. —(l. 3) $Ñ_1$ reads the prior half in marg. $B_3$ $D_{11}$ शत-. $D_6$ $T_{2.3}$ $M_3$ शंख- (for शङ्कु-). —Ñ $V_{2.3}$ B $D_{0-2.4}$ om. (hapl.?) from the post. half up to the prior half of l. 4. $D_6$ $T_{2.3}$ -शंखम्; $M_3$ -शंख (for -शङ्कुर्). $D_6$ $T_{2.3}$ $M_{1.2}$ स्मृतं (for स्मृतः). $D_{13}$ शंख इत्यभिधीयते (for the post. half). —(l. 4) $D_{13}$ शतं (for महा-). $D_{6.13}$ $T_{2.3}$ $M_3$ -शंख- (for -शङ्कु-). —$Ñ_2$ reads from the post. half up to l. 6 in marg. $M_3$ इति स्मृतं (for इहोच्यते). $Ñ_1$ $V_{2.3}$ $B_{1.3}$ $D_{0-2.4.13}$ वृंदमाहुर्मनीषिणः ($D_{0.1}$ °र्विपश्चितः); $Ñ_2$ $B_{2.4}$ वृंदमि($B_{2.4}$ °दइ)त्यभिधीयते (for the post. half). —(l. 5) $D_5$ $T_3$ शतवृंद-; $D_9$ वृंदं शत- (sic) (for शतं वृन्द-). Ś Ñ V $B_{1-3}$ $D_{0-2.4.8.9.13}$ $G_{2.3}$ इहोच्यते (for इति स्मृतम्). $B_4$ महावृंद इति स्मृतः (for the post. half). —After l. 5, $V_3$ reads 6. 20.1–2, repeating them in their proper place. $G_1$ om. (hapl.) from l. 6 up to l. 1 of 416*. $V_3$ om. l. 6–7. —(l. 6) $B_3$ -सहस्रेण. —After the prior half, $B_4$ ins.:

411(A)* खर्वं इत्यभिधीयते ।
शतं खर्वसहस्राणां.

Ś $V_1$ $D_{0.1.4.8.12.13}$ इति श्रुतिः; $Ñ_2$ $B_{1.2}$ परिश्रुतं; $V_2$ इति ** (illeg.); $D_{2.5.6}$ T M इति स्मृ($T_1$ श्रु)तं (for इहोच्यते). $B_3$ (orig.) महापद्मशतेन च (*sup. lin.* °परिश्रुतः) (sic); $B_4$ पद्म इत्यभिधीयते (for the post. half). —$D_5$ om. l. 7. $B_3$ reads from l. 7 up to l. 1 of 413* in marg. —(l. 7) $D_8$ शत- (for शतं). $Ś_1$ $V_1$ $D_{0.1.3.8.12.13}$ $G_{2.3}$ इहोच्यते; $Ñ_1$ विभाष्यते; $Ñ_2$ $V_2$ B वि($Ñ_2$ *; $B_1$ च)भाव्यते; $D_{2.4}$ $T_1$ $M_5$ इति श्रुतिः($T_1$ $M_5$ °तं) (for इति स्मृतम्). —After l. 7, $D_{13}$ ins.:

411(B)* एते च पार्थिवाः सर्वे सुग्रीवसमविक्रमाः ।
तेषामनीकमत्युग्रमसंख्यातैर्महाभटैः । ]

—After 411*, $B_{2.3}$ $D_{5-7.9-11}$ S ($G_1$ om.) cont.:

412* महापद्मसहस्राणां शतं खर्वमिहोच्यते ।
शतं खर्वसहस्राणां समुद्रमभिधीयते ।
शतं समुद्रसाहस्रं महौघमिति विश्रुतम् ।

[ (l. 1) $B_3$ -सहस्रेण. —After the prior half, $B_{2.3}$ ins.:

412(A)* एको हाहा विभाव्यते ।
एवं हाहासहस्रेण.

[ (l. 2) $B_2$ -सहस्राणाम्. ]

G (ed.) तथा (for शतं). $B_{2.3}$ (with hiatus) एकः खर्वो विभाव्यते (for the post. half). —(l. 2) $B_{2.3}$ एवं खर्व-सहस्रेण (for the prior half). —After the prior half, $G_3$ $M_{3.5}$ B (ed., within brackets) ins.:

412(B)* महाखर्वमिहोच्यते ।
महाखर्वसहस्राणां.

[ (l. 1) $M_3$ इति स्मृतं; $M_5$ इति श्रुतः (for इहोच्यते). ]

$B_{2.3}$ धूलिरिति (for समुद्रम्). —After l. 2, $B_{2.3}$ ins.; $B_4$ cont. l. 2 only alter 413*:

412(C)* शतधूलिसहस्रेण चाक्षौहिण्येकमुच्यते ।
परार्धपरसंयुक्तः समुद्रेण च वानरः ।
समुद्रो वानरेन्द्राणां संप्रहारार्थमागतः ।

[ (l. 1) $B_2$ शतं धूलिसहस्राणामक्षौहिण्येकमुच्यते. —(l. 2) $B_2$ -परमं युक्तः (for -परसंयुक्तः). —(l. 3) $B_2$ उद्यतः (for आगतः). ]

—Thereafter $B_3$ cont.:

412(D)* शतं खर्वसहस्राणां महाखर्वं विदुर्बुधाः ।
महाखर्वसहस्रेण परार्धमभिधीयते ।
सहस्रेण परार्धेण अपरार्धं प्रचक्षते ।
अपरार्धसहस्राणां समयं स्याच्छतेन च ।

[ Note hiatus between the two halves of l. 3. ]

—$B_{2.3}$ om. l. 3. —(l. 3) After the prior half, $D_6$ $T_1$ $M_{1-3}$ ins.:

412(E)* ओघमित्यभिधीयते ।
शतमोघसहस्राणां.

[ (l. 1) $D_6$ $T_1$ $M_3$ ओघ इति. ]

$M_3$ महौघ इति विश्रुतः (for the post. half). —After l. 3, B (ed.) ins. within brackets:

412(F)* शतमोघसहस्राणां महौघ इति विश्रुतः । ]

—After 412*, $D_{9-11}$ ($D_{10.11}$ first time) cont. l. 3–4 of 416*.

33 $G_1$ om., $B_3$ reads in marg. $33^{ab}$ (for both, cf. v.l. 411*). —$^{a}$) Ś Ñ V $B_{2-4}$ $D_{0-4.8.12.13}$ $G_{2.3}$ $M_{1.2}$ Ck एष; Cm.g.t as in text (for एवं). $D_{1.3}$ कोटी-.

G. 6. 4. 62
B. 6. 28. 42
L. 6. 4. 57

इमां महाराज समीक्ष्य वाहिनी-
मुपस्थितां प्रज्वलितग्रहोपमाम् ।
ततः प्रयत्नः परमो विधीयतां
यथा जयः स्यान्न परैः पराजयः ॥ ३४

इति श्रीरामायणे युद्धकाण्डे एकोनविंशतितमः सर्गः ॥ १९ ॥

D2 -सहस्राणां; G3 damaged (for -सहस्रेण). —D5 om. (hapl.) from 33[b] up to the prior half of l. 3 of 416*. —[b]) Ś1 Ñ2 V2 B2.3 तथा शंख- ; Ś2 Ñ1 V1 B1.4 D0–4.8.12.13 G2.3 तथा शंकु- ; D6.9–11 T2.3 M3 शंखानां च; M5 शंकुना च (for शङ्कूनां च). D6.7 T1.3 M5 तथैव (for शतेन). V3 * * * * * तेन च (illeg.). —After 33[ab], Ś2 Ñ1.2 (cont. l. 1 after 414*) V B D0–4.12.13 ins. :

413* एष वृन्दसहस्रेण महावृन्दशतेन च ।
एष पद्मसहस्रेण महापद्मशतेन च ।

[ B3 reads l. 1 in marg. (cf. v.l. 411*). —(l. 1) V3 mostly illeg. for the prior half. B1 -सहस्राणां. —D0 om. (hapl.) from the post. half up to the prior half of l. 2. Ñ1 महापद्म- ; Ñ2 B3.4 तथा वृंद- (for महावृन्द-). —V1.2 om. (hapl.) l. 2. —(l. 2) B4 खर्व- (for पद्म-). Ñ2 B3 D0 तथा (for महा-). B2 -खर्व- (for -पद्म-). ]
—Thereafter Ñ V2 B1.3 D13 cont. :

414* एष खर्वसहस्रेण समग्रेणैव वानरः ।

[ G (ed.) तथा (for एष). Ñ2 B1 -निखर्वेण; B3 -सहस्राणां. G (ed.) च (for [ए]व). Ñ1 V2 B3 सहस्रेण च (for समग्रेणैव). D13 महाखर्वशतेन च (for the post. half). ]
—V2 D13 further cont. ; Ś2 V1.3 (mostly illeg.) D0–4.12 cont. after 413* ; while Ś1 D8 ins after 33[ab]:

415* एष सैन्येन सर्वेण सुसंपूर्णेन पार्थिवः ।

[ Ś1 D8.12 सुसंपन्नेन; Ś2 समुत्पन्नेन; D2 सुसैन्येन च (for सुसंपूर्णेन). V2 D0.4 पार्थिव. ]
On the other hand, B4 cont. l. 2 of 412(C)* after 413*. —After 33[ab], D5–7.10.11 S ins. ; D9 cont. l. 3–4 after 412* and ins. l. 5–6 after 33[ab] :

416* महाशङ्कुसहस्रेण तथा वृन्दशतेन च ।
महावृन्दसहस्रेण तथा पद्मशतेन च ।
महापद्मसहस्रेण तथा खर्वशतेन च ।
समुद्रेण च तेनैव महौघेन तथैव च ।
एष कोटिमहौघेन समुद्रसदृशेन च । [5]
विभीषणेन सचिवैः राक्षसैः परिवारितः ।

[ G1 om. l. 1 (cf. v.l. 411*). D5 om. up to the prior half of l. 3. D9 om. l. 1–2. —(l. 1) D6.10.11 T2.3 M3 -शंख- (for -शङ्कु-). —D11 reads erroneously l. 2 twice (var.). —(l. 2) D11 (first time) वृंद- (for पद्म-). —D10.11 read l. 3–4 for the first time after 412*, repeating them here. —After l. 3, M5 ins. :

416(A)* तथा खर्वसहस्रेण समुद्रस्य शतेन च ।

—D9 repeats wrongly l. 4 before l. 5. —(l. 4) T3 [ए]व तेन; G2 M3 शतेन (for च तेन). M5 महासमुद्रसाहस्रं महौघेन शतेन च. —D5 T1 om. l. 5. —(l. 5) D7 G2.3 एवं (for एष). M3 कोटी-. M1.2 समुद्रस्य शतेन च (for the post. half). —(l. 6) D7.9–11 वीरेण सचिवैः (for सचिवै राक्षसैः). ]

—[c]) V3 illeg. after सुग्रीवो up to अभिवर्तते in [d]. Ñ2 B1 ते (for त्वां). V1 वान * * * (illeg.). D4 स सुग्रीवो वानरस्त्वां. —[d]) D9–11 अनु- (for अभि-). G3 -वर्धते (for -वर्तते). Ś Ñ V2 B2–4 D0–4.8.12.13 संप्रहारार्थमुद्यतः (Ś D8.12 °मेष्यते) ; V1 संप्रहर्तुं * * द्यतः (illeg.) ; B1 प्रहारार्थं समुद्यतः. —After 33, Ś Ñ V B D0.2.4.8.12.13 ins. :

417* यदत्रानन्तरं कार्यं तद्भवान्कर्तुमर्हति ।

[ Ś Ñ V2 B4 D8.12.13 वक्तुम् (for कर्तुम्). ] ;
while D5–7.9–11 S ins. :

418* महाबलवृतो नित्यं महाबलपराक्रमः ।

34 [a]) Ś D8.12.13 महावरूथिनीं (for समीक्ष्य वाहिनीम्). —[b]) Ś V3 D0.1.3.4.8.12.13 समुन्नतां; Ñ V1.2 B3 D2 समुद्यतां. B2.4 D1.7 प्रज्वलितां (for प्रज्वलित-). G -[अ]नलोपमां. —[c]) Ś Ñ V B D0–4.8.13 तथा (for ततः). D5 T1.3 प्रथ(T3 °श)मो (for परमो). —V3 illeg. from विधीयतां up to [d]. —[d]) D2 तथा (sic) (for यथा). Ñ V1.2 B3–4 D0 1.3.4.13 रणे; G1 यथा (for परैः). Ś D8.12 पराजयः क्वचित् ; D2 पराजयो रणे; D5.7.9–11 M5 परैः पराभवः (D5 °यणः [sic]) (for परैः पराजयः).

## २०

शुकेन तु समाख्यातांस्तान्दृष्ट्वा हरियूथपान् ।
समीपस्थं च रामस्य भ्रातरं स्वं विभीषणम् ॥ १
लक्ष्मणं च महावीर्यं भुजं रामस्य दक्षिणम् ।
सर्ववानरराजं च सुग्रीवं भीमविक्रमम् ॥ २
किंचिदाविग्नहृदयो जातक्रोधश्च रावणः ।
भर्त्सयामास तौ वीरौ कथान्ते शुकसारणौ ॥ ३
अधोमुखौ तौ प्रणतावब्रवीच्छुकसारणौ ।
रोषगद्गदया वाचा संरब्धः परुषं वचः ॥ ४
न तावत्सदृशं नाम सचिवैरुपजीविभिः ।
विप्रियं नृपतेर्वक्तुं निग्रहप्रग्रहे विभोः ॥ ५

G. 6. 5. 5. B. 6. 29. 7. L. 6. 5. 5.

---

Colophon.—*Kāṇḍa name*: Ś1 D12 om.; Ñ V2 B D8.9.13 लंका°; D0.4 सुंदर°.—*Sarga name*: Ś Ñ V B3 D0–4.8.12.13 शुकवाक्यं; B1 बलसंख्यानं; B2 बलसंख्यावर्णनं; B4 बलसंख्या; D9 संज्ञावर्ण.—*Sarga no.* (figures, words or both): Ś1 B2 D0.2.4.12.13 om.; Ś2 Ñ V B1.3.4 D3.8.9 4; D1 6; D5–7.10.11 T1.3 G M 28; T2 27.—After colophon, G1.3 M1.2.5 conclude with श्रीरामाय नमः.

## 20

Cv is missing for 1–5 (cf. v.l. 6.19.1).

1 V3 repeats st. 1–2 here (cf. v.l. 6.19. 411*).—[a]) Ś V1.3 (both times) B1.2.4 D0–2.8.12.13 च; D4 स (for तु). Ś V1.2.3 (both times) B2–4 D0–4.8.12.13 G M5 समा(B2.4 तथा)ख्यातां; Ñ B1 समाख्याते; D9–11 समादिष्टान् (for समाख्यातांस्). —[b]) D9–11 दृष्ट्वा स (for तान्दृष्ट्वा). Ś Ñ V1.2.3 (both times) B D0.2–4.8.12.13 G M5 दृष्ट्वा तां(Ñ B3 G1.3 M5 तां दृष्ट्वा; V3 दृष्ट्वा स) हरिवाहिनीं; D1 दृष्ट्वा वानरवाहिनीं.—D10.11 transp. 1[cd] and 2[ab].—[d]) V2.3 (both times) B1–3 D0.2.3–11 च; G1 M5 स- (for स्वं).

2 V3 repeats 2 here (cf. v.l. 1). D10.11 transp. 1[cd] and 2[ab].—[b]) Ñ1 V2 B शरदर्कमिवोदि(B4 °च)तं.—[c]) Ś V3 (first time) D1–4.8.9.12.13 G1 -राजानं; D0 -सैन्यानां (for -राजं च). ❀ Cg: सर्ववानरराजं चेत्यत्र चकारो हनुमदादिसमुच्चयार्थः. ❀—[d]) D0 राजानं (for सुग्रीवं). Ś V1.3 (both times) D0–4.8.12.13 चापराजितं; Ñ V2 B3 सु(B3 च)महाबलं; B1.2.4 भास्करात्मजं (for भीमविक्रमम्).—After 2, D5.7.9–11 T1.2 G M ins.:

419* गजं गवाक्षं शरभं मैन्दं द्विविदमेव च ।
अङ्गदं चापि बलिनं वज्रहस्तात्मजात्मजम् ।
हनूमन्तं च विक्रान्तं जाम्बवन्तं च दुर्जयम् ।
सुषेणं कुमुदं नीलं नलं च प्लवगर्षभम् ।

[T2 G1 om. l. 1. D9–11 Ct read l. 1 after l. 4.—(l. 1) D5 T1 M3.5 गवयं (for शरभं). D9–11 च द्विविदं तथा (for द्विविदमेव च).—(l. 2) D5.7 T1 M [ए]व (for [अ]पि).—(l. 3) M1.2.5 दुर्धर्षं (for विक्रान्तं). D9 M1.2 सु- (for second च).—(l. 4) D7 M1.2.5 नीलं सेनापतिं चैव नलं गवय(M5 कुमुद)मेव च.]

3 V3 illeg. up to जा in [b]. G3 repeats 3 after 4.—[a]) Ś V1 D0.2–4.12.13 ईषद्; D1.8 एष (for किंचिद्). Ś Ñ V1.2 B1.2.4 D0–4.8.12.13 G1.3 (both times) M3 आगतसंत्रासो; B3 आप्रासंत्रासो; M1.2 उद्विग्न°; Cg as in text (for आविग्नहृदयो).—[b]) D1 जातकोपश्च; D7 जातामर्षश्च; G1 ततः क्रोधाच् (for जातक्रोधश्च). Ñ2 राक्षसः (for रावणः).—[c]) Ś V1.3 D0–4.8.12.13 तेजस्वी; G1 तौ दूतौ (for तौ वीरौ).—V3 illeg. up to सा in [d].—[d]) Ś D8.12 वाक्यांते (for कथान्ते). B1.2.4 राक्षसः क्रोधमूर्छितः.—After 3, Ś V1.3 D0–4.8.12.13 ins.:

420* तावुवाच गतश्रीको मनसा संप्रकम्पितः ।

[V3 illeg.; D2.4 तानुवाच (for तावु°). V1.3 D1–3 दशग्रीवो (for गतश्रीको). V1.3 D0–4 मन्युना (for मनसा). V1.3 संपरिप्लुतः; D0 स प्रकंपितः; D3 संप्रकंपितः; D13 संप्रकल्पितः; L (ed.) संप्रपूरितः (for संप्रकम्पितः).]

4 Ś V1.3 D0–5 (hapl.).8.12.13 om. 4[ab].—[a]) Ñ1 V2 B3 तु; Ñ2 तद्; M5 च (for तौ).—Ñ2 illeg. from प्रणतात् up to [b].—[b]) Ñ1 V2 B सोब्रवीच् (for अब्रवीच्).—[c]) D5 T1 क्रोध-; Cg as in text (for रोष-).—[d]) D5 M2 संरब्ध-; D9–11 T1 G M1 संरब्धं; Cg as in text (for संरब्धः). D6 T2.3 M5 ततः; D7.9 G1.3 तदा; D10.11 G2 तथा (for वचः). Ś Ñ V B3 D0–4.8.12.13 संरब्ध-(D0 °रंभ)स्तर्जयन्निव; B1.2.4 दिशः संनाद(B1 °तर्ज)यन्निव.—After 4, G2 repeats 3.

5 [a]) Ś Ñ1 D8.12.13 मा (for न). D0–2.4 चैतत् (for तावत्). Ñ V2 B ह्येतत्; D1 नूनं (for नाम).—[b]) B1 D1 T3 M1.2 सदृशैर्; B4 सचिवम्; Ck as in text (for सचिवैर्). B3 अनुजीविभिः; D2 °जीवयं (sic) (for उपजीविभिः).—[c]) Ś Ñ1 V1 D2.8.12 नृपतिर्; Ñ2 B4 D3.13 नृपतिं; V3 च पतिर् (for नृपतेर्). D1.5.7 T1 कर्तुं (for वक्तुं).—[d]) D2.6.7.9 (after corr. *sec. m.*).10.11 T1 G1 M3 Cr निग्रहे; Cg as in text (for निग्रह-). D2 प्रभुः; D7.9–11 M3 प्रभोः (for विभोः). Ś Ñ V B D0.1.3.4.8.12.13 T3 [नि]ग्रहानुग्रहे(V3 °हृ) प्रभुः(Ñ2 B4 D13 प्रभुं; B1 D0.1 प्रभोः; D3 क्षमं; T2 विभोः).

G. 6. 5.5
B. 6. 29.8
L. 6. 5.6

रिपूणां प्रातिकूलानां युद्धार्थमभिवर्तताम् ।
उभाभ्यां सदृशं नाम वक्तुमप्रस्तवे स्तवम् ॥ ६
आचार्या गुरवो वृद्धा वृथा वां पर्युपासिताः ।
सारं यद्राजशास्त्राणामनुजीव्यं न गृह्यते ॥ ७
गृहीतो वा न विज्ञातो भारो ज्ञानस्य वोह्यते ।
ईदृशैः सचिवैर्युक्तो मूर्खैर्दिष्ट्या धराम्यहम् ॥ ८

किं नु मृत्योर्भयं नास्ति मां वक्तुं परुषं वचः ।
यस्य मे शासतो जिह्वा प्रयच्छति शुभाशुभम् ॥ ९
अप्येव दहनं स्पृष्ट्वा वने तिष्ठन्ति पादपाः ।
राजदोषपरामृष्टास्तिष्ठन्ते नापराधिनः ॥ १०
हन्यामहमिमौ पापौ शत्रुपक्षप्रशंसकौ ।
यदि पूर्वोपकारैर्मे न क्रोधो मृदुतां व्रजेत् ॥ ११

---

6 a) D4 शत्रूणां (for रिपूणां). D3 -लोमानां (for -कूलानां). —b) Ś D3–4.8.12.13 Cr अभिवर्तिनां; B1 अनु°; D0 चाभि°; D5 T1 G2 °धावतां; Cm.g.k.t as in text (for अभिवर्तताम्). —Ñ2 illeg. for $6^{cd}$. —c) B2–4 उभयोः; G1 युवाभ्यां; Ck as in text (for उभाभ्यां). Ś D2.8.12.13 सदृशाभ्यां च (D8 वै); Ñ1 B1–3 सदृशं वाक्यं; L (ed.) असदृशा (? शं) वां (for सदृशं नाम). —d) B1 युक्तम् (for वक्तुम्). Ś Ñ1 V1.2 B1.2 D1.2.8.12 अप्रस्तुतं (V1 °तस्; D2 °त-); D3.4.13 अप्रस्तवं (D4 °व-) (for अप्रस्तवे). Ś V1 D8.12 ततः; Ñ1 V2 B2 D13 वचः; B1 तु वां; D2.9 स्तवः (for स्तवम्). B3 वक्तुमप्रस्तुतं वचः; B4 वक्तव्यमस्तवे स्तवं.

7 a) Ñ2 V B1–3 D10–12 T1 Ct आचार्यो; D6.13 G3 M3 आचार्य-; Cr.m.g.k as in text (for आचार्या). B3 विप्रा (for वृद्धा). —b) B4 युवाभ्यां; D0.4 वृथा वा; D6 वृद्धा वां; D11 तथा वां (for वृथा वां). —c) Ś V1.3 D0–4.8.12.13 यत्सारं (by transp.); D5 सारवद् (for सारं यद्). D6 राज्य-; G1 सर्व- (for राज-). —d) Ś D8 अनुजीव्य; B4 अनुजीव्ये; D2 °जीवान्; D3 G3 आनु°; D4 °जीवं; D12 °जीत्र् (sic) (for °जीव्यं). B1 नु (for न). Ñ1 V2 G3 शिक्षितं; B3 निश्चितं; G1 गृह्णते (for गृह्यते). D1 अनुजीविभिरुच्यते.

8 a) Ś D0.2.8.12.13 गृहीतश्च; Ñ V2 B1.2.4 D4 गृहीतं वा; V1.3 D1.3 गृहीतं च; B3 गृहीतात्मा; D5 T1 G1.2 Cr न गृहीतो; Cm.g.t as in text (for गृहीतो वा). Ś V1.3 D1.2.8.12 [अ]प्यविज्ञातो (V1.3 D1 °तं); Ñ1 B2.4 न विज्ञातं; Ñ2 V2 B1.3 [अ]नभिज्ञातो (V2 B3 °तं); D0 [अ]पि विज्ञातो; D3 [अ]प्यनुज्ञातं; D4 [अ]थ विज्ञानं; D13 [अ]प्यविज्ञातो (for न विज्ञातो). —b) V1 तत्त्वं; V2.3 भारं; D1.3.4 सारं (for भारो). Ś1 V1 B1.2.4 D1–4.12.13 शास्त्रस्य; Ś2 D8 शस्त्रस्य; Ñ V2 B3 ग्रंथस्य; D7.10 Ck.t [ऽ]ज्ञानस्य (for ज्ञानस्य). Ś V B4 D1–4.8.12.13 वां (V2.3 D1 वा) वृथा; Ñ B1–3 धार्यते; D7.10.11 Ct वाह्यते; D9 विह्यते (sic); G2.3 चोह्यते; M1.2 वाधिकः; Cv.m.g as in text (for वोह्यते). D0 भारः शास्त्रभृतां वृथा; D5 छारो राज्ञस्य वोह्यते (sic). ❀ Cv: कर्मभारो ज्ञानस्य वोह्यत इत्याक्षेपोक्तिः।; Cr: ज्ञानस्य भारो न गृहीतः। गुरोः सकाशात्सम्यङ् न गृहीतः।; Cm: ज्ञानस्य ज्ञानसाधनस्य शास्त्रस्य। सारो वा भार एव। उह्यत इति भारशब्दावृत्त्या योजनीयम्।; Cg: ज्ञानस्य भार उह्यते वा। जातमपि ज्ञानं नानुष्ठानपर्यवसायीत्यर्थः। यद्वा ज्ञानस्य भार उह्यते। ज्ञानभारभरणाभिमान एव क्रियते न तु तत्कार्यमित्यर्थः।; Ck: अज्ञानस्य शास्त्रार्थापरिज्ञानस्यैवाधिको भारो भरणं वर्तते। ज्ञानस्येति पदं परिगृह्य ज्ञानशास्त्रभारो न गृहीतो न विज्ञातश्चेत्याह।; तत्रैकेन पर्याप्तं गृहीतपदेन विज्ञातपदे (°देन) वा। अधिकं पदं तु समुद्रे प्रक्षिप्तम्। तद्विचारणं न कृतम्। दिष्ट्या धरामीति। राज्यमिति शेषः।; Ct: अज्ञानस्य भारो वाह्यते। अज्ञानबाहुल्यमेव वर्तते। न ज्ञानलेशोऽपीति भावः। धरामि। राज्यमिति शेषः. ❀ —Ñ2 illeg. for $8^{cd}$. —c) D11 युद्धो (sic) (for युक्तो). —d) D5 T1 धूर्तैर् (for मूर्खैर्). V3 बत; D2.5 Cr दृष्ट्या (for दिष्ट्या). Ñ1 V2 B3 ध्रियामहे; V1 B2.4 D0.3.4 ध्रिये ह्यहं; V3 वृतो ह्यहं; D1 चराम्यहं; D2 ध्रियैह्यहं; D13 ह्रियामहे (for धराम्यहम्). Ś D8.12 मा जिहीर्षीः ध्रियो ह्ययं.

9 Cv is missing from st. 9 up to 6.21.19. —a) Ś1 Ñ2 V B1–3 (marg.).4 D0.1.3.4.8 किं वा; Ś2 D2.12.13 किं वां; Ñ1 युवां; D7.9 किं तु (for किं नु). Ś Ñ V B D0–4.8.12.13 मृत्यु-; T1 मृत्यौ (for मृत्योर्). —b) Ś Ñ V1.2 B D0–4.8.12.13 मामुक्त्वा; M3 वक्तुं मां (by transp.). D8.12 परमं (for परुषं). G3 गिरः (for वचः). —c) D0.4 तस्य (for यस्य). Ś1 D0.1.3.4.8.12.13 वै; Ś2 D2 [ए]व (for मे). Ś Ñ1 V1 B3 D0.1.3.4.8.12.13 शासने; B2.4 शासनं; D2 वदतो; D5 शाश्वतो; D7.9 शंसतो (for शासतो). —d) D0.5 T1 G1 M5 शुभाशुभे.

10 a) Ś D8.12.13 अज्ञवद्; Ñ V2.3 B D5 G3 अप्येवं (for अप्येव). Ś D0.2.8.12 दृष्ट्वा; Ñ V B प्राप्य (for स्पृष्ट्वा). —Ñ2 illeg. for $10^{c}$–$11^{a}$. —c) V2 B1.2.4 -रोष-; D9–11 -दंड-; T3 -द्रोह-; Cr.m.g.t as in text (for -दोष-). B4 -धरा मृष्टा (for -परामृष्टास्). D3 न कंपयंति तेत्यर्थ. —d) Ś Ñ1 V B D0.2–4.8.12.13 न तिष्ठंति; D1 न भवंति (for तिष्ठन्ते न).

11 Ñ2 illeg. for $11^{a}$ (cf. v.l. 10). —a) Ñ1 V2 B वधेयं खलु (for हन्यामहम्). D5.7.9–11 T G2 M3 त्विमौ (for इमौ). —b) D2.9–11 T3 -प्रशंसिनौ; M5 -प्रशंसितौ. —V3 om. $11^{cd}$. —c) D3 वा हि (for पूर्व-). Ś D0–4.8.12.13 M5 [उ]पकारो मे; B1 [उ]पकारित्वान्; B3 [उ]पकारान्मे; B4 [उ]पकारैर्वा; D5 T1 M3 [उ]पकारैस्तु (for [उ]पकारैर्मे).

अपध्वंसत गच्छध्वं संनिकर्षादितो मम ।
न हि वां हन्तुमिच्छामि स्मरन्नुपकृतानि वाम् ।
हतावेव कृतघ्नौ तौ मयि स्नेहपराङ्मुखौ ॥ १२

एवमुक्तौ तु सव्रीडौ तावुभौ शुकसारणौ ।
रावणं जयशब्देन प्रतिनन्द्याभिनिःसृतौ ॥ १३

अब्रवीत्स दशग्रीवः समीपस्थं महोदरम् ।
उपस्थापय शीघ्रं मे चारान्नीतिविशारदान् ॥ १४
ततश्चराः संत्वरिताः प्राप्ताः पार्थिवशासनात् ।
उपस्थिताः प्राञ्जलयो वर्धयित्वा जयाशिषा ॥ १५
तानब्रवीत्ततो वाक्यं रावणो राक्षसाधिपः ।
चारान्प्रत्ययिकाञ्शूरान्भक्तान्विगतसाध्वसान् ॥ १६

G. 6. 5. 18
B. 6. 29 18
L. 6. 5. 18

—$^{d}$) Ś V1 D0-4.8.12.13 न क्रोधम्: Ñ1 D7.9-11 क्रोधो न (by transp.). Ś V1 D2.8.12 उपशामयेत्; D0.1.3.4.13 उप(D3 अपि)नाशयेत्; G2.3 मृदुतामियात् (for मृदुतां व्रजेत्). —After 11, Ś Ñ V1.2 B1.2.4 D8.12.13 ins.:

421* अद्य वैवस्वतं देवं पश्येतां प्रेषितौ मया ।

[D8 अथ (for अद्य). Ñ V1.2 B4 पश्यतां (for पश्येतां). B2 D12 प्रेषितो; D13 प्रेक्षितौ (for प्रेषितौ).]

12 B3 om.; Ñ2 illeg. for 12$^{ab}$. —$^{a}$) B1.2.4 अपसर्पत. B1 D10.11 G1 M1.2 Ck.t नश्यध्वं; B3 सुदुर्वृत्तौ (hypm.); Cr.g as in text (for गच्छध्वं). Ś D0.2.12.13 गच्छतं(D0.2.13 ध्वंसेथां) भोः सुदुर्वृत्तौ; Ñ1 V D3 गच्छतां (Ñ1 V1 गच्छतं; D3 ध्वंसेतां) लघुदुर्वृत्तौ; D1.4 ध्वंसयध्वं (D4 °ये तौ) सुदुर्वृत्तौ; D8 गच्छ त्वं घोरदुर्वृत्तो. ❀ Cr.g : अपध्वंसत । परस्मैपदं बहुवचनं चार्षम् । गच्छध्वं गच्छत । ; so also Cm.; Ck : क्रोधवशाद्वचनव्यत्यासप्रयोगस्तस्य कविनाप्यनुकृतः । ; so also Ct. ❀ —After 12$^{ab}$, Ś Ñ1 V B1.2.4 D0-4.8.12.13 ins.:

422* उभौ न द्रष्टुमिच्छामि युवां विप्रियवादिनौ ।

[D4 तद् (for न). —B4 om. (hapl.) from the post. half up to 12$^{c}$. Ñ1 V2 B1 पापाव्; D1 मम (for युवां). Ś2 वै प्रिय-; Ñ1 V2 B1.2 अप्रिय- (for विप्रिय-).]

—$^{c}$) Ś Ñ V B1-3 D0.2.4.8.12.13 न युवां; D1 वध्यौ न; D3 वधार्हौ (for न हि वां). —After 12$^{c}$, V2 erroneously reads the post. half of 422* and 12$^{c}$. —$^{d}$) D6.7.9-11 T1.2 G M3 स्मरामि (for स्मरन्). G1 [उ]पकृतं हि (for उपकृतानि). Ñ B1.3 वै; B4 D1.7 च (for वाम्). —After 12$^{cd}$, B2.3(marg.) ins.:

423* सदा पूर्वमुभावेव राजपिण्डोपजीविनौ ।

—$^{e}$) Ñ1 V2 B1-3 उभावेतौ; Ñ2 B4 हतावेतौ (for हतावेव). Ś D8.12 वै; Ñ V2 B D0.2.4.13 यौ; V1.3 वां; D9-11 द्वौ; G1 तु; M1.2.5 हि (for तौ). —$^{f}$) Ś Ñ1 V B D0-4.8.13 मम (for मयि). D1.3 स्नेहे (for स्नेह-). —After 12, Ñ V B ins.:

424* दुराचारौ परं मूढौ रिपुपक्षप्रशंसकौ ।

[Ñ2 illeg. after दुरा- up to 13$^{a}$. V3 illeg. from रौ up to -प्रशंसकौ. V3 B3 दुराचार- (for °रौ). V2 B4 परौ (for परं).]

13 Ñ2 illeg. for 13$^{a}$ (cf. v.l. 424*). D13 om. 13. —$^{a}$) Ś V D0-4.8.12 तेनैवमुक्तौ; D9-11 M3 एवमुक्त्वा तु (for एवमुक्तौ तु). —$^{b}$) Ś Ñ V2 D0.2.3.8.12 उभौ तौ (by transp.); D1 उभौ च; D9-11 तौ दृष्ट्वा; G1 राक्षसौ (for तावुभौ). —$^{cd}$) T3 वश- (for जय-). —D6 reads $^{d}$ in marg. Ś V1 D0-4.8.12 प्रतिपूज्य (for °नन्द्य). Ñ1 B3.4 D6 G M5 वि-; Ñ2 [अ]थ (for [अ]भि-). Ñ V2 B3.4 G1 -निर्गतौ (for -निःसृतौ). V3 प्रतिपूज्या **** (moth-eaten) (for $^{d}$). B1.3 प्रणम्य राक्षसं त्रस्तौ प्रतिवंद्य प्रजग्मतुः.

14 $^{ab}$) Ś Ñ V2 B3 D1.2.8.12.13 M3 अब्रवीत्तु; B1.2.4 D0.4 G1.3 M5 अथाब्रवीत्; D3.9-11 अब्रवीच्च (for अब्रवीत्स). Ś V1.3 B1.2 D0-3.8.12.13 समीपस्थं दशग्रीवो (by transp.); B4 स पार्श्वस्थं दशग्रीवो (for दशग्रीवः समीपस्थं). —$^{cd}$) Ś D2.8.12 उपतिष्ठंतु; D13 उपयास्यंतु (for उपस्थापय). Ś Ñ V B D0-3.7-13 T2 M3 मे शीघ्रं (by transp.); D4 मे क्षिप्रं (for शीघ्रं मे). M1.2 अति- (for नीति-). Ś D2.8.12.13 चारा अ(D2 इ)ति विचक्षणाः; Ñ V2 B3 D6.7.9-11 T2.3 M5 चा(D9 वी; T2.3 च)रानिति(M5 °ह) निशाचरा:(Ñ1 B3 °रं; Ñ2 D6 T2.3 M5 °र); V1.3 चराश्चा-(V1 चारानि)तिविचक्षणान्; B1.2.4 चरमुख्यान्निशाचरान्; D0.1.3.4 च(D0.4 चा)रानतिविचक्षणान् (for $^{d}$). G उपस्थापयितव्या मे शीघ्रं चारा निशाचर. —After 14, D5.7.10 T1.2 G M3.5 ins.:

425* महोदरस्तथोक्तस्तु शीघ्रमाज्ञापयच्चरान् ।

[D7 तथेत्युक्त्वा (for तथोक्तस्तु). D5 T2 शरान् (sic); G1.3 M5 तदा; G2 ततः (for चरान्).]

15 $^{a}$) Ś Ñ V B3 D0.4.5.8.9.11 T1 G M3 चाराः; D1 शूराः (for चराः). Ś D8.12 च त्वरिताः; B4 °तं (for संत्वरिताः). —$^{b}$) D5 T1 दूताः; T3 G1.2 पा(T3 प्रा)र्थाः (sic) (for प्राप्ताः). —$^{d}$) D12 वरयित्वा (for वर्ध°). V1.3 D0.1.9-11 जयाशिषः; B1.3 जयश्रिया; D2-4.13 जयाशिषं.

16 $^{a}$) M1.2 तदा (for ततो). —$^{b}$) V1.3 D2 M1.2 राक्षसेश्वरः. —$^{cd}$) Ñ1 V2.3 B D1.3.6.10.11 T2.3 M1.2 Ct चरान् (for चारान्). Ś V1.3 D0.2.4.8.12.13 प्रत्य(D2 °त्या)यि(D4 °य)नः; Ñ1 V2 B3 प्रत्यर्पिताम्; Ñ2 illeg.; B1 उपस्थिताम्; B2.4 प्रत्ययितान्; D1.3 प्रतापिनः;

अन्योन्यं रजसा तेन कौशेयोद्धूतपाण्डुना ।
संवृतानि च भूतानि ददृशुर्न रणाजिरे ॥ १६
न ध्वजो न पताका वा वर्म वा तुरगोऽपि वा ।
आयुधं स्यन्दनं वापि ददृशे तेन रेणुना ॥ १७
शब्दश्च सुमहांस्तेषां नर्दतामभिधावताम् ।
श्रूयते तुमुले युद्धे न रूपाणि चकाशिरे ॥ १८
हरीनेव सुसंक्रुद्धा हरयो जघ्नुराहवे ।
राक्षसाश्चापि रक्षांसि निजघ्नुस्तिमिरे तदा ॥ १९
परांश्चैव विनिघ्नन्तः स्वांश्च वानरराक्षसाः ।
रुधिरार्द्रां तदा चक्रुर्महीं पङ्कानुलेपनाम् ॥ २०
ततस्तु रुधिरौघेण सिक्तं व्यपगतं रजः ।
शरीरशवसंकीर्णा बभूव च वसुंधरा ॥ २१
द्रुमशक्तिशिलाप्रासैर्गदापरिघतोमरैः ।
हरयो राक्षसास्तूर्णं जघ्नुरन्योन्यमोजसा ॥ २२

G. 6. 29. 25
B. 6. 55. 26
L. 6. 31. 21

16 V3 D4 om. 16$^{ab}$ (cf. v.l. 15 and 13). M1 damaged for 16. —$^{a}$) D1 अन्योन्य-. B1 राक्षसानां च (for रजसा तेन). —$^{b}$) Ñ1 V1.2 B2–4 D1–3.13 कौशेयारुण-; Ñ2 सर्वतोरुण-; D6.9–11 G2 Ck.t °योद्धत-; D7 °योद्भूत-; T3 °यांशुक- (for कौशेयोद्धूत-). D2 -पांडुरं. Ś D8.12 कौशेयं बहुपांडुरं; B1 वानराणां च संयुगे. —$^{c}$) D9 M5 रूपाणि (for भूतानि). Ś Ñ2 V B1.2.4 D1–3.8.12.13 संवृ(D13 °भृ)तं(V1 °*; V3 °ता; B1 °त्तं) धूम(V2 B1 तेन; D2 धूम्र)धूम्रेण(B2 °वर्णेन); Ñ1 B3 D4 संवृता घोररूपेण. —$^{d}$) D8 om. न. Ñ1 B3 न स्म किंचन; B1 D8 न(D2 ते) रणाजिरं; D4 नैव कश्चन (for न रणाजिरे). D1 न ददृशू रणाजिरं.

17 $^{a}$) D4 om. first न. D4.6 T3 G M Cg ध्वजा (for ध्वजो). B2.3 D1–4.13 वा (for second न). D6 reads in marg.; M3 च (for वा). —$^{b}$) Ś D8.12 धन्विनस्; Ñ V B3 D9–11 T3 चर्म वा; B1 D1 चर्मणस्; B2 धनुर्वा; B4 D3.13 वर्मिणस्; D2 ध्वनि वा; D7 न गजो; G1 न हस्ती (for वर्म वा). Ś1 न (for second वा). —$^{c}$) B1 नायुध-; D1.8 आयुध- (for आयुधं). Ś2 Ñ1 V2 B1.3.4 D1.2.5.8–13 T3 G1 स्यंदनो (for °नं). Ś1 न; B2 D4.7 च (for वा). —$^{d}$) B2.3 ददृशुस्; D9 दृश्यते (for ददृशे). D13 न च (for तेन). Ñ1 D4 ददृशुस्ते रणे तदा(D4 चराः); V2 ददृशुर्न रणाजिरे; B1 ददृशू रणरेणुना.

18 $^{a}$) Ñ1 B4 शब्दं. Ś V1.2 B1.3 D1–4.8.12.13 सु(V2 D1–3.13 तु; B1 च)तुमुलस्; Ñ1 B4 सुतुमुलं (for च सुमहांस्). Ś B1.4 D1–3.8.12.13 तत्र (for तेषां). —$^{b}$) D5 नदताम्; D8.12 नंदताम् (for नर्दताम्). —$^{c}$) V1 B2.3 शुश्रुवे (for श्रूयते). D7.9–11 G1 तुमुलो. Ś Ñ2 V2 B1.4 D1–3.8.12.13 शुश्रुवे विपुलः(B4 °ततं; D1 °मलः) संख्ये; D4 श्रूयते शैलतुसुले (sic). —$^{d}$) D4 युद्धे ते च; M5 रूपाणि न (by transp.). D1 प्रकाशिरे (for चका°).

19 $^{a}$) Ñ1 B2–4 च(B2.4 तु) संक्रुद्धा; Ñ2 D9 तु(D9 सु-) संरब्धा; D7 सुसंहृष्टा; D10.11 Ct सुसंरुष्टा (for सुसंक्रुद्धा). Ś B1 D1–3.8.12.13 परानेव(L [ed.] °वं) सुसंरब्धा; D4 हरींश्च बहुशः क्रुद्धा. —$^{b}$) Ś D8 जग्मुर् (for जघ्नुर्). —$^{c}$) Ś B1.4 D1–3.8.12.13 वानरान्; V2 वानरास्; V3 राक्षसांश् (for राक्षसाश्). Ś B1.4 D1–3.8.12.13 G1.3 अपि (for चापि). D5.7.9–11 राक्षसा राक्षसांश्चापि. —$^{d}$) Ś Ñ2 V1.2 B1.2.4 D1–3.8.12.13 समरे; B3 सुतुले (sic) (for तिमिरे). D2.3.13 तथा (for तदा). Ñ1 D4 जघ्नुः स्म तुमुले तदा.

20 $^{ab}$) Ś Ñ V B2–4 D1–4.7–13 T3 ते परांश्च; T2 परांश्चापि; M3 वरांश्चैव (for परांश्चैव). D7 [ए]व निघ्नंतः; D11 निविघ्नंतः (meta.); G1 निजघ्नंतः; M5 विनिघ्नंति (for विनिघ्नन्तः). D3.13 तांश्च; D4 स्वान् (subm.); D12 स्वां च (sic) (for स्वांश्च). Ñ1 B3 D4 -यूथपाः (for -राक्षसाः). B1 राक्षसा वानरांश्चैव वानराश्चापि राक्षसान्. —$^{cd}$) Ś D8.12 -[आ]र्द्रांस्; D13 -[आ]क्तां (for -[आ]र्द्रां). Ñ V1.3 B1–3 D4 रणे; D1–3.5 तथा; D13 ततश् (for तदा). D1 कुर्युर् (for चक्रुर्). —V2 illeg. for $^{d}$ except महीं. B4 G3 M5 transp. तदा and महीं. B4 रुधिरकर्दमां (for पङ्कानुलेपनाम्). Ś D8.12 महादारुणदर्शनान्; Ñ V1.3 B2.3 D4 महीं पर्याकुलां तदा(B3 °था); B1 महीं शोणितकर्दमां; D1–3.13 महीं दारुणदर्शनां(D3 °कर्दमां) (for $^{d}$).

21 $^{a}$) D6.7.9.10 तदस्तु; M2 ततस्तद् (for ततस्तु). Ś B1.4 D1–3.8.12.13 हतानां(B1 महतां) रुधिरौघैस्तु. —$^{b}$) D9 स्वस्थं (for सिक्तं). Ñ1 B3 प्रशमितं; Ñ2 V1.3 B2 विमृदितं; D4 प्रसरितं; D6.9–11 T2 व्यपग(T3 °र)तं (for व्यपगतं). Ś D2.8.12.13 शशामाभि(Ś1 °हि)हतं(D13 °मुखं) रजः; V2 संसिक्तमृदितं रजः; B1 D1.3 सहसा(B1 °पादा)-भिहतं रजः; B4 संपतद्भिर्हतं रजः. —$^{c}$) Ś Ñ V1.2 B D1–4.8.12.13 T2 M2 -शत-; G3 -चय- (for -शव-). D9 G1 शरीरासव-; Cg.t as in text (for शरीरशव-). Ś D2.3.8.12 -संस्तीर्णा; G1 -संपूर्णा; Cg.t as in text (for -संकीर्णा). —$^{d}$) D4 तु (for च).

22 $^{ab}$) B1 -शर- (for -शिला-). Ś B1.4 D1–3.8.12.13 -प्रास-; B2 D4 -पाशैर् (for -प्रासैर्). G1 तदा (for गदा-). Ñ2 V3 D7.9–11 T3 G3 M5 transp. -शिला- and गदा-. Ñ2 -तोरणैः; B1 -संकुलाः (for -तोमरैः). —$^{c}$) Ś Ñ V B2–4 D1–4.7–13 T3 राक्षसा हरयस् (by transp.); B1 राक्षसा बहवश् (for हरयो राक्षसास्). Ś Ñ V B1.2.4 D1–5.8.12.13 T1 M3 चैव; B3 चापि (for तूर्णं). —$^{d}$) Ś Ñ1 B2.3 D2–4.8.12 आहवे (for ओजसा).

G. 6. 29. 26
B. 6. 55. 26
L. 6. 31. 22

बाहुभिः परिघाकारैर्युध्यन्तः पर्वतोपमाः ।
हरयो भीमकर्माणो राक्षसाञ्जघ्नुराहवे ॥ २३
राक्षसाश्चापि संक्रुद्धाः प्रासतोमरपाणयः ।
कपीन्निजघ्निरे तत्र शस्त्रैः परमदारुणैः ॥ २४
हरयस्त्वपि रक्षांसि महाद्रुममहाश्मभिः ।
विदारयन्त्यभिक्रम्य शस्त्राण्याच्छिद्य वीर्यतः ॥ २५
एतस्मिन्नन्तरे वीरा हरयः कुमुदो नलः ।
मैन्दश्च परमक्रुद्धाश्चक्रुर्वेगमनुत्तमम् ॥ २६
ते तु वृक्षैर्महावेगा राक्षसानां चमूमुखे ।
कदनं सुमहच्चक्रुर्लीलया हरियूथपाः ॥ २७

इति श्रीरामायणे युद्धकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

23 $^a$) V3 D2.5 बहुभिः; D3 वारिभिः (for बाहुभिः). Ś D8.12 पर्वताकारैर् (for परिघा°). —$^b$) Ś Ñ V B3.4 D1–3.8.12.13 अस्यंतः; B1 पश्यंतः; B2 अत्यंतैः; D4 आसन्नाः (for युध्यन्तः). Ś B1 D6.8.12 परिघोपमैः (Ś2 B1 D6 °माः); Ñ V1.2 D7.9–11 पर्वतोपमान् (D7 °मैः); B3 D3 पर्वतोत्तमान् (D3 °मैः). —After 23$^{ab}$, D4 ins. 884*. —Ś Ñ1 B1.3 D1–4.8.12.13 om. 23$^{cd}$. —$^c$) M1.2 राक्षसानतिसंरब्धा. —$^d$) M1.2 हरयो (for राक्षसान्). —After 23, B2 ins.; while Ñ1 B3 (repeats [m.]883*, 25, 885* and 24 after 6.44.6$^{ab}$) ins. after 23$^{ab}$ (owing to om.):

883* हरीन्महीधरप्रख्यान्राक्षसाः सूदयन्युधि ।

[B2 रक्षांससूदयन्युधि (for the post. half).]

24 B3 repeats 24 after 6.44.6$^{ab}$ (cf. v.l. 23). Ñ1 B2 (om. 24$^{cd}$).3 (both times) D4 transp. 24 and 25 (including star passages). —$^a$) B4 च सु-; D5.7.9–11 T2.3 G3 M5 त्वभि-; T1 G1 M3 त्वपि; G2 अपि (for चापि). —$^b$) D4 पाश-. Ñ2 V B2.4 -मुद्गर- (for -तोमर-). D5 -पाणिनः. —Ñ2 V B4 om. 24$^c$–25$^b$. B2 om. 24$^{cd}$. —$^c$) Ñ1 B3 (both times) निजघ्नुरपरे; D4 निजघ्निरे शस्त्रैः (for निजघ्निरे तत्र). —For 24, Ś B1 D1–3.8.12.13 subst.: D4 ins. after 23$^{ab}$:

884* वानरान्सूदयामासुः संरब्धा रजनीचराः ।

[Ś D2.8.12 अर्दयामासुः (for सूदयामासुः).]

—After 24, D5–7.9–11 S ins.; Ñ1 B2.3 (both times) D4 ins. after 25 (transp.):

885* अकम्पनः सुसंक्रुद्धो राक्षसानां चमूपतिः ।
संहर्षयति तान्सर्वान्राक्षसान्भीमविक्रमान् ।

[(l. 1) Ñ1 B3 (first time) च संक्रुद्धो; B3 (second time) D5 T3 M1.2 तु सं°; D4 च क्रुद्धश्च (for सुसंक्रुद्धो). —After l. 1, Ñ1 B2.3 (both times) D4 ins.:

885(A)* हसन्विद्रावयामास पुरस्ताच्छरवृष्टिभिः ।

[B2 पुरस्थान् (for °स्ताच्).]

—(l. 2) Ñ1 B2.3 (both times) D4 संहर्षयंस्तदा; G2 स हर्षयति तान्. Ñ1 B2.3 (first time) G3 घोर (G3 भीम) विक्रमः; B3 (second time) D4 घोर (D4 बहु) विक्रमान्; M1.2 हरिनिग्रहात् (for भीमविक्रमान्).]

25 Ñ2 V B4 om. 25$^{ab}$ (cf. v.l. 24). B3 repeats 25 after 6.44.6$^{ab}$ (cf. v.l. 23). Ñ1 B2 (om. 24$^{cd}$).3 (both times) D4 transp. 24 and 25 (including star passages). —$^a$) Ś B1 D1–4.8.12.13 वानरा (D4 रजनी [sic]) श्चापि; Ñ1 B2.3 (both times) D7 G1.3 M1.2.5 हरयश्चापि (G3 °स्त्वभि-) (for हरयस्त्वपि). —$^b$) Ś D2.8.12 -शिलादिभिः; B1 D1.3.13 -लताश्मभिः (D1 °वान्) (for -महाश्मभिः). Ñ1 B2.3 (both times) D4 महाशै (D4 °शा) लै (B3 [second time] °यानै) र्महाद्रुमैः. —$^{cd}$) G3 [अ]ति- (for [अ]भि-). Ś B1.4 D1.3.8.12 अभिजग्मु (B1.4 D1 °घ्नु) रति (B4 D3 °भि) क्रम्य; Ñ1 B2.3 (both times) D4 व्यदारयन्विनिष्क्रम्य; D2 अतिजिष्णुरतिक्रम्य; D9 विदारयंति विक्रम्य; D13 अभिजघ्नुर्विनिष्क्रम्य (for $^c$). Ś D8.12 [उ]च्छिद्य; B2.4 D1.3 [आ]च्छाद्य (for [आ]च्छिद्य). B1 यत्नतः; D4.13 वीर्यवान् (for वीर्यतः). Ñ2 V व्यदारयन्कपीं-स्तत्र शस्त्रैः परमदुर्जयाः. —After 25 (transp.), Ñ1 B2.3 (both times) D4 ins. 885*.

26 $^a$) Ñ1 B3 D4 वीरः; M1.2 क्रुद्धा (for वीरा). —$^b$) Ñ1 B3 D4 शरभः (for हरयः). Ñ1 कुंजरो (for कुमुदो). —$^c$) B4 तु (for च). G1 मैंदद्विविदश्च (hypm.) (for मैन्दश्च). B3 D3–5 T1 M1–3 द्विविदः (for परम-). Ś2 Ñ2 V3 B1.2 D2.6–11 -क्रुद्धश्च; B3 M1.2 चैव; D4 चक्रु (for -क्रुद्धाश्च). —$^d$) Ś B1 D2.3.8.12.13 युद्धम् (for वेगम्). D1 चक्रुयुद्धान्य कशः; D4 रणे वेगमनुत्तमाः.

27 $^a$) Ś Ñ V B D1–4.8.12.13 मुष्टिभिर् (for तु वृक्षैर्). Ñ1 B3 D12 महावेगै; D7.9–11 °वीरा; D13 °वीर्या (for महावेगा). —$^b$) B1 वानराणां महाचमूः (sic). —$^c$) B2 च; D4 च सु- (hypm.) (for सु-). —$^d$) Ś B2 D2.7–12 T3 -पुंगवाः (for -यूथपाः). —After 27, Ś V1.2 B1 D1–3.8.12 ins.; while D13 erroneously ins. before 6.44.1:

# ४४

तद्दृष्ट्वा सुमहत्कर्म कृतं वानरसत्तमैः ।
क्रोधमाहारयामास युधि तीव्रमकम्पनः ॥ १

क्रोधमूर्छितरूपस्तु धुन्वन्परमकार्मुकम् ।
दृष्ट्वा तु कर्म शत्रूणां सारथिं वाक्यमब्रवीत् ॥ २

G. 6. 30. 2
B. 6. 56. 2
L. 6. 32. 2

886* असिवातपुरोवाताः शिलापादपवर्षिणः ।
उत्कृष्टा गर्जितरवा मेघा इव बभुस्तदा ।

[V1 om. l. 1.—(l. 1) B1 D1–3.13 अभिसार- (for °वात-). V2 आविर्भूताः खरा वाताः (for the prior half). D1 -योधिनः (for -वर्षिणः).—(l. 2) V2 D1–3.13 उत्कृष्ट-. V2 विनुकुशुः; D13 दुरासदाः (for बभुस्तदा).]

—Thereafter, Ś V1.2 B1 D2.8.12 cont.; while Ñ V3 B2–4 D4.13 ins. after 27:

887* तदा च रक्षोगणमुन्नदन्तं
संभ्रान्तनागाश्वरथं विषण्णम् ।
महोदधेः क्षुब्धमिवानुरूपं
निशाचराणां बलमाबभासे ।

[(l. 1) Ñ V1.2 B3 D2 तदा तु; B4 D4 तदार्त-; D13 सपत्न- (for तदा च). Ñ1 B3 उन्नदच्च; B2 उन्नमंतं (for उन्नदन्तं).—(l. 2) V1 D4 -राम- (for -नाग-). B1 विशालं; D2.4 विभीषणं (for विषण्णम्).—(l. 3) Ñ2 B2.4 महोदधिं. D2 क्षोभम्; D13 कुद्धम् (for क्षुब्धम्). D4 [अ]तिरूपं (for [अ]नु°).—(l. 4) D13 च तदा बभासे (for -बलमाबभासे).]

—Thereafter, Ñ V B2–4 D2.4.13 cont.:

888* निपातयन्तोऽतिबला निशाचरां-
स्तलप्रहारैः करजैश्च वेगिताः ।
विचेरुरुच्चैः प्लवगेश्वरा रणे
बलानि रक्षोऽधिपतेस्तदानीम् ।

[(l. 1) V3 B3 D2.13 -बलान् (for -बला).—(l. 2) V2 तरु-; D2 शूल- (for तल-). D2 स्वकरैश् (for करजैश्). V3 प्रवेगिताः; D13 च वेगितैः (for च वेगिताः). D4 तलप्रहारौघ-जलैश्च वेगिताः.—(l. 3) D4 विरेजुर् (for विचेरुर्). Ñ2 ते (for रणे). B2 प्लवगेश्वराणां; B4 प्लवगास्तदा रणे (for प्लवगेश्वरा रणे).—(l. 4) Ñ2 बलेषु; V बलं हि (for बलानि).]

—After 27, D7 G3 ins.:

889* अकम्पनसमादिष्टा विविधायुधयोधिनः ।

—D7 G3 cont.; while D5.6.9–11 T G1.2 M ins. after 27:

890* ममन्थू राक्षसान्सर्वे वानरा गणशो भृशम् ।

[D5.7.9 T1 G2.3 M5 राक्षसाः (for राक्षसान्). M1.2 सर्वान् (for सर्वे). D5.7 T1 वानरान्; D6 T2.3 G1 हरयो; D9 हरीणां; G2.3 M5 हरीश्च (for वानरा). G3 M5 शतशो (for गणशो). D10.11 M1.2 Ck.t नानाप्रहरणैर्भृशं (for the post. half). ❀ Cm.t cite Kataka : अत्र सर्गविच्छेदः प्रमादादिति कतकः. ❀]

Colophon. D1 om. (cont. the Sarga).—*Kāṇḍa name*: Ñ B1.3.4 D2.4.13 लंकाकांडे.—*Sarga name*: Ś Ñ V B D2–4.8.12.13 अकंपननिर्याणं; D9 अकंपनयुद्धः.—*Sarga no.* (figures, words or both): Ś1 Ñ1 V3 B2 D2.4.8.12.13 om.; Ś2 D3.9 31; Ñ2 V2 B4 29; V1 30; B1 28; B3 27; D5–7.10.11 T1.2 G M 55; T3 56.—After colophon, D2 concludes with रामः; while G M1.2.5 conclude with श्रीरामाय नमः.

# 44

D1 continues the previous Sarga. Cr is missing for Sarga 44, but wrongly reads st. 15, 19, 22 and 27 only after l. 134 of App. I (No. 26). Before 1, D13 erroneously ins. 886*.

1 Cv is missing for 1–15^c (cf. v.l. 43.1).—^a) D5.7.9.11 Ck तं; Cg.t as in text (for तद्). ❀ Ck : तं दृष्ट्वा सुमहदित्यादि । अत्र च मुधा सर्गमत्रच्छिन्दन्ति. ❀—For 1^ab, Ś Ñ V B D1–4.8.12.13 subst.:

891* रक्षसां वानरैर्दृष्ट्वा सुमहत्कदनं कृतम् ।

[After the prior half, D3 ins.:

891(A)* सर्वैस्तैः प्लवंगमैः (subm.) ।
समेत्य समेत्य सारे (sic).

Ñ2 V2.3 B2.4 D1 कदनं सुमहत् (by transp.).]

—^c) Ñ V B3.4 क्रोधमाहारयत्तीव्रं (B3 °च्छिद्रं [sic]); B2 क्रोधं चक्रे ततस्तीव्रं.—^d) Ś B1 D1.3.4.8.12.13 तेषां; Ñ1 B3 T3 युद्धे; V3 यावत्; G (ed.) रणे (for युधि). Ñ V B2–4 तस्मिन् (for तीव्रम्). D3 तेषां तीव्रः प्रकंपनः.

2 ^ab) B1 D1.3 -वेगस; D13 -वेगैस (for -रूपस्). Ś D2.8.12 क्रोधान्मारुतवेगस्तु; M1.2 क्रोधेन महताविष्टो (for ^a). G2.3 M1.2 धून्वन् (for धुन्वन्). Ś D8.12 धुन्वन्धनु-रुत्तमं; G (ed.) प्रगृह्य सशरं धनुः (for ^b). Ñ1 B3 D4 क्रोधसंरक्तनयनो गृहीत्वा कार्मुकोत्तमं.—^c) D2 दृष्टं (sic). Ś B4 D1–3.6.8.12.13 M1.2 तत् (for तु). D13 कुशलं (for शत्रूणां). Ñ V B2.3 D4 रिपूणां (V3 B2.3 विपुलं; D4 ऋपीणां) प्रेक्ष्य तत्कर्म; G (ed.) रिपूणां च बलं प्रेक्ष्य.—^d) Ñ V B2.3 D4 त्वरितो (for वाक्यम्).—After 2, Ñ V B2.3 D4 ins.; while B4 ins. l. 2 after 3:

892* मयि तिष्ठति शत्रुघ्ने नामी वानरपुंगवाः ।
प्रभावं वर्तयिष्यन्ति सैन्ये मम सुदुःसहे ।

[(l. 1) Ñ2 B2 मे (for [अ]मी). D4 वानरयूथपाः.—(l. 2) B2.4 प्रसभं (for प्रभावं). Ñ1 B3 D4 G (ed.)

G. 6. 30. 4
B. 6. 56. 3
L. 6. 32. 3

तत्रैव तावत्त्वरितं रथं प्रापय सारथे ।
एतेऽत्र बहवो घ्नन्ति सुबहून्राक्षसान्रणे ॥ ३
एतेऽत्र बलवन्तो हि भीमकायाश्च वानराः ।
द्रुमशैलप्रहरणास्तिष्ठन्ति प्रमुखे मम ॥ ४
एतान्निहन्तुमिच्छामि समरश्लाघिनो ह्यहम् ।
एतैः प्रमथितं सर्वं दृश्यते राक्षसं बलम् ॥ ५
ततः प्रजविताश्वेन रथेन रथिनां वरः ।
हरीनभ्यहनत्क्रोधाच्छरजालैरकम्पनः ॥ ६
न स्थातुं वानराः शेकुः किं पुनर्योद्धुमाहवे ।
अकम्पनशरैर्भग्नाः सर्व एव प्रदुद्रुवुः ॥ ७
तान्मृत्युवशमापन्नानकम्पनवशं गतान् ।
समीक्ष्य हनुमाञ्ज्ञातीनुपतस्थे महाबलः ॥ ८
तं महाप्लवगं दृष्ट्वा सर्वे प्लवगयूथपाः ।
समेत्य समरे वीराः सहिताः पर्यवारयन् ॥ ९

प्रसभं( B3 °भावा ) भर्त्से( G [ ed. ]कर्ते )यिष्यंति ( for the prior half ). G ( ed. ) सैन्यं ( for सैन्ये ). Ñ B3 D4 सैन्यं मम तु( D4 च मम )दुःसहं ( for the post half ).]

—Thereafter B4 repeats $3^{ab}$ ( var. ).

3 B4 repeats $3^{ab}$ ( var. ) after 892*. —$^{ab}$) Ñ V B2.3.4( second time ) D4 अत्र ( for तत्र ). D4 तत्त्वं ( for तावत् ). V B3 D9–11 T3 त्वरितः. Ñ1 D4 नय मे सारथे रथं ; Ñ2 V B2.3.4( second time ) सारथे नय मे रथं ( for $^{b}$ ). Ś B1.4( first time ) D1–3.8.12.13 अ( D13 त )त्रैव त्वरितं याहि सारथे यत्र वानराः. —Ñ2 om. ( hapl. ) $3^{cd}$. B4 reads $3^{cd}$ after 4. D13 reads $3^{cd}$ after $5^{ab}$. —$^{c}$) Ñ1 D4 हि; T3 च ( for ऽत्र ). D6 G1 ये( G1 ते ) यत्र; G3 M3 यत्रैते ( for एतेऽत्र ). Ś B1.4 D1–3.8.12.13 हि सहिता; V B2.3 हि हरयो ; D7.9–11 च बलिनो ( for ऽत्र बहवो ). D4 नष्टान् ( sic ) ( for घ्नन्ति ). G2 यत्रैते हरयो घ्नंति. —$^{d}$) Ñ1 V B2.3 D4 रजनीचरान् ( for राक्षसान्रणे ). —After 3, B4 ins. l. 2 of 892*.

4 Ś B1 D1–3.8.12.13 om. 4. —$^{a}$) Ñ2 V B4 हि ; D7 न ( sic ); D9.10 Ct च ( for ऽत्र ). Ñ1 B3 D4 न( D4 द[ sic ] )दंतो ; D6 T2.3 G1 ये( T3 ते ) त( D6 य )त्र ( for एतेऽत्र ). Ñ V B3.4 D4.6 च ; D7 [ ऽ ]त्र ; D9–11 T3 Ct वा ( for हि ). B2 एते ह्यतिबलवंतः. ❀ Ct : वाशब्दो वैशब्दस्यार्थे. ❀ —$^{b}$) Ñ2 V D7.10.11 T3 भीमकोपाश्च ; B4 भीमाकारा ; D9 भीमवेगाश्च. B4 हि ( for च ). M1.2 प्लवंगमाः ( for च वानराः ). —After 4, B4 reads $3^{cd}$.

5 $^{a}$) M2 हि तान् ( for एतान् ). —$^{b}$) D9 T2 M5 समरे. Ñ2 V B1.2.4 D1.3.13 रणे; D8 त्वहं ( for ह्यहम् ). Ñ1 B3 D4 समरे शीघ्रकारिणः. —After $5^{ab}$, D13 reads $3^{cd}$. —$^{c}$) D6.7 T2 G1 M5 एतत् ; Ck.t as in text ( for एतैः ). —$^{d}$) G1 रक्षसां ( for राक्षसं ). D7.9–11 T3 रक्षसां दृश्यते बलं. —For $5^{cd}$, Ś Ñ V B D1–4.8.12.13 subst. :

893* एतैर्हि राक्षसानीके सुमहत्कदनं कृतम् ।

[ B1 च; D1 तु ( for हि ). Ñ2 V1.2 B2.4 D4 -[ अ ]नीकं. Ñ1 V2 B3 D4 कृतं छि( V2 D4 °तच्छि )द्रं सुसंवृतं ; Ñ2 V1.3 B2.4 कृतच्छि( B4 °तं छि )द्रमनंतरं ; D1.3 कदनं सुमहत्कृतं ( for the post. half ). ]

6 $^{a}$) T2 तत्र. Ś2 D8 प्रव्रजित- ; B1 तु जवित- ; D2.7.9–11 T3 प्रच( D2 °ज्व )लित- ; D5.6 T1 G2 M3 प्रजवन- ( for प्रजवित- ). —$^{b}$) B1 सुवरूथिना ( unmetric ) ( for रथिनां वरः ). —After $6^{ab}$, B3 repeats ( m. ) 883*, 25, 885* and 24 of 43. —$^{c}$) Ñ2 V B2.4 D7.9–11 T2.3 अभ्यपतत् ( for °हनत् ). V1 D3 कोपाच् ; D7.9–11 दूराच् ; D13 क्रुद्धः ; T3 घोरान् ( for क्रोधाच् ). Ñ1 B3 D4 हरीणामसृजत्क्रुद्धः ; G1 परिरभ्य हरीन्क्रोधाच्. —$^{d}$) Ś D1–3.8.12.13 किरन्बाणान् ; Ñ1 B3 D4 शरवर्षम् ; B1 बलवांस्तान् ( for शरजालैर् ). D8( m. after corr. as in text ) अनेकशः ( for अकम्पनः ). —After 6, D6 ins. :

894* वानरान्द्रावयामास तत्पुरस्तु महाबलः ।

7 $^{a}$) D13 om. ( hapl. ) न स्थातुं वा. Ś D2.8.12 न शेकुर्वानराः स्थातुं. —$^{b}$) D13 पु * * * म्. —$^{c}$) B1 D5 भिन्नाः ( for भग्नाः ). —$^{d}$) Ñ1 V3 B3 D4.7.9–11 T2.3 [ अ ]भि- ; D5.6 T1 G2.3 M3.5 वि- ( for प्र- ). Ś D8.12 दुद्रुवुस्ते दिशो दश; D2 दुद्रुवुः सर्ववानराः.

8 $^{a}$) G1.2 -पाशम् ( for -वशम् ). Ñ1 B3 D4 तान्दृष्ट्वा वानरांस्त्रस्तान्. —$^{b}$) Ś D2.8.12 M5 -शराहतान् ; V1 D1.3 -वशानुगान् ; V3 D7.9–11 -शरानुगान् ( for -वशं गतान् ). B1 वानरान्वीक्ष्य संयुगे; D4 तत्राकंपनसंगतान्. —$^{c}$) D4 संख्ये; D13 जातीः ( sic ) ( for ज्ञातीन् ). —$^{d}$) Ś B1.4 D1–3.8.12.13 संप्रतस्थे; Ñ V1 B2.3 G1 अवतस्थे; D4 क्रुद्धस्तत्र; Cg.k.t उपतस्थे ( as in text ). —After 8, Ñ2 V B2.4 D13 ins. :

895* तस्य मायाबलं दृष्ट्वा ततः क्रोधसमन्वितः ।

—After 8, B3 reads ( m. ) $13^{c}$–$14^{b}$ for the first time repeating them in their proper place and after the first occurrence of $14^{ab}$ reads 15–17.

9 Ñ1 D4 om. 9–13. B3 om. 9–10. —$^{a}$) D13 हृष्टा. —$^{b}$) Ñ2 V2.3 B2.4 D7.9 प्लवगसत्तमाः ; V1 B1 D1.3.10.11.13 M1.2 ते प्लवगर्षभाः( V1 B1 D1.13 °गेश्वराः ) ; D6 वानरयूथपाः. —D12 repeats wrongly $9^{cd}$ after

व्यवस्थितं हनूमन्तं ते दृष्ट्वा हरियूथपाः ।
बभूवुर्बलवन्तो हि बलवन्तमुपाश्रिताः ॥ १०
अकम्पनस्तु शैलाभं हनूमन्तमवस्थितम् ।
महेन्द्र इव धाराभिः शरैरभिववर्ष ह ॥ ११
अचिन्तयित्वा बाणौघाञ्शरीरे पतिताञ्शितान् ।
अकम्पनवधार्थाय मनो दध्रे महाबलः ॥ १२
स प्रहस्य महातेजा हनूमान्मारुतात्मजः ।
अभिदुद्राव तद्रक्षः कम्पयन्निव मेदिनीम् ॥ १३
तस्याभिनर्दमानस्य दीप्यमानस्य तेजसा ।
बभूव रूपं दुर्धर्षं दीप्तस्येव विभावसोः ॥ १४
आत्मानं त्वप्रहरणं ज्ञात्वा क्रोधसमन्वितः ।
शैलमुत्पाटयामास वेगेन हरिपुंगवः ॥ १५
तं गृहीत्वा महाशैलं पाणिनैकेन मारुतिः ।
विनद्य सुमहानादं भ्रामयामास वीर्यवान् ॥ १६

G. 6. 30. 6
B. 6. 56. 16
L. 6. 32. 15

896*. G2 repeats wrongly 9c–10b after 10ab. —a) Ś B1 D1–3.8.12.13 वीरं; M5 शूराः. —d) Ś D3.8.12 ससन्नाः; D1 समेताः; M1–3 संहृष्टाः (for सहिताः). Ñ2 V2 B2.4 सर्वतः (B2 °त्र) समवारयन्.

10 Ñ1 B3 D4 om. 10 (cf. v.l. 9). —a) D5 T1 M3 अवस्थितं (D5 °त-) (for व्यवस्थितं). —b) D6 T2 तं; Ck.t as in text (for ते). D7.9–11 G1 M5 ते (D9 G1 M5 तं) दृष्ट्वा (D7 °ष्ट्वा च [hypm.]) प्लवगर्षभाः.—For 10ab, Ś Ñ2 V B1.2.4 D1–3.8.12.13 subst.:

896* हनूमन्तं च ते दृष्ट्वा बभूवुर्हरियूथपाः।

[Ñ2 V1 B1.4 D3 तु ते; V2.3 B2 ततो; D1.2 च तं; D13 तु तं (for च ते). Ñ2 V B2.4 बलिनं (for बभूवुर्). B1 युद्धाय समुपस्थितं (for the post. half).]

—Thereafter D12 repeats wrongly 9cd; while G2 repeats wrongly 9c–10b after 10ab. —c) Ś B1 repeats wrongly 9c–10b after 10ab.—c) Ś B1 D1–3.8.12.13 वित्रस्ता(Ś1 °त्रासा; B1 D1.3.13 °श्रस्ता; D2 °ध्वस्ता) बलिनः सर्वे; Ñ2 V B2.4 अभवन्बलवंतस्ते. —d) Ś D3.12 वेगवंतम्; D2 हनूमंतम्. D1 उपागताः; D5 T1 M3 समाश्रिताः; Ck.t as in text (for उपाश्रिताः).

11 Ñ1 D4 om. 11 (cf. v.l. 9). —a) B3 शिलाहस्तं (for तु शैलाभं). —b) V B1 D9 T3 उपस्थितं; D1 अहस्थितं (sic). —c) D13 T2 G3 M1.2.5 महेंद्रमिव. —d) D11 शरैरपि; G3 शरजालैर्. Ś B1 D3.3.8.12.13 तं; D1 च (for ह). Ñ2 V B2–4 शरवर्षैर(V3 °र्षम)वाकिरत्.

12 Ñ1 D4 om. 12 (cf. v.l. 9). —a) Ś B1 D1–3.8.12.13 तान्बाणान्; Ñ2 V B2–4 बाणांस्तान् (for बाणौघान्). —b) T3 शरीर-. Ś D2.8.12.13 पततः; Ñ2 V D6.7.9–11 T1.2 G M1.2 पातितान् (for पतितान्). Ñ2 V B2–4 बहून्; D7 स्थितान्; D9–11 T3 कपिः; G2 शरान् (for शितान्). B1 सर्वांश्च हनुमांस्तदा.—Ś2 repeats wrongly 12c–17 after 898*.—d) G (ed.) दधे (for दध्रे). V1 महाकपिः (for °बलः). Ś V2 B1 D1–3.8.12.13 महात्मा विदधे मनः.

13 Ñ1 D4 om. 13 (cf. v.l. 9). —a) B3 प्रहस्य सु-; D2 महेन्द्रस्य; D5.6 G2.3 स प्रसह्य; D7 संप्रहस्य; T2 प्रहस्य स (by transp.). —b) V2 B3 D2 पवनात्मजः; B1 वानराधिपः. —B3 reads (m.) 13c–14b for the first time after 8, repeating them here. —c) Ñ2 वेगेन (for तद्रक्षः). Ś B1 D1–3.8.12.13 रक्षस्तदभिदुद्राव.

14 Ñ1 reads 14 after 24ab. V2 repeats 14 (var.) after 24ab. B3 reads (m.) 13c–14b for the first time after 8, repeating them here and reads 14ab for the third time and 14cd for the second time after 24ab. D4 reads 14 after 24. —a) Ś Ñ2 V1.2(first time).3 B1.2.3(first and second time).4 D1–3.7–13 T3 [अ]थ; Ñ1 V2(second time) B3 (third time) [ए]व; D4 [ए]वं (for [अ]भि-). Ś1 D8.12 नंदमानस्य; D6 -नद्यमानस्य (sic). —b) Ñ2 रावणस्याति- (for दीप्यमानस्य). B1 संयुगे (for तेजसा). —After the first occurrence of 14ab, B3 reads 15–17. —d) Ś Ñ1 V2(second time) B1 D1–4.8.12.13 शक्र (D4 क्रुद्ध)स्येवोद्यताशनेः; Ñ2 V1.2(first time).3 B2.3 (first time).4 कालांतकयमोपमं; B3(second time) कालस्येव विवस्वतः.—After the first occurrence of 14cd, B3 ins.:

897* आजग्राह महात्मानं पाणिनैकेन वीर्यवान्।

15 B3 reads 15–17 after the first occurrence of 13c–14b. —a) Ś2 Ñ2 V B1.2.4 D1–3.8.12.13 T3 M3 चा(Ñ2 V B2.4 M3 अ)प्रहरणं. Ñ1 B3 D4 प्लवंगमबलं दृष्ट्वा. —b) Ś D2.8.12 दृष्ट्वा; Ñ1 ज्ञाति-; Ñ2 V B1.2.4 D1.3.13 बुद्ध्वा; B3 ततः (for ज्ञात्वा). B1 D1.13 कोप- (for क्रोध-). D4 भग्नं बुद्धिसम°. —c) Ś D8.12 सालम्; V1.3 B2.4 D1–3.13 शालम् (for शैलम्). Ñ1 उत्पातयामास. —d) G3 M5 हरिणां वरः (metri causa) (for हरिपुंगवः). Ś V B1.2.4 D1–3.8.12.13 गिरिशृंगमिवोन्न(V1.2 B4 °स्थि; V3 B1.2 D2.3.13 °च्छ्रि; D1 °दि)तं; Ñ D4 महामेरु (Ñ2 °गिरि)मिवो(D4 °समु)त्थितं; B3 महादेवमिवोच्छ्रितं. ⁂ Cv: वेगेन हरिपुंगव इति सम्यक्पाठः. ⁂

16 For sequence in B3, cf. v.l. 15. D4 reads 16 twice (var.). —a) D9–11 T3 गृहीत्वा सु- (for तं गृहीत्वा). Ś2 B2.4 D1–3.8.12.13 महाशा(Ś2 D1.12 सा)लं; D4 महच्छैलं. —b) Ñ2 V1.3 B2.4 वीर्यवान् (for मारुतिः).

G. 6. 30. 17
B. 6. 56. 17
L. 6. 32. 16

ततस्तमभिदुद्राव राक्षसेन्द्रमकम्पनम् ।
यथा हि नमुचिं संख्ये वज्रेणेव पुरंदरः ॥ १७
अकम्पनस्तु तद्दृष्ट्वा गिरिशृङ्गं समुद्यतम् ।
दूरादेव महाबाणैरर्धचन्द्रैर्व्यदारयत् ॥ १८
तत्पर्वताग्रमाकाशे रक्षोबाणविदारितम् ।
विकीर्णं पतितं दृष्ट्वा हनूमान्क्रोधमूर्छितः ॥ १९
सोऽश्वकर्णं समासाद्य रोषदर्पान्वितो हरिः ।
तूर्णमुत्पाटयामास महागिरिमिवोच्छ्रितम् ॥ २०
तं गृहीत्वा महास्कन्धं सोऽश्वकर्णं महाद्युतिः ।
प्रहस्य परया प्रीत्या भ्रामयामास संयुगे ॥ २१
प्रधावन्नुरुवेगेन प्रभञ्जंस्तरसा द्रुमान् ।
हनूमान्परमक्रुद्धश्चरणैर्दारयत्क्षितिम् ॥ २२

—V3 B3.4 om. (hapl.?) 16$^{cd}$. B1 reads in marg. from 16$^{c}$ up to 898*. —$^{c}$) D4 (both times) तु (for सु-). D5–7.9–11 T G2.3 M3.5 स विनद्य (for विनद्य सु-). B1 सुमहन्नादं. —$^{d}$) V2 त्रासयामास (for भ्रामयामास). Ś Ñ2 V1 B1 D1–3.8.12.13 त्रासयामास राक्षसान् (D12 °सं); D4 (first time) महामेरुसमुच्छ्रितं.

17 For sequence in B3, cf. v.l. 15. B1 reads 17 in marg. (cf. v.l. 16).—$^{a}$) D4 अति- (for अभि-). —$^{b}$) Ś Ñ1 V1 B1.3 D1–4.8.12.13 निशाचरम् (for राक्षसेन्द्रम्). D8 अकंपयन् (sic). —Ś1 om. (hapl.?) from 17$^{c}$ up to l. 2 of 898*. —$^{c}$) D7.10.11 G2 M1–3 पुरा (for यथा). Ś2 Ñ V B D1–4.8.12.13 निहंतुं न (Ñ1 B3 D4 हनूमान्न) मुचिं क्रुद्धो. —$^{d}$) Ś2 B1 D1–3.8.12.13 वज्रेणेंद्र इवाहवे; Ñ V B2–4 D4 यथा वज्री महाहवे (D4 °बलः). —After 17, Ś2 B1 (m.) D1–3.8.12.13 ins.; Ś1 ins. l. 3–4 after 17$^{ab}$ (owing to om.); while V1 ins. l. 1 after 17, cont. l. 4 after 899* and ins. the prior half of l. 3 after the second occurrence of 18:

898* समुद्यम्य महाशालं भ्रामयामास मारुतिः ।
भ्राम्यमाणं स चिच्छेद शरैः शालमकम्पनः ।
विध्वस्तं कर्म तद्दृष्ट्वा हनुमानतिविस्मितः ।
समुद्यम्य गिरेः शृङ्गं जवेनाभिससार तम् ।

[Ś1 om. l. 1–2. —(l. 1) Ś2 D1.12 महासालं. —(l. 2) B1 D2 भ्रामयंतं. D2 च (for स). Ś2 D1.8.12 सालम्; L (ed.) तालम् (for शालम्). —(l. 3) V1 B1 D1.3.13 विपन्नं (for विध्वस्तं). —D2 om. (hapl.) from तद्दृष्ट्वा up to अकम्पनस्तु in 18$^{a}$. D1.13 घोरं (for दृष्ट्वा). —After the prior half, V1 repeats 19$^{d}$. B1 D1.13 प्रेक्ष्य; D3 अथ (for अति-). —(l. 4) V1 B1 D1.3.13 स (D1 त) मुत्पाद्य (B1 D13 °द्य) (for समुद्यम्य). D1 -समापतत् (for -ससार तम्). —After l. 4, V1 repeats 18 (var.).]

—Then Ś2 repeats wrongly 12$^{c}$–17 and 898*.

18 D2 om. up to अकम्पनस्तु in 18$^{a}$ (cf. v.l. 898*). V1 repeats 18 (var.) after l. 4 of 898*. —$^{a}$) Ñ V1 (both times).2.3 B2–4 D2.5–7.9 T G1 M5 तं; Ck.t as in text (for तद्). Ś D8.12 ततो दृष्ट्वा. —$^{b}$) V1 (first time).2.3 B2.4 G (ed.) महाशा (G [ed.] °सा) लं; D3 गिरेः शृंगं. T1 समुद्धृतं (for समुद्यतम्). —$^{d}$) Ś B3 D1.2.6–13 T2 G3 M1.2.5 अदारयत्; V1 (first time).2.3 B2.4 चकर्त (V1 °र्ते ह [hypm.]) सः; D3 अताडयत्.

19 $^{a}$) Ñ1 V B2.3 D6.9–11 T3 G1.2 M5 Ct तं; Cm as in text (for तत्). V1 महाभक्षम्; V2.3 B2 G (ed.) महाशा (V2 °का; G [ed.] °सा) लम् (for पर्वताग्रम्). B4 महाशालं तम्; D3 ननर्दताग्रम्. D4 तं पर्वताग्रसंकाशं. —$^{b}$) V2.3 G1 राक्षसेंद्रेण (G1 °न्द्रवि-) (for रक्षोबाणवि-). Ñ B3 D4 रक्षोबाणैः समाहतं; B2.4 M5 राक्षसेन विदा (B2 निवा) रितं. —$^{c}$) D4 विकीर्ण-; D5 T1.3 G2 M3 विशीर्णं; D13 विकीर्ष्य (sic). D5 T1 G1 पर्वतं (for पतितं). —$^{d}$) Ś Ñ V1 (both times).2.3 B D1–4.8.12.13 विस्मितोभवत् (for क्रोधमूर्छितः). —After 19, Ñ2 V B2.4 ins.:

899* भूयोऽपि तद्वधार्थाय तिग्मतेजा महाजवः ।
[Ñ2 B4 -बलः (for -जवः).]

—Then V1 cont. l. 4 of 898*, repeats 18, ins. the prior half of l. 3 of 898* and repeats 19$^{d}$.

20 $^{a}$) Ñ1 V2.3 B1 D1.4–6.13 T1 M3 समा (B1 उपा) दाय (for समासाद्य). —$^{b}$) D2 [ऽ]भवत्; D6 बली (for हरिः). D4 रोषपर्याकुलेक्षणः. —$^{c}$) G2 उत्पातयामास. —$^{d}$) D3 गिरिशृंगम् (for महागिरिम्). Ś B1 D8.12 गिरिशृंगमिवोन्न (B1 °गं समुच्छ्रि) तं. —For 20, Ñ2 B2–4 subst.:

900* सोऽश्वकर्णं महावेगान्महान्तमुदपाटयत् ।
[Ñ2 B2 महावेगं; B4 महातेजा.]

21 B1 om. 21–22$^{b}$. —$^{a}$) Ś Ñ2 V1.2 B2.3 D1–4.8.12.13 महाकायम्; Ñ1 V3 °कायः; B4 °शाखम् (for °स्कन्धं). —$^{b}$) Ś Ñ2 V1.2 B2–4 D1–4.8.12.13 अश्वकर्णं; Ñ1 सप्तकर्णं (sic). B4 महाबलः; D4 °गिरिं (for °द्युतिः). —G3 illeg. for $^{cd}$. —$^{c}$) V2.3 D9–11 T1.3 प्रगृह्य; D5 G2 M1.2 प्रसह्य. Ś Ñ V1 B4 D1–4.8.12.13 परमप्रीतो (Ñ V1 B4 °त्या) (for परया प्रीत्या). —$^{d}$) D3 वीर्यवान्; D9–11 भूतले (for संयुगे).

22 B1 om. 22$^{ab}$ (cf. v.l. 21). —$^{a}$) D1.3.5.12 T G1.2 M K (ed.) L (ed.) ऊरु-; D4 शीघ्र- (for उरु-). B3 प्रधावमानो वेगेन. —$^{b}$) B2 प्रभंजद्; D1–3.13 स भंजन्; D4.6.7.9–11 T2.3 G3 बभंज (for प्रभञ्जंस्). Ś Ñ V2.3

गजांश्च सगजारोहान्सरथान्रथिनस्तथा ।
जघान हनुमान्धीमान्राक्षसांश्च पदातिकान् ॥ २३
तमन्तकमिव क्रुद्धं समरे प्राणहारिणम् ।
हनूमन्तमभिप्रेक्ष्य राक्षसा विप्रदुद्रुवुः ॥ २४
तमापतन्तं संक्रुद्धं राक्षसानां भयावहम् ।
ददर्शाकम्पनो वीरश्चुक्रोध च ननाद च ॥ २५

स चतुर्दशभिर्बाणैः शितैर्देहविदारणैः ।
निर्बिभेद हनूमन्तं महावीर्यमकम्पनः ॥ २६
स तथा प्रतिविद्धस्तु बह्वीभिः शरवृष्टिभिः ।
हनूमान्ददृशे वीरः प्ररूढ इव सानुमान् ॥ २७
ततोऽन्यं वृक्षमुत्पाट्य कृत्वा वेगमनुत्तमम् ।
शिरस्यभिजघानाशु राक्षसेन्द्रमकम्पनम् ॥ २८

G. 6. 30. 28
B. 6. 56. 29
L. 6. 32. 28

$B_{2-4}$ $D_{1.3.8.12.13}$ अपरान् ; $D_{2.4}$ परमान् (for तरसा). $V_1$ प्रभंजनसुतो बली ; G (ed.) भंजयन्नपरानिव. —$^{c}$) $D_4$ अथ संक्रुद्धश् (for परम°). —$^{d}$) $Ś_2$ $B_1$ $D_{1-3.8.12.13}$ कंपयन् (for दारयत्). Ś Ñ V $B_{1.2.4}$ $D_{1-4.7-13}$ महीं ; $M_5$ (also as in text) भृशं (for क्षितिम्). $B_3$ पुप्लुवे संननाद च. ❀ Cv.g : चारणैः चरणन्यासैः । (Cg दारयत्) अदारयत् ।; so also Cm.t. ❀

23 Ś $D_{8.12}$ om. $23^{ab}$. —$^{ab}$) $Ñ_1$ वारणान्स- ; $Ñ_2$ V स गजान्स- ; $B_{2.3}$ $D_2$ $M_5$ स गजांश्च; $B_4$ राक्षसान्स- ; $T_3$ गजानां स- (for गजांश्च स-). $B_1$ $D_{1.3.13}$ राक्षसान्सहया( $D_1$ °महा )रोहान् (for $^{a}$). $B_3$ $G_1$ $M_{1.2}$ रथांश्च (for सरथान्). $D_{2.5.9}$ $T_2$ $G_{2.3}$ तदा (for तथा). $Ñ_1$ $B_3$ सह(G [ed.] रथ )वाजिनः ; $B_4$ $D_{1.3.13}$ सहयद्वि( $D_1$ °यान्द्वि )पान् (for रथिनस्तथा). $B_1$ सरथांश्च सहद्विपान् (for $^{b}$). $D_4$ राक्षसान्सहयान् * * * रथान्सहवाजिनः. —$^{c}$) $G_1$ जगाम (sic); $M_5$ जहार (for जघान). $Ñ_1$ $B_3$ वीरान् ; $Ñ_2$ V $B_2$ क्रुद्धो; $D_4$ वीरः ; $D_{7.10.11}$ भीमान् ; $G_3$ दानान् (sic); $M_{1.2}$ वेगाद् (for धीमान्). Ś $D_{8.12}$ परमक्रुद्धः ; $B_{1.4}$ $D_{1-3.13}$ समरे क्रुद्धः (for हनुमान्धीमान्). —$^{d}$) $Ñ_2$ V $B_2$ पदा( $V_3$ °पा [sic] )तिनः ; $D_{6.7.9-11}$ $T_2$ $M_{3.5}$( before corr. as in text) पदाति( $D_9$ °नु )गान्. Ś $B_{1.4}$ $D_{1-4.8.12.13}$ पदातींश्चापरान्बहून् ; $Ñ_1$ $B_3$ पदातीनपरांश्च ह( $B_3$ °स्तथा). —After 23, $Ñ_2$ ins. :

901* ततः शरैः सुतीक्ष्णाग्रैराशुगैरग्निवर्चसैः ।
निर्बिभेद महादीप्तो हनूमन्तमकम्पनः ।

24 Ś $D_{8.12}$ om. (hapl. ?) 24. $Ñ_2$ reads 24 after 26. —$^{b}$) $Ñ_2$ $V_{2.3}$ $D_{9-11}$ सद्रुमं (for समरे). —After $24^{ab}$, $Ñ_1$ reads 14 ; $V_2$ repeats 14 (var.); while $B_3$ reads $14^{ab}$ for the third time and $14^{cd}$ for the second time. —$B_3$ om. (hapl.) $24^{d}$–$25^{a}$. —$^{d}$) $B_1$ च प्रदुद्रुवुः ; G (ed.) दुद्रुवुः पुनः. —After 24, $D_4$ reads 14.

25 $Ñ_1$ $B_3$ om. $25^{a}$ (for $B_3$, cf. v.l. 24). —$^{a}$) Ś $B_4$ $D_{1.2.8.12.13}$ संरब्धं (for संक्रुद्धं). $Ñ_2$ $V_{1.3}$ $B_2$ हनूमंतमभिप्रेक्ष्य (=$24^{c}$); $M_5$ समापतंतं ततः क्रुद्धं ; $D_4$ क्षापतंतं तं क्रुद्धं. —$^{b}$) $Ñ_2$ $B_2$ रक्षसां तु. $B_4$ शुभावहं (sic) (for भया°). $D_{11}$ राक्षसांश्च पदातिगान्(=$23^{d}$ [var.]). —$^{d}$) $B_1$ $T_3$ $G_2$ चुकोप; $B_4$ $D_{7.9-11}$ चुक्षोभ; $D_6$ चुक्रोश. $D_{2.13}$ स; $D_8$ न (for first च). Ś Ñ V B $D_{1-4.8.12.13}$ महाबलः (for ननाद च).

26 $^{a}$) $B_2$ च तं दशभिर् (for चतुर्दशभिर्). —$^{b}$) Ś $Ñ_1$ $D_{8.12}$ विशिखैर्मर्म( $Ñ_1$ °र्देह )भेदिभिः; $Ñ_2$ V B $D_{1-3.13}$ निशितैर्मर्म( $B_1$ $D_{1.3.13}$ °र्देह )भेदिभिः ; $D_4$ विशेषैर्हेमभेदिभिः; $D_{6.9-11}$ नि( $D_5$ om. [subm.])शितैर्देहदारणैः. —$^{c}$) $Ñ_2$ V $B_2$ $D_{9-11}$ $T_3$ $G_3$ महावीर्यं( $V_{2.3}$ °र्यो ) (for हनूमन्तं). Ś $Ñ_1$ $B_{1.3.4}$ $D_{1-4.8.12.13}$ बिभेद सु( $D_1$ स; $D_4$ च )महावीर्यं( $D_{3.4}$ °र्यो ). —$^{d}$) Ś Ñ V B $D_{1-3.8-13}$ $T_3$ $G_3$ हनूमंतम् (for महावीर्यम्). G (ed.) स्तनांतरे (for अकम्पनः). $D_4$ हनूमंतं विकंपनः. —After 26, $Ñ_2$ reads 24.

27 $^{a}$) $Ñ_1$ $B_{1.3}$ $D_{6.7}$ $T_{2.3}$ $M_3$ तदा. Ś $Ñ_1$ $B_1$ $D_{2.8.12}$ तेन विध्वस्तो; $Ñ_2$ V $B_{2-4}$ $D_{1.3.4.13}$ तेन विद्धस्तु; $D_6$ प्रतिबद्धस्तु ; $D_{9-11}$ $T_3$ विप्रकीर्णस्तु ; $M_{1.2}$ प्रतिविद्धांगो (for प्रतिविद्धस्तु). —$^{b}$) $D_{6.7}$ $T_2$ G $M_{1.2.5}$ बहुभिः (for बह्वीभिः). Ś $Ñ_1$ $B_1$ $D_{1.3.4.8.12.13}$ बहुभिर्मार्गणैः शितैः; $Ñ_2$ V $B_{2-4}$ शरैरग्निशिखो( $B_4$ °विषो )पमैः ; $D_2$ बहुभिर्मर्मगैः शरैः ; $D_{9-11}$ $T_3$ नाराचैः शितश( $T_3$ शरपं )क्तिभिः. —$^{d}$) Ś Ñ V B $D_{1-4.8.12.13}$ रुधिरेण समुक्षितः. —After 27, $Ñ_1$ $B_{2.3}$ $D_{2.4}$ ins. ; while $D_{5-7.9-11}$ S cont. only l. 2 after 903* :

902* स बाणैर्विद्धसर्वाङ्गो बहुभिर्देहदारणैः ।
पुष्पिताशोकसंकाशः प्रबभौ हनूमांस्ततः ।

[ (l. 1) $B_3$ विवर्ध- (hypm.) (for विद्ध-). $D_2$ स तु बाणैर्विभिन्नांगो (for the prior half). $D_4$ देव- (sic) (for देह-). —(l. 2) $B_2$ शरभो (sic) (for प्रबभौ). $D_4$ तदा (for ततः). $D_2$ हनूमाञ्शोणितोक्षितः ; $D_{5-7.9-11}$ S विधूम इव पावकः (for the post. half).]

—After 27, $D_{5-7.9-11}$ S ins. :

903* विरराज महावीर्यो महाकायो महामनाः ।

[ $D_5$ $T_1$ $M_3$ महाकायो महावीर्यो (by transp.). $D_{9-11}$ $T_3$ महाबलः (for °मनाः).]

28 $^{a}$) Ś $Ñ_1$ $B_{1.4}$ $D_{1-4.8.12.13}$ उत्पाट्य सहसा( $Ñ_1$ $D_3$ सुमहा- ; $D_4$ च महा-) वृक्षं; $Ñ_2$ V $B_2$ अथोद्यम्य( $V_2$ °त्पाट्य ) स तं वृक्षं; $B_3$ उत्पाद्य सुमहावेगं (sic). —$^{b}$) $D_9$ गत्वा (sic) (for कृत्वा). $D_8$ वेगसमुन्नतं. —$^{c}$) $D_6$

G. 6. 30. 29
B. 6. 56. 30
L. 6. 32. 29

स वृक्षेण हतस्तेन सक्रोधेन महात्मना ।
राक्षसो वानरेन्द्रेण पपात च ममार च ॥ २९
तं दृष्ट्वा निहतं भूमौ राक्षसेन्द्रमकम्पनम् ।
व्यथिता राक्षसाः सर्वे क्षितिकम्प इव द्रुमाः ॥ ३०
त्यक्तप्रहरणाः सर्वे राक्षसास्ते पराजिताः ।
लङ्कामभिययुस्त्रस्ता वानरैस्तैरभिद्रुताः ॥ ३१
ते मुक्तकेशाः संभ्रान्ता भग्नमानाः पराजिताः ।
स्रवच्छ्रमजलैरङ्गैः श्वसन्तो विप्रदुद्रुवुः ॥ ३२
अन्योन्यं प्रममन्थुस्ते विविशुर्नगरं भयात् ।
पृष्ठतस्ते सुसंमूढाः प्रेक्षमाणा मुहुर्मुहुः ॥ ३३
तेषु लङ्कां प्रविष्टेषु राक्षसेषु महाबलाः ।
समेत्य हरयः सर्वे हनूमन्तमपूजयन् ॥ ३४

---

[अ]थ (for [आ]शु). —$^{d}$) Ś Ñ V1.2 B D1–4.8.12.13 निशाचरम्. B1 अनुत्तमं (for अकम्पनम्). —After 28, D4 reads $30^{cd}$, 32 and $31^{ab}$; while D9 reads $30^{cd}$ for the first time repeating it in its proper place.

29 Ś D1.8.10–12 om. (hapl.) $29^{a}$–$30^{b}$. —$^{a}$) T3 [आ]हतस् (for हतस्). —For $29^{ab}$, Ñ V2.3 B2.3 subst.:

904* स वृक्षं शिरसा घोरं प्रगृह्य प्लवगेरितम्।

[Ñ1 सुमहाघोरं प्रगृह्णन्.];

while V1 B1.4 D2–4.13 subst.:

905* तेन वृक्षप्रहारेण वज्रेणेवामितौजसा।

[V1 D4 विटपो यथा; B4 D3.13 [इ]व बिडौ( B4 महौ)-जसा; L (ed.) [इ]वातिरंहसा (for [इ]वामितौजसा).]

—$^{c}$) Ñ1 B3 तरुवेगे( B3 °घाते )न; Ñ2 V2.3 B2 सहसा भूमौ (for वानरेन्द्रेण). —$^{d}$) V1 B1.4 D2–4.13 प्रेषितो यमसादनं.

30 Ś D1.8.10–12 om. $30^{ab}$ (cf. v.l. 29). —$^{a}$) B1.4 D3 ते (for तं). Ñ V B D2–4.13 M1.2 पतितं (for निहतं). —$^{b}$) Ñ V B D2–4.13 कंपमानम् (for राक्षसेन्द्रम्). —D4 reads $30^{cd}$, 32 and $31^{ab}$ after 28. D9 repeats $30^{cd}$ here (cf. v.l. 28). D10 reads $30^{cd}$ twice. D11 repeats wrongly from $30^{c}$ up to ते मुक्तकेशाः in $32^{a}$ after $34^{ab}$. —$^{c}$) T3 वानराः (sic) (for राक्षसाः). —D12 om. (hapl.) $30^{d}$–$31^{a}$. —$^{d}$) G1 भूमिकंप. Ś B1.4 D1–3.8.13 नगा इव; Ñ2 V B2 यथा नगाः (for इव द्रुमाः). Ñ1 B3 द्रवंति स्म दिशो दश; D4 वानरैरर्दिता भृशं.

31 D12 om. $31^{a}$ (cf. v.l. 30). For sequence in D4, cf. v.l. 30. —$^{b}$) Ñ2 V B2 महाबलाः (for पराजिताः). —B1 D1 om. (hapl.) $31^{c}$–$32^{b}$. G2 reads $31^{cd}$ twice. —$^{c}$) Ś B4 D2.3.8.12.13 प्रविविशुस् (for अभिययुस्). D3 तत्र; D9–11 T2.3 M5 त्रासाद् (for त्रस्ता). Ñ1 B3 -पतंति स्म; Ñ2 V B2 -मुखा जग्मुर् (for -ययुस्त्रस्ता). D4 लंकां प्रति पतंति स्म. —$^{d}$) Ñ1 B3 D4 अर्दिता भृशं; Ñ2 V2.3 B2 अभिपीडिताः; G1.3 M5 समभिद्रुताः (for तैरभिद्रुताः). Ś V1 B4 D2.3.8.12.13 हन्यमानाः प्लवंगमैः.

32 B1 D1 om. $32^{ab}$ (cf. v.l. 31). For sequence in D4, cf. v.l. 30. —$^{a}$) D4 मुक्तकेश-. Ś D2.3.8.12.13 संविग्नाः; B4 संभग्ना (for संभ्रान्ता). —$^{b}$) Ś B4 D8.12 भज्यमानाः (for भग्नमानाः). M1.2 हन्यमानाः प्लवंगमैः. —$^{cd}$) B1 D8–11 G3 भयाच्; D6 T2.3 उद्यच्-; G1 श्रमाच् (for स्रवच्-). B1 D8 गात्रैः (for अङ्गैः). Ś D1–3.12.13 भयाच्छ्रमज( D1 °मैर्ज )र्गात्रैः; B4 ते भयाच्छ्रमजैर्गात्रैः; M5 भयादश्रुजलैरुच्चैः (for $^{c}$). D9–11 प्रस्रवद्भिर्विदुद्रुवुः (for $^{d}$). Ñ V B2.3 D4 G (ed.) भीता वि( G [ed.] भयाद्वि )वर्णवदनाः श्वसंतो नष्टचेतसः( V3 °नः).

33 $^{a}$) Ś D4.8.12 अभिनंद( D4 °नर्द )तो; Ñ1 V2 B1.4 D1–3.13 अभिमर्द( B4 °मृद्न )तो; Ñ2 V1.3 B2 D10 G (ed.) ते ( G [ed.] च ) प्रमथ्नंतो; B3 ते विघ्नंतो (subm.); D11 T2 प्रमथंतस्ते (for प्रममन्थुस्ते). —$^{b}$) Ñ1 D4 विशंतो (for विविशुर्). Ś1 नगरे; Ñ1 V B D1–4 नगरीं. Ś B1.4 D1–3.8.12.13 तदा (for भयात्). —$^{c}$) Ś Ñ V1.2 B D1–4.8.12.13 त्रास-; V3 तांस्तु; D6.7.9–11 M1.2 ते तु; G3 M5 तु सु- (for ते सु-). D4 -संरूढाः. —After 33, Ś Ñ V B1.3.4 D1–4.8.12.13 ins.:

906* तेषां संजहतां संख्यं विशतां च पुरीं भयात्।
राक्षसानां जवं दृष्ट्वा विनेदुस्ते वनौकसः।

[(l. 1) B1 च (for सं-). B4 संजल्पतां (for संजहतां). B1.4 संख्ये. D3 तदा (for भयात्). Ñ V B3 D4 तेषां च हन्यमानानां प्रविष्टानां पुरीं तदा( Ñ2 प्रति). —(l. 2) V B1.4 D2.4 भयं; D1 वधं (for जवं). Ś D8.12 रक्षसामजयं दृष्ट्वा (for the prior half). B4 दिवौकसः.]

—Thereafter Ś D2.8.12 read 36.

34 B1 om. $34^{ab}$. —$^{b}$) Ś D1–3.8.12.13 यथाबलं; B4 महाबलं. —After $34^{ab}$, D11 repeats wrongly from $30^{c}$ up to ते मुक्तकेशाः in $32^{a}$. —For 34, Ñ1 B3 D4 subst.; B2 ins. l. 1 only after $34^{ab}$:

907* तदद्भुतमसह्यं तु वीर्यं दृष्ट्वा हनूमतः।
ते सर्वे वानराः शूराः पूजयन्पवनात्मजम्।

[(l. 1) B2.3 तम् (for तद्). Ñ1 B2.3 असंख्येयं (for असह्यं तु). B2 दृष्ट्वा कर्म (for वीर्यं दृष्ट्वा).]

स ऽपि प्रहृष्टस्तान्सर्वान्हरीन्संप्रत्यपूजयत् ।
हनूमान्सत्त्वसम्पन्नो यथार्हमनुकूलतः ॥ ३५
विनेदुश्च यथाप्राणं हरयो जितकाशिनः ।
चकर्षुश्च पुनस्तत्र सप्राणानेव राक्षसान् ॥ ३६
स वीरशोभामभजन्महाकपिः
समेत्य रक्षांसि निहत्य मारुतिः ।
महासुरं भीममित्रनाशनं
यथैव विष्णुर्बलिनं चमूमुखे ॥ ३७
अपूजयन्देवगणास्तदा कपिं
स्वयं च रामोऽतिबलश्च लक्ष्मणः ।
तथैव सुग्रीवमुखाः प्लवंगमा
विभीषणश्चैव महाबलस्तदा ॥ ३८

G. 6. 30. 39
B. 6. 56. 39
L. 6. 32. 38

इति श्रीरामायणे युद्धकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

35 G3 om. ( hapl. ) $35^{ab}$. —$^{a}$) D1 [ ऽ ]भि- ( for ऽपि ). D3 om. तान् ( subm. ). Ñ2 V1.3 B2 प्रमथ्य तां( Ñ2 V1 तान् ); D5 M1.2.5 प्रविष्ट( M5 °ष्टां )स्तान्; D7.9–11 G2 प्रवृद्ध( D7 °द्धां )स्तान्; G1 हृष्टस्तु तान् ( for प्रहृष्टस्तान् ). V3 प्रवृद्ध... B2 सेनां ( for सर्वान् ). V2 तेजस्वी ( for तान्सर्वान् ). Ñ1 B3 D4 स चापि हृष्टस्तेजस्वी. —$^{b}$) Ś B1.4 D1–3.8.12.13 Ñ वानरान्; V2 हरींस्तान्; T2.3 समेत्य ( for हरीन्सं- ). V1.3 B2.3 D4 हरींस्तानभ्य( Ñ1 D4 °त्य; B3 °त्य )पूजयत्; M3 K ( ed. ) हरीन्प्रत्यभि( K [ ed. ] °भ्य )पूजयत्. —$^{c}$) D1 सत्त्वमापन्नो; G3 बलसंपन्नो. —$^{d}$) B2 यथावद्. Ś B1.4 D1–3.8.12.13 अभि( D2 °पि )पूजितः; Ñ V B2.3 D4 अनुरूपतः ( for अनुकूलतः ). —After 35, Ñ1 B3 D2 ins. 908*; while D3 reads wrongly from $37^{b}$ up to महा in $37^{c}$.

36 Ñ1 B3 om. 36. Ś D2.8.12 read 36 after 33 ( after 906* ). —$^{a}$) Ś B1 D1–3.8.12.13 यथाकामं; B4 यथा मेघा. —$^{b}$) D4 जितलक्षणाः. —Ñ2 V1.3 B2 D4.6 om. $36^{cd}$. —$^{c}$) D5.10.11 T1 Ck.t चकृषुश्र् ( for चकर्षुश्र् ). Ś V2 B1.4 D2.3.8.12.13 पुनश्च जघ्नुः पतितान्; D1 पुनश्च पतिताञ्जघ्नुः. —$^{d}$) Ś V2 D2.12 सव्रणान्; D8 स * णान्. B4 D5 T1 G2 अपि; D3 अथ ( for एव ). —After 36, V2 B4 D13 ins.; Ñ1 B3 ( both owing to om. ) D2 ins. after 35; Ñ2 V1.3 B2 D4 ins. after $36^{ab}$ ( owing to om. ):

908* एवं संपूज्य स हरीन्कृत्वा कर्म सुदुष्करम् ।
आजगाम महाबाहुर्यत्र रामः सलक्ष्मणः ।

[ ( l. 1 ) Ñ2 D2.13 च ( for स ). D4 च संपूज्य ( for संपूज्य स ). V3 D2.13 सुदुःकरं. ]

37 Ś D8.12 om. 37. —$^{a}$) B4 शरीर- ( for स वीर- ). Ñ V B D1–4.13 अतुलां; T3 अगमन्; M1.2 तु वहन् ( for अभजन् ). V2 अवाप्तवान्; D1.3.13 वहन्कपिः. —$^{b}$) Ñ1 B3 D4 निहत्य; V1.3 B2 जगाम ( for समेत्य ). Ñ1 ( m. also जगाम ) B3 D4 समेत्य; D7 निपत्य ( for निहत्य ). B1.4 निहत्य रक्षस्तदसाव( B4 °सौ ह्य )वाप्तवान्; D1–3.13 नि( D3 विनि )हत्य रक्षस्तरसानिलात्मजः( D2 °सा समाप्तवान् ). —$^{c}$) Ñ2 V B2 महासुरान्. Ñ1 B1.3.4 D1–3.13 वीरम्; Ñ2 V B2 शत्रु- ( for भीमम् ). Ñ1 B1.3.4 D1–3 -तापनो; D7 G2 M5 -नाशनो; D13 -तापितो; G1 -शातनं ( for -नाशनं ). Ñ2 B2 -गणान्प्रमथ्य; V1.3 -गणान्प्रमाथिनो; V3 इव प्रमाथिनो ( for अमित्रनाशनं ). —$^{d}$) B1.4 यथा च. V1 शक्रो ( for विष्णुर् ). B4 वरदश्र् ( for बलिनं ). D7 महाहवे ( for चमूमुखे ). Ñ2 V2.3 B2 यथैव शक्रो विनिहत्य दानवान्; D9–11 विष्णुर्यथैवो( D9 अकंपनं चो )रुबलं चमूमुखे. —For $37^{cd}$, D4 subst.:

909* न्यवेदयद्वृत्तममित्रतापनो
भ्रात्रा सुतं राममथो चमूमुखे ( sic ) ।

38 $^{a}$) Ś V2.3 B1.4 D1–3.8.12.13 ततः; B2 महा-; T2 G1.3 M5 तथा ( for तदा ). M1.2 तु मारुतिं ( for तदा कपिं ). —$^{b}$) D3 तथैव ( for स्वयं च ). B1 वीरो ( for रामो ). Ñ1 B3.4 D1.3.4 [ ऽ ]तिरथश्र् ( for °बलश्र् ). B2.3 T3 स- ( for second च ). —$^{c}$) B4 तदैव. Ś1 om. ( hapl. ) सुग्रीव-. Ś D2.3.12 च वानराः; B1 सबांधवा; M1.2 कपीश्वरा ( for प्लवंगमा ). —$^{d}$) V B1 D1 G1 M1.2 [ अ ]पि; B4 [ अ ]ति- ( for [ ए ]व ). Ñ B2–4 महामतिस्( Ñ1 °तिं ). D5.6 G1.3 M5 तथा ( for तदा ). Ś V B1 D1–3.8.12.13 स( Ś D3 म )हानुयायिभिः; D4 तथा परे हिताः ( for महाबलस्तदा ).

Colophon : V2 missing. —*Kāṇḍa name* : Ñ B D2.4.13 लंकाकांडे. —After Kāṇḍa name, D2.13 ins. युद्धपर्वणि. —*Sarga name* : Ś Ñ V1.3 B D1–4.8.9.12.13 अकंपनवधो. —*Sarga no.*( figures, words or both ): Ś1 Ñ1 V3 B2 D2.4.8.12.13 om.; Ś2 D1.3.9 32; Ñ2 B1.4 30; V1 31; B3 28; D5–7.10.11 T1.2 G M 56; T3 57. —After colophon, D3 concludes with रामः; G M1.2.5 with श्रीरामाय नमः.

—After Sarga 44, T2.3 ins. a passage relegated to App. I ( No. 27 ).

# ४५

G. 6. 31. 1
B. 6. 57. 1
L. 6. 33. 1

अकम्पनवधं श्रुत्वा क्रुद्धो वै राक्षसेश्वरः ।
किंचिद्दीनमुखश्चापि सचिवांस्तानुदैक्षत ॥ १
स तु ध्यात्वा मुहूर्तं तु मन्त्रिभिः संविचार्य च ।
पुरीं परिययौ लङ्कां सर्वान्गुल्मानवेक्षितुम् ॥ २
तां राक्षसगणैर्गुप्तां गुल्मैर्बहुभिरावृताम् ।
ददर्श नगरीं लङ्कां पताकाध्वजमालिनीम् ॥ ३
रुद्धां तु नगरीं दृष्ट्वा रावणो राक्षसेश्वरः ।
उवाचामर्षितः काले प्रहस्तं युद्धकोविदम् ॥ ४
पुरस्योपनिविष्टस्य सहसा पीडितस्य च ।
नान्यं युद्धात्प्रपश्यामि मोक्षं युद्धविशारद ॥ ५
अहं वा कुम्भकर्णो वा त्वं वा सेनापतिर्मम ।
इन्द्रजिद्वा निकुम्भो वा वहेयुर्भारमीदृशम् ॥ ६

## 45

1 V2 missing from 1 up to l. 149 of App. I (No. 28). T3 om. $1^{ab}$. —$^{a}$) Ñ2 V3 B3 D13 M5 अकंपनं हतं श्रुत्वा; T2 एवमेतान्हताञ्छ्रुत्वा. —$^{b}$) Ñ V1.3 B2.3 D4.13 रावणो राक्षसाधिपः. —For $1^{ab}$, Ś B1.4 D1–3.8.12 subst.:

910* ततस्तु रावणः क्रुद्धः श्रुत्वा हतमकम्पनम् ।
[D3 स (for तु).]

—For subst. in Ñ V1.3 B2.3 D4.13 cf. v.l. 911*. —Ś B1.4 D1–3.8.12 om. $1^{c}$–$2^{b}$. —$^{c}$) M5 दीनमुखांश्च.

2 Ś B1.4 D1–3.8.12 om.; V2 missing $2^{ab}$ (for both cf. v.l. 1). —$^{b}$) D6 G1 सुविचार्य. —For $1^{c}$–$2^{b}$, Ñ V1.3 B2.3 D4.13 subst.; while B4 ins. (including App. I [No. 28]) after 6.46:

911* प्रहस्तस्य वधं श्रुत्वा रावणो राक्षसाधिपः ।
किंचिदागतसंत्रासश्चिन्तापरिगतोऽभवत् ।
विचिन्त्य चेतिकर्तव्यं बहुधा स्वयमात्मनः ।

[Ñ V1.3 B2.3 D4.13 om. l. 1. —(l. 2) B3 परिवृतो (for °गतो). D13 चिंतयामास राक्षसः (for the post. half). —(l. 3) V3 चेतसा तत्र and स्वकर्तुः (for चेतिकर्तव्यं and बहुधा).]

—Thereafter all the above MSS. ins. a passage relegated to App. I (No. 28); while D5–7.9–11 T1.3 G M ins. after $2^{ab}$:

912* ततस्तु रावणः पूर्वे दिवसे राक्षसाधिपः ।

[D5.6.9(after corr.)–11 T1 M3 Cm.g.t पूर्व-; Cv.r.k as above (for पूर्वे).]

—Then D6 cont.; while T2 ins. after $2^{ab}$:

913* प्रभातसमये काले रथमारुह्य रावणः ।
प्रहस्तसहितः सोऽथ तथान्यै राक्षसैरपि ।
निर्ययौ स्वगृहात्तूर्णं स्वदुर्गमवलोकयन् ।

[(l. 1) T3 चैव (for काले). —(l. 2) D6 सार्धं (for सोऽथ). —(l. 3) D6 निर्ययुः. D6 पूर्वं (for तूर्णं).]

—V3 om. $2^{c}$–$4^{b}$. Before $2^{cd}$, V2 ins. l. 150–158 of App. I (No. 28). —$^{c}$) D1.4.6 पुरीं प्रति; D13 अभिनीय (for पुरीं परि-). —$^{d}$) B1.4 D1–3.8.12 M5 सर्व- (for सर्वान्). G1 M1.2 उदीक्षितुं. D4 बहुगुल्मततोजतां (sic).

3 V3 om. 3 (cf. v.l. 2). —$^{a}$) D4 तं राजन्सगणैर्जुष्टं (sic). —$^{b}$) Ñ2 B2 आकुलां (for आवृताम्). Ś B1.4 D1–4.8.12 गुल्मैश्च (B4 °ल्मिभिर्) बहुभिर्वृ (Ś D8.12 °र्यु)तां. —$^{c}$) D5.7.9–11 T2 राजा (for लङ्कां). Ś D8.12 लंकां राजंतीं; Ñ1 V2 रक्षोराजस्तां; Ñ2 V1 B1.2.4 D1–3.13 राजा (Ñ2 V1 B2 D13 रक्षो) राजंतीं; B3 राक्षसराजस्तां (hypm.); D4 राजा नगरीं (for नगरीं लङ्कां). —$^{d}$) Ś Ñ V1.2 B D1–4.8.12.13 बहु (D13 रथ) ध्वजपताकिनीं.

4 V3 om. $4^{ab}$ (cf. v.l. 2). —$^{a}$) Ñ2 B2 तां; D6 T3 स (for तु). B4 वानरैर् (for नगरीं). D4 ततश्च * पुरीं दृष्ट्वा. —$^{b}$) B1 D4 सगणो (for रावणो). Ñ V1.2 B2.3 राक्षसाधिपः. —$^{c}$) D1 धर्षितः; D4 [अ]मर्षितं; D9–11 T1 [आ]त्महितं (for [अ]मर्षितः). Ñ2 उवाचामर्षसंतप्तः. —$^{d}$) D1 रणकोविदं; D13 युद्धविक्रमं. —After 4, B2 ins. 914*.

5 V3 B2 om. $5^{ab}$. —$^{a}$) D6 समय- (for पुरस्य). Ś V1.2 D1–3.8.12.13 [उ]पनिरुद्धस्य; Ñ B3 °रि रुद्धस्य; B1 [अ]स्योपरुद्धस्य (for [उ]पनिविष्टस्य). D4 पुरस्यस्योपरुद्धस्य. —$^{b}$) D4 पालितस्य (for पीडि°). D1.7.9–11 हृ; D6 T2.3 M3 वा (for च). ❀ Cm.g: वा शब्दश्चार्थे. ❀ —After $5^{ab}$, Ñ V2 B2(after 4 owing to om.).3 ins.:

914* निष्क्रम्य युधि युध्यस्व परसैन्यं विमर्दयन् ।

—$^{c}$) Ś Ñ1 V2.3 B1.3 D1–3.8.12.13 समर्थं; D4 समनु-; D7 युद्धाय (for युद्धात्प्र-). V1 तु मन्येहं; D6 T2.3 प्रपश्यंति; D9 प्रपद्यंति (for प्रपश्यामि). Ñ2 B2 नान्यस्तु (B2 °स्स)युद्धान्मन्यंते; B4 नान्यस्तुद्धा मन्यंते. —$^{d}$) Ś Ñ1 V2.3 B1.3 D1–4.8.12.13 युद्धे; V1 श्रेयो (for मोक्षं). Ś1 D8.12 युद्धविदांवर; Ñ2 V2 B2.4 D6.9.10 T2.3 G3 °विशारदाः; V3 B1.3 D2.4 M5 °विशारदं. D7 हंतुं युधि महाबलं.

6 V3 om. (hapl.?) $6^{bc}$. —$^{b}$) D4 च (for वा). D6.7 T2.3 M5 सेनापते. —$^{d}$) D4 भारं वहति चेतसि.

स त्वं बलमितः शीघ्रमादाय परिगृह्य च ।
विजयायाभिनिर्याहि यत्र सर्वे वनौकसः ॥ ७
निर्याणादेव ते नूनं चपला हरिवाहिनी ।
नर्दतां राक्षसेन्द्राणां श्रुत्वा नादं द्रविष्यति ॥ ८
चपला ह्यविनीताश्च चलचित्ताश्च वानराः ।
न सहिष्यन्ति ते नादं सिंहनादमिव द्विपाः ॥ ९
विद्रुते च बले तस्मिन्रामः सौमित्रिणा सह ।
अवशस्ते निरालम्बः प्रहस्त वशमेष्यति ॥ १०
आपत्संशयिता श्रेयो नात्र निःसंशयीकृता ।
प्रतिलोमानुलोमं वा यद्वा नो मन्यसे हितम् ॥ ११
रावणेनैवमुक्तस्तु प्रहस्तो वाहिनीपतिः ।
राक्षसेन्द्रमुवाचेदमसुरेन्द्रमिवोशना ॥ १२
राजन्मन्त्रितपूर्वं नः कुशलैः सह मन्त्रिभिः ।
विवादश्चापि नो वृत्तः समवेक्ष्य परस्परम् ॥ १३
प्रदानेन तु सीतायाः श्रेयो व्यवसितं मया ।
अप्रदाने पुनर्युद्धं दृष्टमेतत्तथैव नः ॥ १४
सोऽहं दानैश्च मानैश्च सततं पूजितस्त्वया ।
सान्त्वैश्च विविधैः काले किं न कुर्यां प्रियं तव ॥ १५

G. 6. 31. 17
B. 6. 57. 15
L. 6. 33. 14

---

7 a) Ś B1 D1–4.8.12.13 इदं कृत्स्नम् ; Ñ1 M5 इदं शीघ्रम् ; V2 D6.7.9–11 G2 M1–3 अतः शी° ; D5 अतिशी° (for इतः शीघ्रम्). — b) G3 प्रतिगृह्य (for परि°). V1 कृत्स्नं चापरिगृह्य सः ; D7 आदाय रथमास्थितः. — c) Ś B1 D1–3.8.12.13 [आ]शु निर्याहि ; Ñ1 V2 B3 D4 [अ]द्य नि° ; Ñ2 V1 B2.4 विनि° (for [अ]भिनिर्याहि). — d) Ś D1.8.12 जहि सर्व- ; Ñ1 B1 D2–4 जहि सर्वान् ; D11 यत्र सर्व- (for यत्र सर्वे). Ñ2 V B2–4 यत्र तौ रामलक्ष्मणौ ; D13 सर्वराक्षससंवृतः.

8 a) D4 अपि (for एव). Ś Ñ V B D1–4.8.12.13 ते वीर ; D5 T1 सा नूनं ; D9–11 तूर्णं च (for ते नूनं). — b) D7 चलेत्सा ; D9–11 चलिता ; G1 चपलं ; M5 छलिता ; Cg as in text (for चपला). — c) Ś V2 B1.3.4 D1.3.8.13 नदतां ; Ñ2 निर्गतां (sic) ; D12 नंदतां ; M3 अर्दतां (for नर्दतां). Ñ1 B3 D4 राक्षसानां च ; M1.2 वानरेंद्राणां (for राक्षसेन्द्राणां). — d) Ś D8.12 न तिष्ठति (for द्रविष्यति). —After 8, G1 ins. :

915* नो चेत्सर्वान्वधिष्यन्ति तमुद्यम्य निरुद्यमान् ।

9 G1 om. 9–10. — a) Ñ1 V1 B2–4 D4.13 च (for हि). — c) Ś Ñ V B D1–4.8.12.13 घोषं(Ñ2 °रं ; D13 सह [sic])न ते(Ñ V B1–3 D1.4.13 ते न) सहिष्यंति.

10 G1 om. 10 (cf. v.l. 9). — a) Ś B1.4 D1–4.8.12.13 नर्द(D2 °र्दं)तं त्वां समालक्ष्य(D1.4 °साद्य) ; Ñ1 B3 विद्रुतैर्वानरैः सर्वै ; Ñ2 V B2 द्रवतां वानरेंद्राणां. — c) V B1 D6.7.9–11 तु (for ते). — d) Ñ2 वधम् (for वशम्).

11 a) D9 संशयतां ; D11 M3 संश्रयिता ; G3 सुसंश्रिता (for संशयिता). Ś B3.4 D1–4.8.12.13 आपत्सु(B4 अपरे) संशयः(Ś D8.12 °यं) श्रेयो(D4 °ष्ठो) ; B2 आहुः संशयिता-च्छ्रेयो. — b) D6 T2 M3 तु ; D7 च (for [अ]त्र). Ś Ñ V B1.3.4 D1–3.8.12 न तु(V3 नात्र) निःसंशयं कृतं ; B2 न तु निःसंशयो हतः ; D4 न मेद्य संशयं रणे ; D13 ननु निःसंशयं ऋतं. — c) Ś V2.3 B1.4 D1–3.8.12.13 च (for वा). Ñ2 B2 प्रतिलोमानुलोमाभ्यां ; B3 प्रतिलोम्यातिलोम्येन ; D4 प्रतिलोमं सुलोमं वा. — d) Ś D8.12 यथावत् ; Ñ1 V2 यथा वा ; V1.3 D2.13 यद्वान्यत् ; B3 यद्वान्यं ; B4 यद्वा त्वं ; D6.10.11 यत्तु नो ; G2 किं वा नो (for यद्वा नो). Ñ2 B1.2 युद्धादन्यत्त्र मे(B1 °त्समा-) हितं ; D1.3 यश्चा(D3 °द्वा)न्यन्मनसो हितं ; D4 यद्वाक्यं मन्यसेन्वितं. —After 11, D2 ins. :

916* सर्वसैन्यं समुद्यम्य निर्यातु भवता चमूः ।
सुपार्श्वो वज्रमौलिस्तु प्रयातु तव पृष्ठतः ।

12 a) B1 स च तेन (for रावणेन). T3 रावणे * * * * स्तु (moth-eaten). — b) Ñ1 V2.3 B1 D1.3.4.12 G1.3 M5 राक्षसाधिपः ; Ñ2 V1 B2.3 रक्षसां वरः (for वाहिनीपतिः). — d) Ś Ñ1 V3 B1.4 D2.4–6.8.11 T G1.3 M1–3 [उ]शनाः (sic).

13 a) Ś D2.8.12 मे (for नः). V2.3 B1.4 T2 राजन्न (B4 °न्नो) मंत्रितं पूर्वं ; D4.7 M1.2 राजन्संमंत्रितं पूर्वं(D4 सर्वं). — b) Ś B4 D8 कुशलं. Ś Ñ2 V B1.4 D1–4.8.12.13 मंत्रिभिः सह (by transp.). B3 सततं पूजितस्त्वया. — c) Ñ2 V B2.3 संवृत्तः ; D4 नो दत्तः (for नो वृत्तः). — d) Ñ2 V3 समुपेत्य(V3 °क्ष्य) ; B2 समुत्पत्य ; D4 समरेषु (for समवेक्ष्य).

14 a) Ñ2 प्रतिदाने. B1 D1 च ; T3 हि (for तु). — b) D13 [ऽ]ध्यवसनं (for व्यवसितं). Ñ1 B2.3 D4 मम (for मया). — c) B1 तु युद्धं तु (for पुनर्युद्धं). — d) B4 D1.9–11 एव ; D4 एवं (for एतत्). Ś Ñ2 D2.8.12 तदैव तु(Ñ2 हि) ; Ñ1 V B2 D1.3.6.13 G1 तदै(V3 °वै)व नः ; B1 न संशयः ; B3 (with hiatus) तु एव नः ; B4 D4 तु वै पुनः ; G (ed.) तथैव च (for तथैव नः).

15 b) Ś D2.8.12 लालितस् (for पूजितस्). — c) B2 सोन्यैश् ; B3 D13 शांतैश्. V3 त्रिविधै ; D3 वचनै (for विविधैः). Ś Ñ V B2–4 D1–4.8.12.13 राजन् (for काले). B1 प्रासैश्वर्यविधे राजन्. — d) V3 B1 किं नु. D9–11 G1 हितं तव ; G (ed.) तव प्रियं (by transp.). —After 15, Ś Ñ V B1–3 D1–4.8.12.13 read 18.

स सुहृद्यो विपन्नार्थं दीनमभ्यवपद्यते ।
स बन्धुर्योऽपनीतेषु साहाय्यायोपकल्पते ॥ २६
तमथैवं ब्रुवाणं तु वचनं धीरदारुणम् ।
रुष्टोऽयमिति विज्ञाय शनैः श्लक्ष्णमुवाच ह ॥ २७
अतीव हि समालक्ष्य भ्रातरं क्षुभितेन्द्रियम् ।
कुम्भकर्णः शनैर्वाक्यं बभाषे परिसान्त्वयन् ॥ २८
अलं राक्षसराजेन्द्र संतापमुपपद्य ते ।
रोषं च संपरित्यज्य स्वस्थो भवितुमर्हसि ॥ २९
नैतन्मनसि कर्तव्यं मयि जीवति पार्थिव ।
तमहं नाशयिष्यामि यत्कृते परितप्यसे ॥ ३०

G. 6. 42. 3
B. 6. 63. 31
L. 6. 42. 27

26 V2 missing for 26 (cf. v.l. 15). V3 om. (hapl. ?) $26^{ab}$. —$^{a}$) Ś सुहृत्सु; D8.12 सुहृत्स (by transp.). D4 संसुहृद्यो (sic) (for स सुहृद्यो). —$^{b}$) Ñ V1 B D2.4.7.9–11 T3 Ck.t -[उ]प-; Cm.g as in text (for -[अ]व-). —$^{c}$) V3 B1 D4 G1 वि- (for ऽप-). —$^{d}$) G3 M1 साहाय्यो यो (sic) (for साहाय्याय). B2 [उ]पपद्यते. D4.9 साहाय्यं योप(D4 °य्यमनु)कल्पते.

27 V2 missing for 27 (cf. v.l. 15). —$^{a}$) B4 D1.2.4.13 G3 अथैनं(D13 °तं); M5 एवं हि (for अथैवं). D13 ब्रुवंतं. D4 च; D6.7.9–11 T2.3 G1.3 M1.2 स (for तु). —$^{b}$) Ś Ñ V3 B1.4 D1–2.8.12.13 दीन-; V1 B2.3 D4 वीर- (for धीर-). —$^{c}$) Ś Ñ2 V1.3 B1.2.4 D1–4.8.12.13 क्रुद्धो (for रुष्टो). B1 D4 संज्ञाय (for वि°). —$^{d}$) G2 ह्य (for ह). —After 27, D9 ins. 1117* (followed by App. I [No. 32]).

28 V2 missing for 28 (cf. v.l. 15). D9 om. $28^{ab}$. —$^{a}$) Ś D8.12 M1.2 स (for हि). D7 तमतीव (for अतीव हि). Ñ1 D4 समालोक्य. —$^{b}$) Ś D2.8.12 कुपितं भृशं; Ñ1 V3 B1.3(*sup. lin.* also).4 D1.3.4.13 कुपितेंद्रियं (for क्षुभितेन्द्रियम्). —Ś D8.12 repeat $28^{c}$–$29^{b}$; D2 repeats $28^{c}$–29 after App. I (No. 33). B3 repeats $28^{cd}$, 1117* and l. 1–51 of App. I (No. 32) after App. I (No. 32). —For $28^{cd}$, T3 subst.; while T2 ins. after 37:

1116* अथ पश्चादुपायज्ञो वाक्यमेतदुवाच ह ।

—T2.3 cont.; while Ś D2.8.12 ins. after $28^{cd}$ (first occurrence); Ñ2 V (V2 missing) B3 D1.3.10.11.13 ins. after 28; B3 ins. after $28^{ab}$; D4 ins. after 33; D9 ins. after 27:

1117* शृणु राजन्नवहितो मम वाक्यमरिंदम ।

[V3 illeg. for शृणु राजन्नव. D4 अवहितं (for °तो). B2 अवेह्यवहितो राजन् (for the prior half). D5 परंतप (for अरिंदम).]

—Thereafter, Ś Ñ2 V1.2(missing up to l. 12 of App. I [No. 32]).3 B2.3 D1–4.8.9.12.13 T2.3 ins. a passage relegated to App. I (No. 32).

29 For sequence in Ś D2.8.12, cf. v.l. 28. T2 repeats 29–30 after App. I (No. 32). —$^{a}$) Ś B1.4 D1–4.8.12.13 (Ś D2.8.12 both times) राक्षसशार्दूल. —$^{b}$) Ś Ñ1 V B D1–3.8.12.13 (Ś D3.12 all first time; D3 both times) उपगम्य हि(Ñ1 V B ते); Ñ2 अनुगम्य च; D4 अवगम्य ते; D5.11 उपपद्यसे; D6 अव°; D7 °पद्य वै (for उपपद्य ते). Ś D8.12 (all second time) संतापागमनेन हि; T2(second time).3 संतापेन तवानघ. —Ś D8.12 read $29^{cd}$ after $29^{ab}$ (r.). G1 repeats $29^{cd}$ here (cf. v.l. 20). —$^{c}$) T2(second time).3 तु (for च). Ś Ñ V B1–3 D1.2(both times).8.12.13 रोषायासौ; B4 D4 दो (D4 रो)षमाशु; D3 रोषाय सं-; L (ed.) रोषशोकौ (for रोषं च सं-). —$^{d}$) D13 स्वस्थान् (sic) (for स्वस्थो). —After the first occurrence of $29^{cd}$, G1 ins.:

1118* बहुना किं त्वया राजन्सर्वनाशः प्रवर्तितः ।

30 T2 repeats 30 (cf. v.l. 29). —$^{a}$) Ś Ñ V B D1–4.8.12.13 नैवमर्हसि वक्तुं त्वं. —$^{b}$) B3 तिष्ठति (for जीवति). —V3 B1 om. (hapl.) $30^{c}$–31. D6 reads $30^{cd}$ (except तम) in marg. —$^{c}$) Ñ1 D4 तद् (for तम्). Ś D1.3.4.8.13 शा(D4 शां)तयिष्यामि; D6 कार°; D12 G1 शास°; Cg as in text (for नाशयिष्यामि). —$^{d}$) D1.3 यदर्थं (for यत्कृते). B2.3 D3.5.6 G1 परितप्यते; D4 परिपद्यसे (sic); Cg as in text. —After 30, T3 ins.; while T2 ins. after 30 (r.):

1119* ते राक्षसा हता युद्धे वानरैर्भीमविक्रमैः ।
विभीषणं च राजेन्द्र न पश्याम्यहमागतम् ।
स खल्वतिबलः शूरो नित्यं स्वजनवत्सलः ।
वानरैर्निहतः संख्ये मम भ्राता विभीषणः ।
स हि नित्यं महातेजा धर्मशीलः प्रियंवदः । [5]
तं ममाचक्ष्व राजेन्द्र मनो मम विदीर्यते ।
तस्य तद्वचनं श्रुत्वा कुम्भकर्णस्य रावणः ।
अब्रवीत्सुमहातेजा वचनं राक्षसाधिपः ।
अहं प्रधर्षितस्तेन श्रावितस्तेन विप्रियम् ।
राघवश्च रिपुर्वध्यः संस्तुतो मम पार्श्वतः । [10]
ततो मयोक्तो निर्भर्त्स्य ध्वंसतेति पुनः पुनः ।
आहतश्च तदा वीरः क्रोधेन तु मया तथा ।
राघवं शरणं प्राप्तश्चतुर्भिः सचिवैः सह ।
तस्य राक्षसराजस्य निशम्य वचनं तदा ।
अब्रवीत्कुम्भकर्णस्तु हृदयेन विचिन्तयन् । [15]

[(l. 1) T3 हते (sic) (for हता). —(l. 2) T3 आगतः. —(l. 11) T3 [उ]क्तुर् (sic) (for [उ]क्तो) and ध्वंसने च

G. 6. 42. 4
B. 6. 63. 32
L. 6. 42. 28

अवश्यं तु हितं वाच्यं सर्वावस्थं मया तव ।
बन्धुभावादभिहितं भ्रातृस्नेहाच्च पार्थिव ॥ ३१
सदृशं यत्तु कालेऽस्मिन्कर्तुं स्निग्धेन बन्धुना ।
शत्रूणां कदनं पश्य क्रियमाणं मया रणे ॥ ३२
अद्य पश्य महाबाहो मया समरमूर्धनि ।
हते रामे सह भ्रात्रा द्रवन्तीं हरिवाहिनीम् ॥ ३३
अद्य रामस्य तद्दृष्ट्वा मयानीतं रणाच्छिरः ।
सुखी भव महाबाहो सीता भवतु दुःखिता ॥ ३४
अद्य रामस्य पश्यन्तु निधनं सुमहत्प्रियम् ।
लङ्कायां राक्षसाः सर्वे ये ते निहतबान्धवाः ॥ ३५
अद्य शोकपरीतानां स्वबन्धुवधकारणात् ।
शत्रोर्युधि विनाशेन करोम्यश्रुप्रमार्जनम् ॥ ३६
अद्य पर्वतसंकाशं ससूर्यमिव तोयदम् ।
विकीर्णं पश्य समरे सुग्रीवं प्लवगेश्वरम् ॥ ३७

(for ध्वंसतेति). —(l. 12) T$_2$ तदा (for तथा). —(l. 14) T$_3$ तथा (for तदा). ]

—Thereafter, T$_2$ cont. 1122*.

31 V$_3$ B$_1$ om. 31 (cf. v.l. 30). —$^{a}$) Ś$_1$ Ñ$_2$ B$_{2.4}$ D$_{5.7.9-11}$ G$_2$ च ; D$_{2.3}$ हि (for तु). Ś D$_{1.3.8.13}$ वाच्यः; Ñ$_2$ V$_1$ B$_{2-4}$ D$_{4.5.9}$ T$_{1.2}$ G$_1$ वाक्यं ; T$_3$ कार्यं (for वाच्यं). —$^{b}$) D$_{13}$ महीपतिः (for मया तव). Ś D$_{1.3.8.12}$ सर्वावस्थो महीपतिः ; D$_{7.10.11}$ G$_2$ सर्वावस्थासु ते (D$_{10}$ °स्थां गतं ; D$_{11}$ °स्थागतं ) मया ; D$_9$ सर्वावस्थाहितं तव. —$^{c}$) D$_{4.6}$ अति- (for अभि-). —$^{d}$) Ñ$_1$ D$_4$ भ्रातृभावाच् ; D$_{6.7.11}$ T$_3$ G$_{2.3}$ भ्रातुः स्नेहाच् (for भ्रातृस्नेहाच्).

32 $^{a}$) B$_{1-3}$ D$_9$ T$_2$ यादृशं; D$_3$ सादृश्यं; Cg as in text (for सदृशं). Ñ V$_{1.2}$ B$_{1.4}$ D$_{4.5}$ च; D$_1$ om. (for तु). Ś D$_{2.8.12}$ कार्येऽस्मिन् ; B$_3$ कालेन. —$^{b}$) Ś D$_{8.12}$ वक्तुं; G$_3$ damaged (for कर्तुं). Ñ$_2$ D$_{10}$ M$_5$ स्नेहेन; B$_4$ मित्रेण; Cg.t as in text (for स्निग्धेन). Ñ$_1$ D$_4$ चक्षुषा. —D$_{13}$ om. 32$^{c}$ – 33. —$^{d}$) Ś V$_3$ D$_{1-3.8.12}$ [अ]नघ; Ñ$_1$ B$_4$ D$_4$ युधि; Ñ$_2$ V$_{1.2}$ B$_{2.3}$ [अ]द्य तत् (for रणे).

33 D$_{13}$ om. 33 (cf. v.l. 32). —$^{a}$) M$_{1.2}$ महाराज. —$^{b}$) Ś D$_{8.12}$ राजन् (for मया). B$_4$ रणमूर्धनि विक्रमं. —$^{d}$) Ś B$_1$ D$_{1-3.8.12}$ कपि- ; M$_3$ पर- (for हरि-). V$_{1.2}$ द्रवतः सर्ववानरान्. —After 33, D$_4$ ins. 1117* (followed by App. I [No. 32]).

34 D$_4$ om. (hapl.) 34. —$^{a}$) Ś Ñ V$_{1.2}$ B$_1$ D$_{1-3.8.12.13}$ दृष्ट्वा त्वं; V$_3$ B$_4$ पश्य त्वं (for तद्दृष्ट्वा). D$_7$ G$_2$ अद्य रामशिरो दृष्ट्वा. —$^{b}$) Ñ$_1$ समानीतं; B$_{2.3}$ त्वया° (for मयानीतं). Ś D$_{2.8.12}$ रणे शिरः ; Ñ$_1$ महच्छिरः ; D$_7$ G$_2$ रणाजिरात् . —$^{c}$) Ś V$_3$ B$_1$ D$_{1.2.8.12.13}$ महाराज. —After 34, Ñ V B$_{2.4}$ D$_{13}$ ins. ; while D$_6$ T$_3$ ins. l. 4 only after 34 :

1120* अद्य तस्य विनाशेन मारुतेर्मारुताश्रयम् ।
क्रोधं निर्वापयिष्यामि लङ्का येन प्रधर्षिता ।
सुखी भव महाराज लङ्का भवतु निर्वृता ।
भविष्यति न ते शोकः शत्रुपक्षे मया हते ।

[ (l. 1) Ñ$_2$ महाबाहो (for विनाशेन). B$_2$ मारुतात्मजं (for °श्रयम्). —(l. 2) Ñ$_2$ निवर्तयिष्यामि. —(l. 3) D$_{13}$ महाबाहो (for महाराज) and भवति (for भवतु). B$_4$ निर्भया. —(l. 4) D$_6$ T$_3$ transp. मया and हते. ]

35 $^{ab}$) G$_3$ damaged up to निध. D$_1$ अस्य (for अद्य). Ñ$_1$ निधनाद्द्य रामस्य (for $^{a}$) and पश्यंतु (for निधनं). Ś Ñ$_2$ V B D$_{1-3.8.12.13}$ transp. पश्यन्तु and निधनं. D$_2$ हि (for सु-). —$^{c}$) D$_{11}$ om. सर्वे. —$^{d}$) D$_3$ येन ते; D$_{5.7}$ T$_{1.3}$ G$_1$ (with hiatus) एते नि- (for ये ते नि-).

36 V$_3$ om. 36$^{ab}$. —$^{a}$) D$_4$ अस्य. —$^{b}$) Ś Ñ V$_{1.3}$ B$_{1.2.4}$ D$_{1-3.8-12}$ M$_{1.2}$ -शोचिनां; D$_4$ -मोक्षतां (sic); D$_{13}$ -शोचतां (for -कारणात्). B$_3$ स्वबंधुमनुशोचतां. —$^{c}$) Ś D$_{8.12}$ युधि शत्रु- (for शत्रोर्युधि). G (ed.) प्रणाशेन. —After 36$^{c}$, V$_3$ erroneously repeats the post. half of l. 4 of 1120* and reads 35$^{d}$ in marg. —$^{d}$) Ś Ñ V B D$_{1-4.6.7-13}$ T$_3$ [अ]श्रु- ; D$_5$ T$_1$ G M [आ]स्र- (for [अ]स्र-). —After 36, D$_3$ reads l. 2 of 1097*.

37 D$_3$ om. 37$^{ab}$. G$_3$ damaged from र्वत in $^{a}$ up to सू in $^{b}$. —$^{a}$) B$_3$ प्लवग- (sic) (for पर्वत-). Ś Ñ V B D$_{1.3.4.8.12.13}$ -कूटाभं (D$_4$ °नां ) (for -संकाशं). —$^{b}$) M$_5$ सतोयम् (for ससूर्यम्). M$_2$ तोदयं (meta.) (for तोयदम्). Ñ$_2$ V$_{1.2}$ B$_{2-4}$ सूर्यपुत्रं प्लवंगमं. —D$_3$ reads 37$^{cd}$ (followed by 1121*) after the repetition of l. 10 of 1097*. —$^{c}$) Ñ$_1$ V$_3$ D$_{2.4.8.12}$ विशी (D$_4$ °स्ती )र्णं; B$_3$ प्र°; D$_{1.13}$ निगीर्णं (for विकीर्णं). D$_3$ सामात्यं सगणं चैव. —$^{d}$) Ś V B$_1$ D$_{1.2.8.12.13}$ T$_2$ वानरेश्वरं; Ñ B$_{2-4}$ D$_4$ वानराधिपं; D$_5$ T$_1$ G$_3$ M$_{3.5}$ प्लवगोत्तमं; D$_7$ G$_2$ शोणितोक्षितं (for प्लवगेश्वरम्). —After 37, Ś Ñ V B$_{2.4}$ D$_{1-4.8.12.13}$ ins. :

1121* अहमेकोऽद्य यास्यामि युद्धं युद्धविशारद ।

[ D$_3$ सोहम्. —Ś D$_8$ om. from the post. half up to 45$^{e}$. V$_2$ D$_4$ योद्धुं युद्ध- ; V$_3$ D$_{1-3.12.13}$ रणं (D$_1$ °णे ) रण- (for युद्धं युद्ध-). B$_4$ D$_{2-4.12}$ -विशारदः (D$_{3.4}$ °दं ). ]

—Thereafter, Ś Ñ$_2$ V B$_4$ D$_{1.2.3}$ (Ś D$_8$ om. 45$^{e}$ )$_{.12.13}$ read 45$^{ef}$; while B$_2$ reads 45$^{ef}$ for the first time after 1121* repeating it in its proper place.

—After 37, B$_{1.3}$ D$_{5-7.9-11}$ T$_{1.3}$ G M ins.; Ñ V B$_4$

न परः प्रेषणीयस्ते युद्धायातुलविक्रम ।
अहमुत्सादयिष्यामि शत्रूंस्तव महाबल ॥ ३८
यदि शक्रो यदि यमो यदि पावकमारुतौ ।
तानहं योधयिष्यामि कुबेरवरुणावपि ॥ ३९

गिरिमात्रशरीरस्य शितशूलधरस्य मे ।
नर्दतस्तीक्ष्णदंष्ट्रस्य बिभीयाच्च पुरंदरः ॥ ४०
अथ वा त्यक्तशस्त्रस्य मृद्नतस्तरसा रिपून् ।
न मे प्रतिमुखे कश्चिच्छक्तः स्थातुं जिजीविषुः ॥ ४१

G. 6. 42. 18
B. 6. 63. 45
L. 6. 42. 39

D13 ins. after $38^{ab}$; B2 ins. after $45^{ef}$ (first occurrence); D4 ins. l. 1–2 after $38^{ab}$ and cont. l. 3–5 after 1121*; T2 cont. after 1119*:

1122* कथं त्वं राक्षसैरेभिर्मया च परिरक्षितः ।
जिघांसुभिर्दाशरथिं व्यथसे त्वं सदानघ ।
अद्य पूर्वं हते तेन मयि त्वां हन्ति राघवः ।
नाहमात्मनि संतापं गच्छेयं राक्षसाधिप ।
कामं त्विदानीमपि मां व्यादिश त्वं परंतप । [5]

[ (l. 1) V3 B1 D10.11 च (for त्वं). D4 वीरैर् (for एभिर्). B1 त्वं (for च). B2 D10.11 M1.2 परिसांत्वितः. —(l. 2) Ñ1 V B2–4 D4.13 दाशरथेर् (for दाशरथिं). V3 पतितो (sic); B1 सुग्रीवं; D4 व्यथितैः; D13 व्यथसे त्वं (hypm.) (for व्यथसे). Ñ1 V B D13 राक्षसाधिप; Ñ2 D4 M1.2 राक्षसेश्वर; D5.9 T1 किं (D9 त्वं) तदा° (for त्वं सदानघ). D6 T2.3 G1.3 M5 ससैन्यं(G3 °न्यो) व्यथ(D6 T2 वध्य)सेनघ; M3 वध्यसे त्वमिहानघ (for the post. half). ❀ Cg: अत्र विभीषणः क्व गत इति कुम्भकर्णस्य प्रश्नः । मया धिक्कृतो गत इति रावणस्योत्तरं च क्वचित् कोशे दृश्यते । तत् पूर्वापरविरुद्धम्. ❀ —(l. 3) Ñ1 V2 D9 M5 यदि; D4 परं; D6 M3 अथ (for अद्य). Ñ2 V1.3 B D13 यदि(B1 मयि) पूर्वं निपतिते; D10.11 M1.2 मां निहत्य रणे रामस्(D10.11 किल त्वां हि) (for the prior half). B1.3 यदि (for मयि). —G3 damaged from हन्ति up to नाहमा in l. 4. B4 D4 हंतु (for हन्ति). D10.11 निहनिष्यति राघवः; M1.2 ततस्त्वां निहनिष्यति (for the post. half). —(l. 4) B4 राक्षसेश्वर. ❀ Cg: अर्थान्तरम्- अहमात्मनि विषये सन्तापं न गच्छेयं न गच्छामि । "व्यत्ययो बहुलम्" इति लकारव्यत्ययः. ❀ —V3 om. l. 5. B3 reads twice l. 5 (except कामं) in marg. —(l. 5) D6 कार्यं (for कामं). V1.2 नैवान्यम्; B2 तिष्ठस्व (sic); B3(second time) अपि वा; B4 तिष्ठ त्वं (for अपि मां). Ñ1 B1 D4 कामं तिष्ठ महाराज; Ñ2 B3 (first time) कामं नान्यमिदानीं त्वम्; D13 कथमिदानीमपि च; M1.2 इदानीमेव मां राजन् (for the prior half). Ñ2 V1.2 B3 (first time) आदिशस्व; D7 आदिश त्वं; D13 मादिशः सु- (sic) (for व्यादिश त्वं). Ñ1 B1.2.4 D4 प्रविश्यांतःपुरे-(B2 D4 °रं) सुखी (for the post. half). ]

—After 37, T3 ins. 1116* and 1117* (followed by App. I [No. 32]).

38 B1–3 D9 om. $38^{ab}$. D3.4 read $38^{ab}$ after $45^{ef}$. —$^{a}$) B4 कः (for न). Ñ V D1–4.13 [अ]परः; D6 चारः (for परः). Ñ3 V D4.5.10.11 T G1.3 M1.2.5 प्रेक्षणीयस्ते. Ś D3.12 नापरे प्रेषणीयास्ते. —$^{b}$) V3 D1.2.4.13 T3 -विक्रमः; T1 damaged (for -विक्रम). —After $38^{ab}$; Ñ V B4 D4(l. 1–2 only).13 ins. 1122*. —Ñ2 illeg. for $38^{c}$. —$^{c}$) V3 सकामा (sic) (for अहमुत्-). B3 तु शातयिष्यामि; D1.2.4 T2.3 उत्पादयिष्यामि; Cv as in text (for उत्साद°). —$^{d}$) Ñ2 V1 B2–4 D2–4.8.12 शत्रुं तव; V2 तव शत्रुं; V3 रिपुं तव (for शत्रूंस्तव). Ś Ñ V B3–4 D1–4.8.12.13 रिपुंजय; D7.9–11 महाबलान् (for महाबल). B1 शत्रुं परपुरंजय.

39 $^{b}$) G3 damaged for पावकमारुतौ. —$^{c}$) Ñ1 T2 तान्; D4 तद् (for तान्). Ś D8.12 L[ed.] शोष-(L[ed.] साध)यिष्यामि; B3 D3 निहनिष्यामि. —$^{d}$) Ñ2 B2 किं पुनस्तौ नराधमौ.

40 $^{a}$) Ñ2 V1.2 B2–4 -प्रमाणस्य (for -शरीरस्य). Ñ1 D4 गिरिकूटनिकाशस्य. —$^{b}$) Ś D8.12 शिला-; V3 D6 शत-; M1.2 शक्ति- (for शित-). D13 वै; M1.2 च (for मे). —$^{c}$) Ś D1.8.12 नदतस्; D11 ननर्दस् (sic) (for नर्दतस्). —$^{d}$) D7.10 T3 G1.3 वै (for च). D4 बिभ्येदपि; D9.11 M1 बिभियाद्वै(M1 °च्च). Ś V1.2 B1 D1–3.8.12.13 बिभी(B1 D3.8.12.13 °भि)यादपि वासवः; Ñ2 V2 B2–4 बिभीयादेवराडपि(V2 °डिति).

41 $^{a}$) D7 अद्य (for अथ). Ś Ñ1 V1.2 B1.3.4 D1–4.8.12.13 G1 न्यस्तशस्त्रस्य; Ñ2 B2 बहुशस्त्रस्य. —$^{b}$) B2 वध्यतस्; B3 मूर्छतस्; B4 D3 मर्दतस्; D1 युध्यतस् (for मृद्नतस्). Ś D2.8.12 चमूं (for रिपून्). —After $41^{ab}$, Ñ2 V1.2 B4 D13 ins.:

1123* पवनस्येव वेगेन भञ्जतस्तरसा द्रुमान् ।

[ D13 च (for [इ]व). Ñ2 V1.2 B4 मज्रतस् (sic) (for भञ्जतस्). D13 बलात् (sic) (for द्रुमान्). ]

—$^{cd}$) D4 नाम (for न मे). Ś V3 B4 D1.2.3.12.13 प्रमुखतः; Ñ1 D5.7 T1 G2 °मुखं; B1 D3.9–11 °मुखः; D4 न मे प्रति; Cg as in text (for प्रतिमुखे). D5 किंचिन् (for कश्चिच्). —G3 damaged for $^{d}$. Ś Ñ2 D8.12 G1 स्थातुं शक्तः कश्चिज्(G1 किल); Ñ1 V B2–4 D3 स्थातुं कश्चिच्छक्तो (by transp.); B1 D1.7.9–11 कश्चित्स्थातुं शक्तो(D1 * *) (by transp.); M3 स्थातुं कः स्याच्छक्तो (for कश्चिच्छक्तः स्थातुं).

G. 6. 42. 19
B. 6. 63. 45
L. 6. 42. 40

नैव शक्त्या न गदया नासिना न शितैः शरैः ।
हस्ताभ्यामेव संरब्धो हनिष्याम्यपि वज्रिणम् ॥ ४२
यदि मे मुष्टिवेगं स राघवोऽद्य सहिष्यति ।
ततः पास्यन्ति बाणौघा रुधिरं राघवस्य ते ॥ ४३
चिन्तया बाध्यसे राजन्किमर्थं मयि तिष्ठति ।
सोऽहं शत्रुविनाशाय तव निर्यातुमुद्यतः ॥ ४४
मुञ्च रामाद्भयं राजन्हनिष्यामीह संयुगे ।
राघवं लक्ष्मणं चैव सुग्रीवं च महाबलम् ।
असाधारणमिच्छामि तव दातुं महद्यशः ॥ ४५
वधेन ते दाशरथेः सुखावहं
सुखं समाहर्तुमहं व्रजामि ।
निहत्य रामं सह लक्ष्मणेन
खादामि सर्वान्हरियूथमुख्यान् ॥ ४६

42 $^{a}$) $D_4$ वै (for [ए]व). —$^{b}$) Ś Ñ V B $D_{2-6.10.11}$ $T_1$ $G_{1.3}$ $M_3$ निशितैः शरैः; $D_7$ $G_2$ नेषुभिः शि($G_2$ श)तैः; $M_5$ न शरैः शितैः (by transp.). $D_9$ नो निशितैः शरैः सह (unmetric). —After $42^{ab}$, Ś Ñ V $B_{1.2.4}$ $D_{1-4.8.12.13}$ ins.:

1124* वारयेन्मां हि संरब्धं साक्षादपि पुरंदरः ।

[$V_3$ हि संक्रुद्धं; $B_1$ सुसंबद्धं. $B_2$ इव (for अपि). Ñ $V_{1.2}$ $B_3$ $D_4$ शतक्रतुः (for पुरंदरः).]

—$^{c}$) $D_4$ अपि (for एव). $D_6$ $T_{2.3}$ संक्रुद्धो; $D_{9-11}$ संरभ्य (for संरब्धो). —$^{d}$) $D_5$ $T_1$ तु; $D_{6.7.9-11}$ स-; $G_1$ च (for [अ]पि). Ś $V_3$ $B_1$ $D_{1-3.8.12.13}$ हन्यामपि हि($V_3$ $B_1$ च; $D_{13}$ स-) वज्रिणं; Ñ $V_{1.2}$ $B_{2-4}$ $D_4$ वधेयमपि वासवं(Ñ$_1$ $D_4$ वज्रिणं); $T_{2.3}$ निहनिष्यामि वज्रिणं. ❀ Cr: निहनिष्यामि वज्रिणमिति पाठः. ❀

43 $^{a}$) $B_3$ $T_3$ मुष्टियोगं. —$G_1$ damaged from स up to $^{b}$. $V_3$ $B_{3.4}$ $D_4$ च; $B_1$ वा (for स). —$^{b}$) Ś Ñ $V_{2.3}$ B $D_{1-4.8.12.13}$ विषहिष्यति; $V_1$ हि स°; $G_3$ $M_3$ Cg [ऽ]द्य सहिष्यते; Cr.m.k.t as in text (for ऽद्य सहिष्यति). —$^{c}$) $D_{13}$ ततः पास्यामि बाणौघं. —$^{d}$) Ś $V_3$ $B_1$ $D_{1.2.4.8.12.13}$ वै; Ñ $V_{1.2}$ $B_{2-4}$ $D_{10.11}$ Cr.m.g.t मे; $D_3$ ह; $D_{5.7.9}$ $T_1$ $M_3$ तु; $D_6$ $T_{2.3}$ G $M_5$ च; Ck as in text (for ते). —After 43, $D_7$ $G_2$ ins.:

1125* अचिन्तयित्वा बाणौघान्रुधिरं राघवस्य च ।
लक्ष्मणस्य च पास्यामि चिरकालपिपासितः ।

[$G_2$ om. (hapl.) l. 1.]

44 $V_3$ $D_4$ om. $44^{ab}$. —$^{a}$) Ñ$_2$ $V_{1.2}$ $B_{2.4}$ $D_2$ दह्यसे; $B_3$ युज्यसे; $D_{7.9-11}$ तप्यसे; $G_1$ $M_2$ बुध्यसे (for बाध्यसे). Ñ$_1$ वीर (for राजन्). —$^{b}$) $D_3$ जीवति (for तिष्ठति). —$^{c}$) Ñ $V_2$ $B_{2.3}$ योहं. —$^{d}$) $V_3$ $B_4$ $D_4$ तव निर्यामि देशितः.

45 $B_3$ om. 45. —$^{a}$) $D_{7.9-11}$ घोरं (for राजन्). —$^{b}$) $D_{6.7.9-11}$ $G_2$ नि($G_2$ तं)हनिष्यामि; $G_3$ °ष्यामि हि (for हनिष्यामीह). $M_{1.2}$ हनिष्यामि रणे रिपुं. —$^{d}$) $D_5$ $T_1$ ससुग्रीवं (for सुग्रीवं च). $T_3$ महाबल. —For $45^{abcd}$, Ś Ñ V $B_{1.2.4}$ $D_{1-4.8.12.13}$ subst.:

1126* अथ रामं ससौमित्रिं ससुग्रीवं समारुतिम् ।
सर्वानेकपदे हन्मि प्रतिज्ञा मे तवाग्रतः ।

[(l. 1) $D_8$ अथ (for अद्य). Ñ$_1$ $D_{1.4}$ सुग्रीवं च (for ससुग्रीवं). $D_3$ transp. -सौमित्रिं and -सुग्रीवं. —(l. 2) $V_3$ ए ***; $B_1$ $D_{1-3}$ एकायने (for एकपदे). $B_1$ [अ]स्य (for मे). $V_3$ $D_{1.3.4}$ प्रतिजाने (for प्रतिज्ञा मे).]

—Thereafter, $D_3$ repeats l. 1, 4 (reads)–10 of 1097* and reads $37^{cd}$ (followed by 1121*).

—After $45^{cd}$, $D_{5-7.9-11}$ S ins.:

1127* हनूमन्तं च रक्षोघ्नं लङ्का येन प्रदीपिता ।
हरींश्चापि हनिष्यामि संयुगे समवस्थितान् ।

[(l. 1) $D_{11}$ transp. लङ्का and येन. —(l. 2) $G_3$ [अ]न्यान् (for [अ]पि). $D_{6.7.9-11}$ भक्षयिष्यामि (for [अ]पि हनिष्यामि). $G_1$ हरीन्विद्रावयिष्यामि (for the prior half). $D_{6.7.9-11}$ T समुपस्थितान् ($D_{9.11}$ °तः; $D_{10}$ °ते).]

—Ñ$_1$ $B_1$ om. $45^{ef}$. Ś Ñ$_2$ V $B_4$ $D_{1.2.8}$(Ś $D_8$ om. $45^{e}$)$_{.12.13}$ read $45^{ef}$ after 1121*. $B_2$ repeats $45^{ef}$ here (cf. v.l. 1121*). $D_4$ reads $45^{ef}$ after 19. —$^{f}$) Ś Ñ$_2$ V $B_2$(both times)$_{.4}$ $D_{1-3.8.12}$ अहं जयं; $D_{4.13}$ महाजयं (for महद्यशः). —After $45^{ef}$ (first occurrence), $B_2$ ins. 1122*; while $D_{3.4}$ read $38^{ab}$ ($D_4$ followed by l. 1–2 of 1122*) after $45^{ef}$; whereas $D_{5-7.9-11}$ S ins. l. 1–9 only of 1097*.

46 G (ed.) om. 46. —$^{ab}$) Ñ$_1$ $D_{5.6}$ $T_{1.3}$ $M_3$ Cm.g सुखार्हं (sic); Ñ$_2$ V $B_1$ $D_1$ $M_{1.3}$ सुखार्हं; $B_{2-4}$ $D_{2.4}$ सुखार्हः; $D_{8.13}$ सुखार्थं; Ct as in text (for सुखावहं). ❀ Cg: ते वधेन दाशरथेः सुखावहमित्यर्थान्तरम्. ❀ $G_{1.3}$ $M_5$ जयं (for सुखं). $D_3$ इह (for अहं). Ñ$_1$ यतामि; Ñ$_2$ $V_{1.2}$ $B_{2.3}$ यतेय; $V_3$ $B_4$ $D_{1-3.13}$ प्रयामि; $G_{1.3}$ $M_5$ यतिष्ये (for व्रजामि). $D_4$ उग्रं प्रहर्तुमिह संप्रयामि (for $^{b}$). Ś $D_{8.13}$ वदामि ते दाशरथिं सुखार्हं शत्रुं समाहंतु(Ś$_1$ °हर्तुं)महं प्रयामि. —$^{d}$) $V_3$ यास्यामि (for खादामि). $V_3$ अपि; $D_1$ युधि (for हरि-). V $B_{1.3}$ $D_{1-4.12.13}$ -योध-; $G_1$ -वीर- (for -यूथ-).

रमस्व कामं पिब चाग्र्यवारुणीं
कुरुष्व कृत्यानि विनीयतां ज्वरः ।
मयाद्य रामे गमिते यमक्षयं
चिराय सीता वशगा भविष्यति ॥ ४७

G. 6. 42. 23
B. 6. 63. 56
L. 6. 42. 45

इति श्रीरामायणे युद्धकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

---

47 V3 om. 47[ab]. —[a]) Ś B1 D1.2.8.12.13 कामान् ; D9–11 राजन् ; Cm as in text ( for कामं ). B1 अपि ( sic ) ( for पिब ). Ñ V1.2 B D9–11 चाद्य; D1.4 चाग्र-; D3 वाग्र्य-; D7 वाद्य ( for चाग्र्य- ). —[b]) Ñ1 D4 कार्याणि ; T1 **नि ( damaged ) ( for कृत्यानि ). D2 [ अ ]पनीयतां ; D7.9–11 विनीय ( for विनीयतां ). B1 श्रमः; D7.9–11 दुःखं. Ś D8.12 कुरुष्व कार्याण्यपयातु ते ज्वरः; G1 कुरुष्व कार्याणि हितानि विज्वरः. —[c]) Ś2 Ñ V1.2 B1–3 D2.3.8.12 तव ; B4 तद् ; D4 तदा ; D13 तं च ( for मया ). D11 रामं (sic) ( for रामे ). D4 समक्षं ( sic ); D9.12 यमक्षये ( for यमक्षयं ). —[d]) D2.3 वशमागमिष्यति. ❀ Cm : रामे गमितेयमक्षयमित्यत्र गमिते अयम् अक्षयम् इति च्छेदः । मया रामे अक्षयं यथा तथा चिराय सीतावशं गमिते सति अयं रामः अद्य आगमिष्यति । बन्धुभूतः सन्नसद्गृहं प्रतीति शेषः । अतो ज्वरो विनीयताम् । त्वं कामं रमस्व । वारुणीं पिबेति सम्बन्धः । ; Cg : मया निमित्तेन रमस्वेत्यादौ काकुः । इयम् अक्षयमिति च्छेदः । रामे विषये गमिता इयं सीता चिराय वशगा भविष्यतीत्यर्थान्तरम्. ❀

Colophon. —*Kāṇḍa name* : Ñ1 B D2.4.13 लंकाकांडे. —After *Kāṇḍa name*, D13 ins. युद्धपर्वणि. —*Sarga name* : Ś V3 B1 D1–3.8.12.13 कुंभकर्णगर्जनं( D3 °नो; D13 °ना ); Ñ B2–4 D4.9 कुंभकर्ण( B4 °र्णसाटोप )वाक्यं ; V1 कुंभकर्णविकत्थनं; V2 विकत्थनं. —*Sarga no.* ( figures, words or both ) : Ś1 Ñ1 V3 B2 D2.4.8.12.13 om. ; Ś2 B4 41 ; Ñ2 V2 D3 G2 42 ; V1 D1 43 ; B1.3 38 ; D5–7.10.11 T1 G M 63 ; D9 40 ; T2 68 ; T3 70. —After colophon, D2 concludes with राम; G M1.2.5 with श्रीरामाय नमः. —After colophon, Ś D2.8.12 ins. a passage relegated to App. I ( No. 33 ).

# ५२

G. 6. 43. 1
B. 6. 64. 1
L. 6. 43. 1

तदुक्तमतिकायस्य बलिनो बाहुशालिनः ।
कुम्भकर्णस्य वचनं श्रुत्वोवाच महोदरः ॥ १
कुम्भकर्ण कुले जातो धृष्टः प्राकृतदर्शनः ।
अवलिप्तो न शक्नोषि कृत्यं सर्वत्र वेदितुम् ॥ २
न हि राजा न जानीते कुम्भकर्ण नयानयौ ।
त्वं तु कैशोरकाद्धृष्टः केवलं वक्तुमिच्छसि ॥ ३
स्थानं वृद्धिं च हानिं च देशकालविभागवित् ।
आत्मनश्च परेषां च बुध्यते राक्षसर्षभ ॥ ४
यत्तु शक्यं बलवता कर्तुं प्राकृतबुद्धिना ।
अनुपासितवृद्धेन कः कुर्यात्तादृशं बुधः ॥ ५
यांस्तु धर्मार्थकामांस्त्वं ब्रवीषि पृथगाश्रयान् ।
अनुबोद्धुं स्वभावेन न हि लक्षणमस्ति ते ॥ ६
कर्म चैव हि सर्वेषां कारणानां प्रयोजनम् ।
श्रेयः पापीयसां चात्र फलं भवति कर्मणाम् ॥ ७

## 52

1 ab) Ś V3 B1 D1–3.8.12 -कायेन; D13 -कोपेन (for -कायस्य). ❀ Ck: तदित्यव्ययम्. ❀ D6 T2 M5 बल-; Cv as in text (for बाहु-). Ś V3 B1 D1–4.8.12.13 बलिना (V3 D1.3.13 धन्विना; B1 बहुना; D4 धन्विनो) बलशालिना (D4 °नः) (for b). Ñ V1.2 B2–4 एवं विकत्थमानस्य धन्वि (B4 शूलि) नो बलशालिनः. —c) Ś1 B1 D1–3.8.12 कुंभकर्णेन.

2 b) Ś Ñ1 D2.8.12 वृथा; Ñ2 V1 B2–4 D4 (before corr. as in D5) यथा; D5.7.9 T2.3 M3 (before corr.) दृष्टः (for धृष्टः). Ñ B4 प्राकृतवज्जनः. —c) Ś1 अवलुप्तो (sic). Ś B1 D1.8.12 शक्नोति; Ñ V1.2 B2–4 D4 जानीषे (for शक्नोषि). —D4 reads 2d–3a in marg. —d) D13 कृत्यं सर्वं निवेदितुं.

3 D4 reads 3a in marg. (cf. v.l. 2). —a) B3 अयं (for न हि). D2.4 T2 G1 विजानीते; Cr.m.g.k.t as in text (for न जानीते). D3 नाभिजातो न जानीषे. —D4 reads 3cd in marg. —c) V3 B4 किं तु (for त्वं तु). Ñ2 V1.2 B D4.9.13 कैशोरया; D6 T2 °रको; Cr.m.g.k.t as in text (for °रकाद्). Ś D1.3.8.12 धृष्टं; Ñ2 V1.2 B D4.9.13 बुद्ध्या (for धृष्टः). Ñ1 त्वं तु केसरिवद्धृष्टः. —d) B1.3.4 D1–3.13 M1.2 अर्हसि; Ck.t as in text (for इच्छसि). ❀ Ct: 'केवलं कर्तुमिच्छसि' इति पाठेऽसहायतया रामेण युद्धमिति शेषः. ❀

4 a) B4 स्थान-; T2 नूनं; Cg.k.t as in text (for स्थानं). Ñ2 विवृद्धिं; G3 वृद्धिं च (for वृद्धिं च). G2 transp. वृद्धिं and हानिं. —b) V3 -विभावितः; B2 -विभागजं; B3 -विभागतां; D2 -विभागतः; D4 -बलाबलं; D10.11 T3 G1 M1.2 Ck.t -विधानवित्; Cg as in text (for -विभागवित्). Ñ1 B4 देशं (B4 °श-) कालं बलाबलं. —d) Ś Ñ2 B2 D2.7.8.12 G2 राक्षसेश्वरः (B2 D2 °र); Ñ1 V1.2 B3 D1.4–6.9–11.13 T1 G3 M2.3.5 राक्षसर्षभः; V3 D3 राक्षसाधिपः (D3 °प); T2 पुरुषर्षभ (for राक्षसर्षभ).

5 a) D4 च (for तु). Ñ2 V B1.3.4 D5–7.10.11 M3 Cm.k.t [अ]शक्यं; M1.2 कर्तुं; Cr.g as in text (for शक्यं). B1 बलं तावद् (for बलवता). ❀ Cm: यत्तु शक्यमिति पाठे बलवता बलमात्रमवलम्ब्य स्थितेन पुरुषेण यत्कर्तुं शक्यं योग्यं तादृशं को वा बुधः कुर्यात्।; Ck: अशक्यमिति पदम्. ❀ —b) Ś Ñ V B2–4 D1–4.8–13 वक्तुं; B1 उक्तं; M1.2 शक्यं (for कर्तुं). —c) Ś D1–3.8.12 -वृद्धत्वात्; D13 -बुद्धित्वात्; T2 -वृत्तेन; Cr.m.k.t as in text (for -वृद्धेन). —d) V3 B1 न (for कः). D6 वचः; D9–11 नरः; Cv as in text (for बुधः). Ś D1–3.8.12 तवैतत्तादृशं (Ś D8 °त्सदृशं) वचः; Ñ V1.2 B2.3 D4 (Ñ1 D4 marg. also) तदे (V1.2 तेन) तद्व (B2 °वं ग) दितं त्वया; D13 तथैव सदृशं वचः.

6 a) Ś Ñ V2 D2.4.8.12 यश्च; V1 B2 D3.13 यच्च; V3 B1 यस्तु; B4 यत्तु; D1 ययु (sic) (for यांस्तु). T3 च (for त्वं). B3 युद्धधर्मार्थकामानां; D9 यत्तु कामार्थधर्मांश्च. —b) Ś2 D1.3.4.13 पृथगाश्रयात्; Ñ2 पुरुषाश्रितान् (for पृथगाश्रयान्). —c) D10.11 M1.2 Ck.t अवबोद्धुं; Cv.r.m.g as in text (for अनुबोद्धुं). D5–7 T G1.3 M5 Cr.g स्वभावेतान्; Cm.k.t as in text (for स्वभावेन). Ś D2.4.8.12 अनुपश्यसि नो भावं (D2 यं बुद्ध्या; D4 भावेन); Ñ V B अनु (B1.3 अत्र) पश्य त्वया (V3 यथा) बुद्ध्या; D1.13 अनुपश्यति मे भावो; D3 अनुपश्यामि भावास्ते. —d) V3 तु (for हि). G1 इह (for न हि). D10.11 तान् (for ते). ❀ Cm: स्वभावेन न हि लक्षणमिति पाठः. ❀

7 a) Ś D2.8.12 कामश्चैव; Ñ V B D1.3.4.13 काम एव (for कर्म चैव). ❀ Cr: कर्मेति जातावेकवचनम्. ❀ Ñ2 तु (for हि). —b) Ñ V1.2 B कार्याणां तु (B3 च); D4 (after corr. in marg.) कार्याणां न (for कारणानां). M1.2 प्रयोजकं. —c) Ñ1 D2 न (for च). —d) B3 संभवे चैव (for फलं भवति).

निःश्रेयसफलावेव धर्मार्थावितरावपि ।
अधर्मानर्थयोः प्राप्तिः फलं च प्रत्यवायिकम् ॥ ८
ऐहलौकिकपारत्र्यं कर्म पुंभिर्निषेव्यते ।
कर्माण्यपि तु कल्यानि लभते काममास्थितः ॥ ९
तत्र क्लृप्तमिदं राज्ञा हृदि कार्यं मतं च नः ।
शत्रौ हि साहसं यत्स्यात्किमिवात्रापनीयते ॥ १०
एकस्यैवाभियाने तु हेतुर्यः प्रकृतस्त्वया ।
तत्राप्यनुपपन्नं ते वक्ष्यामि यदसाधु च ॥ ११
येन पूर्वं जनस्थाने बहवोऽतिबला हताः ।
राक्षसा राघवं तं त्वं कथमेको जयिष्यसि ॥ १२
ये पुरा निर्जितास्तेन जनस्थाने महौजसः ।
राक्षसांस्तान्पुरे सर्वान्भीतानद्यापि पश्यसि ॥ १३

G. 6. 43. 13
B. 6. 64. 13
L. 6. 43. 13

8 D4 reads 8 in marg.—[a]) Ś D2.3.8.12 निःश्रेयसफल( D3 °लं )स्वे च ( D2 °पि ; D3 °व ); V3 B1 निःश्रेयसफलं चैव ; D13 निःश्रेयसफलावर्थौ ; T2 निःश्रेयसफलादेव.—[b]) V3 धर्मार्था विभवादपि ( sic ).—[c]) Ś B1 D1–3.8.12.13 अथ( D12 अत्र ; L [ ed.] इह ) धर्मार्थयोः ; Ñ V B2–4 D4 अधर्मेणा( V3 °र्मात्रा )नयोः ( for अधर्मानर्थयोः ). D10.11 M1.2 प्राप्तं ( for प्राप्तिः ).—[d]) Ś Ñ1 V1.2 B D1–3.8.12 वै ; Ñ2 वा ( for च ). Ś V3 B4 D1–3.8.12.13 प्रेत्यभावितं( V3 B4 D2 °कं ; D1.3 °वि तत् ); Ñ1 D5.6.10.11 T1.2 M1.2.5 Cr.t प्रात्यवायि( D6 T2 °य )कं ; B2 प्रत्यवायिनां ; B3 प्रात्यपायि( *sup. lin.* also °भावि )कं ( sic ); Cm.g.k as in text ( for प्रत्यवायिकम् ). D4 फलं सत्येन भाषितं.

9 [a]) Ś D1–4.6.8.12.13 T3 इह ( for ऐह- ). Ś D5.6.8.12 T G3 M1–3 Cm.g.k -पारत्रं ; Ñ V B1.2 D7.9–11.13 M5 Cv -पारक्यं ; B3 -पात्रिव्यं ( for -पारत्र्यं ).—[b]) Ś1 D8.12 निषिध्यते ; Ś2 निबध्यते ( for निषेव्यते ). B1 कथमेको गमिष्यति ; B3 कर्म मुक्ति( marg. also as in text )-र्निर्दिश्यते.—[c]) D2.5 M5 कर्मणि ; G1 धर्माणि. D4.6 T3 च ( for तु ). D2.4.9 T3 कल्याणं ; D5–7.10.11 M1.2.5 Ck.t कल्पानि ; Cv.m.g wrongly कल्याणि ( for कल्यानि ). Ś D8.12.13 कर्मण्यर्थे ( D13 °त्र ) तु कल्याणो ; Ñ1 कर्मण्यथ तु कल्याणं ; Ñ2 B2.3 अकर्मणा न( B2 च ) कल्याणं ; V1.2 सुकर्मणां तु कल्याणं ; V3 कर्मणापि न कल्याणं ; B1 कर्मण्यपि च कल्पानि ; B4 अकर्माप्यत्र कल्याणं ; D1 कर्मणैव हि कल्याणं ; D3 कर्मणोप्यथ कल्याणं ; G2.3 कल्याणानि च( G3 तु ) कर्माणि ; L ( ed. ) कर्मणात्र तु कल्याणं.—[d]) D2 लक्ष्यते ; D9 भजते ; G1 न लभेत् ( for लभते ). D3 धर्मम् ( for कामम् ). G ( ed. ) काममाश्रितः. B3 तत्र ते कालमास्थितः.

10 [a]) D9 अत्र ( for तत्र ).—For 10[ab], Ś D2.8.12 subst. :

1128* न प्रमादो ह्ययं राज्ञा हृदि कार्यः कथंचन । ;

[ D2 सदा ( for ह्ययं ) and कार्यं कदाचन ( for कार्यः कथंचन ).]

—while, Ñ V1.2 B2.4 D4 subst. ; B3 cont. after 1130* :

1129* तत्प्रहृष्टतमं राज्ञा हृदि कार्यतमं महत् ।

[ B3 तत्र ( hypm. ) ( for तत् ). B4 प्रहृष्टतरं. Ñ1 B2.3 राज्ञो. Ñ1 कार्यमिदं वचः ; B3 सद्मनमं महत् ( for कार्यतमं महत् ).] ; whereas, V3 B1.3 D1.3.13 subst. for 10[ab] :

1130* न प्रशान्तमिदं राज्ञो हृदि कार्यं कदाचन ।

[ B3 पुंसां तद् ( for प्रशान्तम् ).]

—[c]) M2 निस्- ( for हि ). D10.11 तत् ( for स्यात् ). Ś V3 B1 D1–3.8.12.13 शत्रोर्हि समरे हिंसा ; Ñ V1 B2–4 D4 शत्रोर्युधि विनाशेन( Ñ1 D4 °शाय ); V2 युधि शत्रोर्विनाशेन. —[d]) Ś1 D2.4( before corr. as in text ).8.12 एव ( for इव ). Ś D8.12 विधीयते ; Ñ1 V3 [ उ ]पनीयते ; D2 [ अ ]भिधीयते ; T2 M3 [ अ ]पनीयतां ; G1 [ अ ]पि नीयते ; Cr.m.g as in text ( for [ अ ]प° ). D9 तत्स्वेनापि विधीयते ; D13 किमेकेनापनीयते.

11 [a]) G3 [ अ ]भिधाने. Ś Ñ V B D1–4.8.12.13 सीतावशोप( V3 °वलाप [ sic ]; B1 °वासाप ; B3 °वासोप ; D1 °विशोक ; D2 °याश्राप ; D4 °रामाप ; L [ ed.] °याश्रोप )-नयने.—[b]) Ñ1 B2.4 व्याहृतस् ; Ñ2 V B1 D10.11 Ct प्राहृतस् ; B3 M1–3 Cm कथितस् ; Cr.g as in text ( for प्रकृतस् ).—[c]) Ñ1 V1.3 B2.3 D4.9 अत्र ; B1.4 ततो ( for तत्र ). B3 [ अ ]नुपपन्नास् ( sic ); D4 [ अ ]नुपपन्नस्. B1 मे ( for ते ).—[d]) Ś D8.12 वा ; Ñ1 तत् ( for च ). Ñ2 V B2.3 यदसाधुवत् ; B1 D4 प्रियदर्शन ; B4 शृणु साधु च ( for यदसाधु च ).

12 [a]) D1 यदि ( for येन ). B1 पूर्वं येन (by transp.). —[b]) Ś B1 D2.8.12 राक्षसा ( for ऽतिबला ). D9–11 तदा ( for हताः ). Ñ V B2–4 D4 राक्षसा बहवो हताः.—After 12[ab], Ñ V B2–4 D4.13 ins. :

1131* खरश्च निहतः संख्ये दूषणस्त्रिशिरास्तथा ।

—D10 om. ( hapl. ? ) 12[c]–13[b].—[c]) D9.11 राघवध्वस्ताः. Ś D2.8.12 तं शूरं राघवं संख्ये ; Ñ V B1.2.4 D4 बलिनं( B1 राक्षसो ) राघवं तं त्वं( Ñ1 D4 हंतुं ; V1.2 B2.4 त्वं तु ; V3 तं तु ) ; B3 राघवं बलिनं त्वं तु.—[d]) D4 एनं ( for एको ). Ś Ñ V B D1–4.8.12.13 हनिष्यसि ( for जयि° ).

13 D10 om. 13[ab] ( cf. v.l. 12 ).—[a]) D7.9.11 पूर्वं ; B2 पुनर् ; Cg as in text ( for पुरा ). D6 निहतास् ( for निर्जि° ). B3 संख्ये ( for तेन ).—[b]) Ś D3 वनौकसः ; D9 हतौजसः ( for महौ° ).—[c]) D5 राक्षसास्तव पुरे सर्वान्

G. 6. 43. 15
B. 6. 64. 14
L. 6. 43. 14

तं सिंहमिव संक्रुद्धं रामं दशरथात्मजम् ।
सर्पं सुप्तमिवाबुद्ध्या प्रबोधयितुमिच्छसि ॥ १४
ज्वलन्तं तेजसा नित्यं क्रोधेन च दुरासदम् ।
कस्तं मृत्युमिवासह्यमासादयितुमर्हति ॥ १५
संशयस्थमिदं सर्वं शत्रोः प्रतिसमासने ।
एकस्य गमनं तत्र न हि मे रोचते तव ॥ १६
हीनार्थस्तु समृद्धार्थं को रिपुं प्राकृतो यथा ।
निश्चितं जीवितत्यागे वशमानेतुमिच्छति ॥ १७
यस्य नास्ति मनुष्येषु सदृशो राक्षसोत्तम ।
कथमाशंससे योद्धुं तुल्येनेन्द्रविवस्वतोः ॥ १८
एवमुक्त्वा तु संरब्धं कुम्भकर्णं महोदरः ।
उवाच रक्षसां मध्ये रावणं लोकरावणम् ॥ १९
लब्ध्वा पुनस्तां वैदेहीं किमर्थं त्वं प्रजल्पसि ।
यदेच्छसि तदा सीता वशगा ते भविष्यति ॥ २०

---

(hypm.). —$^{d}$) $D_{6}$ $T_{3}$ $G_{3}$ $M_{5}$ हतान् (for भीतान्). $D_{5.10.11}$ न (for [अ]पि). —For $13^{cd}$, Ś $B_{1}$ $D_{1-3.8.12.13}$ subst.:

1132* राक्षसास्तस्य तान्भीतान्सर्वानिवावलोकय ।

[ $D_{13}$ तनयान् (for तान्भीतान्). L (ed.) [अ]त्र लोकय. ] ; while, Ñ V $B_{2-4}$ $D_{4}$ subst.:

1133* राक्षसास्तनयांस्तेषां भीतान्नाद्यानुपश्यसि ।

[ $V_{3}$ अद्य न पश्यसि; $D_{4}$ नाद्यापि पश्यसि (for नाद्यानुपश्यसि). $B_{4}$ भीतास्त्वं तत्र पश्यसि (for the post. half). ]

—Thereafter, Ñ V $B_{2-4}$ $D_{4}$ cont.; while $D_{13}$ cont. after 1132*:

1134* येऽपि चान्ये महात्मानो राक्षसाः शूरसंमताः ।
रामं पश्यन्ति भीतास्ते स्वप्नेऽपि नरसत्तमम् ।

[ (l. 1) $B_{3}$ चापि (by transp.) (for ऽपि च). $B_{3}$ महाबाहो (for °त्मानो). —(l. 2) $D_{4}$ ते नित्यं (for भीतास्ते). ]

14 $^{a}$) $D_{12}$ ते (for तं). $D_{5}$ सिद्धम् (for सिंहम्). V $B_{1}$ दुर्धर्षं (for संक्रुद्धं). —$^{c}$) $D_{5.6}$ सर्प-; $T_{1}$ स त्वं; Cm.g.t as in text (for सर्पं). $Ñ_{1}$ $B_{3}$ इवाबुद्धे; $Ñ_{2}$ इव क्रुद्धं; V इवाबुद्धिः; $B_{1.4}$ $D_{13}$ इव($D_{13}$ °वा) प्रा($B_{4}$ प्र)ज्ञः; $B_{2}$ $D_{5.7}$ $T_{3}$ इवाबुद्धा; $D_{1.3}$ इवाप्रज्ञः; $D_{4}$ इवावंध्यं; $D_{9-11}$ Ct अहो बुद्धा; Cm.g °बुद्ध्य (for इवाबुद्ध्या). Ś $D_{8.12}$ सुप्तं ($Ś_{2}$ °प्ते) सर्पमिवाप्र($Ś_{2}$ °प्रा)ज्ञः; $D_{2}$ सर्वं स्वप्नमिवाप्राज्ञः. ❀ Cv.r: सर्वं(°र्पं ?) सुप्तमिवाबुद्धयेति पाठः. ❀ —$^{d}$) Ñ V $B_{3}$ प्रधर्षयितुम् (for प्रबोधयितुम्). $B_{1}$ इच्छति (for °सि).

15 $D_{2.4.12}$ om. (hapl. ?) 15. —$^{a}$) Ś $B_{1}$ $D_{1.3.8.13}$ ज्वलितं. $B_{3}$ युक्तं (for नित्यं). —$^{b}$) $D_{13}$ क्रोधिनं च; $M_{1.2}$ शक्रेणापि (for क्रोधेन च). —$^{c}$) Ś $D_{7.8.13}$ कथं; $D_{6.9}$ स त्वं; $M_{3}$ कस्त्वं (for कस्तं). $B_{3}$ मृत्युसमं भूतम् (for °मिवासह्यम्). —$^{d}$) $B_{2}$ संसादयितुम्. Ś $D_{1.6.8.13}$ $G_{1}$ इच्छसि; $Ñ_{1}$ $B_{1}$ $D_{3}$ $G_{3}$ $M_{5}$ इच्छति; $V_{2}$ $D_{7.9}$ अर्हसि (for अर्हति). ❀ Cg: आसादयितुमासादितुम्. ❀

16 $^{a}$) $D_{9}$ संग्रामस्थम् (for संशयस्थम्). $Ñ_{1}$ अवाचीर्णं; $Ñ_{2}$ $V_{2}$ $B_{2-4}$ अनाक्रीर्णं; $V_{1}$ $D_{1-3}$ अनाचीर्णं; $V_{3}$ समाकीर्णं; $D_{4}$ अवातीर्णं; $D_{13}$ अनादीर्णं; $G_{3}$ अनिर्भिन्नं (for इदं सर्वं). Ś $D_{8.12}$ शयनस्थमनादी($D_{8.12}$ °ची)र्णं; $B_{1}$ असंशयस्तवाकीर्णं. —$^{b}$) $Ñ_{1}$ $B_{4}$ $M_{3}$ -समापने; $V_{1.3}$ -समासनं; $B_{3}$ (marg. also) -समागमे; $T_{1}$ -सहासने; Cm.g.k.t as in text (for -समासने). Ś $D_{8.12}$ शत्रुं प्रति बला($D_{12}$ महा)-बलं; $B_{1}$ $D_{1-3.13}$ शत्रुं प्रति सहासनं; $B_{2}$ शत्रोः परिसमापने; $D_{4}$ शत्रोः प्रतिसमासतः; $D_{6}$ शत्रौ प्रतिसमाहिते; $D_{9}$ शत्रुं प्रति महाहवे; $G_{2}$ एकस्य गमनं तव; L (ed.) शत्रुं प्रति च हासनं. —$^{c}$) $M_{1}$ एतस्य. $Ñ_{2}$ $V_{2.3}$ $B_{2.4}$ $M_{5}$ तेद्य; $D_{5}$ om.; $D_{9-11}$ तात; $G_{3}$ तुभ्यं; $M_{1.2}$ तस्मात्; Cv.r.m.g as in text (for तत्र). —$^{d}$) Ś $V_{1}$ $B_{1}$ $D_{1-3.8.12.13}$ सह्यं (for हि मे). Ñ $V_{2.3}$ $B_{2-4}$ $D_{4-7.9-11}$ T $G_{1.2}$ $M_{3.5}$ Cr भृशं; $G_{3}$ मनः (for तव). ❀ Cv: संशयस्थमिदं सर्वं, एकस्य गमनं तत्रेति च पाठः।; Cr: संशयस्थमिदं सर्वं शत्रोः प्रतिसमासने। एकस्य गमनं तत्र न हि मे रोचते भृशमिति पाठः. ❀

17 $^{a}$) $M_{3}$ स; K (ed.) सु- (for तु). —$^{b}$) $B_{1}$ किं चिप्रं (for को रिपुं). $Ñ_{2}$ B $D_{1.3-7.9-11.13}$ $T_{1.2}$ $M_{2.3.5}$ Cg.t प्राकृतं; Ck as in text (for प्राकृतो). $D_{2}$ प्रार्थयिष्यति. —$B_{4}$ reads $17^{cd}$ after $28^{ab}$. —$^{c}$) $M_{3}$ निश्चित्य. $B_{4}$ $D_{2.11.13}$ जीवितं (for जीवित-). $Ś_{1}$ -त्यागी (for -त्यागे). —$^{d}$) Ś Ñ $V_{3}$ $B_{2-4}$ $D_{1.3.8.12}$ अर्हति; $B_{1}$ इच्छसि; $D_{2}$ अर्हसि (for इच्छति).

18 Ś $D_{2.8.12}$ repeat $18^{ab}$ after 24. —$^{a}$) $Ś_{1}$ (second time) यदि (for यस्य). $D_{7}$ $G_{2}$ त्रिलोकेषु (for मनुष्येषु). —$^{b}$) $V_{1}$ $D_{9}$ $G_{2}$ राक्षसेश्वर; $D_{4}$ भुवि कंचन (for राक्षसोत्तम). —$^{c}$) $B_{3}$ आशंसते; $T_{3}$ °क्षसे (for °ससे). Ś $B_{1.4}$ $D_{1-3.8.12.13}$ तेनेच्छसि कथं योद्धुं. —$^{d}$) Ś $V_{3}$ $B_{1}$ $D_{1-3.8.12.13}$ [इ]ह विवस्व($D_{3}$ °पश्चि)ता(Ś $D_{8.12}$ °तः) (for [इ]न्द्रविवस्वतोः). $Ñ_{1}$ $B_{3}$ तुल्यमिंद्रविवस्वतोः; $D_{4}$ तुल्यं मृत्युमिवात्मनः.

19 $^{a}$) $Ñ_{1}$ $B_{2-4}$ $D_{4}$ सु- (for तु). Ś $D_{2.8.12}$ संक्रुद्धः; $Ñ_{2}$ V $B_{1}$ $D_{1.3.5.7.13}$ $T_{1}$ $G_{1}$ $M_{3}$ संरब्धः. —$^{d}$) Ś $B_{1}$ $D_{1-3.8.12.13}$ रावणोपमः; $Ñ_{2}$ V $B_{2-4}$ राक्षसाधिपं (for लोकरावणम्).

20 $^{a}$) $D_{5}$ $T_{1}$ $M_{3}$ पुनस्त्वं; $D_{6.9-11}$ $T_{2.3}$ पुरस्ताद् (for पुनस्तां). —$^{b}$) $D_{5}$ $T_{1}$ $M_{3}$ सं- (for त्वं). $D_{7}$ $G_{3}$ परितप्यसे; $D_{10.11}$ $M_{1.2}$ त्वं विलंबसे (for त्वं प्रजल्पसि).

दृष्टः कश्चिदुपायो मे सीतोपस्थानकारकः ।
रुचितश्चेत्त्वया बुद्ध्या राक्षसेश्वर तं शृणु ॥ २१
अहं द्विजिह्वः संह्रादी कुम्भकर्णो वितर्दनः ।
पञ्च रामवधायैते निर्यान्तीत्यवघोषय ॥ २२
ततो गत्वा वयं युद्धं दास्यामस्तस्य यत्नतः ।
जेष्यामो यदि ते शत्रून्नोपायैः कृत्यमस्ति नः ॥ २३
अथ जीवति नः शत्रुर्वयं च कृतसंयुगाः ।
ततः समभिपत्स्यामो मनसा यत्समीक्षितम् ॥ २४
वयं युद्धादिहेष्यामो रुधिरेण समुक्षिताः ।
विदार्य स्वतनुं बाणै रामनामाङ्कितैः शितैः ॥ २५
भक्षितो राघवोऽस्माभिर्लक्ष्मणश्चेति वादिनः ।
तव पादौ ग्रहीष्यामस्त्वं नः कामं प्रपूरय ॥ २६

G. 6. 43. 28
B. 6. 64. 26
L. 6. 43. 26

—$^{c}$) D5 यदीच्छसि यथा; D6.7.9 T2 G2 यथेच्छसि तथा( T2 °दा ); D10.11 T1 M3 Cg.t यदीच्छसि तदा; G1 यदेच्छति तदा (for यदेच्छसि तदा). — For 20, Ś Ñ1 B1 D1–4.8.12.13 subst.:

1135* लब्ध्वा पुनस्त्वं वैदेहीं किमस्मान्नाभिभाषसे ।
यदीच्छसि सतीं सीतामवशां वशमागताम् ।

[ (l. 1) Ñ1 तु; D2 तां (for त्वं). Ñ1 त्वं प्रजल्पसि; B1 D3 अभि°; D4 त्वं न जल्पसे (for नाभिभाषसे). —(l. 2) Ñ1 हि तां (for सतीं). Ñ1 वशगामात्मनः प्रभो; D4 वशगां कर्तुमात्मनः (for the post. half). ];

while Ñ2 V B2–4 subst.:

1136* लब्ध्वोपपन्ना वैदेही किं वृथैव विकल्पितैः ।
त्वं यदीच्छसि वैदेहीं वशगां तु शृणु प्रभो ।

[ (l. 1) Ñ2 V1 विकल्पितैः. —(l. 2) V3 B4 यद् (for यदि). V1 तां सीतां (for वैदेहीं). ]

21 $^{b}$) Ś B1 D1–3.8.12.13 -[उ]पादान- (for -[उ]पस्थान-). M1.2 -साधनं (for -कारकः). —$^{c}$) Ś D3.8.12 T2.3 M1–3 Cg रुचिरश्च; B4 रुचितं; D9 रुचिरं; Ct as in text (for रुचितश्च). Ś1 D8.12 चास्य( D8.12 °स्य ) वक्ष्यामो; Ś2 चास्य बुध्यामो; Ñ V B2–4 चैव( Ñ1 चापि; B4 खलु ) मे बुद्ध्या; B1 D1–3.13 च( B1 चेत् ) स्वबुद्ध्या मे (for चेत्त्वया बुद्ध्या). D4 चरितं वापि मे बुद्ध्या. —$^{d}$) Ś D1–3.8.12.13 राक्षसर्षभ (for राक्षसेश्वर). B2 D4 G2 तच्; B3 मे (for तं). B1 राक्षसेन्द्र शृणुष्व तत्; D7.9–11 राक्षसेंद्र ततः शृणु.

22 $^{a}$) Ś2 D8.12 अनर्हजिह्वः. D1 संज्ञादी; D4 संह्रादः; D13 संक्रोधी (for संह्रादी). —$^{b}$) Ś V1 B4 D1–4.8.12.13 [ऽ]ति( D2 [ऽ]व; D13 [ऽ]सि )गर्जनः( D4 °र्जितः ); Ñ2 विकर्तनः; V2 विगर्जनः; B2 M2 विमर्दनः (for वितर्दनः). —$^{cd}$) Ś2 B1 D8.12 मुंच (for पञ्च). Ś B1 D1–3.8.12.13 [अ]द्य (for [ए]ते). Ś Ñ1 B1.4 D1–3.8.12.13 गच्छंतु ( D2 °ति ) (for निर्यान्ति). B4 [अ]द्य (for [इ]ति). Ñ1 [अ]वबुध्यतां; B1.3 विघोषय; B4 [अ]वलोकय; D2 [अ]वबोधय; T2.3 [ए]व घोषय; G1 [अ]भिघोषय. D4 गच्छंत्येवं विबुध्यतां; D9 निर्याम प्रवरायुधाः (for $^{d}$). Ñ2 पंच रामं गमिष्यामो युद्धायास्मान्नियोजय.

23 $^{a}$) Ś B1 D1–3.8.12.13 रणे (for वयं). Ñ1 सर्वे (for युद्धं). —$^{b}$) B4 तत्र (for तस्य). B3 धीमतः (for यत्नतः). Ñ1 युद्धं दास्यामि यत्नतः (sic); B1 दास्यसेस्य प्रयत्नतः. —$^{c}$) Ś Ñ1 B1.4 D1–3.8.12.13 तं वधिष्यामहे शत्रुं; Ñ2 V B2.3 तं च शत्रुं( Ñ2 तव शत्रुं; B3 शत्रुं च तं ) वधिष्यामि( V °मो ); D4 भवद्विधिमहे शत्रुं (sic). —$^{d}$) Ś Ñ V B D1–5.8–13 T1 कार्यम् (for कृत्यम्). Ñ2 B2 अस्तु (for अस्ति). Ñ2 B2.3 ते; B1 ह (for नः).

24 V3 om. 24. —$^{a}$) Ś2 यथा; B3 कथं; D2 अद्य (for अथ). Ñ V1 B2.3 D7 G2 ते (for नः). Ś V2 B1.4 D1–3.8.12.13 शत्रुस्ते; M1.2 नः शत्रौ; Cg.t as in text (for नः शत्रुर्). —$^{b}$) Ñ1 D4 कृतनिश्चयाः; M5 तत्र संयुगात् (for कृतसंयुगाः). —$^{c}$) Ñ1 D4 तथा (for ततः). D5 T1 तमभि-; M3 तदभि- (for समभि-). Ś Ñ1 D2.3.8.12 समभिपश्यामो; Ñ2 V1.3 B1.2.4 D4 समभियास्यामो; B3 समवधास्यामो; T2 समभित्रत्स्यामो; G (ed.) समुपपत्स्यामो. —G1 om. (hapl.?) 24$^{d}$–25$^{a}$. —$^{d}$) Ś B2 D1–3.8.12.13 समर्थितं; Ñ V2 B1.4 D4 समन्वितं; V1 समाहितं; D5 T1 समीहितं; Cm.g.k.t as in text (for समीक्षितम्). —After 24, Ś D2.8.12 repeat 18$^{ab}$.

25 G1 om. 25$^{a}$ (cf. v.l. 24). —$^{a}$) V3 युद्धं (for युद्धाद्). Ś V1.2 B D3.5.6.8.10–12 T3 Cr.m.g.t इहेष्यामो; Ñ2 समेष्यामो; V3 हि दास्यामो; Ck as in text (for इहेष्यामो). —$^{b}$) D4 समुच्छ्रिताः; T2.3 °रिक्षिताः; Cr.m.g as in text (for समुक्षिताः). —$^{c}$) Ś1 B4 D1.7.8 G3 स्व( B4 ते )तनूर्; Ñ V1.2 B2.3 स्वां तनुं; V3 स्वांतरं; Cr.m.g.k.t as in text (for स्वतनुं). Ñ V B2.3 राजन् (for बाणै). D4 निवार्यमाणा रामेण. —$^{d}$) Ñ1 तीक्ष्णैर् (for राम-). D1 -नामांतिकं (sic). Ś B4 D1–3.3.12.13 युधि; Ñ V B1–3 D4–7.9–11 T2 G2.3 M3.5 शरैः; Cr.m.g as in text (for शितैः). ❀ Cr.m.g : वयं बाणैः स्वतनुं विदार्य रामेण विदारितां कारयित्वा रुधिरेण समुक्षिता रामनामाङ्कितैः शरैः सह युद्धादिहैष्याम इति योजना. ❀ —After 25, Ñ V B1.2.4 D13 ins.; B3 ins. after 25$^{ab}$:

1137* हतं तद्वानरं सैन्यं ससुग्रीवं न संशयः ।

[ B4 D13 सुग्रीवं च (for ससुग्रीवं). ]

26 $^{a}$) Ś Ñ2 V B D1–4.8.12.13 निहतो (for भक्षितो). D7 G2 राघवो भक्षितो (by transp.). —$^{b}$) T2.3 वा पुनः; Ck.t as in text (for वादिनः). —$^{c}$) B2 D6.9–11 ततः; Cg as in text (for तव). B3 चरिष्यामस् (for

G. 6. 43. 28
B. 6. 64. 27
L. 6. 43. 27

ततोऽवघोषय पुरे गजस्कन्धेन पार्थिव ।
हतो रामः सह भ्रात्रा ससैन्य इति सर्वतः ॥ २७
प्रीतो नाम ततो भूत्वा भृत्यानां त्वमरिंदम ।
भोगांश्च परिवारांश्च कामांश्च वसु दापय ॥ २८
ततो माल्यानि वासांसि वीराणामनुलेपनम् ।
पेयं च बहु योधेभ्यः स्वयं च मुदितः पिब ॥ २९
ततोऽस्मिन्बहुलीभूते कौलीने सर्वतो गते ।
प्रविश्याश्वास्य चापि त्वं सीतां रहसि सान्त्वय ।
धनधान्यैश्च कामैश्च रत्नैश्चैनां प्रलोभय ॥ ३०
अनयोपधया राजन्भयशोकानुबन्धया ।
अकामा त्वद्वशं सीता नष्टनाथा गमिष्यति ॥ ३१
रञ्जनीयं हि भर्तारं विनष्टमवगम्य सा ।
नैराश्यात्स्त्रीलघुत्वाच्च त्वद्वशं प्रतिपत्स्यते ॥ ३२
सा पुरा सुखसंवृद्धा सुखार्हा दुःखकर्शिता ।
त्वय्यधीनं सुखं ज्ञात्वा सर्वथोपगमिष्यति ॥ ३३

---

ग्रहीष्यामस् ).—$^{d}$) Ñ$_1$ $D_4$ त्वं च ; $G_1$ स्थिरः; Ct as in text ( for त्वं नः ). Ñ$_2$ V $B_{2-4}$ $D_{13}$ प्रीत्या ; $T_3$ $G_3$ $M_{1.2.5}$ कामान् ; Cg.k.t as in text ( for कामं ). Ś Ñ V B $D_{1-4.8.12.13}$ परिष्वजेः ( for प्रपूरय ).

27 $^{a}$) Ś Ñ V B $D_{1-4.8.12.13}$ ततोव( $V_3$ °वि )घुष्य ( $D_2$ °बुध्य ) नगरे( Ñ$_1$ $D_4$ लंकायां ).—$^{d}$) Ś $D_{2.8.12}$ ससेन ( for ससैन्य ). Ś इह ; $V_3$ $B_4$ $D_{4.8.12}$ इव ( for इति ). Ñ V $B_{2.3}$ $D_4$ दृष्टवान्( Ñ$_1$ °वत् ); $B_4$ सर्वशः ; G ( ed. ) हृष्टवत् ( for सर्वतः ).

28 $^{a}$) $G_3$ तदा ( for ततो ). Ñ$_1$ V $D_4$ ततः प्रीतमना भूत्वा ; $B_1$ प्रीत स्त्वमतो भूत्वा; $B_3$ प्रीतो भूत्वा च भृत्यानां.—$^{b}$) $D_1$ भूतानां ( for भृत्यानां ). Ñ$_1$ $D_4$ $G_2$ अ( $G_2$ चा )रिमर्दन ( for त्वमरिंदम ). $B_3$ यथाकामं ददस्व च.—After 28$^{ab}$, $B_4$ reads 17$^{cd}$.—$^{c}$) Ś $B_1$ $D_{5.8.12}$ $T_1$ परिबर्हांश् ; $B_3$ [ ए ]वापवारांश् ; $D_{1-3.13}$ $G_2$ $M_{1.2}$ परिहारांश् ; $D_9$ [ ए ]वापि दारांश् ; Cr.m.g.k.t as in text ( for परिवारांश् ).—$^{d}$) $V_{2.3}$ $B_{2-4}$ $G_{1.3}$ $M_5$ कामं ; $M_{1.2}$ स्वकं ; G ( ed. ) काम्यं ; Cg as in text ( for कामांश् ). Ś Ñ$_1$ $D_{1-3.6-13}$ $T_{2.3}$ $G_2$ वसु च ( by transp. ); $D_4$ च बहु. Ñ$_1$ V $B_{1-3}$ $D_{2.13}$ दापयेः ; $B_4$ दापयन् ( for दापय ). Ñ$_2$ कामांश्चैव प्रलोभय. ❀ Cv : भोगांश्च परिहारांश्च कामान्वसु च दापयेति पाठः. ❀

29 Ñ$_1$ transp. 29 and 30.—$^{a}$) $D_4$ धनं च ( for माल्यानि ).—$^{b}$) Ś Ñ V $B_{1.2.4}$ $D_{1-3.8.12.13}$ वराम्बरम् ; $B_3$ तवाम्बरम् ; $D_7$ $G_2$ भूषणानि ( for वीराणाम् ). $D_4$ वानराणां च भूषणं.—$^{c}$) $B_3$ $D_{9-11}$ $T_3$ Ct देयं. Ś $D_{1-4.8.12.13}$ दत्त्वा ( for बहु ). $D_4$ योधेषु; $D_6$ यूथेभ्यः ( for योधेभ्यः ). Ñ$_1$ ददस्व बहु भृत्येभ्यः ; $G_1$ $M_5$ पेयं च बहुधा तेभ्यः.—$^{d}$) $B_3$ पेयं ( for स्वयं ). Ñ$_2$ V $B_{2.3}$ पिबेः ( for पिब ).

30 Ñ$_1$ transp. 29 and 30.—$^{a}$) G( ed. ) अथ ( for ततो ). Ś $D_8$ बहुले भूते; $B_3$ बहुलीकृत्य( G [ ed. ] °कृते ).—$^{b}$) $D_9$ लोकेस्मिन् ( for कौलीने ).—After 30$^{ab}$, Ś Ñ V B D S ins. :

1138* भक्षितः ससुहृद्रामो राक्षसैरिति विश्रुते ।

[ Ś $B_{1.4}$ $D_{1-4.8.12.13}$ समरे ; $V_3$ संगरे ( for ससुहृद् ). ]

—$^{c}$) $T_3$ $M_3$ प्रविश; Cg as in text ( for प्रविश्य ). Ś $D_{2.8}$ प्रविश्याश्वस्य. $D_4$ वा ( for च ). Ñ$_2$ V $B_{1.2.4}$ [ ए ]व ( for [ अ ]पि ). $B_2$ [ ए ]तां ( for त्वं ).—$^{d}$) Ś$_2$ $B_3$ $D_{1.3}$ हरसि ( meta. ); $D_{13}$ ग्रहसि ( sic ) ( for रहसि ). Ś Ñ V B $D_{1-4.8.12.13}$ पार्थिव; $D_{6.7.9-11}$ $T_{2.3}$ सांत्वयन् ; Cg as in text ( for सान्त्वय ).—$^{e}$) Ñ$_1$ धनैर् ( for धन- ). Ś $D_{2.8.12}$ वरमाल्यैश् ( for धनधान्यैश् ). Ñ$_1$ $D_4$ भोगैश् ; Ñ$_2$ V $B_{2-4}$ $D_7$ $G_2$ रत्नैश्; $M_{1.2}$ वस्त्रैश् ( for कामैश् ).—$^{f}$) Ñ$_2$ V $B_{2-4}$ कामैश् ( for रत्नैश् ). Ś $D_{2.3.8.12.13}$ [ ए ]तां; Ñ$_1$ [ ए ]व ( for [ ए ]नां ). $D_7$ $G_2$ कामैरेनां. $V_3$ प्रलोभयेः ; $T_3$ प्रतोषय ( for प्रलोभय ).

31 $^{b}$) Ś$_1$ $B_3$ $D_{6.10.11}$ $M_{1.2}$ Ck.t भूयः ; Cm.g as in text ( for भय- ). Ś $D_{2.8.9.12}$ -[ अ ]वरु( Ś$_2$ -[ अ ]वब; $D_2$ -[ अ ]विरु; $D_{8.12}$ -[ अ ]वबु )द्धया; Ñ$_1$ -[ अ ]र्थबंधया; $B_3$ $D_1$ -[ अ ]नुबद्धया; $B_4$ -[ अ ]नुचिंतया ( for -[ अ ]नुबन्धया ). V $B_1$ $D_4$ भयशोकाच्च( $V_3$ °नु- ) विह्वला( $V_3$ °द्धया ).—$^{c}$) Ñ V $B_{2-4}$ स( $B_4$ प्र )कामा. Ś $V_3$ $B_{1.4}$ $D_{1-4.8.12.13}$ वशगा; Ñ $V_{1.2}$ $B_{2.3}$ $D_5$ $T_1$ $G_2$ $M_5$ त्वद्वशा ( $B_3$ °शे ) ( for त्वद्वशं ).—$^{d}$) Ś $D_{8.12}$ तव नाथ ( for नष्टनाथा ). Ś Ñ$_2$ $V_{1.2}$ $B_{1.4}$ $D_{1-5.8.12.13}$ भविष्यति.

32 $V_3$ om. ( hapl. ) 32–33.—$^{a}$) $D_{6.7.9-11}$ $T_{2.3}$ Ct रमणीयं; $G_1$ जानकी यं; $G_2$ राज्ञा नूनं; Cm.g.k as in text ( for रञ्जनीयं ).—$^{b}$) Ñ$_2$ $V_2$ $D_{2.9.10}$ $G_1$ अधिगम्य; $B_4$ $D_{11}$ अभिगम्य; $T_3$ अ * गम्य ( damaged ); Cm as in text ( for अव° ).—$^{c}$) Ś $D_{2.8.12}$ वैराग्यात् ; $D_5$ वैलास्यात् ( for नैराश्यात् ). Ñ$_2$ $V_{1.2}$ $B_{2-4}$ $D_4$ -स्वभावाच् ( for -लघुत्वाच् ).—$^{d}$) $B_1$ -वशे ( for -वशं ). Ś$_2$ $B_1$ प्रतिपद्यते; Ñ$_2$ $V_{1.2}$ $B_{2-4}$ प्रतियास्यति; $T_3$ प्रतिलप्स्यते.

33 $V_3$ om. 33 (cf. v.l. 32 ).—$^{a}$) $B_3$ या ( for सा ). $B_1$ -संवृत्ता; $D_4$ -संपन्ना ( for -संवृद्धा ).—$^{b}$) $T_3$ [ अ ]सुख-; Cm as in text ( for दुःख- ). Ś Ñ V $B_{1.2}$ $D_{1.5-10.12}$ $T_3$ -कर्पिता; Cm as in text ( for -कर्शिता ).—$^{c}$) Ñ$_2$ $V_{1.2}$ $B_{2-4}$ $D_{4.7.13}$ $G_{1.3}$ $M_5$ Cm त्वद्- ; Cg as in text ( for त्वयि ). Ś $D_{2.8.12}$ [ अ ]हष्टं; $B_1$ $D_{1.3}$ [ अ ]घृष्यं ; $B_4$ [ अ ]धीन-; $D_{13}$ [ अ ]धीष्टं ( for [ अ ]धीनं ). $T_3$ मत्वा;

एतत्सुनीतं मम दर्शनेन
रामं हि दृष्ट्वैव भवेदनर्थः ।
इहैव ते सेत्स्यति मोत्सुको भू-
र्महानयुद्धेन सुखस्य लाभः ॥ ३४

अनष्टसैन्यो ह्यनवाप्तसंशयो
रिपूनयुद्धेन जयञ्जनाधिप ।
यशश्च पुण्यं च महन्महीपते
श्रियं च कीर्तिं च चिरं समश्नुते ॥ ३५

G. 6. 43. 37
B. 6. 64. 36
L. 6. 43. 36

इति श्रीरामायणे युद्धकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

Cm as in text ( for ज्ञात्वा ). —[d] ) Ś $D_{8.12}$ सर्वशोथागमिष्यति; $Ñ_1$ सर्वथा प्राणमिष्यति; $Ñ_2$ $V_{1.2}$ B सर्वथोपनयिष्यति; $D_4$ ( marg. also as in $Ñ_2$) सर्वप्रणयमिष्यति; $D_6$ सर्वदैव भविष्यति; $D_{9-11}$ सर्वथैव गमिष्यति. —After 33, $G_2$ erroneously repeats 32[a].

34 [a] ) Ś $D_{2.8.12}$ हि वचो ममाद्य; $Ñ_1$ $D_4$ नय( $D_4$ after corr. यदि ) दर्शनेन; $Ñ_2$ V $B_{2-4}$ $D_{1.13}$ तव दर्शनेन; $B_1$ $D_3$ यद्दर्शनेन ( for मम दर्शनेन ). —[b] ) $B_1$ च; $D_{13}$ तु ( for हि ). $D_5$ दृष्ट्वैव ( sic ). $D_4$ अनाथा ( sic ) ( for अनर्थः ). —[c] ) $D_8$ इहैष. $Ñ_1$ तत्सेत्स्यति; $B_1$ चोपास्यति; $B_3$ तेनेक्ष्यति ( sic ); $D_4$ तद्राक्षस ( for ते सेत्स्यति ). $V_3$ $B_4$ न ( for मा ). $Ñ_1$ $D_4$ कार्यतत्त्वं ( for मोत्सुको भूर् ). —[d] ) Ś ह्ययुद्धेन; $V_{1.3}$ सु°; $B_4$ अथो तेन; $D_{2.12}$ हि युद्धेन; $T_{1.3}$ न युद्धेन ( for अ° ). $D_4$ महोग्रयुद्धेन; $D_8$ महार्हयुद्धेन ( for महानयुद्धेन ). $Ñ_1$ जयस्य ( for सुखस्य ).

35 [a] ) $Ś_2$ Ñ V B $D_{2.6.8.12.13}$ $M_{3.5}$ Cm.g अदृष्ट-. $B_3$ -दोषो ( for -सैन्यो ). $D_3$ [ ऽ ]पि ( for हि ). $Ñ_1$ -संभ्रमो ( for -संशयो ). $D_4$ अदृष्टसैन्येषु भवाप्तसंभ्रमो. —[b] ) $D_{9-11}$ $G_3$ रिपुं; Cm.k as in text ( for रिपून् ). Ś $V_3$ $B_4$ $D_{8.12}$ च( $V_3$ हि ) युद्धेन; $D_{9-11}$ त्वयुद्धेन; Cg as in text ( for अ° ). $T_1$ $G_1$ $M_3$ नराधिपः; $G_3$ $M_{1.2}$ जयाधिपः ( for जनाधिप ). Ś $Ñ_1$ $B_1$ $D_{1-3.8.12.13}$ जयेज्जनाधिपः; $Ñ_2$ V $B_{2-4}$ जयस्व सर्वथा ( for जयञ्जनाधिप ). —[c] ) $G_2$ सौख्यं ( for पुण्यं ). $D_5$ $G_{2.3}$ महीपतिः ( for °ते ). Ś Ñ V B $D_{1.2.8.12.13}$ महीं च भूपतिः( Ñ V $B_{2-4}$ °ते ); $D_3$ महीं च भूपते; $D_4$ श्रियश्च कीर्तिं ( sic ); $D_{7.9-11}$ $T_1$ $G_1$ $M_5$ महान्म( $G_1$ $M_5$ महीं म )हीपतिः; Cg as in text ( for महन्महीपते ). ❀ Cg : महीपते इति संबोधनम् . ❀ —[d] ) $D_7$ $G_2$ समृद्धां ( for च कीर्तिं ). $T_2$ transp. श्रियं and चिरं. $D_6$ समश्नुषे ( for °ते ). $Ñ_2$ V $B_{2-4}$ समाप्नुहि त्वं ( for चिरं समश्नुते ). $D_4$ समग्रसौख्यं च समाप्नुहि त्वं.

Colophon. —*Kāṇḍa name* : $Ñ_1$ B $D_{2.4.13}$ लंकाकांडे. —*Sarga name* : Ś Ñ V B $D_{1-4.8.9.12.13}$ महोदरवाक्यं. —*Sarga no.* ( figures, words or both ) : $Ś_1$ $Ñ_1$ $V_3$ $B_2$ $D_{2.4.8.12.13}$ om.; $Ś_2$ $V_1$ $D_1$ 44; $Ñ_2$ $V_2$ $D_3$ 43; $B_{1.3}$ 39; $B_4$ 42; $D_{5-7.10.11}$ $T_1$ G M 64; $D_9$ 41; $T_2$ 69; $T_3$ 71. —After colophon, $D_2$ concludes with रामः; G $M_{1.2.5}$ श्रीरामाय नमः.

# ५३

G. 6. 44. 1
B. 6. 65. 1
L. 6. 44. 1

स तथोक्तस्तु निर्भर्त्स्य कुम्भकर्णो महोदरम् ।
अब्रवीद्राक्षसश्रेष्ठं भ्रातरं रावणं ततः ॥ १
सोऽहं तव भयं घोरं वधात्तस्य दुरात्मनः ।
रामस्याद्य प्रमार्जामि निर्वैरस्त्वं सुखी भव ॥ २
गर्जन्ति न वृथा शूरा निर्जला इव तोयदाः ।
पश्य संपाद्यमानं तु गर्जितं युधि कर्मणा ॥ ३
न मर्षयति चात्मानं संभावयति नात्मना ।
अदर्शयित्वा शूरास्तु कर्म कुर्वन्ति दुष्करम् ॥ ४
विक्लवानामबुद्धीनां राज्ञां पण्डितमानिनाम् ।
शृण्वतामादित इदं त्वद्विधानां महोदर ॥ ५
युद्धे कापुरुषैर्नित्यं भवद्भिः प्रियवादिभिः ।
राजानमनुगच्छद्भिः कृत्यमेतद्विनाशितम् ॥ ६

## 53

1 $^{a}$) Ñ2 तथोक्तः स (by transp.); V3 स तथा हि; D7 G2 एवमुक्तस्; Cg.k.t as in text (for स तथोक्तस्). Ś Ñ V B1.2.4 D1–4.8.12.13 विनिर्भर्त्स्य (for तु नि°). —Ś Ñ V B D1–4.8.12.13 om. 1$^{cd}$. —$^{c}$) G1.3 रक्षसां (for राक्षस-).

2 Ś Ñ V B D1–4.8.12.13 read 2–11 after 15. —$^{a}$) Ś Ñ V B D1–4.8.12.13 अहं तेद्य; D5 सोयं तव (for सोऽहं तव). —$^{c}$) Ś Ñ2 V1 B1.4 D1–3.8.12.13 रावणैतत्; Ñ1 V2 D4 राघवस्य; V3 रावणाद्य; T3 रामस्यार्थं (sic) (for रामस्याद्य). V2.3 प्रनेष्यामि; B4 प्रवक्ष्यामि; D8 प्रजानामि (for प्रमार्जामि). B2 रावणैषोपनेष्यामि; B3 राक्षसेश्वर नेष्यामि. ❀ Cm.g: प्रमार्जामि प्रमार्जयामि (Cg °र्जामि निवर्तयिष्यामीत्यर्थः). ❀ —$^{d}$) V3 D5.9–11 T G3 M3.5 निर्वैरो हि; B1 निर्भरं त्वं; D6 निर्वैरोथ; G1 निर्वैरोपि (for निर्वैरस्त्वं).

3 For sequence in Ś Ñ V B D1–4.8.12.13 cf. v.l. 2. —$^{a}$) D4 ते (for न). Ś D2.8 तथा; B1 यथा (for वृथा). —$^{b}$) Ñ1 सजला (for निर्जला). Ñ2 B2.3 सजला जलदा इव. —V3 om. 3$^{c}$–4$^{b}$. —$^{c}$) T3 पापं (sic) (for पश्य). Ś2 D8.12 संपाद्यमाना (sic); Ñ1 संपीड्यमानं; B1–3 D6.7.9–11 Ct संपद्यमानं; Cg as in text (for संपाद्यमानं). Ś2 Ñ V1 B2 D1–4.8.12.13 वै; V2 B1.4 मे; B3 D7 त्वं; D9 G1 तं; G3 M5 तत्; Cg.k.t as in text (for तु). —$^{d}$) G2 निर्जितं; Cg.k.t as in text (for गर्जितं).

4 For sequence in Ś Ñ V B D1–4.8.12.13 cf. v.l. 2. V3 om. 4$^{ab}$ (cf. v.l. 3). —$^{a}$) D7.9–11 M1.2 Ck.t मर्षयंति. —$^{b}$) D9 संभावयंति. D5.6.9 T2.3 G M5 च (for न). D7.10.11 M1.2 Ck.t संभावयितुमात्मना. —For 4$^{ab}$, Ś B1 D1–4.8.12.13 subst.:

1139* नामर्षयन्त्यात्मनो ये ते न संभावयन्त्युत।

[D13 मर्षयंति (for [अ]मर्ष°). D3 न ते (by transp.). B1 [अ]वेता वै ये ते (sic) (for [आ]त्मनो ये ते न). D4 अमर्षादात्मनो ह्येते कर्म संपादयंत्युत.];

while, Ñ V1.2 B2–4 subst.:

1140* नामर्षयति यो नित्यमप्रगल्भं स भाषते।

[B3 मर्षयति; B1 [अ]मर्षयंति. B4 ये (for यो). V1.2 प्रभाषते; B3 न भाषते.]

❀ Cr: न मर्षयतीति। शूराः परकृतां लघूक्तिं न मर्षयन्ति न सहन्ते। आत्मनात्मानं न संभावयति न श्लाघन्ते। उभयत्रापि व्यत्ययेनैकवचनम्।; So also Cm.g. ❀ —$^{cd}$) Ś D1–3.8.12.13 अमर्षयित्वा; B1 अमर्षभावाः (for अदर्शयित्वा). Ñ V B2–4 D4 अमृष्य हि(Ñ1 अमर्षाद्धतु; V1 अमृष्ययित्वा [hypm.]; V2 अमर्षिता; V3 अमृष्यंति; B2 आमृत्यो हि; D4 आमृष्य च) रणे शूराः (for $^{c}$). Ñ1 D4 दारुणं (for दुष्करम्). V2 कुर्वंति रणदुःकरं (for $^{d}$). G2 अकथ्यमानः शूरस्तु कुरुते कर्म दुष्करं.

5 For sequence in Ś Ñ V B D1–4.8.12.13 cf. v.l. 2. —$^{a}$) B3 (marg. also as in text) विह्वलानाम्; B4 धिग्देवानाम्. B1 D9–11 ह्यबुद्धीनां. —$^{b}$) D4 राजा (sic); D6 M3 Cm.g राज्ञः; Ck.t as in text (for राज्ञां). —$^{c}$) Ñ2 V1 B4 D8 श्रृणुतां; B2 श्रृणु त्वं. Ś V2 D8.12 आहृत(V2 °तम्); Ñ V1.3 B व्याहृतम् (for आदित). D3.5.6.9.13 T G1.3 M3.5 Cr.m.g शृण्वता(D5 T G1.3 M5 Cr °तां) सादितमिदं; D4 शृणुता व्योद्धतमिदं (sic); D7.10.11 G2 M1.2 रोचते त्वद्वचो नित्यं(M1.2 नूनं). D7.10.11 G2 M1.2 कथ्यमानं; Cr.m as in text (for त्वद्विधानां). ❀ Cv: रोचते त्वद्वचो नित्यं कथ्यमानं महोदरेति क्वचिदस्य पश्चात्पाठः।; Ct: 'शृण्वतां सादितमिदं त्वद्विधानाम्' इति पाठे विक्लवत्वादिगुणानां त्वद्विधानां वचः शृण्वतामिदं सादितम्। ईदृशं दुःखं प्राप्तं भवतीत्यर्थं इति तीर्थः. ❀

6 For sequence in Ś Ñ V B D1–4.8.12.13 cf. v.l. 2. —$^{a}$) Ñ1 V3 B1.4 युद्धं. —$^{c}$) D4 राजस्यम् (sic) (for राजानम्). Ś Ñ V B D1–4.8.12.13 -वर्तद्भिः (for -गच्छद्भिः). —$^{d}$) Ñ2 V B1–3 कृतम् (for कृत्यम्). G1 एवं; Ck.t as in text (for एतद्). D10.11 Ck.t सर्वं कृत्यं (for कृत्यमेतद्). V3 विपत्तये; B1 विपातितं; D5 T1 M3 Cm.g हि सादितं; T2 हि नाशितं; G2 विपाटितं (for विनाशितम्). D4 कृत्यमेयोपपार्जितं (corrupt).

पलायनेन चोद्दिष्टाः प्राणान्रक्षामहे वयम् ।
एकेन बहवो भग्ना यशो नाशं गमिष्यति ॥ २४
एवं ब्रुवाणं तं शूरमङ्गदं कनकाङ्गदम् ।
द्रवमाणास्ततो वाक्यमूचुः शूरविगर्हितम् ॥ २५
कृतं नः कदनं घोरं कुम्भकर्णेन रक्षसा ।
न स्थानकालो गच्छामो दयितं जीवितं हि नः ॥ २६
एतावदुक्त्वा वचनं सर्वे ते भेजिरे दिशः ।
भीमं भीमाक्षमायान्तं दृष्ट्वा वानरयूथपाः ॥ २७
द्रवमाणास्तु ते वीरा अङ्गदेन वलीमुखाः ।
सान्त्वैश्च बहुमानैश्च ततः सर्वे निवर्तिताः ॥ २८
ऋषभशरभमैन्दधूम्रनीलाः
कुमुदसुषेणगवाक्षरम्भतारा: ।
द्विविदपनसवायुपुत्रमुख्या-
स्त्वरिततराभिमुखं रणं प्रयाताः ॥ २९

G. 6. 45. 0
B. 6. 66. 33
L. 6. 45. 38

इति श्रीरामायणे युद्धकाण्डे चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

24 G3 om. 24 (cf. v.l. 23). —a) Ś1 B1 D1-3.8.12.13 स्वान्प्राणान्; Ñ2 V B4 यत्रत्र; B2.3 पश्याद्य (for चोद्दिष्टाः). Ñ1 D4 पलायितेन (D4 पालयित्वा [subm.]) स्वान्प्राणान्. —b) Ś Ñ1 B1 D1-4.8 यदि; D12.13 परि- (for प्राणान्). D7 T1.2 M रक्ष्यामहे. Ñ2 V B2-4 प्राणान्रक्षाम (B4 °क्षथ) संयुगे. —M1 damaged for 24cd. —c) Ñ1 D4 एकेन खलु भग्नानां; Ñ2 V B2.4 बहूनामेकभग्ना (B4 °वर्णा)नां; B3 वरमेकप्रभग्नानां. —d) Ś B1 D1-3.8.12.13 यशो नो (D13 वो) द्य वि (B1 युधि) नंक्ष्यति.

25 a) Ñ1 V B2-4 D4.5 T1 M5 वीरम्; Cg as in text (for शूरम्). —b) Ś D2.8.12 वानरर्षभाः; Ñ V B D1.3.13 वानरा भयात् (for कनकाङ्गदम्). —c) Ś D2.8.12 तदान्योन्यम्; B1 D1.3.13 G1 M1.2.5 तदा (M1.2 °था) वाक्यम् (for ततो वाक्यम्). Ñ V B2-4 D4 विद्रवंतस्तदा (D4 °था) वाक्यम्. —d) D13 मृदु (for ऊचुः). B3 ऊचुः शरविकर्षिताः.

26 c) D13 तत् (for न). V3 G2 स्थानकामो (G2 °लं); M1.2 स्थातुकामा (for °कालो). Ñ1 B3 D4 न स्थान (D4 नष्टा न) कालं पश्यामो. —d) T1.2 च (for नः).

27 a) Ñ2 B2 एवमुक्त्वा तु. Ś Ñ V B D1-4.8.12.13 प्लव (D3 °वं [unmetric]) गाः (for वचनं). —b) D1.12 भेदिरे (sic); D13 क्षेकिरे (sic) (for भेजिरे). —c) D7 G2 भीमाक्षम् (for भीमाक्षम्). —d) Ś B1.4 D1-3.8.12.13 राक्षसमाहवे; Ñ2 V B2.3 राक्षसमुल्बणं; G1.2 M5 वानरपुंगवाः (for वानरयूथपाः).

28 T3 om. 28. —a) D6.7 G2 M1.2 च (for तु). Ś Ñ1 B1.4 D1-3.8.12.13 त्रासाद् (for वीरा). Ñ2 V B2.3 द्रवंतस्तत्र ते त्रासाद्; D4 द्रवमाणास्ततस्त्रासाद्. —b) Ñ1 B1.3 (m. also).4 D4 बलीयसा (for वलीमुखाः). —c) D4 सत्त्वैश्च; G2 M5 सांत्वनैर् (for सान्त्वैश्च). Ś B1 D8.12 [ए]वावमानैश्; Ñ1 दानमा°; V B3.4 D1-3.5.13 T1 G1 M3 [ए]वानु° (for बहुमानैश्). Ñ2 D6.7.9-11 T2 सांत्वनै (D6 T2 ससांत्वै) श्चानुमानैश्च. ❀ Cv : अनुमानैर्निदर्शनैः ।; Cr.m.g : अनुमानैः सालगिरिभेदनदृष्टान्तैः (Cm °नादि दृष्टान्तैः ।; Cg °नादिदृष्टान्तपुरस्कृतैर्युक्तिविशेषैः) ।; so also Ct. ❀ —d) Ś B1.4 D1-4.8.12.13 सर्वे ते वि-; Ñ V B2.3 M1.3 सर्व एव (for ततः सर्वे). —After 28, D5-7.9-11 T1.2 G M ins. :

1168* प्रहर्षमुपनीतास्ते वालिपुत्रेण धीमता ।
आज्ञाप्रतीक्षास्तस्थुश्च सर्वे वानरयूथपाः ।

[ (l. 1) D5.7.9-11 T1 M3 च (for ते). M3 वायुपुत्रेण. —(l. 2) D6 G3 M5 ते (for च). ]

29 Ñ1 D9-11 M5 om. 29. —ab) G1 -कुमुदनीलमैंद- (for -मैन्दधूम्रनीलाः कुमुद-). —c) G M1.2 -विनद- (G °त-) (for -पनस-). G2 -वालिपुत्र-. —d) G1 om. रणं. ❀ Ck : अत्र च सर्गमवच्छिन्दन्ति । इदमप्ययुक्तम् । एकप्रकरणत्वात्, वृत्तभेदरहितत्वाच्च. ❀ —For 29, Ś Ñ2 V B (B3 in marg.) D1-4.8.12.13 subst. :

1169* ततः पुनर्हरिवृषभा महौजस-
स्तदाहवे गिरितटपादपायुधाः ।
युयुत्सवः समुदितसीमविक्रमा
व्यवस्थिताः परबलदर्पनाशनाः ।

[ (l. 2) B1 तदा युधे. B1 गिरितल-; B3 °गुरु-; D13 °वर- (for °तट-). Ś D2.8.12 तदा बृहच्छिखरि (D2 बृहत्तुंग) शिलाद्रुमायुधाः; D4 तदाहुरिर्जरितलपादपायुधानां (sic). —(l. 4) B3 प्लवग-; D1 अमररिपु- (for परबल-). ]

## ५५

G. 6. 46. 1
B. 6. 67. 1
L. 6. 46. 1

ते निवृत्ता महाकायाः श्रुत्वाङ्गदवचस्तदा ।
नैष्ठिकीं बुद्धिमास्थाय सर्वे संग्रामकाङ्क्षिणः ॥ १
समुदीरितवीर्यास्ते समारोपितविक्रमाः ।
पर्यवस्थापिता वाक्यैरङ्गदेन वलीमुखाः ॥ २
प्रयाताश्च गता हर्षं मरणे कृतनिश्चयाः ।
चक्रुः सुतुमुलं युद्धं वानरास्त्यक्तजीविताः ॥ ३
अथ वृक्षान्महाकायाः सानूनि सुमहान्ति च ।
वानरास्तूर्णमुद्यम्य कुम्भकर्णमभिद्रवन् ॥ ४

Colophon: D11 om. (cont. the Sarga). —*Kāṇḍa name*: Ñ B1.4 D2.4.13 लंकाकांडे. —*Sarga name*: Ś D2.8.12 वानरसमाश्वासो (D2 °सनो); Ñ1 D4 वानरपरित्रासो; Ñ2 बलाश्वासनो; V B1.4 D1.3.13 वानराश्वासनं (V2 D3 °नो); B2 अंगदवानराश्वासनं; D9 वानरविद्रावनअंगदवाक्यं. —*Sarga no.* (figures, words or both): Ś1 Ñ1 V3 B2.3 D2.4.8.10.12.13 om.; Ś2 D1.3 46; Ñ2 V2 45; V1 B1 41; B4 44; D5–7 T1 G M 66; D9 43; T2 71; T3 73. —After colophon, G M1.2.5 conclude with श्रीरामाय नमः.

## 55

D11 continues the previous Sarga.

1 ❀ Cm (within brackets).t cite Kataka: अत्र सर्गवि (Ct °र्गात्र) च्छेदोऽसाम्प्रदायिकः । एकप्रकरणत्वाद्वृत्तभेदाभावाच्चेति कतकः. ❀ —$^{b}$) D6 कृत्वा (for श्रुत्वा). D1 -वचनस् (sic) (for -वचस्). D1 तथा (for तदा). —$^{c}$) D5 T1 M3 आसाद्य (for आस्थाय). —$^{d}$) B3 G2 तस्थुः (for सर्वे). Ñ1 D4 युद्धाभिकांक्षिणः.

2 $^{a}$) D1 समुदी*त-; D4 T3 °दीर्यंत- (sic); D8 *** रित-; G1 M5 °द्दीपित-; Cm.g.t as in text (for समुदीरित-). M3 च (for ते). —D12 om. $2^{cd}$. —$^{c}$) D4 -स्थापितैर्वाक्यैर्. —$^{d}$) Ś B1 D1–3.8.13 प्लवंगमाः; B2 D10 G1 बलीयसा (for वलीमुखाः). —After 2, V2.3 B2.4 ins.; while Ñ2 subst. for $3^{ab}$:

1170* प्रहर्षादागतामर्षाः संग्रामे कृतनिश्चयाः ।

[ V3 आगताः सर्वे. Ñ2 संग्राम- (for संग्रामे). ]

3 Ś Ñ1 V B D1–4.8.12.13 transp. $3^{ab}$ (V3 followed by l. 5–11 of 1171*) and $3^{cd}$. —For $3^{ab}$, Ñ2 subst. 1170*. —$^{a}$) G1 [अ]भवन्; G3 तथा (for गता). G1 M1.2.5 हर्षान् (for हर्षं). Ś Ñ1 V B D1–4.8.12.13 प्रहर्षादागतोत्साहा. —$^{b}$) Ś2 D2.8.12 कृतबुद्धयः (for °निश्चयाः). —$^{c}$) D4.5.7 तु तुमुलं. Ś Ñ V B D1–3.8.12 transp. सुतुमुलं and युद्धं.

4 V3 om. 4. —$^{a}$) Ñ1 B1.3.4 D1.3.12.13 महाकायान्; G2 महाशाखान्. —$^{b}$) Ś B1.4 D1–3.8.12.13 शृंगाणि (for सानूनि). B2 च (for सु-). —$^{c}$) Ś Ñ V1.2 B D1–4.8.12.13 उत्पाट्य; G2 उद्गृह्य; G3 आगम्य (sic) (for उद्यम्य). —D2 om. (hapl.) from $4^{d}$ up to the prior half of l. 1 of 1171*. —$^{d}$) Ś Ñ2 V1.2 B1.2.4 D1.3.8.12 उपाद्रवन्; D5 T1 M3 अभिद्रुताः (for अभिद्रवन्). —After 4, Ś Ñ V (V3 ins. l. 5–11 after $3^{ab}$ owing to om.) B D1–4.8.12.13 (Ñ V1.2 B2 D4 ins. l. 5–11) ins.:

1171* तान्समापततो दृष्ट्वा कुम्भकर्णः प्रतापवान् ।
व्यद्रावयत्सुसंरब्धो मेघानिव सदागतिः ।
ततस्तु तं महावीर्यं दश वानरयूथपाः ।
शिलाश्चोद्यम्य विपुलाः कुम्भकर्णमुपाद्रवन् ।
अङ्गदः कुमुदो नीलो गवाक्षश्चन्दनो हरिः । [5]
मैन्दोऽथ द्विविदश्चैव जाम्बवान्विनतस्तथा ।
युगपद्व्यहनन्सर्वे कुम्भकर्णं महाबलम् ।
तस्य गात्रे प्रभिन्नास्ताः शिलाः शैलनिभास्तदा ।
ध्वजं रथं खरांश्चैव सूतं चैव न्यपातयन् ।
सोऽवप्लुत्य रथाद्वीरो गदामुद्यम्य सत्वरः । [10]
वेगेनाभ्युत्पपाताशु पक्षवानिव पर्वतः ।

[ B4 om. l. 1. D2 om. up to the prior half of l. 1. B3 reads l. 1–4 in marg. —(l. 1) B3 समुत्पततो (for समापततो). —D3 om. l. 2–4. —(l. 2) Ś2 विद्रावयन्; B4 व्यत्रासयत्; D13 वाधवयत्र (sic). D2 सुसंक्रुद्धो; D12 स संरब्धो (for सुसंरब्धो). —(l. 3) D2 ते (for तं). B3.4 महाकायं; D8 महावीर्या (for °वीर्यं). B3 om.; G (ed.) नव (for दश). —(l. 4) Ś D8.12 प्रोद्यम्य. —(l. 5) Ś Ñ1 V D2.4.8.12 गवयो; D3 च गजो (for चन्दनो). —(l. 6) Ś Ñ V B2–4 D4.8 च (for ऽथ). Ś D8 द्विविधश्. D3 नीलो (for चैव). Ñ2 V1.2 B2.3 (*sup. lin.* also as above).4 बलवान् (for जाम्बवान्). V3 वानरा बलिनस्तथा (for the post. half). —(l. 7) Ś Ñ1 V1.2 B2.3 D2.8.12 प्राहरन्; Ñ2 प्राद्रवन्; V3 प्रहरणं (hypm.); B4 D3.13 न्यहनन्; D4 प्रत्यहनन् (hypm.) (for व्यहनन्). Ś Ñ1 D1–4.8.12 महाबलाः (for °बलम्). V1 B3 कुंभकर्णे महाबले (for the post. half). —(l. 8) B3 अस्य (for तस्य). Ś Ñ2 V B2–4 D2.4.8.12 विनिर्भिन्नाः; Ñ1 विनिर्भग्नाः; D1.3 विभिन्नास्ताः (for प्रभिन्नास्ताः). D13 तस्य गात्रेषु भिन्नास्ताः (for the prior half). Ñ1 V2.3 ततः; V1 B2–4 D4.12 तथा (for तदा). —(l. 9) V3 शरांश् (for खरांश्). Ñ1 D4 व्यपोथयन्; V3 B3 D1 व्यपातयन्; D13 [अ]भ्यपातयन् (for न्यपातयन्). —(l. 10) D13 अवप्लुत्य (for सोऽव°). V3 च वेगेन (for रथाद्वीरो); Ñ

स कुम्भकर्णः संक्रुद्धो गदामुद्यम्य वीर्यवान् ।
अर्दयन्सुमहाकायः समन्ताद्व्याक्षिपद्रिपून् ॥ ५
शतानि सप्त चाष्टौ च सहस्राणि च वानराः ।
प्रकीर्णाः शेरते भूमौ कुम्भकर्णेन पोथिताः ॥ ६
षोडशाष्टौ च दश च विंशत्त्रिंशत्तथैव च ।
परिक्षिप्य च बाहुभ्यां खादन्विपरिधावति ।
भक्षयन्भृशसंक्रुद्धो गरुडः पन्नगानिव ॥ ७

G. 6. 46. o
B. 6. 67. 7
L. 6. 46. o

V B2-4 D1.13 शूलम् ( for गदाम् ). B2 सत्वतः . —( l. 11 ) Ñ V1.2 B2 D1.3 [ अ ]भ्यु( V1 [ अ ]त्यु )त्पपाताथ ; B3 [ अ ]भिपपाताथ; B4 [ अ ]थ पपाताशु ( for [ अ ]भ्युत्पपाताशु ). D4 वेगेनाप्युत्थोत्पपाताथ ( hypm. ) ( for the prior half ). V3 वेगेनाभ्युपपन्नानि सपक्षानिव पर्वतः ( sic ). ]

5 $^{a}$) D4 कुंभकर्णश्च ( for स कुम्भकर्णः ). D6 T2 सक्रोधो ( for संक्रुद्धो ). V1 B2.4 D10.11 कुंभकर्णः सुसं( B2 स्वयं )क्रुद्धो. —$^{b}$) B1 D1 वेगवान्; D4 संभ्रमात् ( for वीर्यवान् ). Ñ V B2-4 शूलमुद्यम्य संभ्रमात्. —$^{c}$) B4 अध-र्षत; D3 मर्दयन् ( for अर्दयन् ). Ñ2 V1.2 B2 सुमहावेगः; V3 B1 D2 स महावीर्यः( B1 °कोपः; D2 °तेजाः ) ( for सुमहाकायः ). Ś D8.12 अदर्शयन्महातेजाः; B3 G ( ed. ) आर्दयत्सु( G [ ed. ] °त्स )महावेगः ; D4 अवर्धत महाकायः; D9-11 धर्षयन्स महाकायः. —$^{d}$) Ś Ñ2 V1.2 B1.4 D1-3.8.12 विक्षिपन् ; V3 B2.3 D5-7.10.11 M2 व्यक्षिपद् ; D13 वीक्ष्य यद् ; Cg as in text ( for व्याक्षिपद् ). Ś D8.12 गिरीन् ; Ñ2 हरीन् ; D2 परान्.

6 Ñ1 reads $6^{a}$–$7^{b}$ in marg. —$^{a}$) Ś D8 शतं ( for सप्त ). D4 सर्वे चाष्टौ सहस्राणि. —After $6^{a}$, D6 T1.3 ins. :

1172* विंशत्त्रिंशत्तथैव च ।
शतं सार्धशतं चैव.
[ l. 1 = $7^{b}$. ]

—D1 om. ( hapl. ? ) $6^{b}$ – $7^{a}$. —$^{b}$) Ś D3.8.12.13 सहस्रा-श्चापि; B1 सहस्राण्यपि; D4 सहस्रं चैव ( for सहस्राणि च ). G3 वानरान् ( sic ). —$^{c}$) B1 विकीर्णाः ; D4 निहताः ( for प्रकीर्णाः ). Ñ V B3 अशेरत महा-( Ñ2 V1.2 हता ) ; B2 अशेरन्निहता ( for प्रकीर्णाः शेरते ). —$^{d}$) Ñ V B2.3 रक्षसा; D5-7 योधिताः ; D9-11 ताडिताः ; D13 पातिताः ; T2.3 पीडिताः ; G1.2 M5 बाधिताः ; Cg as in text ( for पोथिताः ). Ś B1.4 D2-4.8.12 कुंभकर्णनिपाति( B1 °पीडि )ताः.

7 D1 om. $7^{a}$; Ñ1 reads $7^{ab}$ in marg. ( for both cf. v.l. 6 ). —$^{a}$) B3 दशाष्टौ ( for च दश ). —$^{b}$) V3 तति तथा; D4 च वानरान् ( for तथैव च ). Ś B1 D1-3.8.12 त्रिंशद्विं( D1 दशत्रिं )शति( D3 °च )वानरान् ; Ñ V1 B2 त्रिंशतं विंशतिं( V1 त्रिंशतं ) तथा; V2 विंशतिं त्रिंशतिं तथा; B4 त्रिंशत्त्रिंशच्छतं तथा; D13 त्रिंशतिं विंशतिं कपीन्. —$^{c}$) Ś Ñ V1.2 B2-4 D1-4.8.12.13 संपरिष्वज्य; B1 समं गृह्य च; D6 G1 M5 परिष्वज्य च; G2 परिक्षिप्यैव; G ( ed. ) स संगृह्य तु; Cg as in text ( for परिक्षिप्य च ). V3 संपरि * * * * * ( illeg. ). —$^{d}$) D5.7.10.11 G1 खादन्स; D6 M1.2 भक्षयन् ; D9 खादयन् ; Cg as in text ( for खादन्वि- ). Ś Ñ V B D1-4.8.12.13 निष्पिपेष स( B1.3 च ) राक्षसः. —After $7^{cd}$, D4 ins. :

1173* बहुशो वानरानास्ये क्षेपयामास राक्षसः ।
नासिकाकर्णरन्ध्राच्च निसृता वानराः पुनः ।

—Ś B1 D1-3.8.12 om. $7^{ef}$. —$^{e}$) M1.2 खादंस्तु ( for भक्षयन् ). G1 सुमहाक्रुद्धो ( for भृशसं° ). ❋ Cg : पन्नगान् भक्षयन्निवेति गरुडविशेषणम्. ❋
—For $7^{ef}$, Ñ V B2-4 D4.13 subst. :

1174* यथा नलवनं नागः प्रभिन्नकवचो बली ।
तथा वानरसैन्यानि स मृद्नन्पर्यधावत ।

[ ( l. 1 ) V3 नरवनं; D4 रिपुबलं; D13 हि बलवान् ( for नलवनं ). D4.13 -करटो ( for -कवचो ). —( l. 2 ) B2 अथ; D4 सर्व- ( for तथा ). Ñ2 * * धावत ( illeg. ) ; V3 पर्यवारयत्; B4 पर्यधावयत्. D4 समृद्धं पर्यवारयत्; D13 समृद्धः पर्यबाधयत् ( for the post. half ). ]

—After 7, D5-7.9-11 S ins. ; B2 cont. l. 1 only ; B3 cont. l. 1-2 only after 1174* :

1175* कृच्छ्रेण च समाश्वस्ताः संगम्य च ततस्ततः ।
वृक्षाद्रिहस्ता हरयस्तस्थुः संग्राममूर्धनि ।
ततः पर्वतमुत्पाट्य द्विविदः प्लवगर्षभः ।
दुद्राव गिरिशृङ्गाभं विलम्ब इव तोयदः ।
तं समुत्पाट्य चिक्षेप कुम्भकर्णाय वानरः । [ 5 ]
तमप्राप्तो महाकायं तस्य सैन्येऽपतत्ततः ।
ममर्दाश्वान्गजांश्चापि रथांश्चैव नगोत्तमः ।
तानि चान्यानि रक्षांसि पुनश्चान्यद्गिरेः शिरः ।
तच्छैलवेगाभिहतं हताश्वं हतसारथिम् ।
रक्षसां रुधिरक्लिन्नं बभूवायोधनं महत् । [ 10 ]
रथिनो वानरेन्द्राणां शरैः कालान्तकोपमैः ।
शिरांसि नर्दतां जह्रुः सहसा भीमनिस्वनाः ।
वानराश्च महात्मानः समुत्पाट्य महाद्रुमान् ।
रथानश्वान्गजानुष्ट्रान्राक्षसानभ्यसूदयन् ।

[ ( l. 1 ) B3 समाश्वास्य ( for समाश्वस्ताः ). —( l. 2 ) D6 T2.3 समर- ( for संग्राम- ). G3 संप्रतस्थु रणाजिरे ( for the post. half ). —( l. 3 ) For l. 3 and 6, cf. v.l. 6.54. 1158*. T1 moth-eaten for ततः. —( l. 4 ) G2 M1.2 -शृंगाभः ( for -शृङ्गाभं ). D5.9 T1 M1.2 प्रलंब; Cm.g.t as above ( for विलम्ब ). —( l. 5 ) G3 तत् ; Cg.t as above ( for तं ). D5.6 T M3 Cg समुत्पत्य; D7 G1 M1.2 समुत्क्षिप्य. D8 T G1

G. 6. 46. 14
B. 6. 67. 15
L. 6. 46. 13

हनूमाञ्शैलशृङ्गाणि वृक्षांश्च विविधान्बहून् ।
ववर्ष कुम्भकर्णस्य शिरस्यम्बरमास्थितः ॥ ८

तानि पर्वतशृङ्गाणि शूलेन तु बिभेद ह ।
बभञ्ज वृक्षवर्षं च कुम्भकर्णो महाबलः ॥ ९

ततो हरीणां तदनीकमुग्रं
दुद्राव शूलं निशितं प्रगृह्य ।
तस्थौ ततोऽस्यापततः पुरस्ता-
न्महीधराग्रं हनुमान्प्रगृह्य ॥ १०

स कुम्भकर्णं कुपितो जघान
वेगेन शैलोत्तमभीमकायम् ।
स चुक्षुभे तेन तदाभिभूतो
मेदार्द्रगात्रो रुधिरावसिक्तः ॥ ११

स शूलमाविध्य तडित्प्रकाशं
गिरिं यथा प्रज्वलिताग्रशृङ्गम् ।
बाह्वन्तरे मारुतिमाजघान
गुहोऽचलं क्रौञ्चमिवोग्रशक्त्या ॥ १२

---

M3 Cg.k कुंभकर्णस्य ( for °कर्णाय ). M1.2 कुंभकर्णस्य चोपरि (for the post. half ). ❀ Cg : कुम्भकर्णस्य कुम्भकर्णाय. ❀ —(l. 6) D5.9–11 G1 Ct तमप्राप्य; M3 तमप्राप्तं; M5 स तं प्राप्य. D6.10.11 T2 G3 महाकायस् ; D7 G2 M1.2 °शैलस् ( for °कायं ). D6 त्वस्य; D9 अस्य (for तस्य ). D5 T1 G1 M3 तदा ( for ततः ). M1.2 पपात ह (for ऽपतत्ततः ). D7 G2.3 तत्सैन्ये न्यपतत्तदा( G3 °तः ) (for the post. half ). —(l. 7) D7 G2.3 [ए]व ( for [अ]पि ). T3 नगोत्तमैः ; G3 महावृषान् ; M5 नगोपमान् ( for नगोत्तमः ). D9–11 चापि गजोत्तमान्. —(l. 8) G1 चिक्षेप (for तानि च ). D9–11 (with hiatus) एवं (for पुनश्). —(l. 9) M3 चैव ( for शैल- ). D6.7 T2.3 G1.2 -शृंगाभिहतं. T2 -वारणं (for -सारथिम् ). —(l. 10) M1.2 सुमहद्बलं ( for [आ]योधनं महत् ). —(l. 11) D6 T2.3 राक्षसा ( for रथिनो ). M1.2.5 कालानलोपमैः . —(l. 12) D10.11 T G1 M3.5 नदतां; G3 च तदा (for नर्दतां ). D9 जहे (sic) (for जहुः ). D7 G2 राक्षसा ( for सहसा ). D5.6.10 -निःस्वनाः ; D7 G2 M5 -विक्रमाः ; D9 T2.3 M1.2 -निस्वनं (for -निस्वनाः ). —(l. 14) D6 T2.3 G2.3 रथानुष्ट्रान्गजा( G3 °न्खरा )नश्वान् ( for the prior half ). D6 T रक्षसाम् ; G3 सहसा ( for राक्षसान् ). G3 M1.2 चाभि- ( for अभि- ).]

8 [a]) B1 -शृंगांश्च ( for -शृङ्गाणि ). —D1 om. (hapl.) 8[b]–9[a]. —[b]) D9–11 शिलाश् (for वृक्षांश् ). D7 G2 गुरून् ; D9–11 द्रुमान् (for बहून् ). Ś D2.8.12 शतशोथ सहस्रशः . —[d]) D9 आश्रितः (for आस्थितः ). Ś Ñ1 V3 B1 D2–4.8.12.13 शरीरे वानरस्तदा( Ñ1 V3 B1 D2–4.13 °र्षभः ).

9 D1 om. 9[a] (cf. v.l. 8). —[a]) G2 -शैलानि ( for -शृङ्गाणि ). —[b]) D9–11 G1 M3 स ( for तु ). D5 T1 शूलेनानु- ; D7 G2 शूलाग्रेण ( for शूलेन तु ). Ñ2 V B2–4 D7 G2 सः ; D5 T1 च (for ह ). Ś Ñ1 B1 D1–4.8.12.13 परमाहवे (for तु बिभेद ह ). —[c]) Ñ2 बिभेद ( for बभञ्ज ). B2 -जालं (for -वर्षं ). Ś Ñ1 B1 D1–4.8.12.13 बिभेद परमायस्तः( Ñ1 D4 °मक्रुद्धः ; B1 °माविष्टः ). —[d]) Ś Ñ1 B1 D1–4.8.12 मदोत्कटः ; D13 रणोत्कटः ( for महाबलः ).

10 D12 om. (hapl.) 10[cd]. —[c]) Ś2 Ñ1 B1.4 D1–3.8.13 M1.2 च तस्य; Ñ2 V B2.3 G1 M5 तु तस्य; D10.11 T1 G3 स तस्य (for ततोऽस्य ). B1 [आ]प्लवतः ; D6 [आ]पतितः (for [आ]पततः ). D4 तस्यैव तस्यापुरतः पुरस्तान् (sic). —[d]) Ñ2 V1(also).2.3 B2 गृहीत्वा ( for प्रगृह्य ). B3 महीधरं खे हनुमान्पुरस्तात्.

11 [a]) D9 कुंभकर्णः. —[b]) G1 नगेन; G2 शैलेन (for वेगेन ). T2 शैलोपम- (for °त्तम- ). G1.2 -भीमकायः. —[c]) D5–7.9–11 T2.3 G2.3 M1.2.5 Ck.t सं- ( for स ). D6 सदा ( for तदा ). G3 प्रभीतो ( for [अ]भिभूतो ). —[d]) D9 रुधिरार्द्रसिक्तः. ❀ Cg : मेदार्द्रेत्यत्र सन्धिरार्षः. ❀ —For 11, Ś Ñ V B D1–4.8.12.13 subst. :

1176* तमापतन्तं त्रिदशेन्द्रशत्रुं
जघान शैलेन कपिप्रवीरः ।
स चापि तेनाभिहतस्तरस्वी
न चुक्षुभे कालसमप्रभावः ।

[ (l. 1) Ñ1 त्रिदशेशशत्रुं. Ñ2 V B2–4 स कुंभकर्णं कुपितो जघान ( Ñ2 B2 °तोभ्युपेत्य ). —(l. 2) D12 शूलेन (for शैलेन ). V1.2 B3.4 शैलेन तेन प्लवगप्र( B4 °गेंद्र )वीरः; V3 शैलेन वै तेन हरिप्रवीरः. —(l. 3) B1 तपस्वी (for तरस्वी ). —(l. 4) D3 om. न. ]

—Thereafter Ñ1 D4 cont. :

1177* स कुम्भकर्णः कुपितो यमोपमः
प्रगृह्य शूलं ह्यशनिप्रकाशम् ।

[ (l. 1) Ñ1 कुपितान्प्रधावन् ( for °तो यमोपमः ). ]

12 [a]) Ñ2 आदाय; D6 T2.3 उद्यम्य (for आविध्य ). —[b]) D4 यथा गिरिं ( by transp. ) ; D7 गिरेर्यथा (for गिरिं यथा ). T1 भूज्वलित- (sic) (for प्र° ). D7.10.11 -[अ]ग्निशृंगं ( for -[अ]ग्र° ). Ñ V B4 T2 G1.2 M1.2.5 गिरिर्यथा प्रज्वलिताग्रशृंगः . —[c]) B2 स्थलांतरे; D4 भुजांतरे (for बाह्वन्तरे ). D11 प्राजघान ( for आज° ). —[d]) G2 यथा (for ऽचलं ). Ś B4 D1–3.8.12.13 [आ]त्मशक्त्या (for [उ]ग्र° ). Ñ1 D4 गुहेरिता क्रौंचमिवोग्रशक्तिः.

स शूलनिर्भिन्नमहाभुजान्तरः
　　प्रविह्वलः शोणितमुद्वमन्मुखात् ।
ननाद भीमं हनुमान्महाहवे
　　युगान्तमेघस्तनितस्वनोपमम् ॥ १३
ततो विनेदुः सहसा प्रहृष्टा
　　रक्षोगणास्तं व्यथितं समीक्ष्य ।
प्लवंगमास्तु व्यथिता भयार्ताः
　　प्रदुद्रुवुः संयति कुम्भकर्णात् ॥ १४
नीलश्चिक्षेप शैलाग्रं कुम्भकर्णाय धीमते ।
तमापतन्तं संप्रेक्ष्य मुष्टिनाभिजघान ह ॥ १५
मुष्टिप्रहाराभिहतं तच्छैलाग्रं व्यशीर्यत ।
सविस्फुलिङ्गं सज्वालं निपपात महीतले ॥ १६
ऋषभः शरभो नीलो गवाक्षो गन्धमादनः ।
पञ्च वानरशार्दूलाः कुम्भकर्णमुपाद्रवन् ॥ १७
शैलैर्वृक्षैस्तलैः पादैर्मुष्टिभिश्च महाबलाः ।
कुम्भकर्णं महाकायं सर्वतोऽभिनिजघ्निरे ॥ १८
स्पर्शानिव प्रहारांस्तान्वेदयानो न विव्यथे ।
ऋषभं तु महावेगं बाहुभ्यां परिषस्वजे ॥ १९

G. 6. 46. 26
B. 6. 67. 26
L. 6. 46. 24

13 $^{a}$) Ś $\tilde{N}_1$ $B_1$ $D_{1-4.8.12.13}$ स तेन वीरोभिहतः स्तनांतरे. —$^{b}$) Ś Ñ $V_2$ $B_{1.3}$ $D_{3.4.7.12}$ सु-; $V_3$ $B_{2.4}$ $D_{1.2.13}$ स (for प्र-). $\tilde{N}_1$ V $B_{2.3}$ $D_4$ उद्गिरन् (for उद्वमन्). $D_{9-11}$ रुषा (for मुखात्). $G_1$ शोणितदिग्धगात्रः. —$^{c}$) Ś Ñ V B $D_{1-4.8.12}$ महायशा ($D_3$ यशा in marg.); $D_{13}$ महौजा; $M_5$ महाकपिर् (for महाहवे). —$^{d}$) $T_3$ -स्तनितं (for -स्तनित-). $D_{5.6}$ $T_{1.2}$ $M_5$ -स्वनोपमः (for °पमम्). Ñ $B_{2.4}$ $D_4$ $G_1$ G(ed.) -स्तनितोपमस्वनः (Ñ °नं; G[ed.] °रः); $B_3$ -स्तनितो महास्वनः; $M_2$ -स्तनितोपमं ततः. Ś V $B_1$ $D_{1-3.8.12}$ यथा तपांते जलदो (V $B_1$ $D_{1-3}$ सजलो) बलाहकः; $D_{13}$ पपात भूमावथ नष्टचेताः.

14 $^{b}$) $D_5$ तु (for तं). Ś Ñ V B $D_{1-4.8.12.13}$ निशम्य; $M_{1.2}$ निरीक्ष्य (for समीक्ष्य). —$^{c}$) $D_7$ ते (for तु). $G_3$ भृशार्ताः; Cg as in text (for भयार्ताः). Ś $\tilde{N}_1$ V $B_1$ $D_{1-4.8.12.13}$ चापि तथा व्य($\tilde{N}_1$ $D_4$ हि तद्वय)थार्ताः; $\tilde{N}_2$ चाशु भयार्दितास्तदा; $B_{2-4}$ चापि तथा($B_3$ °दा) भयार्ताः. —$^{d}$) $D_5$ $T_1$ G $M_{1.2.5}$ कुंभकर्णं; Cg as in text (for °कर्णात्). Ś $D_{2.8.12}$ प्रदुद्रवुस्ते सहसा भया($D_2$ श्रमा)र्ताः; Ñ V B $D_{1.3.13}$ प्रदुद्रवुस्ते सहसैव($B_1$ $D_{1.3.13}$ °सा स्म) भीताः($B_4$ °माः); $D_4$ प्रदुद्रवुस्तेन सहैव भीताः. —After 14, $D_{5-7.9-11}$ S(except $G_3$) ins.:

1178* ततस्तु नीलो बलवान्पर्यवस्थापयन्बलम् ।

15 $^{a}$) $D_{5.7.9-11}$ $T_1$ प्रविचिक्षेप; $D_6$ $T_{2.3}$ प्रचिक्षेप च (for नीलश्चिक्षेप). Ś $D_{8.12}$ शैलेंद्रं (for शैलाग्रं). —After 15$^{a}$, $D_8$ ins.:

1179* 　　　योजनत्रयविस्तृतम् ।
　　पञ्चयोजनमुच्छ्रायं.

—$D_9$ om. 15$^{b}$–16$^{a}$. —$^{b}$) $\tilde{N}_1$ $D_4$ रक्षसे; $\tilde{N}_2$ V $B_{2-4}$ संयुगे (for धीमते). $G_2$ कुंभकर्णस्य धीमतः. —$^{c}$) $\tilde{N}_1$ $B_{1-3}$ $D_{3.10.11}$ $T_{2.3}$ तदापतंतं; $\tilde{N}_2$ कुंभकर्णस्तु; $G_2$ तदापतत्स (for तमापतन्तं). $D_8$ सु- (for सं-). —$^{d}$) Ñ V B $D_{1.3.4}$ $M_{1.2}$ सः; $D_{13}$ तत्; $G_{2.3}$ हा (for ह).

16 $D_9$ om. 16$^{a}$ (cf. v.l. 15). —$^{b}$) $\tilde{N}_1$ $V_3$ $B_4$ $D_4$ शैलाग्रं तद् (by transp.); $\tilde{N}_2$ $V_{1.3}$ शैलाग्रं तं; $B_2$ तच्छैलस्तु; $B_3$ शैलाग्रं तु; $D_9$ हनूमति (unmetric) (for तच्छैलाग्रं). $V_{2.3}$ $B_{3.4}$ T व्यदीर्यत; $D_2$ व्यकीर्यत; $D_5$ व्यदारयत्; Cg as in text (for व्यशीर्यत). —$^{c}$) $D_1$ (also).4 जज्वाल (for सज्वालं). $G_1$ सस्फुलिंगं समुज्वालं. —$^{d}$) $B_1$ पपात च (for निपपात). Ś $\tilde{N}_1$ $D_{2-4.8.12}$ च भूतले; $\tilde{N}_2$ V $B_{2-4}$ ततो भुवि; $D_9$ महीतलं (for महीतले). —After 16, Ñ $V_{1.2}$ $B_4$ $D_{3.13}$ ins.:

1180* तं दृष्ट्वा कुम्भकर्णस्य कर्म दारुणमाहवे ।

[ $D_2$ दृष्ट्वा तु (for तं दृष्ट्वा). ]

17 $^{c}$) $D_4$ पश्चाद् (for पञ्च). —$^{d}$) Ñ V $B_{2-4}$ $D_4$ प्रदुद्रुवुः; $G_1$ अभिद्रवन्; $M_5$ उपागमन् (for उपाद्रवन्).

18 $D_6$ transp. $^{ab}$ and $^{cd}$ (reading $^{cd}$ twice). —$^{a}$) $D_{1.3.13}$ शैलशृंगैस्; $G_3$ शैलवृक्षैस् (for शैलैर्वृक्षैस्). Ś Ñ $B_1$ $D_{1-3.8.12.13}$ चापि; $V_{1.2}$ $B_{2-4}$ चैव; $D_4$ तालैर् (for पादैर्). —$^{b}$) $\tilde{N}_2$ V $B_{2.3}$ च महाबलं; $D_7$ $G_2$ जानुभिस्तदा (for च महाबलाः). —$^{c}$) $D_6$ (first time) महाबाहुं (for °कायं). —$^{d}$) Ś $D_{2.8.12}$ व्यहनन्दृढं; $D_{1.3.13}$ [ऽ]भ्या($D_3$ °भ्य)हनन्भृशं; $D_6$ (second time) $T_{2.3}$ $G_3$ $M_{3.5}$ [ऽ]भि($D_6$ $T_3$ वि)प्रदुद्रुवुः (for ऽभिनिजघ्निरे). Ñ V $B_{2-4}$ सर्वे ते($\tilde{N}_1$ $B_4$ सर्वतो) वि($B_2$ तं)-प्रजघ्निरे; $B_1$ ते सर्वेभ्यहनन्भृशं; $D_4$ समंतादभिदुद्रुवुः; $D_6$ (first time) ते जघ्नुः प्लवगर्षभाः; $D_7$ $G_2$ नि($G_2$ प्र)-जघ्नुस्ते महाबलाः; $D_{9-11}$ $G_1$ निजघ्नुः सर्वतो युधि($G_1$ भृशं).

19 $V_3$ om. 19$^{ab}$. —$^{a}$) $\tilde{N}_1$ $D_4$ स्पृशन्निव; $D_3$ सर्वानपि (for स्पर्शानिव). Ś $D_{8.12}$ सर्वैरपि प्रवीरैस्तैर्. —$^{b}$) Ś $V_2$ $B_1$ $D_{8.12}$ हन्यमानो; $\tilde{N}_1$ $T_3$ वेदमानो; $\tilde{N}_2$ $V_1$ $B_{2-4}$ $D_{1-3.9.13}$ मन्यमानो; $D_4$ $T_2$ वेपमानो; $G_2$ नोदयानो; Ck.t as in text (for वेदयानो). $D_6$ $T_{2.3}$ कंपते (for विव्यथे). —$^{c}$) $V_3$ $D_4$ $G_2$ ऋषभश् (for ऋषभं). Ś Ñ $V_{1.2}$ B $D_{1-4.6.8.12.13}$ $T_3$ च (for तु). V $B_{2-4}$ $D_{3.5}$ $T_{2.3}$ महावीर्यं;

G. 6. 46. 26
B. 6. 67. 27
L. 6. 46. 25

कुम्भकर्णभुजाभ्यां तु पीडितो वानरर्षभः ।
निपपातर्षभो भीमः प्रमुखागतशोणितः ॥ २०
मुष्टिना शरभं हत्वा जानुना नीलमाहवे ।
आजघान गवाक्षं च तलेनेन्द्ररिपुस्तदा ॥ २१
दत्तप्रहारव्यथिता मुमुहुः शोणितोक्षिताः ।
निपेतुस्ते तु मेदिन्यां निकृत्ता इव किंशुकाः ॥ २२
तेषु वानरमुख्येषु पतितेषु महात्मसु ।
वानराणां सहस्राणि कुम्भकर्णं प्रदुद्रुवुः ॥ २३
तं शैलमिव शैलाभाः सर्वे तु प्लवगर्षभाः ।
समारुह्य समुत्पत्य ददंशुश्च महाबलाः ॥ २४
तं नखैर्दशनैश्चापि मुष्टिभिर्जानुभिस्तथा ।
कुम्भकर्णं महाकायं ते जघ्नुः प्लवगर्षभाः ॥ २५
स वानरसहस्रैस्तैराचितः पर्वतोपमः ।
रराज राक्षसव्याघ्रो गिरिरात्मरुहैरिव ॥ २६

---

B1 G2 M5 °कायं; D1.13 °बाहुं. —d) D4 पृष्टसष्वजे ( sic ) ( for परिषस्वजे ).

20 a) Ś2 B2.3 D2.8.12 च; B1 D1.3.13 M1.2 स: (for तु). —b) Ñ1 B1.3 D1–4.13 वानरोत्तम: ( for वानरर्षभः ). —c) D7 G1 M1.2 भूमौ ( for भीमः ). Ś D8.12 पपात भूमावृषभो; Ñ V B1.2.4 D1–4.13 G2 M5 पपात ऋषभो( V B4 सहसा ) भूमौ ; B3 स पपात ततो भूमौ ; T3 निपपात मुखाद्भीमः . —d) Ś Ñ V B1.2.4 D1–4.8.12.13 मुखादागत- ; T2.3 M5 प्रमुखोद्गत- ; M3 प्रमुखाद्गत- ( for प्रमुखागत- ). B3 G ( ed. ) मुखाच्छोणितमुद्गिरन् ( G [ ed. ] °द्वमन् ). ❀ Cg : प्र इति छेदः । मुखात् वान्तशोणितः प्रणिपपातेत्यन्वयः । "व्यवहिताश्च" इत्युपसर्गस्य व्यवहितप्रयोगः । वान्तशोणितः उद्गीर्णरक्तः । ; Ck.t : प्रमुखेति । प्रकर्षेण मुखे आगतं शोणितं यस्य सः( Ck °स्य स तथा ). ❀

21 a) B3 मुष्टिभ्यां. D4 सरभश्. Ś Ñ V2.3 B D1–4.8.12.13 चापि; V1 क्रुद्धो ( for हत्वा ). —b) B3 G1 M5 जानुभ्यां ( for जानुना ). T2 नलम्. D7 आहनत् ( for आहवे ). —c) V3 D5.9–11 T1 M3 तु ( for च ). —d) Ñ1 D11 तथा ( for तदा ). —After 21, G1 ins. :

1181* अरत्निना जघानासौ गन्धमादनमेव च ।

—While M1–3 B ( ed. ) ins. :

1182* पादेनाभ्यहनत्क्रुद्धस्तरसा गन्धमादनम् ।

[ B ( ed. ) [ अ ]भ्याहनत. ]

—Whereas L ( ed. ) ins. after 21 :

1183* शरीरे मर्दितस्तत्र सुगन्धाद्गन्धमादनः ।

22 a) Ś D8.12 T2.3 एते; D5 T1 तत्तत् ; D6 एतत् ; G1 ततः ( for दत्त- ). D6 T2.3 G1 -प्रहारैर् ; G2 M1.2 -प्रहारा ( for -प्रहार- ). Ñ1 B1 D1–4.13 M5 ते तैः( Ñ1 ततः ; B1 D2.4 एतैः ) प्रहारैर्व्यथिता ; Ñ2 V B2–4 प्रहारैर्व्यथितास्तैस्ते( B3 °स्ते ते ). —b) B1 शोणितेक्षणाः . —c) Ś Ñ V B D1–4.8.12.13 चापि; D6 चैव ( for ते तु ). —d) G2 पादपाः ( for किंशुकाः ).

23 a) T3 damaged for तेषु वान. B1 एवं ( for तेषु ). —b) Ś2 Ñ V B2 D3.4.9–13 T2.3 G1 M1.2.5 पातितेषु. B3 महत्सु च ( for महात्मसु ). —V3 om. 23c – 24d. —d) Ñ2 V1 B2–4 उपाद्रवन्; V2 D2 विदुद्रुवुः ; G2 M1.2 अभिद्रवन् ( for प्रदुद्रुवुः ).

24 V3 om. 24 ( cf. v.l. 23 ). —a) Ñ1 V2 B1.3.4 D1–4.13 ते ( for तं ). —B1 om. 24b. —b) Ś D8.12 परितः ; Ñ V1.2 B2–4 D1–4.13 सर्वतः ; D7.11 M1–3 सर्वे ते ( for सर्वे तु ). G1 सर्वतो वानरर्षभाः . —c) G3 M5 समुत्पाट्य; Cg as in text ( for समुत्पत्य ). Ś Ñ V1.2 B D1–6.8.12.13 समारुरुहुरुत्पत्य( B1 °स्थिताः ). ❀ Cg : समारुह्य समुत्पत्य । समुत्पत्य समारुह्येति क्रमः . ❀ —B1 om. 24d. —d) Ś D2.8.12 नि( D2.12 वि )नदंतो ; Ñ1 व्यपदंश्च; D1 व्यनदंश्च ; D3 तुदंतश्च ; D13 व्यातुदंश्च ( for ददंशुश्च ). D7.9–11 प्लवगर्षभाः ( for च महाबलाः ).

25 a) Ñ1 D4 ते ( for तं ). M1.2 नखैश्च ( for तं नखैर् ). Ś Ñ V B D1–4.6.8.12.13 [ ए ]व ( for [ अ ]पि ). —b) D7.9–11 बाहुभिस् ( for जानुभिस् ). Ś Ñ V1.2 B1–3 D1–4.8.12 जानुभिर्मुष्टिभिस् ( by transp. ); V3 जानुभिर्बाहुभिस् ; B4 जान्वभिजानुभिस् ( sic ) ; D13 जानुभिर्मुशलैस् ( for मुष्टिभिर्जानुभिस् ). Ś B1 D1–3.8.12.13 तलैः ; B4 G2.3 तदा ( for तथा ). —c) D6.7.9–11 T2.3 महाबाहुं; G3 °वेगं; M1.2.5 °कायास् ( for °कायं ). —d) D1.7.9–11 निजघ्नुः ( for ते जघ्नुः ). G3 प्लवगोत्तमाः. Ś D3.8.12 ते निजघ्नुर्म( D3 निजघ्नुस्ते म )हाबलाः ; Ñ V B D2.4.13 G1 M1.2.5 ते नि( Ñ1 D4 विनि; Ñ2 V B2–4 अभि; G1 M5 तेभि )जघ्नुः प्लवंगमाः( B3 परस्परं ).

26 ab) D6.7.9–11 T3 तु ( for तैर् ). Ś Ñ2 V1.3 B1–3 D1–3.8.12.13 तैः स( V3 B1 तैश्च ) वानरसाहस्रैः ; Ñ1 V2 B4 T2 तैर्वानरसा( B4 T2 °स )हस्रैस्तु( Ñ1 °स्रैः स ) ( for a ). D6 T2.3 निचितः ; D7.10.11 Ct विचितः ; D9 वारितः ; Cm.g as in text ( for आचितः ). D5 पवनोत्तमः ( sic ); G1.2 M2 पर्वतोपमैः ( for पर्वतोपमः ). Ś Ñ V B D1–3.8.12.13 परि( Ñ1 विनि )क्षिप्तः समंततः( V2 °हस्रशः ; D13 °मंत्रतः ) ( for b ). D4 तेन वानरसाहस्रं निक्षिप्तं च सहस्रशः . —c) Ñ1 V2 B1 D4 -श्रेष्ठो ( for -व्याघ्रो ). —d) B1.3 अंबुरुहैर् ; B4 बालरुहैर् ( for आत्मरुहैर् ). G1 गिरिराद् भूरुहैरिव.

बाहुभ्यां वानरान्सर्वान्प्रगृह्य स महाबलः ।
भक्षयामास संक्रुद्धो गरुडः पन्नगानिव ॥ २७
प्रक्षिप्ताः कुम्भकर्णेन वक्त्रे पातालसंनिभे ।
नासापुटाभ्यां निर्जग्मुः कर्णाभ्यां चैव वानराः ॥ २८
भक्षयन्भृशसंक्रुद्धो हरीन्पर्वतसंनिभः ।
बभञ्ज वानरान्सर्वान्संक्रुद्धो राक्षसोत्तमः ॥ २९
मांसशोणितसंक्लेदां भूमिं कुर्वन्स राक्षसः ।
चचार हरिसैन्येषु कालाग्निरिव मूर्छितः ॥ ३०
वज्रहस्तो यथा शक्रः पाशहस्त इवान्तकः ।
शूलहस्तो बभौ तस्मिन्कुम्भकर्णो महाबलः ॥ ३१
यथा शुष्काण्यरण्यानि ग्रीष्मे दहति पावकः ।
तथा वानरसैन्यानि कुम्भकर्णो विनिर्दहत् ॥ ३२
ततस्ते वध्यमानास्तु हतयूथा विनायकाः ।
वानरा भयसंविग्ना विनेदुर्विस्वरं भृशम् ॥ ३३

G. 6. 46. 38; B. 6. 67. 40; L. 6. 46. 37

27 $^{a}$) Ñ1 D4 क्रुद्धः (for सर्वान्). —$^{b}$) Ñ1 D4 च; Ñ2 V B4 तु; B2 [अ]थ; D5 T G2.3 M5 सु- (for स). Ś B1 D1–3.5.12 आकृष्य स; B3 परिगृह्य (for प्रगृह्य स). —$^{c}$) G3 पौलस्त्यो भक्षयामास. —After 27$^{c}$, D2 reads 29$^{b}$ (followed by 1184* and 1185*) and 29$^{a}$. —Ś B1.4 D1.4.8.12 om. (hapl.) 27$^{d}$–29$^{a}$. B2 repeats 27$^{d}$ in place of 29$^{b}$. In place of 27$^{d}$, D3 reads 29$^{b}$.

28 Ś B1.4 D1.4.8.12 om. 28 (cf. v.l. 27). —$^{a}$) G2 भक्षिताः (for प्रक्षिप्ताः). —$^{b}$) D13 -संमिते (for -संनिभे). —$^{c}$) Ñ1 B3 निष्पेतुः; Ñ2 V B2 D13 निः(B2 सं)पेतुः; D2 निहताः; D3.9–11 M3 संजग्मुः (for निर्जग्मुः). —$^{d}$) D13 केपि (for चैव). D2 तत्पराः (for वानराः). —After 28, D3 reads 1184*.

29 Ś B1.4 D1.3.4.8.12 om. 29$^{a}$ (for all except D3, cf. v.l. 27). D2 reads 29$^{b}$ (followed by 1184* and 1185*) and 29$^{a}$ after 27$^{c}$. —$^{a}$) Ñ1 V B2.3 भक्षयामास; D2 अभक्षयत्सु- (for भक्षयन्भृश-). G1 राक्षसः (for भृशसं-). —After 29$^{a}$, V3 erroneously reads 27$^{d}$ and 28$^{a}$. —In place of 29$^{b}$, B3 repeats 27$^{d}$. D3 reads 29$^{b}$ in place of 27$^{d}$. —$^{b}$) Ś Ñ V B1.3.4 D1–4.7.8.12.13 T1 G2 -संनिभान् (for -संनिभः). G1 वानराचलोपमः. —$^{c}$) M1.2 जघान; M5 बभक्ष (sic); Cg as in text (for बभञ्ज). D2 भृशसंक्रुद्धो (for वानरान्सर्वान्). —$^{d}$) D9 G2 राक्षसेश्वरः. D2 गिरीन्पर्वतसंनिभान् (sic). —For 29$^{cd}$, Ś Ñ1 B1 D1.3(reads after 28).4.8.12.13 subst.; D2 ins. after 29$^{b}$:

1184* मर्दयन्पर्वताग्रैश्च प्रहारान्राक्षसोत्तमः।

[(l. 1) B1 नाबुध्यत्; D1.3.4.13 नाविदत् (for मर्दयन्). Ñ1 नाविंदत पर्वताग्रैः (for the prior half). Ś D8.12 प्रहारै राक्षसर्षभः (for the post. half).]

—Then D2 cont.; while Ñ2 V B2.4 subst. for 29$^{cd}$; B3 subst. for 29$^{cd}$ and reads after 27$^{d}$ (r.):

1185* बुबुधे न प्रहारांश्च पर्वताग्रैर्महाबलः।

[B4 तु (for च). V3 पर्वताग्रं; B3 पर्वतैः सु- (for पर्वताग्रैर्).]

30 $^{a}$) D8 -संकीर्णां (for -संक्लेदां). —$^{b}$) Ś Ñ2 V B1.3.4 D1–4.6–13 T2.3 G3 M1.2.5 कुर्वन्भूमिं (by transp.); Ñ1 सर्वां भूमिं; B2 युद्धभूमिं (for भूमिं कुर्वन्). B3 न संशयः (for स राक्षसः). —Ñ1 reads twice 30$^{cd}$ (second time in marg.). D6 reads in marg. 30$^{cd}$. —$^{c}$) Ñ1 (second time) V B4 ददाह (for चचार). G1 पर- (for हरि-). Ñ1 (second time) B4 -सैन्यानि. —$^{d}$) B1 दावाग्निर्. B1 D6 T2.3 मूर्तिमान्; Ck.tp as in text (for मूर्छितः).

31 $^{a}$) M3 वज्रहासो (for °हस्तो). —$^{b}$) D1 प्राश ** (for पाशहस्त). Ś Ñ B2–4 D1–3.7.8.12.13 यथांतकः; V B1 D4 यथा यमः (for इवान्तकः). —$^{c}$) Ś Ñ1 B1 D1–4.8.12.13 तद्वत्; V3 D6.9–11 T2.3 युद्धे; M3 संघे; K (ed.) संख्ये (for तस्मिन्). —D1 om. (hapl.) 31$^{d}$–32$^{c}$. —$^{d}$) D4 om. (hapl.?) after कुंभकर्णो up to कुंभकर्णो in 34$^{b}$. Ś B1 D2.3.7.8.13 G2 M1.2 महाहवे; Ñ2 B2.3 G1 M5 महामृधे; V1.3 B4 तथा मृधे; V2 तथाहवे (for महाबलः).

32 D4 om. 32; D1 om. 32$^{abc}$ (for both, cf. v.l. 31). —$^{d}$) D1 [ऽ]दहद्बली; D2.13 महद्बली; D7 G2 ददाह सः; D9–11 [ऽ]प्यनिर्दहत्; T2.3 व्यनिर्दहत् (for विनिर्दहत्). Ś Ñ V B D2.8.12 स ददाह (Ñ1 B1 D2 ददाह स) महाबलः. ※ Cg: विनिर्दहत् विनिरदहत्. ※

33 D4 om. 33 (cf. v.l. 31). —$^{a}$) Ñ2 V B2–4 D1 हन्यमानास्; D13 हतसैन्यास् (for वध्यमानास्). —Ś2 D9 om. 33$^{b}$–34$^{a}$. —$^{b}$) Ñ1 -यूथपनायकाः; D10.11 -यूथाः प्लवंगमाः; M1.2 -यूथपयूथपाः; M5 -यूथविनायकाः (for -यूथा विनायकाः). ※ Cg: विनायकाः विगतनायकाः. ※ —$^{d}$) Ś B1 D1–3.8.13 तदा; D12 तथा (for भृशम्). Ñ1 D10.11 विकृतैः स्वरैः; Ñ2 V B2–4 विकृत(V B4 °तं)स्वरं(B3 °राः); G3 विस्वरैर्भृशं (for विस्वरं भृशम्).

G. 6. 46. 39
B. 6. 67. 41
L. 6. 46. 38

अनेकशो वध्यमानाः कुम्भकर्णेन वानराः ।
राघवं शरणं जग्मुर्व्यथिताः खिन्नचेतसः ॥ ३४
तमापतन्तं संप्रेक्ष्य कुम्भकर्णं महाबलम् ।
उत्पपात तदा वीरः सुग्रीवो वानराधिपः ॥ ३५
स पर्वताग्रमुत्क्षिप्य समाविध्य महाकपिः ।
अभिदुद्राव वेगेन कुम्भकर्णं महाबलम् ॥ ३६
तमापतन्तं संप्रेक्ष्य कुम्भकर्णः प्लवंगमम् ।
तस्थौ विवृतसर्वाङ्गो वानरेन्द्रस्य संमुखः ॥ ३७

34 D4 om. up to कुंभकर्णे in $34^b$ (cf. v.l. 31); Ś2 D9 om. $34^a$ (cf. v.l. 33). —$^a$) Ś1 Ñ V B D1–3.8.12.13 G (ed.) ततो निपात्य (G [ed.] °पीड्य) मानास्ते (Ś1 Ñ1 D2.8.12 °स्तु). —$^c$) Ś Ñ V B D1–4.8.12.13 राघवाभ्यां (B3 °वौ ते) स (Ś1 D2.8.12 °भ्याश) माजग्मुः. —$^d$) Ś Ñ1 V1 B1 D1–4.8.12 व्यथार्ता नष्टचेतसः (Ñ1 °ताः); Ñ2 V2.3 B2–4 यथा विष्णुं दिवौकसः; D13 भयार्ता नष्टचेतसः; G2 व्यथिताश्च मुहुर्मुहुः. —After 34, D5–7.10.11 T G1.2 M3 ins.:

1186* प्रभग्नान्वानरान्दृष्ट्वा वज्रहस्तात्मजात्मजः ।
अभ्यधावत वेगेन कुम्भकर्णं महाहवे ।
शैलशृङ्गं महद्गृह्य विनदंश्च मुहुर्मुहुः ।
त्रासयन्राक्षसान्सर्वान्कुम्भकर्णपदानुगान् ।
चिक्षेप शैलशिखरं कुम्भकर्णस्य मूर्धनि । [5]
स तेनाभिहतो मूर्ध्नि शैलेनेन्द्ररिपुस्तदा ।
कुम्भकर्णः प्रजज्वाल क्रोधेन महता तदा ।
सोऽभ्यधावत वेगेन वालिपुत्रममर्षणम् ।
कुम्भकर्णो महानादस्त्रासयन्सर्ववानरान् ।
शूलं ससर्ज वै रोषादङ्गदे तु महाबलः । [10]
तमापतन्तं बलवान्युद्धमार्गविशारदः ।
लाघवान्मोक्षयामास बलवान्वानरर्षभः ।
उत्पत्य चैनं सहसा तलेनोरस्यताडयत् ।
स तेनाभिहतः कोपात्प्रमुमोहाचलोपमः ।
स लब्धसंज्ञोऽतिबलो मुष्टिं संगृह्य राक्षसः । [15]
अपहासेन चिक्षेप विसंज्ञः स पपात ह ।
तस्मिन्प्लवगशार्दूले विसंज्ञे पतिते भुवि ।
तच्छूलं समुपादाय सुग्रीवमभिदुद्रुवे ।

[(l. 1) D6 T1 अर्दयंतं हरिचमूं (for the prior half). D6 T2.3 M3 -सुत- (for -[आ]त्मज-). —(l. 3) G1 समुद्धृत्य; M3 महान्गृह्य (for महद्गृह्य). D7.10.11 विनदन्स; T3 विनेदुश्च; G2 विनद्य च (for विनदंश्च). —(l. 4) G1 -पुरोगमान् (for -पदानुगान्). —For l. 2–4, D6 subst.:

1186* (A) गृह्य शैलस्य शिखरमङ्गदः प्राद्रवत्तदा ।

—(l. 5) G1 -श्रृंगेण (for -शिखरं). —(l. 6) D5 T1 M3 -हतोत्यर्थं; D10.11 G2 -हतस्तेन; T2.3 -हते मूर्ध्नि (for -हतो मूर्ध्नि). D5 T1 M3 गिरिशृंगेण मूर्धनि (for the post. half). —(l. 7) G1 चचालाथ (for प्रजज्वाल). D5 T1 M3 कोपेन (for क्रोधेन). G1 [आ]वृतः (for तदा). —(l. 8) G1.2 M3 अमर्षणः (for अमर्षणम्). —(l. 9) D6 महातेजास्; G1 महानादं (for महानादस्). D5 T1 त्रासयामास (for °यन्सर्व-) —(l. 10) D5 T1 G1 अंगदे सु-; D6 T2.3 अंगदाय; D7 अंगदं तु; M3 अंगदे स. —(l. 11) D11 G1 तदा; Cg as above (for तम्). D5 T1 M3 बुद्धा तु (for बलवान्). D6 T2.3 -विचक्षणः (for -विशारदः). ꕥ Ct: तदा पतन्तम्। पुंस्त्वमार्षम्. ꕥ —(l. 12) D5 M3 मोचयामास. G2 वानरोत्तमः (for वानरर्षभः). —(l. 13) T1 [ए]तं (for [ए]नं). D7.10.11 G2 तरसा (for सहसा). M3 [उ]रसि ताडयत्. —(l. 14) G1 तलेन (for स तेन). D6 T2.3 क्रोधात् (for कोपात्). D5 T1 G1 प्रचचाल (for प्रमुमोह). —(l. 15) D5 T1 M3 बलवान् (for ऽतिबलो). D6 लब्धसंज्ञोतिबलवान् (for the prior half). D5 T1 M3 आवर्त्य (for संगृह्य). —(l. 16) D5.6 T2.3 M3 अप (D6 °ग्र) हस्तेन (for अपहासेन). G2 वालिपुत्रे विचिक्षेप (for the prior half). D5 om. स (subm.). T1 G1 transp. विसंज्ञः and स.]

35 V1 D6 M5 om. (hapl.) 35–36. —After $35^{ab}$, D3 ins. a passage relegated to App. I (No. 34). —G3 om. (hapl.) $35^c$–36. B3 transp. $35^{cd}$ and $36^{ab}$. —$^c$) Ś D8.12 T2 G2 महावीरः; Ñ V2 B1–3 D1.3.4.13 ततो वीरः; D7 महावेगः; G1 महातेजाः (for तदा वीरः). D2 दुद्राव शालहस्तं (subm.). —$^d$) B4 वानरेश्वरः; D2 वानरोत्तमः.

36 V1 D2.6 G3 M5 om. 36 (for all except D2, cf. v.l. 35). B3 transp. $35^{cd}$ and $36^{ab}$. —$^a$) D5 T1 उद्धृत्य (for उत्क्षिप्य). Ś Ñ V2.3 B D1.3.4.8.12.13 स शा (Ś Ñ1 D8.12 सा) लवृक्षं सहसा (Ś2 moth-eaten for सा); G1 M3 पर्वताग्रं समुत्क्षिप्य. —$^b$) Ñ1 D4 प्रगृह्याथ (D4 °पि); Ñ2 B2 प्रगृह्य च; B3.4 संप्रगृह्य (for समाविध्य). V3 B4 D9–11 महाबलः (for °कपिः). —$^c$) D4 अदुद्रावत (sic) (for अभिदुद्राव). —$^d$) Ñ1 V2 B2.3 महाबलः; G (ed.) महाहवे (for °बलम्).

37 Ñ2 V2.3 B2–4 transp. $^{ab}$ and $^{cd}$. —$^a$) D13 दृष्ट्वाथ; G3 आलोक्य (for संप्रेक्ष्य). D1 समापतंतं स दृष्ट्वा. —$^b$) Ś V1 B1 D2.3.8.12 महाबलः; D1.13 प्रतापवान्; D4 महाबलं (for प्लवंगमम्). Ñ1 कुंभकर्णं महाबलं; Ñ2 V3 B2–4 राक्षसं वानराधिपः; V2 वानरं राक्षसाधिपः. —$^c$) Ś Ñ1 B2 D2.4.5.12 T1 M3 विकृत-; Ñ2 V B1.3.4 D1.6.7.9–11 विवृत्त-; D3 विधृत- (for विवृत-). —$^d$) G1 संमुखं. Ś Ñ V B2–4 D1–3.8.12 वानरेंद्रः (Ś V2 D1.8.12 °द्रं; B3 D2.3 °द्रं) समुत्सुकः; B1 D13 राक्षसेंद्रः समुत्सुकः; D4 भक्षयन्वानरोत्तमः; D5.9.10 T1 G3 M वानरेंद्र (M5 °द्रं) समुन्मुखः.

कपिशोणितदिग्धाङ्गं भक्षयन्तं महाकपीन् ।
कुम्भकर्णं स्थितं दृष्ट्वा सुग्रीवो वाक्यमब्रवीत् ॥ ३८
पातिताश्च त्वया वीराः कृतं कर्म सुदुष्करम् ।
भक्षितानि च सैन्यानि प्राप्तं ते परमं यशः ॥ ३९
त्यज तद्वानरानीकं प्राकृतैः किं करिष्यसि ।
सहस्वैकं निपातं मे पर्वतस्यास्य राक्षस ॥ ४०
तद्वाक्यं हरिराजस्य सत्त्वधैर्यसमन्वितम् ।
श्रुत्वा राक्षसशार्दूलः कुम्भकर्णोऽब्रवीद्वचः ॥ ४१
प्रजापतेस्तु पौत्रस्त्वं तथैवर्क्षरजःसुतः ।
श्रुतपौरुषसम्पन्नस्तस्माद्गर्जसि वानर ॥ ४२
स कुम्भकर्णस्य वचो निशम्य
व्याविध्य शैलं सहसा मुमोच ।
तेनाजघानोरसि कुम्भकर्णं
शैलेन वज्राशनिसंनिभेन ॥ ४३
तच्छैलशृङ्गं सहसा विकीर्णं
भुजान्तरे तस्य तदा विशाले ।
ततो विषेदुः सहसा प्लवंगमा
रक्षोगणाश्चापि मुदा विनेदुः ॥ ४४

G. 6. 46. 49
B. 6. 67. 60
L. 6. 46. 48

38 [a]) D8 कर्ण- (for कपि-). —[b]) Ś Ñ1 B1 D2.8.12.13 महाहरीन्; Ñ2 V B2-4 D5 T1 M3 प्लवंगमान् (for महाकपीन्). —[c]) D4 कुंभकर्णस्य संस्थित्वा (sic); G1 कुंभकर्णं पुरः स्थित्वा; G3 कुंभकर्णाग्रतः स्थित्वा; M5 कुंभकर्णमभिप्रेक्ष्य.

39 [a]) Ñ2 V B2-4 निहता मे (for पातिताश्च). Ś Ñ1 B1 D1-4.8.12.13 निहताः कपिशार्दूलाः. —[b]) D1.13 सुदुःकरं; D4 सुदुस्तरं. —V3 om. 39[cd]. —[c]) G (ed.) त्रासितानि (for भक्षि°). Ñ2 [इ]ह; B2.3 हि; B4 ह (for च). —[d]) D2 च (for ते). T1 संप्राप्तं ते परं यशः.

40 [a]) B3 G1 त्यज्यतां; M1.2 त्यजैतद् (for त्यज तद्). Ś Ñ1 V2 B1.4 D1-4.8.12.13 त्यजैतान्वानरान्सर्वान्; Ñ2 V1.3 B2 त्यज्यंतां वानराः सर्वे. —[b]) Ś D2.8.12 किमेभिर्दीनचेष्टितैः; Ñ1 D4 किमेभिस्त्वं विरुध्यसे; Ñ2 V B2-4 किमेभिस्त्वं (V3 °भिः किं) करिष्यसि; B1 D1.3.13 किमेभिस्ते निरुद्यमैः. —[c]) Ñ1 सहस्वैकं; B1 सहस्वैक-; D4 अर्हस्यैकं; D6 सहस्वैक-; T1 सहस्वैतं; G3 सहस्वेनं. —G3 damaged from पातं up to पर्वत in [d]. —[d]) Ś Ñ V1.2 B D1-4.8.12.13 शा(Ś B3 D1.8.12 सा)लवृक्षस्य (for पर्वतस्यास्य). Ñ1 विश्रुतः (for राक्षस).

41 Ñ1 reads 41-42[b] in marg. V3 om. 41[ab]. —[a]) G1 कपि- (for हरि-). —[b]) B3 स तु (for सत्त्व-). Ñ1 V2 B3 -धैर्यसमन्वितः. —[d]) Ñ1 इदं (for वचः).

42 Ñ1 reads 42[ab] in marg. (cf. v.l. 41). Ś B1 D1-3.8.12 om. 42[ab]. —[a]) V3 D4 (before corr. as in text).13 पुत्रस् (for पौत्रस्). D4.11 तु (for त्वं). B2 transp. तु and त्वं. —[b]) D5.9 [ऋ]क्षराजसुतः (unmetric) (for °रजःसुतः). Ñ V B2-4 D4.13 ऋक्ष(V1 illeg.)-राजस्य संमतः(B3 सत्सुतः; D4 विश्रुतः; D13 संगतः). ❀ Cv: प्रजापतेस्तु पौत्रस्त्वं तथैवर्क्षरजःसुतः इति. ❀ —After 42[ab], Ñ V B2.3 D4.13 ins.:

1187* जानस्त्वं तस्य च क्षेत्रे भास्करेण महात्मना।

[ D13 क्षेत्रे वै (for च क्षेत्रे.]

—[c]) Ś2 D8 श्रुतः; D9-11 T2.3 धृति- (for श्रुत-). T2 -संयुक्तस् (for -सम्पन्नस्). —[d]) Ś Ñ V B1.4 D1-5.8.12.13 G3 M1-3 कस्माद् (for तस्माद्). T2 गर्हसि (for गर्जसि). —After 42, Ś2 Ñ V B D1-4.8.12.13 ins.:

1188* कर्मणा दर्शयात्मानं यावत्त्वां प्रमथाम्यहम्।

[ B1 न मथामि; D3 पोथयामि (for प्रमथामि). ]

43 G3 damaged for 43. —[b]) Ñ V B2-4 व्याविध्य शालं; D4 तं वृक्षराजं; D9 विव्याध शैलं (for व्याविध्य शैलं). G1 महात्मा (for मुमोच). Ś B1 D1-3.8.12.13 व्याक्षिप्तशूलस्य मुमोच सा(B1 D2.3.13 शा)लं. —[c]) D6 जघान तेन (for तेनाजघान). B4 D1 कुंभकर्णः (sic). —[d]) G2 शक्र- (for वज्र-). Ś D1-3.8.12.13 वृक्षेण शक्राशनिसंनिभेन; Ñ V B2-4 D4 वृक्षेण कालानल(V1 °शनि)स(V2 °सं)प्रभेण(Ñ1 B2.4 D4 °संनिभेन); B1 वृक्षेण कालाग्निसमप्रभेण.

44 D4 om. (hapl.?) 44. —[a]) Ś Ñ V B D1.3.8.12.13 स शा(Ś Ñ1 D8.12 सा)लवृक्षः (for तच्छैलशृङ्गं). Ś D2.8.12 [अ]वमग्नो; Ñ1 B3 च भग्नो; Ñ2 V B1.2.4 वि(B1 प्र)भग्नो; D1.13 [अ]वभग्नो; D6 T2.3 विशीर्णं; D7.9-11 विभिन्नं; L (ed.) विमुक्तो (for विकीर्णं). —[b]) T1 तथा; G2 महा- (for तदा). Ś D2.8.12 प्रभग्नः; Ñ2 V B D1.3 निमग्नः; D13 विमग्नः (for विशाले). —[c]) G2 तथा; G3 तदा (for ततो). D1.3 G3 विनेदुः; D2.9 निपेदुः (for विषेदुः). —V3 illeg. from प्लवंगमा up to 45[a]. Ñ2 V1 B1-3 D1.3.5.7.9-12 T1 G1 M प्लवंगा (for प्लवंगमा). —[d]) G3 damaged from णाश्चापि up to व्याविध्य in 45[c]. Ś B3 D2.8.12 तदा; D11 मुखा (sic) (for मुदा). Ś D8.12 प्रणेदुः (for विनेदुः).

G. 6. 46. 50
B. 6. 67. 61
L. 6. 46. 49

स शैलशृङ्गाभिहतश्चुकोप
ननाद कोपाच्च विवृत्य वक्त्रम् ।
व्याविध्य शूलं च तडित्प्रकाशं
चिक्षेप हर्यृक्षपतेर्वधाय ॥ ४५
तत्कुम्भकर्णस्य भुजप्रविद्धं
शूलं शितं काञ्चनदामजुष्टम् ।
क्षिप्रं समुत्पत्य निगृह्य दोर्भ्यां
बभञ्ज वेगेन सुतोऽनिलस्य ॥ ४६
कृतं भारसहस्रस्य शूलं कालायसं महत् ।
बभञ्ज जानुमारोप्य प्रहृष्टः प्लवगर्षभः ॥ ४७
स तत्तदा भग्नमवेक्ष्य शूलं
चुकोप रक्षोधिपतिर्महात्मा ।
उत्पाट्य लङ्कामलयात्स शृङ्गं
जघान सुग्रीवमुपेत्य तेन ॥ ४८
स शैलशृङ्गाभिहतो विसंज्ञः
पपात भूमौ युधि वानरेन्द्रः ।
तं प्रेक्ष्य भूमौ पतितं विसंज्ञं
नेदुः प्रहृष्टा युधि यातुधानाः ॥ ४९

45 $V_3$ illeg. for $45^{a}$; $G_3$ damaged up to व्याविध्य in $45^{c}$ (for both cf. v.l. 44). —$^{a}$) $G_1$ damaged for शृंगाभिहतश्चु. Ś $\tilde{N}_2$ $V_{1.2}$ B $D_{1-3.8.12.13}$ स शा(Ś $D_{8.12}$ सा)लवृक्षाभिहतश्; $\tilde{N}_1$ $D_4$ स शालवृक्षेण हतश्. —$^{b}$) $D_{9-11}$ रोषाच्च; $G_1$ कोपेन (for कोपाच्च). Ś V B $D_{2.3.8.12.13}$ जहास चैवाथ; $\tilde{N}_1$ $D_4$ जहास वेगेन; $\tilde{N}_2$ उच्चैर्जहासाथ (for ननाद कोपाच्च). $B_1$ $G_3$ विवृत्तवक्त्रः($B_1$ °नेत्रं) (for विवृत्य वक्त्रम्). $D_1$ जगाम चैनं परिवृत्य वक्त्रं. —$^{c}$) Ś $D_{1.3.8}$ विव्याध (for व्याविध्य). $G_2$ $M_{1.2}$ स- (for च). —$G_1$ damaged from शं in -प्रकाशं up to चिक्षेप in $^{d}$. $\tilde{N}_2$ -प्रभं स (for -प्रकाशं). —$^{d}$) $\tilde{N}_1$ $D_{2-4.8-13}$ G $M_{1.2.5}$ हर्यक्षपतेर्; $T_3$ रक्षोधिपतिर्. $D_7$ शरीरे (for वधाय).

46 $V_3$ om. $46^{ab}$. —$^{a}$) $B_4$ $D_1$ $M_5$ तं (for तत्). Ś $D_{2.4.8.12}$ भुजात्; $D_7$ कर- (for भुज-). $Ś_2$ $D_{3.13}$ -प्रवृद्धं; $\tilde{N}_1$ $B_2$ -प्रमृष्टं; $\tilde{N}_2$ $B_{1.3}$ -प्रसृष्टं; $V_1$ -प्रयुक्तं; $D_1$ -प्रतिष्ठं; $D_2$ $M_5$ -प्रमुक्तं; $D_4$ प्रशूलं; $D_6$ -प्रविष्टं; $D_{9-11}$ -प्रणुन्नं; $T_2$ -प्रदिष्टं; $G_2$ -[अ]पविद्धं (for -प्रविद्धं). —$^{b}$) Ś Ñ $V_1$ B $D_{1-3.8.12.13}$ -वज्रजुष्टं; $V_2$ -पमविद्धं (sic); $D_{7.9-11}$ -दामयष्टिं; $M_3$ -धामजुष्टं (for -दामजुष्टम्). $D_4$ शितं महाकांचनवज्रगुप्तं. —$^{cd}$) $D_1$ समुत्पाद्य; $G_3$ समुत्प्लुत्य; $M_1$ समुत्पात्य (for °त्पत्य). —$G_3$ damaged from निगृह्य up to $47^{b}$. $\tilde{N}_1$ $B_1$ $D_4$ प्रगृह्य (for नि°). $V_3$ illeg. for दोर्भ्यां. $D_{12}$ नसो रुरुंज (for निगृह्य दोर्भ्यां). $Ś_1$ जग्राह; $D_{12}$ निगृह्य (for बभञ्ज). $G_2$ transp. निगृह्य and बभञ्ज. $Ś_1$ N V $B_{1-3}$ $D_{1-4.12.13}$ वीरस्त($Ś_1$ राजा त; $D_{12}$ दोर्भ्यां त)र($B_1$ °रः सह)सा बलेन; $B_4$ वीरः परवीरहंता (for वेगेन सुतोऽनिलस्य). $Ś_2$ $D_8$ नभो बभंज तरसा बलेन($Ś_2$ कपींद्रः) (for $^{d}$).

47 $G_3$ damaged for $47^{ab}$ (cf. v.l. 46). —$^{a}$) $B_1$ $D_{4.6.7}$ $T_{2.3}$ $G_{1.2}$ -सहस्रेण (for -सहस्रस्य). —$^{b}$) $D_8$ सर्व- (for शूलं). Ñ B कार्ष्णायसं (for कालायसं). Ś $\tilde{N}_2$ V B $D_{1-3.8.12}$ दृढं; $\tilde{N}_1$ गुरुं (for महत्). $D_4$ कार्ष्णायसममंगलं; $D_{13}$ शूलं कालायसप्रभं. —$^{c}$) Ś $B_1$ $D_{8.12}$ $M_3$ जानुन्यारोप्य; $D_{5.6}$ $T_{1.3}$ जान्वथा°; $T_2$ जान्ववष्टभ्य (for जानुमारोप्य). —$^{d}$) Ś $\tilde{N}_1$ $B_{1.4}$ $D_{1-4.7-13}$ संप्र($D_{7.9-11}$ तदा)हृष्टः प्लवंगमः. —After 47, $D_{5-7.9-11}$ S ins.:

1189* शूलं भग्नं हनुमता दृष्ट्वा वानरवाहिनी ।
हृष्टा ननाद बहुशः सर्वतश्चापि दुद्रुवे ।
बभूवाथ परित्रस्तो राक्षसो विमुखोऽभवत् ।
सिंहनादं च ते चक्रुः प्रहृष्टा वनगोचराः ।
मारुतिं पूजयांचक्रुर्दृष्ट्वा शूलं तथागतम् । [5]

[(l. 1) $G_2$ सा हरि- (for वानर-). —(l. 2) $G_2$ बहुधा (for बहुशः). $D_5$ $T_1$ $M_{1.2}$ महास्वनं; $T_3$ [अ]भिदुद्रुवे; $G_2$ [अ]पि शुश्रुवे (for [अ]पि दुद्रुवे). —$D_{6.7}$ S om.; K(ed.) reads within brackets l. 3. —(l. 4) $G_3$ damaged from दं in -नादं up to प्र- in प्रहृष्टा. $G_1$ transp. ते and चक्रुः. $D_{11}$ प्रहृष्ट- (for प्रहृष्टा). —(l. 5) $D_{7.9}$ $G_2$ पूजयामासुर् (for पूजयांचक्रुर्). $D_{6.7}$ $T_{2.3}$ $M_{1.2}$ द्विधाकृतं (for तथागतम्).

48 $^{a}$) $\tilde{N}_2$ $B_{1.2.4}$ $D_{2.3}$ $G_1$ स तं तदा($B_1$ °था); $V_2$ एतं तथा; $D_{5.9-11}$ $T_1$ $G_2$ $M_{1.2}$ स तत्तथा; $D_6$ ततस्तदा (for स तत्तदा). $B_3$ transp. भग्नम् and शूलं. $V_{1.3}$ ततः प्र($V_3$ स तत्प्र)भग्नं समवेक्ष्य शूलं. —$^{b}$) $D_4$ दैत्याधिपतिर् (for रक्षोधि°). $\tilde{N}_1$ दुरात्मा. —$^{c}$) $T_{2.3}$ शैलात् (for लङ्का-). Ś Ñ V B $D_{1-4.8.9.12.13}$ उत्पाट्य($D_9$ °द्यम्य) शृंगं सहसाचलस्य; $D_7$ $M_5$ उत्पाट्य शैलं तरसा सशृंगं. ❀ Cr: त्रिकूटशिखरमध्यस्थलङ्काद्वारे स्थित्वा युध्यतः कुम्भकर्णस्य, उत्पाट्य लङ्कामलयात् स शृङ्गमिति देशान्तरस्थितमलयशृङ्गोत्पाटनं कथमुपपद्यत इति चेत्तदनुगुणातिप्रमाणशरीरत्वान्न दोषः।; so also Cg which adds लङ्कामलयशब्देन त्रिकूटं वोपचर्यते।; Ck: लङ्कासमीपवर्ती मलयो लङ्कामलयः।; so also Ct. ❀ —$^{d}$) G (ed.) उत्पत्य (unmetric) (for उपेत्य). Ś $\tilde{N}_1$ $D_{1.3.4.8.12}$ अभिप्रम($D_3$ °न)र्दयन्; $B_1$ अतिप्रहृष्टः; $B_4$ अविप्रमर्दनं; $D_2$ L (ed.) अभि(L [ed.] °ति)प्रमर्दं; $D_{13}$ अरिप्रमर्दनः (for उपेत्य तेन).

49 $^{a}$) $\tilde{N}_1$ $D_4$ महात्मा (for विसंज्ञः). —$^{b}$) $G_3$ स च (for युधि). —$B_4$ om. (hapl.?) $49^{c}$ – $50^{b}$. —$^{c}$) $\tilde{N}_1$

तमभ्युपेत्याद्भुतघोरवीर्यं
स कुम्भकर्णो युधि वानरेन्द्रम् ।
जहार सुग्रीवमभिप्रगृह्य
यथानिलो मेघमतिप्रचण्डः ॥ ५०

स तं महामेघनिकाशरूप-
मुत्पाट्य गच्छन्युधि कुम्भकर्णः ।
रराज मेरुप्रतिमानरूपो
मेरुर्यथात्युच्छ्रितघोरशृङ्गः ॥ ५१

ततः समुत्पाट्य जगाम वीरः
संस्तूयमानो युधि राक्षसेन्द्रैः ।
शृण्वन्निनादं त्रिदशालयानां
प्लवंगराजग्रहविस्मितानाम् ॥ ५२

ततस्तमादाय तदा स मेने
हरीन्द्रमिन्द्रोपममिन्द्रवीर्यः ।
अस्मिन्हृते सर्वमिदं हृतं स्या-
त्सराघवं सैन्यमितीन्द्रशत्रुः ॥ ५३

विद्रुतां वाहिनीं दृष्ट्वा वानराणां ततस्ततः ।
कुम्भकर्णेन सुग्रीवं गृहीतं चापि वानरम् ॥ ५४

हनूमांश्चिन्तयामास मतिमान्मारुतात्मजः ।
एवं गृहीते सुग्रीवे किं कर्तव्यं मया भवेत् ॥ ५५

यद्वै न्याय्यं मया कर्तुं तत्करिष्यामि सर्वथा ।
भूत्वा पर्वतसंकाशो नाशयिष्यामि राक्षसम् ॥ ५६

G. 6. 46. 60
B. 6. 67. 74
L. 6. 46. 60

निरीक्ष्य; Ñ2 V3 B2.3 D7.9–11 G2 तं वीक्ष्य ( for तं प्रेक्ष्य ). Ñ1 निसंज्ञं ( for त्रि° ). —d ) T1 भुवि; M3 तत्र ( for युधि ).

50 B4 D3 om. 50ab ( for B4 cf. v.l. 49). —a) D5.7.9–12 T1.2 G1.2 M1.2.5 समभ्युपेत्य ( for त° ). Ñ2 -रूपं; V1 -विक्रमं; B2.3 M1.2 -वीर्यः ; D2 G3 -कर्मा ( for -वीर्यं ). Ś B1 D1.8.12.13 [ अ ]थ सुवी( D1.13 °घी )रकर्मा ( D1 °वीर्यं ); Ñ1 [ अ ]द्भुतवीर्यकर्मा. D4 तमभ्युत्पपाताद्भु-** कर्म. —c ) G1 जग्राह ( for जहार ). Ś2 D8 अतिप्रगृह्य; D6 G1 M1.2 अभिप्रसह्य; D13 अभिप्रवेक्ष्य ( for अभिप्रगृह्य ). —d ) V1.3 B1.3 D5.7.9–11 इव प्रचंडः ( for अतिप्र° ).

51 G ( ed. ) om. 51. —a) M5 महाघोर- ( for °मेघ- ). V1.3 -निकाशकायम् ; B1 -निकाशवंतम् ( for °रूपम् ). —b ) D7 M1.2 उद्धृत्य ( for उत्पाट्य ). —c ) Ś Ñ V1.3 B1.2.4 D1–4.8.12.13 मेघ- ( for मेरु- ). —d ) Ś1 Ñ2 V B1–3 D5.6.10.11 G1 M5 र्युच्छ्रित- ; Ñ1 ह्युद्यत- ; B4 र्युत्थित- ; D1.3.9 T2 M1–3 Cg [ अ ]भ्युच्छ्रित- ; D2 [ अ ]-त्युद्धृत- ; D4 [ अ ]भ्युद्यत- ; D13 T3 [ अ ]प्युच्छ्रित- ( for [ अ ]-त्युच्छ्रित- ). Ś D8.12 -सार- ; Ñ1 D4 -दीप्त- ; V1.2 B2.4 -चारु- ; G1 -रौद्र- ( for -घोर- ). ❀ Cg : स्वाकारसादृश्याय प्रथमं मेरूपादानम् । द्वितीयं तु सुग्रीवधारणकालिकसादृश्याय. ❀

52 a ) Ś Ñ1 V2 B1 D1–4.8.12.13 स तं ( for ततः ). B2.3 M3 Cg तमुत्पाट्य; D7 समादाय; D10.11 M1.2 Ct तमादाय ( for समुत्पाट्य ). Ś D8.12 G1 वीरं ( for वीरः ). —b ) D8 संभूयमानो ( for संस्तूय° ). Ñ V1.2 B D1–3.13 राक्षसौघैः ; D4 राक्षसाब्धैः (sic) ; D6.7 G2 यातुधानैः ; D9–11 T1 M1.2.5 राक्षसेंद्रः ( for राक्षसेन्द्रैः ). —c ) V3 illeg. up to त्रिद्. D8 निनादांस्. Ś Ñ V1 B1–3 D2–13 T Ck.t त्रिदिवालयानां; M1.2 दिवि चालयानां ; Cr.m.g as in text ( for त्रिदशालयानां ).

53 a ) Ś D8 G2 समादाय. B3 समापततं ( for तदा स मेने ). —b ) Ś1 -वीर्यं; G2 -वैरिः ( for -वीर्यः ). Ś2 V2 B1.4 D1–3.8.12.13 इंद्रोपमतुल्यवीर्य( V2 B1.4 °र्यः ). —c ) Ś Ñ V1.2 B D1.2.6–13 T1 M1.2 अस्मिन्हृते; V3 M5 तस्मिन्ह ( V3 °न्ह )ते. Ś Ñ1 V1 B4 D1–3.8.12 विशस्तं; Ñ2 V2.3 B2.3 D12 विनष्टं; B1 विपन्नं; D5–7.9–11 T1 हतं स्यात् ( for हृतं स्यात् ). D4 अस्मिन्हते वीर्यमुपैति शत्रं. —d ) Ś D8.12 इहैव चोग्रं ; D1 अतींद्रशत्रुः ; D4 अतीव शत्रो ( sic ) ( for इतीन्द्रशत्रुः ).

54 a ) B1 विक्रुवां ( for विद्रुतां ). —b ) Ñ1 V3 D4.7.9–11 इतस्ततः ; G1 नरस्विनां ( for ततस्ततः ). —Ñ2 illeg. for d. —d ) T1 सुग्रीवं ( sic ) ( for गृहीतं ). Ñ1 V1.2 B2–4 D4.7 G2 गृहीतं च( B3 प्रगृहीत- ) हरीश्वरं( Ñ1 वानरेश्वरं; D4 वानरं रणे ).

55 b ) Ñ2 V1.2 B D1.3.13 पवनात्मजः ( for मारुतात्मजः ). —d ) Ś B1.4 D2–4.8.12.13 कार्यं वै; D1 कार्यं हि ( for कर्तव्यं ). D4 तदा ( for मया ). B3 [ ए ]व च ( for भवेत् ). Ñ1 ( m. also as in text ) किं कार्यं वै भविष्यति; G1 किं करिष्यामि चाहवे.

56 a ) Ś Ñ1 B1.4 D1–4.8.12.13 यत्तु; Ñ2 V D9.10 यद्धि; B2 युद्धे ( for यद्वै ). Ś1 D12 G1 M1.3 न्यायं; D5 T1 कार्यं; D13 त्याज्यं ( for न्याय्यं ). D8 समाकर्तुं ( for मया कर्तुं ). —b ) D9–11 [ अ ]संशयं; T2.3 सर्वदा ( for सर्वथा ). —c ) Ś Ñ V B D1–4.8.12.13 महापर्वतसंकाशं. —d ) M5 राक्षसान्. —After 56, Ñ V B2.4 D2.13 ins. :

1190* मोचयिष्यामि सुग्रीवं तं हत्वा देवकण्टकम् ।

[ Ñ2 B2 हत्वा तं ( by transp. ); V1 हत्वैनं ( for तं हत्वा ). D2 हत्वा दैवतकंटकं ( for the post. half ). ]

G. 6. 45. 61
B. 6. 67. 75
L. 6. 46. 61

मया हते संयति कुम्भकर्णे
महाबले मुष्टिविशीर्णदेहे ।
विमोचिते वानरपार्थिवे च
भवन्तु हृष्टाः प्लवगाः समग्राः ॥ ५७
अथ वा स्वयमप्येष मोक्षं प्राप्स्यति पार्थिवः ।
गृहीतोऽयं यदि भवेत्त्रिदशैः सासुरोरगैः ॥ ५८
मन्ये न तावदात्मानं बुध्यते वानराधिपः ।
शैलप्रहाराभिहतः कुम्भकर्णेन संयुगे ॥ ५९
अयं मुहूर्तात्सुग्रीवो लब्धसंज्ञो महाहवे ।
आत्मनो वानराणां च यत्पथ्यं तत्करिष्यति ॥ ६०
मया तु मोक्षितस्यास्य सुग्रीवस्य महात्मनः ।
अप्रीतिश्च भवेत्कष्टा कीर्तिनाशश्च शाश्वतः ॥ ६१
तस्मान्मुहूर्तं काङ्क्षिष्ये विक्रमं पार्थिवस्य नः ।
भिन्नं च वानरानीकं तावदाश्वासयाम्यहम् ॥ ६२
इत्येवं चिन्तयित्वा तु हनूमान्मारुतात्मजः ।
भूयः संस्तम्भयामास वानराणां महाचमूम् ॥ ६३
स कुम्भकर्णोऽथ विवेश लङ्कां
स्फुरन्तमादाय महाहरिं तम् ।
विमानचर्यागृहगोपुरस्थैः
पुष्पाग्र्यवर्षैरवकीर्यमाणः ॥ ६४

---

57 a) D9 missing from हते up to विशी in b. Ś Ñ V B1.2.4 D1–4.8.12.13 संप्रति (for संयति). —b) Ś Ñ1 B1.4 D1–4.8.12.13 -निपातभग्ने; Ñ2 V1.2 B2.3 D5 T1 G3 M3 -विकीर्ण° (for -विशीर्णदेहे). —c) Ś Ñ1 V B D1.3.4.8.12.13 विमोक्षिते (for विमोचिते). B3 -यूथपार्थिवे (for -पार्थिवे च). —d) T3 G3 भवंति. B3 तुष्टाः (for हृष्टाः). D3 प्लवंगाः (unmetric). Ñ2 V B2.3 D5 T1 M3 समस्ताः; D8 समेताः; D13 om. (for समग्राः).

58 a) D13 अन्यथा (for अथ वा). Ś Ñ V1.2 B2.4 D1–4.8.12.13 G1 स्वय(Ñ1 शीघ्र)मेवैष; B3 [अ]पि स्वयं मोक्षं; M1.2 स्वयमेवेह (for °मप्येष). —b) B2.4 D9–11 वानरः (for -पार्थिवः). B1 D4 आत्मानं मोक्षयिष्यति; B3 प्राप्स्यत्येव परं हरिः. —c) Ś Ñ V B D1–4.8.12.13 यद्यपि (for ऽयं यदि). —d) Ś Ñ V1.2 B3.4 D1–3.8.12.13 समहोरगैः; B1 D4 वानराधिपः; M1.2 सासुरासुरैः (sic); M3 सागरोरगैः; Cm.g.k.t as in text (for सासुरोरगैः).

59 a) D6 [ए]तावता (for तावद्). —b) Ñ1 G1 वानरेश्वरः; D13 वानरात्मजः; M5 वानरर्षभः. —d) M5 वानरः (for संयुगे).

60 a) Ñ2 V B2.3 अस्मिन्; D1.3.13 स्वयं (for अयं). B2.3 मुहूर्ते. —b) Ñ2 V B2.3 महाबलः; B1 भविष्यति; D4 यथा भवेत् (for महाहवे). —c) D2 तु (for च). B4 G3 वानरेंद्राणां (for वानराणां च).

61 a) Ś Ñ1 B1 D1–4.8.9.12 वि(D9 च) मोक्षितस्य; B4 D13 [अ]पि(D13 [अ]धि-) मोक्षितस्य; T3 तु मोचितस्य. —b) G2 ह्यपराधो (for सुग्रीवस्य). —c) Ś2 D8.12 अकीर्तिश्च; D1 अप्रतीतिर् (for अप्रीतिश्च). D13 [अ]भवत् (for भवेत्). D6 काष्ठा (for कष्टा). —d) Ñ2 V जायते; D6 तत्त्वतः (for शाश्वतः).

62 a) Ś D8.12 वीक्षिष्ये (for काङ्क्षिष्ये). D7 G2 Ctp तस्मात्क्षणं प्रतीक्षिष्ये. —b) G1 विक्रमे; Ct as in text (for विक्रमं). V3 D10.11 मोक्षितस्य (for पार्थिवस्य). Ś Ñ1 B3 D5.8.10–12 T1 M3 Ct तु; Ñ2 V B2.4 D4.9 M5 च; B1 D1–3.13 हि; T3 सः (for नः). —c) B1.4 हि (for च). D4 विद्रुतं (for भिन्नं च). —d) Ś Ñ V B1.4 D1–3.8.13 यावद् (for तावद्).

63 a) Ś Ñ2 V1.2 B3.4 D1.8.12.13 स; V3 D5.9–11 [अ]थ; D2 G3 च (for तु). B1 चिंतयामास; T1 चिंत** तु (damaged). —b) D13 मतिमान् (for हनूमान्). B1 पवनात्मजः. —c) D4 आश्वासयामास च (subm). —d) D1.4 महाचमूः; M1.2 महाबलं. —After 63, Ñ V B2.4 D2.13 ins.:

1191* कृच्छ्रेण तु समाश्वास्य संगम्य च ततस्ततः ।
वृक्षाद्रिहस्ता हरयस्तस्थुरालिखिता इव ।

[D2 om. l. 1. —(l. 1) V च (for तु). —(l. 2) G (ed.) तस्थुः संग्राममूर्धनि (for the post. half).]

64 a) Ñ2 B2 प्र- (for ऽथ). M1 om.; M2 वीथिं (for लङ्कां). —b) Ś D8.12 महाहरींद्रं; Ñ1 V B D1–4.13 T2 महाहरीशं; Ñ2 illeg.; D5 T1.3 M3 महाकपिं तं; M5 तदा हरिं तं (for महाहरिं तम्). —c) Ś D8.12 विमानवर्यै. B1 D4 -पुर(D4 -गृह)गोपुरेषु (for -गृहगोपुरस्थैः). —d) Ś Ñ1 V1.2 B3.4 D1–3.8.12 माल्याग्र-(B3.4 °ऽग्र्य-); Ñ2 B1.2 D4 माल्योप-(Ñ2 B2 °घ-); V3 माल्यादि-; D6.11 पुष्पाग्र-; D13 मालाग्र्य-; M1.2 सुपुष्प-; Cm.g.t as in text (for पुष्पाग्र्य-). G2 स राजपुष्पैर् (for पुष्पाग्र्यवर्षैर्). Ś D2.8.12 M3.5 अभिकीर्यमाणः; D7.9–11 अभिपूज्यमानः (for अवकीर्यमाणः). —After 64, D5–7.9–11 S ins.:

1192* लाजगन्धोदवर्षैस्तु सिच्यमानः शनैः शनैः ।
राजवीथ्यास्तु शीतत्वात्संज्ञां प्राप महाबलः ।

[(l. 1) G2 पुष्प-; M1 जाल- (meta.) (for लाज-). T2 -गंधौघवर्षैश्च; T3 -गंधादिवर्षैस्तु. D9–11 सेव्यमानः; T2 सिंच्यमानः. —(l. 2) D5 T1 M3 -मार्गस्य; T2 G1 M1.2 -वीथ्याश्च; G2 -वीथ्याः सु- (for -वीथ्यास्तु). M1.2 परंतपः (for महाबलः).

G. 6. 51. 40
B. 6. 71. 42
L. 6. 52. 46

तेऽर्दिता बाणवर्षेण भिन्नगात्राः प्लवंगमाः ।
न शेकुरतिकायस्य प्रतिकर्तुं महारणे ॥ ४१

तत्सैन्यं हरिवीराणां त्रासयामास राक्षसः ।
मृगयूथमिव क्रुद्धो हरियौंवनमास्थितः ॥ ४२

स राक्षसेन्द्रो हरिसैन्यमध्ये
नायुध्यमानं निजघान कंचित् ।
उपेत्य रामं स धनुःकलापी
सगर्वितं वाक्यमिदं बभाषे ॥ ४३

रथे स्थितोऽहं शरचापपाणि-
र्न प्राकृतं कंचन योधयामि ।
यस्यास्ति शक्तिर्व्यवसाययुक्ता
ददातु मे क्षिप्रमिहाद्य युद्धम् ॥ ४४

तत्तस्य वाक्यं ब्रुवतो निशम्य
चुकोप सौमित्रिरमित्रहन्ता ।
अमृष्यमाणश्च समुत्पपात
जग्राह चापं च ततः स्मयित्वा ॥ ४५

क्रुद्धः सौमित्रिरुत्पत्य तूणादाक्षिप्य सायकम् ।
पुरस्तादतिकायस्य विचकर्ष महद्धनुः ॥ ४६

पूरयन्स महीं शैलानाकाशं सागरं दिशः ।
ज्याशब्दो लक्ष्मणस्योग्रस्त्रासयन्रजनीचरान् ॥ ४७

---

तांश्चैव तु हरीन्सर्वान्; $D_{2}$ तांश्च सर्वांश्च स हरीन्; $G_{2}$ स तांश्चैव हरीन्सर्वान्; $M_{5}$ तांश्च सर्वान्हरींश्चैव.—$^{b}$) $D_{8}$ स चायसैर् (for सर्वायसैर्). $D_{4}$ प्रविश्य हरिवाहिनीं.—$V_{3}$ om. $40^{cd}$.—$^{c}$) $T_{3}$ वीर्याद् (for विव्याध). Ś $Ñ_{2}$ $V_{1.2}$ B $D_{1-4.8-12}$ $G_{1}$ [अ]भिमुखान्; $Ñ_{1}$ $D_{13}$ $M_{5}$ [अ]भिमुखं; Cg as in text (for [अ]भिमुखः).—$^{d}$) Ś $B_{1}$ $D_{1-4.8.12}$ भीमकर्मा (for °कायो). $B_{2}$ $D_{5.7.9-11}$ $T_{1}$ $G_{1.2}$ $M_{1.2.5}$ विशारदः; $D_{6}$ महासुरः (for निशाचरः).

41 $T_{1}$ damaged for $^{a}$ (except तेऽर्दि).—$^{a}$) $G_{2}$ अर्दिता. $B_{3}$ भेदिताः शरवर्षेण.—$^{b}$) $D_{1}$ भिन्नवक्त्राः; $D_{5}$ $T_{2.3}$ भग्नदेहाः; $G_{3}$ $M_{3}$ भग्नगात्राः (for भिन्नगात्राः). $D_{7.9-11}$ पराजिताः (for प्लवंगमाः).—$^{d}$) $V_{3}$ पुरः स्थातुं (for प्रतिकर्तुं). Ñ V $B_{2-4}$ $D_{1.7.9-11.13}$ $M_{1.2}$ महाहवे (for °रणे). Ś $B_{1}$ $D_{2-4.8.12}$ पुरतः स्थातुमाहवे.

42 $^{a}$) $D_{13}$ तु हरीणां च; $G_{3}$ हरीणां रक्षो (unmetric) (for हरिवीराणां).—$^{b}$) $Ñ_{1}$ $V_{3}$ $B_{1}$ $D_{13}$ नाश($D_{13}$ ह्रास)-यामास. $V_{1.2}$ रावणिः; $G_{3}$ वीर्यवान् (for राक्षसः).—$^{c}$) $M_{1}$ गजयूथम्.—$^{d}$) Ś $D_{8.12}$ हर्यक्षो वनदर्पितः; Ñ $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ केसरी बल($V_{1.2}$ $B_{3}$ °वन)दर्पितः; $V_{3}$ $B_{1}$ $D_{1-3.7.9-11}$ $T_{3}$ $G_{1.2}$ $M_{3.5}$ हरियौंवनदर्पितः; $D_{5}$ $T_{1}$ हर्यक्षो वनमास्थितः.

43 $^{a}$) $Ñ_{1}$ $V_{1.2}$ $B_{4}$ $D_{3.4.7.9-11.13}$ $G_{2}$ -यूथ- (for -सैन्य-).—$^{b}$) Ś $D_{8.12}$ ह्ययुध्यमानं; $Ñ_{2}$ $D_{2}$ (both with hiatus) अयु°; $D_{1.9}$ $G_{2}$ नायुध्यमानान्; $D_{4}$ °मानो (for नायुध्यमानं). Ś $Ñ_{2}$ $D_{1.2.4.12}$ न जघान; $D_{8}$ च ज°; K(ed.) विज° (for निजघान). $Ñ_{1}$ $D_{13}$ $M_{5}$ किंचित्; $Ñ_{2}$ $V_{3}$ $D_{4}$ $G_{3}$ कश्चित्; $B_{1}$ $D_{1.9}$ $G_{2}$ कांश्चित्; Ct as in text (for कंचित्).—$^{c}$) $Ñ_{1}$ $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ समेत्य; $Ñ_{2}$ $V_{3}$ $B_{1}$ $D_{9-11}$ उत्पत्य; $T_{3}$ आदित्य- (for उपेत्य). Ś Ñ $V_{3}$ $B_{1}$ $D_{2.3.8.12}$ च($Ñ_{2}$ स) महाधनुष्मान्; $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ सहसा धनुष्मान्; $T_{3}$ स धनुःकलापं; $G_{2}$ स धनुष्कपाणी (for स धनुःकलापी).—$^{d}$) Ś $D_{8}$ सुगर्वितं.—$T_{1}$ damaged from दं up to रथे in $44^{a}$. ❀ Cv : सगर्वितः सगर्वम्. ❀

44 $T_{1}$ damaged up to रथे in $^{a}$ (cf. v.l. 43).—$^{a}$) Ś $Ñ_{1}$ $B_{1}$ $D_{1-4.8.12.13}$ अयं; $Ñ_{2}$ $V_{1.2}$ $B_{2.3}$ एष; $V_{3}$ असं-; $B_{4}$ एकः; $T_{2.3}$ उप-; $G_{1}$ रथ- (for रथे).—$^{b}$) $T_{3}$ प्रापितं (for प्राकृतं). $Ñ_{1}$ $G_{2.3}$ $M_{2}$ कांचन.—$^{c}$) $Ñ_{1}$ $D_{13}$ या यस्य; $D_{4}$ यस्याद्य; $D_{5}$ $T_{1}$ $M_{3}$ यश्चास्ति; $M_{1.2}$ यस्यास्य (for यस्यास्ति). $D_{5}$ $T_{1}$ $M_{3}$ कश्चिद्; $M_{5}$ बुद्धिर् (for शक्तिर्). $V_{3}$ $B_{3}$ $D_{4.5.9-11}$ $T_{1.2}$ व्यवसाययुक्तो; $D_{2}$ भवतां स शीघ्रम्; $M_{3}$ °सुक्तो (for व्यवसाययुक्ता). $G_{2}$ यस्यास्ति वीर्यं व्यवसाययुक्तं.—$^{d}$) $D_{6}$ दास्यामि ते. Ś $Ñ_{1}$ $D_{3.4.6-12}$ शीघ्रम् (for क्षिप्रम्). $Ñ_{2}$ $V_{1.2}$ $B_{2-4}$ स मे प्रयच्छत्विह युद्धमध्ये($B_{2}$ °द्य); $V_{3}$ $B_{1}$ ददातु मे युद्धमिहा($V_{3}$ °वा)द्य शीघ्रं; $D_{2}$ आयातु युद्धाय दृढायुधो मां; $D_{13}$ ददातु क्षिप्रं निहतोपि युद्धं.

45 $^{c}$) $D_{1.3}$ अमृष्यमाणस्य. $B_{1}$ स तम्; $B_{4}$ स सम्- (for च सम्-).—$^{d}$) $D_{1}$ स; $D_{13}$ तु (for च). $D_{5}$ $T_{1}$ तदा (for ततः). $Ñ_{2}$ $V_{2}$ $B_{2.4}$ हसित्वा; $V_{1}$ $D_{4}$ प्रहस्य; $B_{3}$ [ऽ]र्थसिद्ध्यै (for स्मयित्वा). Ś $V_{3}$ $B_{1}$ $D_{2.3.8.13}$ जग्राह बाणांश्च ततः प्रहस्य($D_{2}$ °गृह्य). ❀ Cm.g.t : स्मयित्वा अनादृत्य "ष्मिङ् अनादरे" इति धातुः(Ct °रे। इडार्षः). ❀ —After 45, $Ñ_{1}$ ($^{ab}$ in m.) $B_{2}$ $D_{13}$ read 57 for the first time, repeating it in its proper place.

46 Ś $V_{3}$ $B_{1}$ $D_{2-4.8.12}$ om. $46^{ab}$.—$^{a}$) Ñ $V_{1.2}$ $B_{2-4}$ ततः (for क्रुद्धः).—$^{b}$) $Ñ_{1}$ $B_{3}$ तृणवद् (for तूणादा-). $Ñ_{1}$ $V_{1.2}$ $B_{2-4}$ $D_{1}$ चारिहा (for सायकम्).—For $46^{ab}$, $D_{13}$ subst.:

1299* ततः स सौमित्रिरुपेत्य तूणा-
द्विक्षिप्य चापं परवीरहन्ता ।

—$^{c}$) Ś $V_{3}$ $B_{1}$ $D_{2-4.8.12}$ चातिकायस्य.—$^{d}$) $D_{1}$ महाधनुः (for महद्धनुः).—For $46^{cd}$, $Ñ_{1}$ $D_{13}$ subst.:

1300* अतिकायाग्रतश्चापि धनुर्विस्फार्य वीर्यवान् ।

—After 46, Ñ $V_{2}$ $B_{2.4}$ $D_{13}$($Ñ_{1}$ $D_{13}$ after 1300*) read 1301*; while $V_{1}$ $B_{3}$ ins. 1301*.

47 $^{a}$) $D_{9-11}$ महीं सर्वाम्; $D_{13}$ महासैन्यान्; $M_{5}$

सौमित्रेश्चापनिर्घोषं श्रुत्वा प्रतिभयं तदा ।
विसिष्मिये महातेजा राक्षसेन्द्रात्मजो बली ॥ ४८
अथातिकायः कुपितो दृष्ट्वा लक्ष्मणमुत्थितम् ।
आदाय निशितं बाणमिदं वचनमब्रवीत् ॥ ४९
बालस्त्वमसि सौमित्रे विक्रमेष्वविचक्षणः ।
गच्छ किं कालसदृशं मां योधयितुमिच्छसि ॥ ५०
न हि मद्बाहुसृष्टानामस्त्राणां हिमवानपि ।
सोढुमुत्सहते वेगमन्तरिक्षमथो मही ॥ ५१
सुखप्रसुप्तं कालाग्निं प्रबोधयितुमिच्छसि ।
न्यस्य चापं निवर्तस्व मा प्राणाञ्जहि मद्गतः ॥ ५२
अथ वा त्वं प्रतिष्टब्धो न निवर्तितुमिच्छसि ।
तिष्ठ प्राणान्परित्यज्य गमिष्यसि यमक्षयम् ॥ ५३
पश्य मे निशितान्बाणानरिदर्पनिषूदनान् ।
ईश्वरायुधसंकाशांस्तप्तकाञ्चनभूषणान् ॥ ५४

G. 6. 51. 52
B. 6. 71. 55
L. 6. 52. 58

---

महाशैलान् ( for महीं शैलान् ). Ś Ñ V B D2-4.8.12 पूरयित्वा( Ñ1 °यंतं ) महाशैलान्( Ś Ñ1 D8.12 °शैलम् ; B3 °सैन्यम् ) ; D1 पूरयन्महतीं शैलान्. —b) G (ed.) घोषेण ( for आकाशं ). Ś Ñ1 B3.4 D6.8.12 T2.3 G2 सागरान् ; V3 B1 गगनं ( for सागरं ). —D4 om. $47^{cd}$. B3 reads $47^{cd}$ in marg. —c) V1 ज्याशब्दं . Ś D7.8.12 T3 G2 [ अ ]ग्रे; V1 [ उ ]च्चैस् ( for [ उ ]ग्रस् ). —d) Ś D8.12 त्रासयन्ननुजीविनः ; V1 D3 T3 M1.2 त्रासयामास राक्षसान्. —For $47^{cd}$, Ñ V2 B2.4 D13 subst. and read after 46( Ñ1 D13 after 1300* ) ; while V1 B3 ins. after 46 :

1301* त्रासं प्रजग्मू रक्षांसि ज्याघोषेण महात्मनः ।

[ Ñ1 D13 त्रासयामास; Ñ2 त्रासं जग्मुश्च; V1 * * प्रजग्मू. Ñ1 महामनाः ( for महात्मनः ). ]

—After 47, D2 ins. :

1302* मोदयित्वा नरानीकं ययौ सिंह इव द्विपम् ।

48 a) Ś V3 B1.2 D8 धनुषो घोरं; Ñ2 V1.2 B3.4 D2.3.12 धनुषो घोषं ( for चापनिर्घोषं ). Ñ1 D4.13 स सौमित्रेर्ध( D13 °त्रिध )नुर्घोषं. —b) D4 -भयंकरं ( for -भयं तदा ). —c) Ś B1 D3.5.6.9.12.13 T1.3 M3.5 विसिस्मिये; Ñ2 V1.2 B2-4 स विस्मितो; D1.2.4.7.8.11 T2 G1.3 विसिस्मये ( for विसिष्मिये ). —d) Ś D1-3.8.12 M5 -सुतो बली ; Ñ1 D13 [ आ ]त्मजो रणे ; Ñ2 V1.2 B2-4 -सुतोभवत् ; D7 T3 G2 -[ आ ]त्मजस्तदा ( for -[ आ ]त्मजो बली ). V3 B1 राक्षसेंद्रस्तदा बली; D4 राक्षसेंद्रो महारणे.

49 a) Ñ2 V1.2 B2.4 M1.2 ततो; B1 तथा; B3 D7.9-11 तदा ( for अथ ). Ñ1 D4.13 अतिकायः प्रकुपितो. —b) Ś V3 B1 D2.3.8.12 T3 अग्रतः ; Ñ1 D4.9.13 आस्थितं; Ñ2 M5 उत्तमं; V1.2 B2-4 उद्यतं ( for उत्थितम् ). —c) D8 निश्चितं ( for निशितं ). Ñ1 D4.13 आदाय निशितान्बाणान्. —d) M5 चैव वचो ( for वचनम् ).

50 b) D1 संग्रामेषु ( for विक्रमेषु ). Ś1 D12 विचक्षणः ; B1 विलक्षणः ( for [ अ ]विचक्षणः ). Ñ V2 B2-4 D4.13 ( with hiatus ) अज्ञा( Ñ1 B2.4 D4.13 °जा )तबलविक्रमः. —B4 reads $50^{cd}$ in marg. —c) Ñ1 D4.13 कालपाशं मां( D4 च ); D1.6.9-11 M5 °संकाशं ( for °सदृशं ). —d) Ñ1 D13 G1 त्वं ; D5 मा ; D8 सं- ( for मां ). —After 50, B4 reads $52^{c}$ - $53^{b}$.

51 Ś D4.5.8.12 om. (hapl.) $51^{a}$-$52^{b}$. —a) Ñ1 मद्बाण-; D1.3 मच्चाप-. Ñ1 V1.2 B2-4 D13 -मुक्तानां ; ( for -सृष्टानाम् ). —b) Ñ V B D2.3.13 शराणां; D1.6.7.9-11 G1.3 बाणानां ( for अस्त्राणां ). Ñ2 हिमवानिव; V3 B1 D2.3 नतपर्वणां; D1 T2.3 मघवानपि ( for हिमवानपि ). —c) B3 प्रसहते ( for उत्सहते ). —d) Ñ1 दिशोपि वा; V1.2 B2 धरापि वा; G2 अथो हिती ( corrupt ) ( for अथो मही ). Ñ2 B3 G (ed.) अंतरिक्षचरोपि वा( G [ ed. ]वै ) ; V3 B1 अंतरि( B1 °री )क्षगतो मही; B4 D13 अंतरीक्षं धरा- ( D13 दिशो )पि वा.

52 Ś D4.5.8.12 om. $52^{ab}$ (cf. v.l. 51 ). —a) Ñ2 -सुप्तं तु ( for -प्रसुप्तं ). D1 सुखसुप्तं भुजंगं हि. —b) V3 D7.9-11 वि- ; D2.3 किं; D6 T1 G1 M3 नि- ( for प्र- ). Ñ V1.2 B2-4 D1.13 न बोधयि( Ñ2 V2 B2 संबोधि )तुमर्हसि. —B4 reads $52^{c}$ - $53^{b}$ after 50. —c) D1 त्यक्त्वा ( for न्यस्य ). —D5 om. $52^{d}$ - $53^{a}$. —d) D1.7.10.11 प्राणान्न; D4 प्राणांस्त्वं; D9 प्राणान्सं- ; T2 न प्राणाञ् ; M1.5 मा प्राणं; L (ed.) मा प्राणैस् ( for मा प्राणान् ). —D1 om. from जहि up to तिष्ठ प्राणा in $53^{c}$. Ś V3 B1 D2.3.8.12 त्वं विमोक्ष्यसे; Ñ1 D4.13 त्यक्ष्यसे हतः ; Ñ2 V1.2 B2-4 त्वं परित्यज ( for जहि मद्गतः ).

53 D1 om. up to तिष्ठ प्राणा in $53^{c}$ ; D5 om. $53^{a}$ (for both, cf. v. l. 52 ). B4 reads $52^{c}$ - $53^{b}$ after 50. —a) Ś Ñ V1.2 B D2.3.8.12.13 T1 G Cr प्रति( D2 परि )ष्टंभान् ; V3 प्रतिष्ठस्व; D4 परित्रस्तो; D9 परिस्तंभान् ; D10.11 M1.2 Ck.t °स्तब्धो; T2 प्रविष्टब्धो; M5 प्रतित्रिभो; Cm.g as in text ( for प्रतिष्टब्धो ). —b) B3 विवर्तयितुम् ; D5 मा * * प्राप्तुम् ( न निवर्तितुम् ). —d) Ñ1 D4 नयिष्यामि. D1 G1 यमालयं ( for यमक्षयम् ).

54 a) D5 निहितान् ( for निशितान् ). —b) Ñ2 V1.3 B2-4 D4.7.9-11.13 रिपु- ; M5 इंद्र- ( for अरि- ). Ś1 Ñ1 V1.2 B3.4 D2.8.12 -विनाशनान् ; Ś2 -विनाशितान् ; Ñ2 B2 -विनाशकान् ; D1 -निकृंतनान् ; D6 -निषूदितान् ( for

G. 6. 51. 53
B. 6. 71. 56
L. 6. 52. 59

एष ते सर्पसंकाशो बाणः पास्यति शोणितम् ।
मृगराज इव क्रुद्धो नागराजस्य शोणितम् ॥ ५५

श्रुत्वातिकायस्य वचः सरोषं
सगर्वितं संयति राजपुत्रः ।
स संचुकोपातिबलो बृहच्छ्री-
रुवाच वाक्यं च ततो महार्थम् ॥ ५६

न वाक्यमात्रेण भवान्प्रधानो
न कत्थनात्सत्पुरुषा भवन्ति ।
मयि स्थिते धन्विनि बाणपाणौ
विदर्शयस्वात्मबलं दुरात्मन् ॥ ५७

कर्मणा सूचयात्मानं न विकत्थितुमर्हसि ।
पौरुषेण तु यो युक्तः स तु शूर इति स्मृतः ॥ ५८

-निषूदनान् ). —V3 om. 54$^{cd}$. —$^{c}$ ) D13 -तूणांश्च ( for -संकाशांस् ). —$^{d}$ ) Ś2 D1.4 -भूषितान् ; B1 -संनिभान् ( for -भूषणान् ). —After 54, Ś B1.3 ( m. ) D2.3.8 ins. :

1303* सितपीतामलस्तीक्ष्णो मुक्ताविद्रुमभूषणः ।

55 $^{ab}$ ) D2 मे ( for ते ). Ś V3 B1 D2.3.8 सूर्यसंकाशो; Ñ2 B2–4 सर्पसदृशो; D1 दर्प° ( for सर्पसंकाशो ). B1 भूमिः ( for बाणः ). D13 एतेनैवाग्निसंकाशाः पास्यंति शोणितं मृधे. —After 55$^{ab}$, Ñ2 V1.2 B2–4 ins. ; while Ñ1 D13 ins. after 55 ; whereas D4 subst. for 55$^{cd}$ :

1304* निदाघे रश्मिभिस्तीक्ष्णैरादित्यः सलिलं यथा ।

[ Ñ1 D4.13 निदाघ- . D13 -रश्मिविस्तीर्णैर् ( for °भिस्तीक्ष्णैर् ). Ñ1 D13 आदित्येन यथा जलं ( D13 जलाशयं ) ( for the post. half ). ]

—$^{c}$ ) Ñ1 D13 मृगराडिव संक्रुद्धो. —$^{d}$ ) Ñ2 B2 बाणः पास्यति; B1.3.4 नागपोतस्य ( for नागराजस्य ). —After 55, Ś Ñ2 V B D1–3.8.12 ins. ; while Ñ1 D4.13 cont. after 1304* :

1305* यद्यपि त्वां हनिष्यामि का मे कीर्तिर्भविष्यति ।
अजातवीर्यं बालं च ख्यातस्य त्रिदिवालये ।
कामस्तु यदि ते मोहान्मां योधयितुमाहवे ।
यत्नाद्गृहाण स्वशरांस्ततस्त्यक्ष्यसि जीवितम् ।

[ D1 om. l. 1. —( l. 1 ) Ś V3 B1 D2–4.8.12 वधिष्यामि ( for हनिष्यामि ). Ś1 V3 B1 D2–4 न मे ; Ś2 D8.12 न ते ( for का मे ). —D4 om. l. 2. —( l. 2 ) Ñ2 अज्ञातवीर्यं. V B1.2 बाणं च; B3 बाणस्य ( for बालं च ). Ñ1 अजातबलवीर्यं च; D1 जातवीर्यमलालं च ( for the prior half ). D1.13 ख्यातं च. Ś D8.12 त्रिदशालये ( for त्रिदिवालये ). —( l. 3 ) Ś D8.12 कामाद्वा; Ñ1 D1.4.13 कामं तु; B4 कामं ते. Ś D8.12 वा मोहान् ; Ñ B2.3 D1.13 ते कामो; B4 वा कामो ( for ते मोहान् ). Ñ1 B3 बोधयितुम् ; Ñ2 B4 घोपयितुम्. Ś D4.8.12 इच्छसि ( for आहवे ). —( l. 4 ) Ś D8.12 विशिखांस् ; B1 सुशरांस्. Ñ B2–4 त्यज सर्वात्मना बाणांस् ; V1.2 त्यज्य सर्वात्मना बाणं; D1 गृह्य बाणान्प्रयत्नेन; D13 मत्प्रयुक्तैः शितैर्बाणैस् ( for the prior half ). Ñ2 विद्धस् ( for ततस् ). ]

—After 55, D5–…9–11 S ( D5 T1 repeat after 1311* ) ins. :

1306* इत्येवमुक्त्वा संक्रुद्धः शरं धनुषि संदधे ।

[ D5.9 T1 ( D5 T1 [ second time ] ) G1.2 M1.2.5 शरान् ( for शरं ). ]

56 $^{a}$ ) Ñ1 D4 सगर्वं; Ñ2 V1.2 B2–4 सुघोरं ( for सरोषं ). —After 56, D11 repeats $^{bc}$. —$^{b}$ ) Ś B2 D8 सुगर्वितं; Ñ1 D4 तदा भृशं; D13 सगर्धितं ( for सगर्वितं ). B4 संप्रति ( for संयति ). —$^{c}$ ) Ñ V1.2 B2–4 न ( for स ). B2 [ अ ]तिवरो; D13 °बलं ( for °बलो ). D9–11 ( with hiatus ; D11 second time ) मनस्वी ( for बृहच्छ्रीर् ). —$^{d}$ ) B3 स; M5 तु ( for च ). Ñ V1.2 B2–4 D4.13 G1 M1.2 महात्मा; D9.10 मनस्वी ( for महार्थम् ). —For 56$^{cd}$, Ś V3 B1 D2.3.8.12 subst. :

1307* न चैव चुक्रोध बले धृतात्मा
प्रोवाच चैनं स ततो महात्मा ।

[ ( l. 1 ) Ś D8.12 बली ( for बले ). —( l. 2 ) V3 चैवं. V3 B1 तु तं ( for ततो ). ] ;

While D1 subst. for 56$^{cd}$ :

1308* उवाच सौमित्रिरुदारसत्त्वो
न्यायोपपन्नं च शुभं च वाक्यम् ।

57 Ñ1 ( $^{ab}$ in m. ) B2 D13 read 57 after 45, repeating it here. —$^{ab}$ ) Ñ V B2–4 D4.13 भवंति शूरा ( for भवान्प्रधानो ). D1 न कत्थमानाः ; D2 न कत्थनाः ; D3 विकत्थनाः ; D6 T2 M5 विकत्थनात् ( for न कत्थनात् ). Ñ1 D4.13 ( Ñ1 D13 second time ) किं कथ्यसे प्राकृतवत्त्वमद्य ( for $^{b}$ ). Ñ1 B2 D13 ( all second time ) रणे न गर्जंति वृथा हि ( D13 °थाति ) शूराः किं गर्जसे प्राकृतवत्त्वमद्य. —$^{c}$ ) D1 G1 संयति ( for धन्विनि ). Ñ1 ( second time ) B2 ( first time ) G1 चापपाणौ ; D9 बाणचापे ( for बाणपाणौ ). D4 मयि स्थिते चापिनि चापपाणौ. —$^{d}$ ) Ś Ñ1 B2 D8.12.13 ( Ñ1 B2 D13 [ all first time ] ) प्रदर्शयस्व; Ñ V1.2 B2–4 D5.6.9–11.13 ( Ñ1 B2 D13 [ second time ] ) T M1–3 निदर्शयस्व; K ( ed. ) निदर्शय स्व- ; L ( ed. ) विदर्शय स्व- ( for विदर्शयस्व ). B1 D4 [ अ ]द्य ( for [ आ ]त्म- ). Ñ1 D13 ( second time ) यथावत् ( for दुरात्मन् ).

58 $^{a}$ ) Ś Ñ V B D1–4.6.8.12.13 T2.3 दर्शय ( for सूचय ). —$^{b}$ ) D13 कथयितुम् ( for विकत्थितुम् ). —$^{c}$ ) Ś Ñ2 V1 B D2–4.8.12 हि; D5 च ( for तु ). D6 संयुक्तः .

सर्वायुधसमायुक्तो धन्वी त्वं रथमास्थितः ।
शरैर्वा यदि वाप्यस्त्रैर्दर्शयस्व पराक्रमम् ॥ ५९

ततः शिरस्ते निशितैः पातयिष्याम्यहं शरैः ।
मारुतः कालसंपक्कं वृन्तात्तालफलं यथा ॥ ६०

अद्य ते मामका बाणास्तप्तकाञ्चनभूषणाः ।
पास्यन्ति रुधिरं गात्राद्बाणशल्यान्तरोत्थितम् ॥ ६१

बालोऽयमिति विज्ञाय न मावज्ञातुमर्हसि ।
बालो वा यदि वा वृद्धो मृत्युं जानीहि संयुगे ॥ ६२

लक्ष्मणस्य वचः श्रुत्वा हेतुमत्परमार्थवत् ।
अतिकायः प्रचुक्रोध बाणं चोत्तममाददे ॥ ६३

ततो विद्याधरा भूता देवा दैत्या महर्षयः ।
गुह्यकाश्च महात्मानस्तद्युद्धं ददृशुस्तदा ॥ ६४

G. 6. 51. 68
B. 6. 71. 65
L. 6. 52. 74

—$^{d}$) Ś Ñ V1.2 B2–4 D2.4.6.8.12.13 स शूर इति कथ्य(D2 चोद्य)ते(Ñ V1.2 B2–4 D4.13 संज्ञितः); V3 B1 D3 L[ed.] स नः (D3 हि; L [ed.] वै) शूर इहोच्यते(V3 °तां).

59 $^{a}$) D13 -सुसंयुक्तो (for -समा°).—$^{b}$) Ś Ñ1 B1 D2–4.8.12.13 धन्वी रथवरे स्थितः.

60 $^{a}$) D6 T2.3 ततस्ते निशितैः शीर्षं.—$^{b}$) Ñ V1 B2–4 D4 मार्गणैः; D13 सायकैः (for [अ]हं शरैः).—D9 om. $60^{c}-61^{b}$.—$^{c}$) T2 दूरतः (for मारुतः). Ñ1 V2 D10.11 कालसंयुक्तं; D4 °पक्कं च; D13 °संपन्नं (for °संपक्कं).—$^{d}$) Ś D8.12 वृक्षात्; D2 वृंतं; D4 वृद्दत्; Cr.g as in text (for वृन्तात्).

61 D9 om. $61^{ab}$ (cf. v.l. 60). G2 om. $61^{a}-62^{b}$.—$^{b}$) B1 D4 शुद्ध- (for तप्त-). G3 सुमुखाः कंकपत्रिणः.—$^{c}$) Ś Ñ V B D1–4.8.12 देहात् (for गात्राद्).—$^{d}$) D9 -शल्यांतरस्थितं. Ś V3 B1 D2.4.8.12.13 M1.2.5 पुरा देवा यथामृतं(D4.13 M1.2 °वामृतं यथा); Ñ V1.2 B2–4 अमृतं विबुधा इव; D1.3.6 पुरा(D6 दिव्या)मृतमिवामराः.

62 G2 om. $62^{ab}$ (cf. v.l. 61).—$^{b}$) Ñ V1.2 B2.3 D1.4.13 ना(Ñ2 V1 मा)वज्ञां कर्तुम्; B4 D6.9–11 न चा(B4 मां ना)वज्ञातुम्; D7 G1 नावज्ञातुं त्वम् (for न मावज्ञातुम्). D4 इच्छसि (for अर्हसि). V3 B1 नावज्ञातुमिहार्हसि.—After $62^{ab}$, D1–3 ins.:

1309* किं दष्टः कृष्णसर्पेण बालेन न विपद्यते।

—$^{c}$) T1 वृद्धो वा (by transp.). Ñ2 V1.2 B2–4 बालं वा यदि वा वृद्धं.—$^{d}$) Ś D3.8.12 नाभ्येति; B4 जानीथ (for जानीहि). Ñ2 V B D1 मां रणे; D5.6 T मां तव (for संयुगे). Ñ1 D13 न से जीवन्गमिष्यसि; D2 शूरो योभ्येति संयुगे; D4 न प्राणैः संगमिष्यसि.—After 62, Ñ V1.2 B2–4 ins.; while D1.2 cont. after 1311*:

1310* एकेन हि शरेण त्वां हन्तुं शक्नोमि राक्षस।
दर्शयस्व इदानीं मे वीर्यमस्त्रबलं च यत्।
ततस्त्वां नाशयिष्यामि दृष्टपौरुषविक्रमम्।

[(l. 1) D2 सांप्रतं (for राक्षस).—(l. 2) Note hiatus between दर्शयस्व and इदानीं. Ñ2 B2 D1.2 दर्शय त्वम् (for दर्शयस्व). B3 त्वदीयं (for इदानीं). Ñ2 महद्; D2 च तद् (for च यत्).—(l. 3) D1.2 दृष्टविज्ञातपौरुषं (for the post. half).]

—After 62, D1.2.5–7.9–11 S ins.:

1311* बालेन विष्णुना लोकास्त्रयः क्रान्तास्त्रिभिः क्रमैः।

[D5 T1 transp. लोकास् and क्रान्तास्. D7.9–11 M5 त्रिविक्रमैः.]

—Then D5 T1 repeat 1306*.

63 $^{b}$) Ñ1 D13 सारमर्थवत्; V3 B4 T1 M1.2.5 परमार्थवित् (for परमार्थवत्).—V2 om. $63^{cd}$.—$^{d}$) T2.3 उत्तमम् (for चोत्त°). D5 T3 आदधे. Ś D8.12 बाणं चाथ समादधे; V3 B1 D1–3 बाणं(V3 B1 °णांश्) चास्य समादधे.—After 63, Ś V(V2 after $63^{ab}$ owing to om.) B1.2 D1–3.8.12 ins.; while B3 ins.(m.) only l. 4–8 after l. 6 of 1317*; D6 T2.3 ins. after 65 (first time):

1312* तमापतन्तं सौमित्रिस्त्रिधा चिच्छेद लाघवात्।
रावणिः परमामर्षी शरैरेनमुपाद्रवत्।
ततः शरसहस्रेण संछाद्य रघुनन्दनम्।
विभीषणं च सामात्यं यूथपांश्चापि दुद्रुवे।
संत्रास्य वानरीं सेनां शरवर्षैर्महाभुजः। [5]
सौमित्रिमभिदुद्राव पुनरेव महामृधे।
तमापतन्तं सहसा प्रत्यगृह्णान्महाभुजः।
लक्ष्मणो राक्षसश्रेष्ठं शरैरत्यग्निसंनिभैः।

[V2 om. l. 1–2.—(l. 1) B2 युधि (for त्रिधा). V3 B1 सायकैः; B2 नालवत् (for लाघवात्).—B2 om. (hapl.?) l. 2.—(l. 2) V3 राक्षसः (for रावणिः). D6 परमामर्षः. D3.8.12 शनैर् (for शरैर्).—(l. 3) V3 B1 प्रच्छाद्य; D1 संच्छिद्य (for संछाद्य).—(l. 4) D3.6 T2.3 सहामात्यं. Ś V D2.3.12 [अ]भि-; B2 [ए]व; D6 T2.3 वि- (for [अ]पि).—(l. 5) B2 त्रासयन् (for संत्रास्य). B2 महाशक्तिर् (for शरवर्षैर्). T2 शरवर्षेण राक्षसः (for the post. half).—Ś1 om. (hapl.) l. 6–7. T2.3 om. l. 6. D3 reads l. 6–8 in marg.—(l. 7) B3 तं चापतंतं; D1 एवं **तं (for तमापतन्तं). Ś2 B1 D6.8 प्रतिगृह्णन्; V2 B3 प्रगृह्य च; (for प्रत्यगृह्णन्).—(l. 8) V2.3 B1.2 D1.3 शरैर(V3 B1 °श्चा)ग्निसमप्रभैः (B2 °शिखोपमैः; D1 °रिवोपमैः); D6 T2.3 शरैराशीविषोपमैः (for the post. half).]

64 $^{a}$) D5 om. from विद्याधरा up to प्रचि in $65^{c}$. Ñ V1 B2–4 D4(after corr.)13 यक्षाः; M1.2 देवा (for

G. 6. 51. 69
B. 6. 71. 66
L. 6. 52. 75

ततोऽतिकायः कुपितश्चापमारोप्य सायकम् ।
लक्ष्मणाय प्रचिक्षेप संक्षिपन्निव चाम्बरम् ॥ ६५
तमापतन्तं निशितं शरमाशीविषोपमम् ।
अर्धचन्द्रेण चिच्छेद लक्ष्मणः परवीरहा ॥ ६६
तं निकृत्तं शरं दृष्ट्वा कृत्तभोगमिवोरगम् ।
अतिकायो भृशं क्रुद्धः पञ्च बाणान्समाददे ॥ ६७
ताञ्शरान्संप्रचिक्षेप लक्ष्मणाय निशाचरः ।
तानप्राप्ताञ्शरैस्तीक्ष्णैश्चिच्छेद भरतानुजः ॥ ६८
स तांश्छित्त्वा शरैस्तीक्ष्णैर्लक्ष्मणः परवीरहा ।
आददे निशितं बाणं ज्वलन्तमिव तेजसा ॥ ६९
तमादाय धनुःश्रेष्ठे योजयामास लक्ष्मणः ।
विचकर्ष च वेगेन विससर्ज च सायकम् ॥ ७०
पूर्णायतविसृष्टेन शरेणानतपर्वणा ।
ललाटे राक्षसश्रेष्ठमाजघान स वीर्यवान् ॥ ७१
स ललाटे शरो मग्नस्तस्य भीमस्य रक्षसः ।
ददृशे शोणितेनाक्तः पन्नगेन्द्र इवाहवे ॥ ७२
राक्षसः प्रचकम्पे च लक्ष्मणेषुप्रकम्पितः ।
रुद्रबाणहतं भीमं यथा त्रिपुरगोपुरम् ॥ ७३

---

भूता ). D6 ततो देवाः सगंधर्वाः. —$^{b}$) D10.11 देवदैत्या; T2.3 देवताश्च; G1 देवा देव-; G3 देवाश्चैव; M1.2 यक्षा दैत्या (for देवा दैत्या). Ś Ñ V B D2–4.8.9.12.13 देवा(Ś D8 °व-) देवर्षयस्तथा; D1 ऋषयः सिद्धचारणाः; D6 M5 सिद्धा( M5 देवा )श्च परमर्षयः. —V3 om. $64^{cd}$. —$^{c}$) D1 [ए]व सिद्धाश्च; G1 महानागास् (for महात्मानस्). —$^{d}$) D1 ते (for तद्). Ś D8.12 पुरा; M1.2 तयोः (for तदा). T1 M3 तद्युद्धं द्रष्टुमागमन्.

65 D5 om. up to प्रचि in $^{c}$ (cf. v.l. 64). D6 T2.3 read twice 65 (first time followed by 1312*). —$^{a}$) T3 (second time) तत्र (for ततो). D4 प्रकुपितश् (hypm.); D6(first time) संक्रुद्धश्. —$^{b}$) D1 चापे (for चापम्). Ś B1 D2.3.8.12 धनुष्याधाय सायकं( B1 D2 °कान् ); Ñ V1 B2–4 D4.13 चापे( Ñ2 B3.4 °पं ) संधाय सायकं( Ñ1 °कान् ); G3 चापमायम्य संयुगे. —$^{cd}$) Ś D8.12 विचिक्षेप (for प्रचि°). —D12 om. (hapl.) $65^{d}$ – $68^{a}$. G2 रोदसी (for चाम्बरम्). Ś B1 D2.3.8 वि( B1 D3 सं; D2 प्र )क्षिपंतमिवांबरं; Ñ V1 B2.4 D4 प्रदीप्तमिव पावकं; D1.13 संविशं( D13 भासयं )तमिवांबरं; D6 T2.3(all second time) स पपातांबरे तदा (for $^{d}$). B3 उद्दिश्य लक्ष्मणं चैव ससर्ज रजनीचरः.

66 D12 om. 66 (cf. v.l. 65). —$^{a}$) Ś V3 B1 D2.3.8 विशिखं; M5 तरसा (for निशितं). —$^{b}$) B1 परम्; T2.3 बाणम् (for शरम्). —$^{d}$) B4 परवीर्यहा (for °वीरहा).

67 D12 om. 67 (cf. v.l. 65). G2 om. 67–$68^{b}$. —$^{a}$) D1.4.5.7.8 T2 निकृंतं (sic). B3 वीक्ष्य (for दृष्ट्वा). —$^{b}$) D1.7.9 कृंतभोगम्. —$^{c}$) Ś D2.8 [ऽ]तिसंरब्धः; B1 D3.6.13 T2.3 [ऽ]तिसंक्रुद्धः (for भृशं क्रुद्धः) —$^{d}$) Ś V2.3 D2.6.8–11 T3 G1 समादधे (for °ददे).

68 D12 om. $68^{a}$ (cf. v.l. 65). G2 om. $68^{ab}$ (cf. v.l. 67). —$^{a}$) Ñ2 B2.3 बाणान् (for शरान्). Ś D8 स निचिक्षेप; Ñ1 स प्रचिक्षेप; V3 B1.4 प्रतिचिक्षेप; D11 संप्रचिच्छेद (for संप्रचिक्षेप). —$^{b}$) B4 लक्ष्मणस्य (for °णाय). Ñ1 [अ]थ राक्षसः; Ñ2 V1.2 B2–4 स राक्षसः; D6 T2 महाबलः; G1 विचक्षणः (for निशाचरः). —$^{c}$) D8.9–11 G1 M1.2 शितैर्बाणैश् (for शरैस्तीक्ष्णैश्). —D9.13 om. (hapl.) $68^{d}$ – $69^{a}$. —$^{d}$) D11 लक्ष्मणो; T3 चिक्षेप (for चिच्छेद). Ś V3 B1 D2.3.8.12 युधि लक्ष्मणः; Ñ V1.2 B2–4 D4 रघुनंदनः; D1 भरताग्रजः (sic) (for भरतानुजः). D7 लक्ष्मणः परवीरहा. —For $68^{cd}$, G2 subst.; D7 ins. after 68:

1313* पञ्चभिः पञ्च चिच्छेद पावकार्कसमप्रभैः ।

69 D9.13 om. $69^{a}$ (cf. v.l. 68). D7 G2 om. $69^{ab}$. —$^{a}$) D4 शरांश् (for स तांश्). Ś V3 B1 D1–3.8.12 शरांस्तीक्ष्णाँल्; Ñ2 V1.2 B2–4 D10.11 G1 M1.2 शितैर्बाणैर् (for शरैस्तीक्ष्णैर्). —$^{b}$) Ñ1 V3 B1 D3.4.13 T2.3 पुरुषर्षभः (for परवीरहा). —$^{c}$) D13 निशितान्बाणान्. —$^{d}$) Ñ1 V1 B3.4 D4 स्वेन (for इव). B2 D3 पावकं (for तेजसा). D13 ज्वलितानलतेजसः.

70 $^{a}$) D13 तानादाय. Ś2 D8.10 धनुःश्रेष्ठो; Ñ1 D1.5.13 °श्रेष्ठं (for धनुःश्रेष्ठे). —$^{b}$) Ñ1 योधयामास; D5 आजघान स (for योजयामास). —$^{d}$) Ś रक्षसे; V3 B1 D2.3.8.12 राक्षसे; B4 कार्मुकान्; D5.7 T1 M3 वीर्यवान्; D13 G3 सायकान् (for सायकम्).

71 $^{a}$) B2–4 कर्णायत-; T3 °नत-; Cm.g.t as in text (for पूर्णायत-). D4.13 -विशिष्टेन; D12 -निसृष्टेन; T2.3 -विकृष्टेन; Cm.g.t as in text (for -विसृष्टेन). —$^{b}$) M1.2 बाणेन (for शरेण). D2.3.6.7.10.12 T1 G M Cm.g नतपर्वणा. —$^{d}$) G2 च (for स). D5 T1 लक्ष्मणः (for वीर्यवान्).

72 D10 om. $72^{ab}$. —$^{a}$) D3.4 T2.3 transp. स and ललाटे. B3 तस्य (for शरो). Ś D8.12 लग्नस्; D4(before corr. as in text).6 भग्नस् (for मग्नस्). —$^{b}$) B3 शरो (for तस्य). —$^{c}$) B4 ददृशुः; D7 ददर्श. D13 शोणितेनाक्तं. —$^{d}$) Ñ1 D1.5–7.9–11.13 T1.2 G M इवाचले; V2 इवाचलः (for इवाहवे). Ñ2 V1 B2–4 धातुरक्त इवाचलः.

73 $^{a}$) B2 D9–11 [ऽ]थ; D1 स (for च). Ñ2 V1 B3.4 मुह्यति स तदा रक्षो; D6 T2.3 राक्षसः प्रचचालाथ-

चिन्तयामास चाश्वस्य विमृश्य च महाबलः ।
साधु बाणनिपातेन श्लाघनीयोऽसि मे रिपुः ॥ ७४
विचार्यैवं विनम्यास्यं विनम्य च भुजावुभौ ।
स रथोपस्थमास्थाय रथेन प्रचचार ह ॥ ७५
एकं त्रीन्पञ्च सप्तेति सायकान्राक्षसर्षभः ।
आददे संदधे चापि विचकर्षोत्ससर्ज च ॥ ७६
ते बाणाः कालसंकाशा राक्षसेन्द्रधनुश्च्युताः ।
हेमपुङ्खा रविप्रख्याश्चक्रुर्दीप्तमिवाम्बरम् ॥ ७७
ततस्तान्राक्षसोत्सृष्टाञ्शरौघान्राघवानुजः ।
असंभ्रान्तः प्रचिच्छेद निशितैर्बहुभिः शरैः ॥ ७८
ताञ्शरान्युधि संप्रेक्ष्य निकृत्तान्रावणात्मजः ।
चुकोप त्रिदशेन्द्रारिर्जग्राह निशितं शरम् ॥ ७९
स संधाय महातेजास्तं बाणं सहसोत्सृजत् ।
ततः सौमित्रिमायान्तमाजघान स्तनान्तरे ॥ ८०

G. 6. 51. 84
B. 6. 71. 80
L. 6. 52. 90

—V2 illeg. for *b*.—*b*) Ś V3 B1 D2.8.12 -प्रचालितः; Ñ2 V1 -प्रचालितं; D1 -प्रताडितः; D5.7.9–11 T1 G1.3 M3.5 -प्रपीडितः (for: -प्रकम्पितः). Ñ1 लक्ष्मणेन शराहतः; B2–4 D3.4.6 T2.3 लक्ष्मणेन प्रचालितं (D4.6 T2.3 °ताडितः); D13 लक्ष्मणेनाहतः शरैः.—D13 om. 73*c*–74*b*.—*c*) Ś Ñ2 V1.3 B2.4 D1–4.8.12 G1 M3 -हतं घोरं; Ñ1 V2 -हतं पूर्वं; B1.3 M5 -[आ]हतं घोरं (for -हतं भीमं).

74 D13 om. 74*ab* (cf. v.l. 73).—*a*) D4.6.9 T2.3 M3 Cm चाश्वास्य.—*b*) Ś Ñ V B D1–4.8.12 विश्रम्य; T3 विमृज्य; Cm.g.t as in text (for विमृश्य). G1 महाबलं. —*c*) D1 अद्य (for साधु). Ñ B3.4 D13 -निपातस्ते; V1 B2 D4 °तं ते (for निपातेन). Ś B1 D2.3.8.12 साधु मुक्तेन बाणेन; V3 साधु युक्तेन पातेन.—*d*) B1 वपुः (for रिपुः). —After 74, T2 ins.:

1314* तोषितोऽहं तथा वीर कर्मणानेन लक्ष्मण।

75 G3 om. 75–76.—*a*) V1 B4 चिरायैनं; V3 B1 D2.3 इत्येवं स; D6 M3 विधायैनं; T2 Cm.g.t विधायैवं (for विचार्यैवं). Ñ1 विशल्यास्यं; Ñ2 V2 B2 बलं चास्य; B3 -विधं न्यायं; D9 Ct विदार्यास्यं; Cm.g as in text (for विनम्यास्यं). Ś D8.12 इत्येवं स(Ś2 सं-) विचिंत्याथ; D4 इत्येवं स तु विज्ञाय; D5.7.10.11 T1 वि(D5 नि)धायैवं नियम्या(D10.11 विदार्या)स्यं; D13 विचार्य चैव निःश्वस्य; T3 इत्युक्त्वा स विवृत्तास्यो; G1 सज्यं धनुर्विनम्याथ. ❀ Cv: विधायैवमेवं विचिन्त्य।; Cm.g: एवं(Cg °वं लक्ष्मणं) विधाय अभिधाय।; so also Ct. ❀ —*b*) Ś D2.8.12 विगृह्य च; Ñ V1.2 B2–4 D1.5.6.13 T2 G1 M3 नियम्य च; V3 B1 D4 विनिगृह्य; D3 T3 निगृह्य च; Cm.g.t as in ext (for विनम्य च). Ñ1 D3.7.10.11.13 महाभुजौ.—After 75*ab*, V1.3 B1 D2–4 ins.; D6 T2.3 ins. after 75:

1315* ननाद सु(D4 च)महानादं यथा प्रावृषि तोयदः।

—*c*) V3 D1.4 आदाय (for आस्थाय). Ś Ñ1 D2.8.12 स्यंदनो(Ñ1 रथस्थो)पस्थमासाद्य(D2 °स्थाय); Ñ2 B2–4 D7 G2 रथोपस्थं समास्थाय; D13 रथस्योपरि संस्थाय.—*d*) D1 G1 M1.2 विचचार; Cm.g.t as in text (for प्रच°). Ś V1.3 B1.3 (also m.) D2–4.8.12.13 चापमादाय चोत्तमं.

76 G3 om. 76 (cf. v.l. 75).—*a*) Ś D8.12 त्रीण्येकं; V3 B1 D2.3 त्रीनेकं (by transp.); M3 एवं त्रीन् (for एकं त्रीन्). D13 त्रीणि च (for त्रीन्पञ्च). M5 सप्ताष्टौ.—*b*) Ñ1 D4.7.13 G2 राक्षसेश्वरः; Ñ2 V1.2 B2–4 राक्षसः पुनः (for राक्षसर्षभः). D1 नव चैकादशस्तथा.—*c*) V3 T3 M5(V3 T3 after corr. as in text) आदधे. Ś2 संददे. Ñ V1 B2.4 D1.4.13 [ए]व (for [अ]पि). D5 आदधे चापि संक्रुद्धो. —*d*) G(ed.) निचकर्ष. D1.4.13 ससर्ज. B3 D9.13 G2 ह; D2 वै; M1.2 सः (for च).

77 L(ed.) transp. *ab* and *cd*.—*a*) T1 damaged for ते बाणाः.—V2 illeg. for 77*cd*.—*c*) Ś D8 हरि- (for रवि-). Ñ1 D4.13 प्रयाताः सू(D4 °पातात्सू; D13 गच्छंतः सू)र्यसंकाशाश्; Ñ2 V1 B2–4 यांतः सूर्याग्निसंकाशाश्.

78 *a*) D4 राघव- (for राक्षस-).—*b*) Ś D8.12 बाणौघान् (for शरौ°).—D4 om. (hapl.?) from राघवानुजः up to निकृत्तान् in 79*b*. Ś1 रावणानुजः (sic).—*c*) D13 स विच्छेद (for प्रचिच्छेद).—*d*) D3 transp. निशितैर् and बहुभिः.

79 D4 om. up to निकृत्तान् in 79*b* (cf. v.l. 78). —*ab*) Ñ2 V1.2 B2–4 विपुलान्दृष्ट्वा; G(ed.) रिपुणा दृष्ट्वा (for युधि संप्रेक्ष्य). D6 विकृत्तान्. D1.8.12 -[अ]नुजः (for [आ]त्मजः). D13 ताञ्शराञ्चिःकृतान्संख्ये संप्रेक्ष्य राक्षसात्मजः. —*c*) Ś V3 B1 D1–3.8.12 [अ]ति(D1 च) सुरेंद्रारिर्; Ñ V1.2 B2–4 D4 त्रिदशारातिर् (for त्रिदशेन्द्रारिर्).—*d*) Ś V1 B4 D2.3.8 च शितं शरं; Ñ1 V2 D1 च(V2 नि) शिताञ्शरान्.—After 79, D1 ins. 1317*.

80 Ñ2 V1.2 B2–4 read 80*ab* twice.—*a*) Ś V3 B1 D2–4.8.12 तं संधाय; Ñ2 B4(both second time) संधाय च; B2.3(both second time) संधाय स (by transp.) (for स संधाय). T1 damaged for हातेजा. V1.2(both second time) संधाय निशितं बाणं.—*b*) Ñ1 V1.2(both first time) D13 तान्बाणान्. B2.3(both second time) [अ]सृजत्; D5.13 T1 सृजन्; D6 T2.3 G1 M1–3 [उ]त्सृजन्. G(ed.)नैर्ऋतोसृजत् (for सहसोत्सृजत्). Ś V3 B1 D2.4.8.12 ससर्ज च(V3 B1 D4 °र्जाय) महामृधे(D2 °हवे; D4 °रणे); Ñ2 ;B2–4(all first time)

G. 6. 51. 85
B. 6. 71. 81
L. 6. 52. 91

अतिकायेन सौमित्रिस्ताडितो युधि वक्षसि ।
सुस्राव रुधिरं तीव्रं मदं मत्त इव द्विपः ॥ ८१
स चकार तदात्मानं विशल्यं सहसा विभुः ।
जग्राह च शरं तीक्ष्णमस्त्रेणापि समादधे ॥ ८२
आग्नेयेन तदास्त्रेण योजयामास सायकम् ।
स जज्वाल तदा बाणो धनुश्चास्य महात्मनः ॥ ८३
अतिकायोऽतितेजस्वी सौरमस्त्रं समाददे ।
तेन बाणं भुजंगाभं हेमपुङ्खमयोजयत् ॥ ८४
ततस्तं ज्वलितं घोरं लक्ष्मणः शरमाहितम् ।
अतिकायाय चिक्षेप कालदण्डमिवान्तकः ॥ ८५

तं बाणं( Ñ2 तान्बाणान् ) नैकशो( B3 °ऋंतो )सृजत्; V1.2 B4( all second time ) स तदा( B4 तद्वाणं ) सहसासृजत्; D3 विससर्ज महामृधे. —For $80^{ab}$, D1 subst.:

1316* शरमाशीविषाकारं विससर्ज च संयुगे।

—After $80^{ab}$ ( first time ), Ñ2 V1.2 B2–4 ins.; while D1 ins. after 79:

1317* ततः शतसहस्राणि प्रयुतान्यर्बुदानि च।
मुमोच राक्षसः क्रुद्धो लक्ष्मणाय महाहवे।
नैवान्तरीक्षं न मही न दिशः प्रदिशोऽपि वा।
ददृशुश्छादितं बाणैस्तमोभूतमभूत्तदा।
ततः कपिगणाः सर्वे राक्षसास्त्रविमोहिताः। [5]
समन्ताद्विद्रवन्ति स्म भीताश्चैव विचुक्रुशुः।
ततस्तं संकुलं श्रुत्वा वानराणां महास्वनम्।
वायव्यास्त्रेण तान्बाणान्ववाह भरतानुजः।
ततस्ते वानरगणाः संदृश्य भरतानुजम्।
सिंहनादं तदा नेदुर्हृष्टाः शतसहस्रशः। [10]
ततोऽतिकायः कुपितो विकृष्य च शरासनम्।

[ (l. 1) Ñ2 B2 शर- ( for शत- ). B2.3 ( with hiatus ) अयुतानि ( for प्र° ). —(l. 2) Ñ2 महात्मने; D1 °मृधे ( for °हवे ). —(l. 3) Ñ2 न च ( for नैव ). D1 [ अं ]तरिक्षं. Ñ2 B2 तथा ( for ऽपि वा ). —(l. 5) D1 राक्षसाश्च विभीषणः ( for the post. half ). —(l. 6) V1.2 B3.4 प्रचुक्रुशुः ( for विचु° ). D1 अमन्यंतागतां रात्रिं भीताश्च सहसा द्रुताः. —After l. 6, B3 ins. (m.) l. 4–8 of 1312*. —(l. 7) B3 तत्; D1 स ( for तं ). V1.2 B4 कुशलं; B2 लक्ष्मणः ( for संकुलं ). B3 दृष्ट्वा; D1 कृत्वा ( for श्रुत्वा ). B3 महद्बलं ( for महास्वनम् ). —(l. 8) D1 स्वं बाणं ( for तान्बाणान् ). V2 बभंज; B2 चिच्छेद ( for ववाह ). D1 संहृष्टो ह्यभ्यमंत्रयत् ( for the post. half ). —(l. 9) V1.2 संदिश्य. D1 भरताग्रजं( sic ). —(l. 10) D1 -नादांश्च तथा ( hypm. ) ( for -नादं तदा ). —(l. 11) B2 स; B3 तु ( for च ). V1 B4 विकृष्यत; D1 विचकर्ष ( for विकृष्य च ). ]

—$^{cd}$ ) G3 damaged for ततः सौमित्रि. Ś V3 B1 D1–5.7–12 T1 G1.2 M5 तेन ( for ततः ). Ñ1 तैस्तु सौमित्रिणं शीघ्रम्; D13 ततः स लक्ष्मणं शीघ्रम् ( for ° ). Ñ2 V1.2 B2–4 G( ed ) ते( G [ ed. ]ये )न सौमित्रिरुरसि चकंपेभि( V2 B4 °पे नि )हतस्तदा.

81 $^{ab}$ ) V3 B1 D3 अतीव तेन. Ñ2 V1 B2–4 तेजस्वी ( for सौमित्रिस् ). D13 प्रति वक्षसि. Ś D2.8.12 सोतिविद्धो बलवता लक्ष्मणो लक्ष्मिवर्धितः( D2.12 °र्धनः ). —$^{c}$ ) Ś V3 B1 D1–3.8.12 भूरि; B3 दीप्तं; D13 शीघ्रं ( for तीव्रं ). —$^{d}$ ) Ś D8.12 हतो मत्त; Ñ1 B1.2.4 D2–4.7.13 T2 मदमत्त. Ñ2 V1 B3.4 यथा ( for इव ).

82 $^{a}$ ) Ś B1 D1–4.8.12 [ आ ]त्मनात्मानं; D13 महात्मानं. —$^{b}$ ) D1 तदा; D4.13 भुवि ( for विभुः ). —$^{c}$ ) B1 D8.13 M3 जग्राह स( D8 तं ); D4 स जग्राह. Ś D8 घोरं; Ñ1 दीप्तम्; B3 D13 M2 तीव्रं; B4 भीमं ( for तीक्ष्णम् ). —$^{d}$ ) D7.10 T2.3 G1 M5 समाददे. Ś V1.2 B1 D1–3.8.12 तमस्त्रेणाभि ( V2 B1 °ण च )संदधे; Ñ1 अस्त्रेण च युयोज ह; Ñ2 B2 तमस्त्रेण युयोज च; V3 D4 तं मंत्रेण च संदधे; B3.4 D13 तमस्त्रेण ( B4 °ण च[ hypm. ] ) प्रयोज( D13 °ध )यत्( B4 °उय च ). ❀ Cm.g.t: अस्त्रेण अस्त्रमन्त्रेण. ❀ —After 82, D12 ins. 1318*.

83 Ś D8.12 om. ( hapl. ? ) 83–$84^{b}$. —$^{a}$ ) Ñ1 V1.2 B2–4 D4.13 ततोस्त्रेण; V3 B1 D1–3 महातेजा ( for तदास्त्रेण ). —$^{b}$ ) V3 B1 D2.3 योजयित्वा च( D2.3 वि- ) चिक्षिपे; D1 योजयित्वा विचक्षणः; L ( ed. ) सर्वा विद्योतयन्दिशः. —$^{c}$ ) Ñ1 D13 जज्वाल च. Ñ V B D1–5.13 G3 महाबाणो( B1 °वेगो ) ( for तदा बाणो ). M5 जज्वाल सहसा बाणो. —$^{d}$ ) D4( *sup. lin.* also ) M3 धनुष्यस्य. V3 महारणे; B3 D10 M1.2 तदात्मनः; D3 धनुष्मतः ( for महात्मनः ).

84 Ś D8.12 om. $84^{ab}$ ( cf. v.l. 83 ). V3 om. 84. V1 B1 D1–4 transp. 84 and 85. —$^{a}$ ) Ñ2 V1 B1 D3.4.6.7.13 T3 G M [ ऽ ]पि ( for ऽति- ). B3 ततोतिकायो तेजस्वी. —$^{b}$ ) Ñ1 D5 T1 G1.3 सौर्यम्; V2 D7.9–11 रौद्रम्; L ( ed. ) सौम्यम् ( for सौरम् ). D1 अथाददे; D2.6 M3 समादधे; Cg as in text ( for समाददे ). —Ś D8 transp. $84^{cd}$ and $85^{cd}$ ( followed by 1318* ). —$^{c}$ ) Ñ1 D4 ततो; B1 तत्र ( for तेन ). D13 ततो बाणान्भुजंगाभान्. —$^{d}$ ) Ñ V1.2 B2–4 D13 अ( B4 आ )योज( Ñ1 आरोप )यत राक्षसः.

85 D12 om. 85–$86^{b}$. Ś D8 om. $85^{ab}$. V1 B1 D1–4 transp. 84 and 85. —$^{a}$ ) V2 D6.7.9–11 T2.3 G1.3 M3.5 Cg तदस्त्रं; D4 ततस्तु. V1.3 B1 D1–4 तीक्ष्णं; V2 दीप्तं ( for घोरं ). Ñ B2–4 D13 ततस्तु( Ñ1 °स्तं ) ज्वलना( Ñ2 B2 D13 °नं )दीप्तं. —$^{b}$ ) D6 T2.3 परम् ( for शरम् ). Ñ V2 B2–4 D4.13 उत्तमं; V1.3 B1 अंजसा; D1–3 ओजसा ( for आहितम् ). —Ś D8 transp. $84^{cd}$ and $85^{cd}$ ( followed by 1318* ).

आग्नेयेनाभिसंयुक्तं दृष्ट्वा बाणं निशाचरः ।
उत्ससर्ज तदा बाणं दीप्तं सूर्यास्त्रयोजितम् ॥ ८६
तावुभावम्बरे बाणावन्योन्यमभिजघ्नतुः ।
तेजसा संप्रदीप्ताग्रौ क्रुद्धाविव भुजंगमौ ॥ ८७
तावन्योन्यं विनिर्दह्य पेततुर्धरणीतले ।
निरर्चिषौ भस्मकृतौ न भ्राजेते शरोत्तमौ ॥ ८८
ततोऽतिकायः संक्रुद्धस्त्वस्त्रमैषीकमुत्सृजत् ।
तत्प्रचिच्छेद सौमित्रिरस्त्रमैन्द्रेण वीर्यवान् ॥ ८९
ऐषीकं निहतं दृष्ट्वा कुमारो रावणात्मजः ।
याम्येनास्त्रेण संक्रुद्धो योजयामास सायकम् ॥ ९०
ततस्तदस्त्रं चिक्षेप लक्ष्मणाय निशाचरः ।
वायव्येन तदस्त्रं तु निजघान स लक्ष्मणः ॥ ९१
अथैनं शरधाराभिर्धाराभिरिव तोयदः ।
अभ्यवर्षत संक्रुद्धो लक्ष्मणो रावणात्मजम् ॥ ९२

G. 6. 51. 96
B. 6. 71. 92
L. 6. 52. 101

—$^{c}$) Ś $D_{8}$ अतिसंधाय; Ñ $V_{3}$ $B_{2-4}$ $D_{13}$ अतिकायस्य ($V_{3}$ °ये सु-) (for °कायाय). —$^{d}$) Ś $V_{1.3}$ $B_{1}$ $D_{1-4.8}$ ब्रह्म-; $D_{13}$ सौर्य- (for काल-). Ś $D_{8}$ इवोद्धतं; $Ñ_{1}$ $V_{1.3}$ $B_{1}$ $D_{2-4.13}$ इवापरं; $T_{2}$ इ * * * (for इवान्तकः). —After 85, Ś $D_{3}$ ins.; $D_{12}$ ins. after 82 :

1318* दृष्ट्वा तु तं महाबाहुः शरं जग्राह कोपनः।

86 Ś $V_{3}$ $B_{1}$ $D_{1-4.8.12}$ om. $86^{ab}$ (for $D_{12}$, cf. v.l. 85). —$^{a}$) Ñ $V_{1.2}$ $B_{2-4}$ $D_{7.9-11.13}$ $G_{1.2}$ आग्नेयास्त्राभि-; $D_{6}$ $T_{2.3}$ $M_{1.2}$ °यास्त्रेण; $G_{3}$ °येन तु; $M_{5}$ °यास्त्रं हि (for °येनाभि-). —$^{b}$) Ñ $V_{2}$ $B_{2-4}$ $D_{13}$ स राक्षसः; $V_{1}$ विसंज्ञितं (for निशाचरः). —$^{c}$) $D_{6}$ $T_{3}$ विससर्ज. Ś $V_{3}$ $B_{1}$ $D_{1-4.8.12}$ च वेगेन; $B_{3}$ ततो बाणं; $G_{2}$ महाबाणं (for तदा बाणं). —$^{d}$) $D_{7.9-11}$ रौद्रं (for दीप्तं). Ś $D_{1-3.8.12}$ -संयुतं; $D_{4}$ -संभ्रमं (for -योजितम्). $V_{3}$ $B_{1}$ दीप्तसूर्यांशु($V_{3}$ °र्यास्त्र)-सप्रभं.

87 $^{a}$) $B_{2}$ उभावपि (for तावुभाव्). $D_{1.3}$ अंतरे (for अम्बरे). —$^{b}$) $V_{1}$ जघ्नतुस्तदा (for अभिजघ्नतुः). —$^{c}$) Ñ $B_{2-4}$ $D_{1.4.13}$ संप्रदीप्तांगौ. —$^{d}$) $Ñ_{1}$ $D_{13}$ यमांतकौ; $M_{1.2}$ महोरगौ (for भुजंगमौ). —For $87^{cd}$, Ś $D_{2.8.12}$ subst. :

1319* कल्पक्षये यथा प्राप्ते द्वाविवार्कौ स्वतेजसा।

[ $D_{2}$ एव (for इव). $Ś_{2}$ $D_{8.12}$ स्वतेजसौ; $D_{2}$ सुतेजसौ. ]

88 $^{a}$) Ś $B_{1}$ $D_{1-4.8.12}$ विनिर्भिद्य; $Ñ_{1}$ $D_{13}$ °र्दिश्य (for °र्दह्य). $G_{1}$ तावन्योन्यावनिर्दिश्य. —$^{b}$) $D_{13}$ निपेतुः (for पेततुर्). Ñ V $B_{2.4}$ $D_{7.9-11.13}$ $G_{1.2}$ $M_{3.5}$ पृथिवीतले; $B_{3}$ सुमहाबलौ (for धरणीतले). —$^{c}$) G (ed.) भस्मभूतौ (for °कृतौ). —$^{d}$) Ñ $V_{1.2}$ $B_{2-4}$ $D_{4}$ रेजतुर्न; $D_{13}$ ततः-सूत्र- (sic) (for न भ्राजेते). $M_{5}$ परस्परं (for शरोत्तमौ). —For $88^{cd}$, Ś $V_{3}$ $B_{1}$ $D_{1-3.8.12}$ subst.; while $D_{6.7.9-11}$ $T_{2}$ $G_{3}$ $M_{5}$ ins. after 88 :

1320* तावुभौ शरहीनौ तु न भ्राजेते स्म संयुगे।

[ Ś $D_{8.12}$ शरहीनौ च($D_{12}$ स); $D_{6}$ $T_{2}$ च शरौ दीप्तौ; $D_{7.10.11}$ दीप्यमानौ स्म($D_{7}$ तु); $D_{9}$ शरदीप्तौ स्म; $G_{3}$ $M_{5}$ शरदीप्ते ($M_{5}$ °भिन्नौ) तु (for शरहीनौ तु). $V_{3}$ विभ्राते (sic) (for भ्राजेते). $V_{3}$ $B_{1}$ सुसंयुगे; $D_{6.7}$ $T_{2}$ $G_{3}$ $M_{5}$ महाहवे; $D_{9-11}$ महीतले (for स्म संयुगे). ]

89 $G_{3}$ om. (hapl.) from -क्रुद्धस् in $89^{a}$ up to सं- in $90^{c}$. —$^{a}$) Ś $V_{2}$ $B_{1-3}$ $D_{1-3.8.12}$ स्त्वैषीकं; $Ñ_{2}$ $V_{1.3}$ $B_{4}$ ऐषीकम् (for संक्रुद्धस्). —$^{b}$) $D_{10.11}$ $M_{1.2}$ Ck.t त्वाष्ट्रम्; $G_{1}$ $M_{5}$ (both with hiatus) अस्त्रम् (for त्वस्त्रम्). Ś $V_{2.3}$ $B_{1}$ $D_{1-3.8.12}$ ससर्जास्त्रं निशाचरः($V_{2}$ °स्त्रमनुत्तमं); $Ñ_{1}$ $D_{4.13}$ ऐषिकास्त्रं समाददे; $Ñ_{2}$ $V_{1}$ $B_{2-4}$ उत्ससर्जास्त्रमुत्तमं. —$^{c}$) Ñ V $B_{1.2.4}$ $D_{1.3.4.13}$ तं प्र-; $D_{9-11}$ $M_{1.2}$ ततश् (for तत्प्र-). —$^{d}$) Ñ $V_{2}$ ऐंद्रास्त्रेण च($Ñ_{1}$ °णाति-); $V_{1}$ $B_{2.4}$ $D_{4.13}$ ऐं($B_{4}$ रौ)द्रेणास्त्रेण; $V_{3}$ $B_{1.3}$ $D_{1.3.6}$ $T_{2.3}$ $G_{1.2}$ $M_{1-3}$ अस्त्रेणैंद्रेण (for अस्त्रमैन्द्रेण). —For $89^{cd}$, Ś $D_{2.8.12}$ subst. :

1321 लक्ष्मणस्तं प्रचिच्छेद ऐन्द्रास्त्रेण महाबलः।

[ Note hiatus between the two halves. $D_{2.8}$ रौद्रास्त्रेण. ]

90 $G_{3}$ om. up to सं- in $90^{c}$ (cf. v.l. 89). —$^{a}$) $D_{4-6.11.13}$ $T_{2.3}$ ऐषिकं; $D_{9}$ ईषीकं. $M_{5}$ तु हतं (for निहतं). —$^{b}$) $D_{5.7}$ $T_{1}$ $G_{2}$ $M_{3}$ रुषितो (for कुमारो). $M_{1.2}$ रावणस्य सः. —$B_{4}$ om. $90^{c}-92^{b}$. —$^{c}$) $D_{5}$ $T_{1}$ सौम्येन (for याम्येन). —$D_{1}$ om. (hapl. ?) from संक्रुद्धो up to $91^{c}$. $Ñ_{1}$ $D_{5.13}$ $T_{1}$ $G_{2}$ संयुक्तं (for संक्रुद्धो). —$^{d}$) $B_{1}$ सायकान्. $D_{5}$ $T_{1}$ $G_{2}$ संदधे कार्मुके शरं.

91 $B_{4}$ om. 91; $D_{1}$ om. $91^{abc}$ (for both, cf. v.l. 90). —$^{a}$) $T_{2}$ तु संप्र- (for तदस्त्रं). —$^{b}$) Ñ $V_{1.3}$ $B_{2.3}$ $D_{4.13}$ स राक्षसः (for निशाचरः). —$^{c}$) Ś $B_{1}$ $D_{8}$ तमस्त्रेण; $Ñ_{1}$ $D_{4.13}$ ततोऽस्त्रेण; $Ñ_{2}$ V $B_{3}$ $D_{2.3.10.12}$ $M_{3.5}$ तदस्त्रेण; $B_{2}$ $D_{9.11}$ $G_{3}$ तदास्त्रेण (for तदस्त्रं तु). —$^{d}$) $Ś_{1}$ $Ñ_{2}$ $D_{4}$ निर्जघान. Ś $D_{2.8.12}$ च; Ñ $V_{1}$ $B_{2.3}$ $D_{13}$ [अ]थ (for स). —After 91, Ś $D_{2.8.12}$ ins. :

1322* कुबेरदत्तेनास्त्रेण त्रासयामास लक्ष्मणः।

[ $D_{2}$ तदा (for [अ]स्त्रेण). $Ś_{2}$ $D_{8}$ लक्ष्मणं. ]

92 $B_{4}$ om. $92^{ab}$ (cf. v.l. 90). —$^{a}$) $V_{3}$ $B_{1}$ $D_{1}$ तथैनं; $D_{2}$ अथैवं. $Ñ_{1}$ $D_{13}$ शरवृष्टिभिः (for °धाराभिर्). —$^{b}$) $Ñ_{1}$ $D_{13}$ प्रवृष्टया (with hiatus) (for धाराभिर्). $D_{4}$ प्रवृष्टमिव तोयदं. —$^{c}$) Ś $Ñ_{2}$ V $B_{1-3}$ $D_{1-3.8.12}$ प्र($B_{2}$ आ)ववर्ष सु($Ñ_{2}$ V °र्षत; $B_{1}$ च; $D_{3}$ तु)संक्रुद्धो; $D_{4}$ अभ्यवर्षं च तं क्रुद्धो; $D_{5.6}$ T $G_{2}$ $M_{3}$ अभ्यवर्षत्सु($D_{5}$ °र्षं सु)संक्रुद्धो. —$B_{2}$ om. (hapl.) from $92^{d}$ up to the prior half of

G. 6. 51. 98
B. 6. 71. 93
L. 6. 52. 102

तेऽतिकायं समासाद्य कवचे वज्रभूषिते ।
भग्नाग्रशल्याः सहसा पेतुर्बाणा महीतले ॥ ९३
तान्मोघानभिसंप्रेक्ष्य लक्ष्मणः परवीरहा ।
अभ्यवर्षत बाणानां सहस्रेण महायशाः ॥ ९४
स वर्ष्यमाणो बाणौघैरतिकायो महाबलः ।
अवध्यकवचः संख्ये राक्षसो नैव विव्यथे ॥ ९५
न शशाक रुजं कर्तुं युधि तस्य नरोत्तमः ।
अथैनमभ्युपागम्य वायुर्वाक्यमुवाच ह ॥ ९६
ब्रह्मदत्तवरो ह्येष अवध्यकवचावृतः ।
ब्राह्मेणास्त्रेण भिन्ध्येनमेष वध्यो हि नान्यथा ॥ ९७

l. 1 of 1323*. —$^{d}$) Ñ1 D4.13 लक्ष्मणो राक्षसाधिपं; Ñ2 V1.2 B3 लक्ष्मणं रावणात्मजः. —After 92, Ñ2 V1.2 B2 (after 92$^{c}$, owing to om.).3 ins.; while B4 subst. for 92$^{cd}$:

1323* तथैव च शरान्क्रुद्धो राक्षसाय रघूत्तमः।
मुमोचाशीविषाकारान्वधार्थं त्वरितस्तदा।

[ B2 om. up to the prior half of l. 1. —(l. 1) B2 समरे क्रुद्धो (*sup. lin.* also च शरान्प्राप्तो) (for च शरान्क्रुद्धो). ]

93 $^{a}$) D6 T2.3 अतिकायं (for तेऽतिकायं). —For 93$^{ab}$, Ś Ñ V B D1–4.8.12.13 subst.:

1324* तेऽतिकायस्य संप्राप्य कवचं वज्रविग्रहम्।

[ V3 B1 सोतिकायस्य (sic); D4 अतिकायस्य. Ñ1 D4 वज्रभूषणं; Ñ2 B2.3 रत्नभूषितं; V1.2 B4 °भूषितं; D1.13 °संनिभं (for वज्रविग्रहम्). ]

—$^{c}$) B1 भग्नाग्रशैलाः; D13 भग्नाश्च शल्याः; T2.3 भग्नशल्याश्च. —$^{d}$) V3 B1 D1.3 निपेतुर्भुवि सायकाः (D3 °र्धरणीतले). —For 93$^{cd}$, Ś D2.8.12 subst.:

1325* सर्वे ते विफ(Ś °ह्व)लीभूतास्तस्य लक्ष्मणसायकाः।

94 $^{a}$) Ñ1 D13 स मोघान्; D4 अमोघान्. M2 अभिसंलक्ष्य (for °प्रेक्ष्य). Ñ2 V1.2 B2–4 स तान्मोघानभि (V1.2 °न्प्रति)प्रेक्ष्य; V3 B1 स तान्मोघांस्तु संप्रेक्ष्य. —$^{cd}$) V1 बाणौघान्; B2 बाणौघैर् (for बाणानां). Ñ1 D13 शरवर्षेण तं वीरम् (D13 तीव्रेण); D5 T1 G2 M3 अभ्यवर्षन्महेषूणां (for $^{c}$). Ś V3 B1 D1–4.8.12 अयुतेन; Ñ1 D13 (D13 with hiatus) अभ्यवर्षन्; Ñ2 V2 B4 ओघेन च (B4 स); V1 अमोघान्सु-; B2 मुमुचे च (for सहस्रेण). V1 (m. also) G2 M1.2 महाबलः. B3 प्रववर्ष ततो बाणाराक्षसे बलवान्मुहुः.

95 $^{a}$) Ś B1 D1–4.8.12 स (B1 अ) वध्यमानो; Ñ1 D7 G1 स वर्षमाणो; Ñ2 B2 संताड्यमानो; V D5.9–11 T3 G3 M3 Ck.t स वृष्यमाणो; B3.4 D6 स क्रु(B4 अवृ)ष्यमाणो; D13 T2 अ(T2 स)मृष्यमाणो. ❀ Ck.t: वृष्यमाणः क्रियमाणवर्षः. ❀ —$^{b}$) Ś1 D8.12 महाभुजः; M3 °बलैः (for °बलः). —$^{cd}$) V3 B1 D1.3.4.6 T2.3 अभेद्य-; D13 आबद्ध- (for अवध्य-). Ñ1 D13 व्याप्तो (for संख्ये). Ñ2 V1.2 B2–4 अभेद्यकवचं प्राप्तो (Ñ2 °चानद्धो; B2 °चानंगो [sic]; B3 [*sup. lin.* also] °चं व्याप्तो); D5 अवध्यं कवचं संख्ये (for $^{c}$). B1 D1 नापि; D3.4 नाभि- (for नैव). Ś D2.8.12 ब्रह्मदत्तवरो वीरो राक्षसेंद्रो न विव्यथे. —After 95, Ñ2 V (V3 illeg.) B2–4 D6 T2.3 M3 ins.:

1326* शरं चाशीतिविषाकारं लक्ष्मणाय व्यपासृजत्।
स तेन विद्धः सौमित्रिर्मर्मदेशे शरेण हि।
मुहूर्तमासीन्निःसंज्ञो लक्ष्मणः शत्रुतापनः।
ततः संज्ञामुपागम्य चतुर्भिः सायकोत्तमैः।
निजघान हयान्संख्ये सारथिं च महाहवे। [5]
उन्ममाथ च वेगेन ध्वजं तस्य रिपुंजयः।
ध्वजस्योन्मथनं दृष्ट्वा क्रुद्धो राक्षसपुंगवः।
अभ्यवर्षत तेजस्वी शरवर्षैररिंदमः।
असंभ्रान्तश्च सौमित्रिस्तान्शरानच्छिनच्छरैः।
मुमोच च शरान्दीप्तान्वधार्थं तस्य रक्षसः। [10]

[ (l. 1) V2 B2–4 व्यवासृजत्. —(l. 2) D6 T2.3 च; M3 ह (for हि). —(l. 3) D6 T2.3 M3 मुहूर्तमात्रं. M3 विसंज्ञो (for निःसंज्ञो). D6 T2.3 M3 ह्यभवच् (for लक्ष्मणः). —(l. 4) D6 T2.3 M3 उपालभ्य (for °गम्य). —(l. 5) V1 M3 महाबलः; D6 T2.3 °रणे (for महाहवे). —D6 T2.3 M3 om. l. 6. —(l. 6) Ñ2 B3 उन्ममंथ. B2 चास्य (for तस्य). —(l. 7) D6 M3 कृत्वा (for दृष्ट्वा). —D6 T2.3 M3 om. from the post. half of l. 7 up to the prior half of l. 8. —(l. 9) B3 तु; D6 T2.3 M3 स (for च). V2 B4 तिलशः शरैः; B3 छिन्नवान्रणे; M3 अभिलक्षितान् (for अच्छिनच्छरैः). —(l. 10) V1 स मुमोच; V2 B4 प्रमुमोच. D6 T2.3 M3 मुमोच लक्ष्मणो बाणान् (for the prior half). D6 T2.3 विबुधद्विषः (for तस्य रक्षसः). ]

96 $^{a}$) Ñ V1.2 B2.3 यदा तस्य; B4 यदा कर्तुं; D5 T1.3 G2 M1.5 रुजो कर्तुं; D13 तदा तस्य (for रुजं कर्तुं). —$^{b}$) D5 T1 G1.2 शरैस् (for युधि). D6 शरोत्तमः (for नरोत्तमः). Ś V3 B1 D1–4.8.12 यदा तस्य महाशरैः; Ñ V1.2 B2–4 D13 रुजं कर्तुं (B4 °जस्तस्य) स लक्ष्मणः. —$^{c}$) D9–11 तथैनम्; D13 अथैतम्; T3 अथैनम्. Ñ1 D4 समुपागम्य; D5 अभ्यु°; D10 अत्यु° (for अभ्यु°). Ñ2 V1.2 तदैनमभि (V1 °मुप)सगम्य; B2–4 तदैन(B4 °त)मभिगम्याशु (B2 °थ). —$^{d}$) Ś V3 B1 D1.2.8.12 अभाषत; Ñ2 अथाब्रवीत्; D7 G2 अवोचत (for उवाच ह). B3 वायुः कर्णे वचोब्रवीत्; D3 वायुर्वचनमब्रवीत्.

97 Note hiatus between $^{a}$ and $^{b}$. —$^{b}$) Ś1 D2.4.12 ह्यमेद्य-; Ś2 D8 ह्यभेद्यः; Ñ2 V1 D1.13 अवध्यः; B1 चाभेद्य-; B2.4 D3 अभेद्य-; B3 [ऽ]प्यभेद्य-; T3 ह्यवध्य-; G2 त्ववध्य-

ततः स वायोर्वचनं निशम्य
सौमित्रिरिन्द्रप्रतिमानवीर्यः ।
समाददे बाणममोघवेगं
तद्ब्राह्ममस्त्रं सहसा नियोज्य ॥ ९८

तस्मिन्वरास्त्रे तु नियुज्यमाने
सौमित्रिणा बाणवरे शिताग्रे ।
दिशः सचन्द्रार्कमहाग्रहाश्च
नभश्च तत्रास ररास चोर्वी ॥ ९९

तं ब्रह्मणोऽस्त्रेण नियुज्य चापे
शरं सुपुङ्खं यमदूतकल्पम् ।
सौमित्रिरिन्द्रारिसुतस्य तस्य
ससर्ज बाणं युधि वज्रकल्पम् ॥ १००

तं लक्ष्मणोत्सृष्टममोघवेगं
समापतन्तं ज्वलनप्रकाशम् ।
सुवर्णवज्रोत्तमचित्रपुङ्खं
तदातिकायः समरे ददर्श ॥ १०१

तं प्रेक्षमाणः सहसातिकायो
जघान बाणैर्निशितैरनेकैः ।
स सायकस्तस्य सुपर्णवेग-
स्तदातिवेगेन जगाम पार्श्वम् ॥ १०२

G. 6. 51. 107
B. 6. 71. 102
L. 6. 52. 110

---

( for अवध्य- ). M5 -कवचो युधि ( for °चावृतः ). —$^{c}$ ) D5 छिंधि; M5 जहि ( for भिन्धि ). —$^{d}$ ) M1.2 न च ( for हि न ). —For $97^{cd}$, Ś D2.8.12 subst. :

1327* तद्ब्रह्मणोऽस्त्रेण विभो जहि दैवतकण्टकम् ।
[ D2 भवान् ( for विभो ). ] ;

while Ñ V B D1.3.4.13 subst. for $97^{cd}$ :

1328* जहीमं ब्रह्मणोस्त्रेण तदस्य हृदि न स्थितम् ।

[ D13 जहीदं. V3 B1 D1.3 ब्रह्मास्त्रेणैव हंतव्यस् ( for the prior half ). B2 तदेतद; D1.3 तच्चास्य ( for तदस्य ). D4 संस्थितं; D13 धिष्ठितं ( for न स्थितम् ). Ñ2 V1.2 तद्वर्मास्य विभेत्स्यति; V3 B1 तच्चास्य न हृदि स्थितं; B3 वासवो नमुचिं यथा ( for the post. half ). ]

—After 97, D5–7.9–11 S ins. :

1329* अवध्य एष ह्यन्येषामस्त्राणां कवची बली ।

[ M5 एव ( for एष ). D6 T2.3 G1 अन्येषाम् ; G3 सर्वेषाम् ; M1.2.5 चान्येषाम् . D9.11 अस्त्रीणां. ]

98 $^{a}$) D6 तत्तस्य; D7 G2 स तस्य; D9–11 T1 G1 M3 ततस्तु ( for ततः स ). Ś V3 B1 D1–3.8.12 ततस्तु वाक्यं स निशम्य वायोः. —$^{b}$ ) D4 -प्रतिमः सवीर्यः ; D13 -प्रतिमौघवीर्यः. —$^{c}$ ) Ś V3 D5.7–12 T3 समादधे. Ñ1 D1.3.4.6.13 T2.3 G3 अमोघवीर्यं; B2.3 D9–11 अथोग्रवेगं. —B1 reads $98^{d}$–99 in marg. —$^{d}$ ) G1 तं. D5 ब्राह्मशस्त्रं. D9–11 G2 नियुज्य; Cg as in text ( for नियोज्य ). Ś V3 B1.3 D1–3.8.12 तं( Ś D2.8.12 स ) ब्रह्मणोस्त्रेण युयोज चैव( B3 वीरः ) ; Ñ V1.2 B2.4 D4.13 तं( Ñ2 B4 तद् ) ब्रह्मणोस्त्रेण ततो( B4 °दा ) युयोज( D13 °तोनुयोजयत् ). ❀ Cg : नियोज्य जपित्वा. ❀

99 B1 reads 99 in marg. ( cf. v.l. 98 ). V3 om. 99. —$^{a}$ ) Ś D3.5.8.12 वरास्त्रेण; Ñ V1.2 B2.4 D2.4.13 °स्त्रे वि- ; B1 °स्त्रे च; M3 महास्त्रे तु ( for वरास्त्रे तु ). Ś2 T2 G1 M3.5 नियोज्यमाने; D1 [अ]भियो°; D4 -निगृह्य° ( for नियुज्य° ). B3 प्रवियुज्यमाने. —$^{b}$ ) B3 बाणनिवेशिताग्रे. —$^{c}$ ) Ś B1 D1–3.8.12 देवाः स- ; B2 D5.9–11 T1 G1.3 M दिशश्च ( for दिशः स- ). B3 सचंद्राश्च ( for सचन्द्रार्क- ). Ś D8.12 -समा ग्रहाश्च; Ñ B2–4 D4 -नभोग्रहाश्च; V3 -नभोक्षितं च( sic ). D7 G2 दिशः सहेंद्राश्च सहस्त्रऋक्षैर्. —$^{d}$ ) T3 ताराश्च ( for तत्रास ). M3 चचाल ( for ररास ). Ś B1 D1.2.8.12 नभोगतास्तेन( B1 D1.2 °तास्त्रेसु ) ररास( Ś D8 °ज ) चोर्वी; Ñ V1.2 B3 D4 ततो( V1 नभो ) वि( V2 ग्रहाश्च )तत्रास चचाल चोर्वी; B2 त्रस्ता भवंश्चापि चचाल चोर्वी; B4 वितत्रसुश्चाथ चचाल धात्री; D3 नभोगताश्चैव ददर्श चोर्वी; D7 G2 नभश्चकंपे च रराज( G2 °स ) चोर्वी; D13 नभश्चराः सा प्रचचाल चोर्वी; L( ed. ) नभोगतास्त्रेसुरकंपतोर्वी.

100 Ś V3 B1 D1–3.8.12 om. 100. B3 reads $^{a}$ in marg. —$^{a}$ ) Ñ2 V1.2 B3 D4.7.13 G3 M3.5 नियोज्य; D6 वियुज्य. Ñ2 V1.2 B2–4 वीरः ; D4.13 शीघ्रं; M5 चापं ( for चापे ). Ñ1 तं ब्राह्ममस्त्रेण नियोज्य शीघ्रं; G1 तं ब्रह्मणोस्त्रं विनियोज्य चापे. —$^{b}$ ) Ñ V1.2 B2–4 M1.2 शितं ( for शरं ). Ñ1 D5–7.9 T1.2 G1 सपुंखं. Ñ1 स तदा ससर्ज; Ñ2 B2–4 यमदंडकल्पं ( for यमदूतकल्पम् ). D4 शितं सुपुंखैः स तदा विसर्ज; D13 शितं सुमुखं सहसा ससर्ज ( unmetric ). —Ñ1 D4.13 om. $100^{c}$– 101. —$^{c}$ ) Ñ2 V1 B2.4 संख्ये; B3 क्रुद्धः ; D5 om. ( hapl. ) ( for तस्य ).

101 Ñ1 D4.13 om. 101 ( cf. v.l. 100 ). B2 om. 101–$103^{b}$. D1 om. $101^{abc}$. V2 om. $101^{ab}$. B1 reads $101^{a}$ in marg. —$^{a}$ ) D6 T2.3 G2 M5 -वीर्यं ( for -वेगं ). D7.9–11 तं लक्ष्मणोत्सृष्टविवृद्धवेगं. —$^{b}$ ) D9 M5 समापतंतं. Ś V1.3 B1.3 D2.3.6.8–12 T2.3 G1.3 M1.2.5 श्वसन- ( for ज्वलन- ). D6.9.11 T2.3 G1.3 M1.5 -प्रवेगं; D10 M2 -[ड]ग्रवेगं ( for -प्रकाशम् ). —$^{c}$ ) V1.2 B3 D10.11 T2 M1–3 सुपर्ण- ( for सुवर्ण- ). Ś D2.8.12 L( ed. ) कालाग्नितुल्या( Ś D8 °पिंगं; D12 °पुंखं; L[ ed. ] °तुल्यं )सितपीतपुंखं; V3 B1 D3 सुतीक्ष्ण( D3 तीक्ष्णाग्र )धारोन्नतचित्रपुंखं. —$^{d}$ ) Ś B3 D2.8.12 M5 ततो ( for तदा ).

102 B2 om. 102 ( cf. v.l. 101 ). —$^{a}$ ) V3 सं- ( for तं ). Ñ2 V1.2 B3.4 D13 प्रेक्ष्य बाणं; D1–4.6–12 G3

G. 6. 51. 108
B. 6. 71. 103
L. 6. 52. 111

तमागतं प्रेक्ष्य तदातिकायो
बाणं प्रदीप्तान्तककालकल्पम् ।
जघान शक्त्यृष्टिगदाकुठारैः
शूलैर्हलैश्चाप्यविपन्नचेष्टः ॥ १०३

तान्यायुधान्यद्भुतविग्रहाणि
मोघानि कृत्वा स शरोऽग्निदीप्तः ।
प्रसह्य तस्यैव किरीटजुष्टं
तदातिकायस्य शिरो जहार ॥ १०४

तच्छिरः सशिरस्त्राणं लक्ष्मणेषुप्रपीडितम् ।
पपात सहसा भूमौ शृङ्गं हिमवतो यथा ॥ १०५

प्रहर्षयुक्ता बहवस्तु वानराः
प्रबुद्धपद्मप्रतिमाननास्तदा ।
अपूजयँल्लक्ष्मणमिष्टभागिनं
हते रिपौ भीमबले दुरासदे ॥ १०६

इति श्रीरामायणे युद्धकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

---

प्रेक्ष्यमाणः. Ś $D_{2.8.12}$ तरसा ( for सहसा ). $Ñ_2$ $V_{1.2}$ $B_{3.4}$ पतंतं ( for [ अ ]तिकायो ). —$^{b}$ ) $B_4$ सुशितैर्. $D_1$ त्वनेकैः ( for अनेकैः ). —$^{c}$ ) $Ñ_1$ $D_{13}$ सवेगपुंखस् ; $Ñ_2$ सुवर्णपुंखस् ; $V_{1.2}$ $B_{3.4}$ सुपर्णपुंखस् ( for सुपर्णवेगस् ). —$^{d}$ ) $Ñ_2$ $V_{1.2}$ $B_{3.4}$ $D_5$ $T_1$ $G_3$ $M_{1.2.5}$ तथापि; $D_{9-11}$ $G_1$ तथाति- ( for तदाति- ). $D_7$ $G_2$ $M_3$ तदा( $D_7$ °था )तिकायस्य. $Ñ_1$ $D_{13}$ तदा समीपं सहसा जगाम.

103 $B_2$ om. 103$^{ab}$ ( cf. v.l. 101 ). —$^{a}$ ) $D_{13}$ स तं शरं ( for तमागतं ). $G_2$ महातिकायो. —$^{b}$ ) Ś $B_{1.3.4}$ $D_{2-4.6.8.12}$ $T_2$ -[ अ ]नल- ( for -[ अ ]न्तक- ). Ś $D_{8.12}$ -कालतुल्यं; $B_1$ -तुल्यवेगं ( for -कालकल्पम् ). $D_1$ बाणैः प्रदीप्तानलकालकल्पैः . —$^{c}$ ) $D_4$ -गदांकुशैस्तैः ( for -गदाकुठारैः ). Ñ $V_{1.2}$ $B_{2-4}$ $D_{13}$ G( ed. ) जघान शक्तीभिर( G [ ed. ] °र्वि )-नष्टचेताः . —$V_2$ illeg. for $^{d}$. —$^{d}$ ) Ś $D_{2.8.12}$ नगैश् ; $D_1$ जलैश् ; $D_3$ हुडैश् ; $D_5$ $T_1$ $G_1$ शितैश् ; $D_{6.9-11}$ $T_{2.3}$ शरैश् ; $M_{1-3}$ ( before corr. ) हुलैश् ( for हलैश् ). $M_5$ शूलैर्भुजाभ्याम् ( for °र्हलैश्चापि ). $D_{2.6.7.12}$ चापि($D_{12}$ °थ) विपन्नचेष्टः; $D_5$ $T_1$ $G_2$ $M_3$ चाप्यविपन्नचेताः K ( ed. ) चाप्यवि° ( for चाप्यविपन्नचेष्टः ). Ñ $B_2$ शूलैर्हलैश्चैव तथा शुभैश्च; $V_{1.3}$ $B_1$ $D_4$ शूलैश्च खड्गैश्च( then $V_1$ illeg. ; $V_3$ $B_1$ °र ) विपन्नचेष्टः ; $B_3$ शूलैः शरैश्चैव तथा गजैश्च; $B_4$ शूलैः कुठारैश्च तथा गुडैश्च; $D_{13}$ शूलैः कुठारैर्मुसलैः शरैश्च. ❀ Cr.g : हुलैः द्विफलपत्राग्रा ( Cr °त्राग्रिमत्ता ? )युधविशेषैः . ❀

104 $^{a}$ ) $V_3$ नाना- ; $D_{13}$ तस्य ( for तानि ). Ś $Ñ_2$ V B $D_{1.3.8.12.13}$ [ अ ]द्भुत( Ś $V_3$ $D_{3.8.12.13}$ [ अ ]प्रति )विक्रमाणि; $Ñ_1$ $D_4$ °वेगवंति; $D_2$ [ अ ]प्रतिमाक्रमाणि ( for [ अ ]द्भुतविग्रहाणि ). —$^{b}$ ) $B_{1.4}$ घोराणि ( for मोघानि ). Ś $B_1$ $D_{8.12}$ हत्वा स; $D_4$ वृत्तानि; $G_3$ कृत्वाथ ( for कृत्वा स ). $D_1$ समरे ( for स शरो ). Ś Ñ V B $D_{1-4.8.12.13}$ [ ऽ ]ग्निकल्पः ; $D_{10.11}$ [ ऽ ]ग्निदीपः . —$^{c}$ ) Ś $D_{2.8.12}$ सकुंडलं तस्य; $Ñ_1$ V $B_{1.2.4}$ $D_{1.3.4.13}$ $M_5$ प्रगृह्य तच्चारु-( $M_5$ °पि ); $Ñ_2$ $B_2$ $M_{1.2}$ प्रसह्य तच्चारु- ; $D_{6.9-11}$ $T_{2.3}$ $G_{1.2}$ $M_3$ प्रगृह्य तस्यैव. $B_3$ -किरीटकुंडलं ( for °जुष्टं ). —$^{d}$ ) $B_4$ तथा; $M_3$ ततो ( for तदा ).

105 $^{a}$ ) $B_2$ सतनुत्राणं. —$^{b}$ ) $Ñ_1$ -प्रभेदितं ; $V_2$ -प्रचोदितं ; $B_3$ -प्रवेपितं; $D_{5.7.9-11}$ $T_1$ $G_1$ $M_5$ -प्रमर्दितं ( for -प्रपीडितम् ). Ś $Ñ_2$ $V_{1.3}$ $B_{1.2.4}$ $D_{1-4.6.8.12.13}$ $T_{2.3}$ $G_2$ लक्ष्मणेन प्रमर्दि( $Ñ_2$ $B_2$ °हारि; $B_4$ °वेपि; $T_2$ °दर्पि [ sic ] )तं. —$^{d}$ ) $V_3$ $B_1$ हैमवतं ( for हिमवतो ). —After 105, Ś $Ñ_2$ V B $D_{1-4.8.12.13}$ read 6.60.1; while $D_{5-7.9-11}$ S ins. :

1330* तं तु भूमौ निपतितं दृष्ट्वा विक्षिप्तभूषणम् ।
बभूवुर्व्यथिताः सर्वे हतशेषा निशाचराः ।
ते विषण्णमुखा दीनाः प्रहारजनितश्रमाः ।
विनेदुरुच्चैर्बहवः सहसा विस्वरैः स्वरैः ।
ततस्ते त्वरितं याता निरपेक्षा निशाचराः । [5]
पुरीमभिमुखा भीता द्रवन्तो नायके हते ।

[ (l. 1) $T_{2.3}$ तत्तु. $D_5$ $T_{1.2}$ $G_1$ निक्षिप्त- ( for विक्षिप्त- ). $D_{7.9-11}$ तं भूमौ पतितं दृष्ट्वा विक्षिप्तांबरभूषणं. —$D_5$ om. ( hapl. ) l. 3–5. —(l. 3) $D_7$ प्रहारैर् ( for प्रहार- ). —(l. 4) $D_{6.7}$ $T_{2.3}$ $G_2$ transp. बहवः and सहसा. $G_2$ स्वनैः ( for स्वरैः ). —(l. 5) $D_{9-11}$ तत्परितो; $T_3$ $G_{1.2}$ $M_{1.2.5}$ ते त्वरिता. $G_1$ यांति ( for याता ). $G_3$ हतशेषा ( for निरपेक्षा ). —(l. 6) $D_7$ अभिमुखं. $D_7$ $G_{2.3}$ याता ( for भीता ). ]

106 Ś Ñ V B $D_{1-4.8.12.13}$ om. 106. —$^{a}$ ) $D_6$ $M_5$ च ( for तु ). —$^{b}$ ) $D_{6.7.9-11}$ $G_{2.3}$ प्रफुल्ल- ( for प्रबुद्ध- ). ❀ Cg : प्रबुद्धेत्यत्र प्रसन्नत्वे तात्पर्यम् । इष्टस्य जयस्य भागः प्राप्तिः सोऽस्यास्तीतीष्टभागी तम् . ❀ —After 106, $T_1$ $M_{3.5}$ ins. :

1331* अतिबलमतिकायमभ्रकल्पं
युधि विनिहत्य स लक्ष्मणः प्रहृष्टः ।
त्वरितमथ तदा स रामपार्श्वं
कपिनिवहैश्च सुपूजितो जगाम ।

[ (l. 1) $M_5$ इंद्रकल्पं. —(l. 2) $M_{3.5}$ विनिपात्य ( for °हत्य ). —(l. 3) $M_5$ स राममभ्युपेत्य ( for तदा स रामपार्श्वं ). —(l. 4) $M_5$ प्रियमतिकायवधं शशंस तस्मै. ]

निकुम्भाग्रज वीर्यं ते बाणवेगं तदद्भुतम् ।
संनतिश्च प्रभावश्च तव वा रावणस्य वा ॥ ३७
प्रह्लादबलिवृत्रघ्नकुबेरवरुणोपम ।
एकस्त्वमनुजातोऽसि पितरं बलवत्तरः ॥ ३८
त्वामेवैकं महाबाहुं शूलहस्तमरिंदमम् ।
त्रिदशा नातिवर्तन्ते जितेन्द्रियमिवाधयः ॥ ३९
वरदानात्पितृव्यस्ते सहते देवदानवान् ।
कुम्भकर्णस्तु वीर्येण सहते च सुरासुरान् ॥ ४०
धनुषीन्द्रजितस्तुल्यः प्रतापे रावणस्य च ।
त्वमद्य रक्षसां लोके श्रेष्ठोऽसि बलवीर्यतः ॥ ४१

G. 6. 55. 71
B. 6. 76. 75
L. 6. 54. 110

$D_{1-3.8.12}$ च (for सु-). $D_{4.13}$ सुदुःकरं. —$^{c}$) $G_1$ वचनं; $M_{1.2}$ प्रहसन्($M_2$ °सहन्[meta.]) (for कुपितः). —$^{d}$) $D_4$ -शाखं; $D_{13}$ -दंतम् (for -शृङ्गम्). $Ś_2$ $D_{1-3.8.12}$ इवर्षभं; $D_4$ यथा तरुं (before corr. °नुं); $D_{10.11}$ इव द्विषं.

37 $V_3$ damaged for $37^{ab}$. —$^{a}$) $D_{13}$ वीर्येण (sic) (for वीर्यं ते). —$^{b}$) $Ś_2$ Ñ $V_{1.2}$ B $D_{1-4.8.12.13}$ बलं च($Ñ_1$ $B_4$ $D_{4.13}$ सु-) महदद्भुतं($B_3$ सुमहत्तरं); $M_{1-3}$ बाणवेगश्च तेऽद्भुतः($M_3$ °वदद्भुतं). ❀ Ct: वेगशब्दोऽर्धर्चादिः. ❀ —$^{c}$) $V_1$ $T_3$ उन्नतिश्; $B_3$ (before corr. as in text) संदि( दि in marg.)तिश्; $B_4$ $D_4$ सन्मतिश् (for संनतिश्). —$^{d}$) $M_5$ च (for second वा). —For $37^{cd}$, G (ed.) subst. 1474*. —After 37, $Ñ_1$ $D_{13}$ ins.:

1474* कुम्भकर्णस्य वीर्येण सायकान्विविधानपि।

—Then they cont. 1474*.

38 $M_{1.2}$ read 38–39 (including 1477*) after 41. —$^{a}$) $D_{4.7.9.11}$ S प्रह्लाद-. $Ñ_2$ $B_{2-4}$ $D_{4.7}$ -बल-; $D_{13}$ -बाण- (for -बलि-). $Ñ_2$ $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ -वृत्रेंद्र- (for -वृत्रघ्न-). —$^{b}$) $G_1$ $M_{1.2}$ -[उ]पमः; Ct as in text (for -[उ]पम). $Ñ_2$ $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ -बलि($V_{1.2}$ °ल; $D_4$ -वा°)सूर्यय($D_4$ °स)मो($B_2$ °सुतो)पमः($B_3$ °म). —After $38^{ab}$, $B_{2.3}$ ins.; $Ñ_1$ $D_{13}$ cont. after 1473*; G (ed.) subst. for $37^{cd}$:

1474* बलं चेन्द्रजितस्तुल्यं प्रभावो रावणस्य वा।

[G (ed.) शक्तिश्चेंद्रजितस्तुल्या (for the prior half).]

—Then $B_{2.3}$ cont.; while $Ś_2$ $Ñ_1$ $V_3$ $B_1$ $D_{1-3.8.12}$ subst. for $38^{ab}$:

1475* प्रकामं चलचित्तघ्न मायाबलविशारद।

[$Ñ_1$ $V_3$ $B_1$ $D_{1.3}$ प्रभावबल- (for प्रकामं चल-). $Ñ_1$ $B_{2.3}$ -दर्पघ्नो; $V_3$ $D_1$ -वृत्रघ्न; $B_1$ $D_3$ -वृत्तज्ञ (for -चित्तघ्न). $Ñ_1$ $B_{2.3}$ महा($B_2$ माया)वीर्यविशारदः (for the post. half).]

—$^{c}$) $D_{13}$ एषस् (for एकस्). $Ś_2$ $D_{1-3.8.12}$ इह; $Ñ_1$ $V_1$ B $D_{4.13}$ असि; $Ñ_2$ अपि; $V_{2.3}$ एव (for अनु-). $V_{2.3}$ $B_1$ पूज्यो; $B_4$ जेता (for -जातो). Ñ $V_1$ $B_{2-4}$ $D_{13}$ वै; $D_4$ वा (for ऽसि). —$^{d}$) $Ś_2$ $Ñ_1$ $B_1$ $D_{1-4.8.12}$ पितुश्च; $B_3$ $D_{13}$ पितुः सु- (for पितरं). $Ñ_2$ $V_1$ $B_2$ -सत्त्वतः; $V_2$ $D_{7.9-11}$ $T_3$ $G_2$ -वत्तरं; $B_4$ -संनतः; $D_5$ $T_1$ $G_3$ $M_3$ -वृत्ततः; $G_1$ -वत्वतः; $M_{1.2}$ -वीर्यतः (for -वत्तरः). —After 38, $B_3$ ins. (in marg.):

1476* विमर्शमावयोरेतं समेतस्य मम त्वया।
अद्य पश्यन्तु भूतानि शक्रशम्बरयोरिव।
कृतमप्रतिमं कर्म दर्शितं चास्त्रलाघवम्।
पातिताश्च महावीरास्त्वया परमतेजसा।

39 $M_{1.2}$ read 38–39 (including 1477*) after 41. —$^{a}$) $Ś_2$ $Ñ_1$ $V_{1.3}$ $B_1$ $D_{1-3.8.12}$ त्वमेको ($Ñ_1$ $V_{1.3}$ $B_1$ °व) हि महावीर्यः; $Ñ_2$ $V_2$ $B_{2-4}$ $D_{4.13}$ त्वामेव हि महावीर्यं ($Ñ_2$ $B_{2.4}$ °त्मानं). —$^{b}$) $T_1$ $G_3$ $M_3$ चाप- (for शूल-). $Ś_2$ $Ñ_1$ $V_{1.3}$ $B_1$ $D_{1-3.8.12}$ शूल($V_{1.3}$ $B_1$ शर)हस्तोरि($D_2$ °स्तो वि)मर्दनः. —$B_3$ om. $39^{cd}$. —$^{cd}$) $B_4$ $D_{13}$ [अ]भि- (for [अ]ति-). $D_4$ नाभ्यवर्तेरन् (sic) (for नातिवर्तन्ते). $D_{13}$ $T_3$ [अ]रयः (for [आ]धयः). $Ś_2$ $Ñ_1$ $V_{1.3}$ $B_1$ $D_{1-3.8.12}$ त्रिदशानपि सं($Ś_2$ $D_{1.2.8.12}$ °नामपि)क्रुद्धो विजेता ($V_1$ जेतासि; $D_{1.3}$ निर्जेता; $D_2$ निर्जेतुं) रणमूर्धनि. —After 39, $D_{5-7.9-11}$ S ins.:

1477* विक्रमस्व महाबुद्धे कर्माणि मम पश्यतः।

[$D_{5-7}$ $T_{1.2}$ $G_3$ महायुद्धे; $M_{2.5}$ महाबाहो (for °बुद्धे). $D_6$ $T_{2.3}$ पश्यसि; $D_{10.11}$ $G_1$ पश्य च (for पश्यतः).]

40 $^{a}$) $D_4$ बल(*sup. lin.* also वर)दानप्रमत्तस्तु. —$^{b}$) $Ś_2$ $D_{8.12}$ समेतो; Ñ $V_{1.2}$ $B_{2-4}$ $D_{13}$ बाधते; $V_3$ $B_1$ $D_{1-3}$ समेतान्; $D_4$ तदा वै (for सहते). $Ś_2$ $V_3$ $B_1$ $D_{1-4.8.12}$ दैत्य- (for देव-). —$^{c}$) $Ñ_2$ $B_{2.4}$ $D_{13}$ स्व- (for तु). $Ś_2$ $Ñ_1$ $V_3$ $B_1$ $D_{1-4.8.12}$ कुंभकर्णस्य. —$^{d}$) $Ñ_2$ $B_2$ बाधते; $M_1$ सहसः (sic) (for सहते). $M_{1.2}$ स (for च). $Ś_2$ $D_{8.12}$ संहतान्दानवानपि; $Ñ_1$ $D_4$ जयसे दैत्यदानवान्; $V_3$ $B_1$ $D_{1-3}$ बाधते($D_{1-3}$ सहते) विबुधानपि; $B_4$ $D_{13}$ बाधते स पुराम($B_4$ सुरासु)रान्. —For $40^{cd}$, $V_{1.2}$ $B_3$ subst.; while $Ñ_2$ $B_4$ ins. after 40:

1478* कुम्भकर्णस्य वीर्येण सदृशस्त्वं महाबलः।

[$B_3$ कुंभकर्णश्च.]

41 $^{a}$) $Ś_2$ $Ñ_1$ $B_{1.4}$ $D_{1.2.6.8.12}$ $T_{2.3}$ धनुषा. $Ñ_2$ $V_{1.2}$ $B_{2.4}$ $D_{2.7}$ $G_2$ $M_{1.2}$ [इं]द्रजिता. —$^{b}$) $Ś_2$ $B_1$ $D_{1-3.8.12}$ प्रतापाद्; $Ñ_2$ $V_1$ $B_{2.4}$ $D_{13}$ प्रभावे (for प्रतापे). $Ñ_1$ $D_4$ ह; $D_6$ वा (for च). —$^{c}$) Ñ V B $D_{1-4.8.12.13}$ त्वमे($D_4$ त्वं ह्ये)को($D_{13}$ °व) रक्षसां मध्ये ($V_3$ लोके). —$^{d}$) $Ñ_2$ $B_{2.4}$ स्व- (for ऽसि). $Ñ_1$ $B_3$ $D_{4.13}$ [अ]तुलविक्रमः (for बलवीर्यतः). —After 41, $Ñ_1$ $B_{2.3}$ $D_4$ ins.:

1479* यो मे प्रमुखतो वीर युद्धेषु कृतनिश्चयः।

—After 41, $M_{1.2}$ read 38–39 (including 1477*).

G. 6. 55. 72
B. 6. 76. 76
L. 6. 54. 111

महाविमर्दं समरे मया सह तवाद्भुतम् ।
अद्य भूतानि पश्यन्तु शक्रशम्बरयोरिव ॥ ४२
कृतमप्रतिमं कर्म दर्शितं चास्त्रकौशलम् ।
पातिता हरिवीराश्च त्वयैते भीमविक्रमाः ॥ ४३
उपालम्भभयाच्चापि नासि वीर मया हतः ।
कृतकर्मा परिश्रान्तो विश्रान्तः पश्य मे बलम् ॥ ४४
तेन सुग्रीववाक्येन सावमानेन मानितः ।
अग्नेराज्यहुतस्येव तेजस्तस्याभ्यवर्धत ॥ ४५

42 B3 reads 42–43ᵇ within brackets. —ᵃ) D9–11 सहते (for समरे). Ś2 V3 B1 D1–3.8.12.13 विमर्दमावयोरेतं(B1 D1.3 °रेवं; D13 °रद्य); Ñ1 D4 मुहूर्तमावयोर्यु(D4 °मपि सो यु[sic])द्धं. —ᵇ) Ñ2 V1.2 B2.4 D11 त्वया (for मया). Ñ2 V1.2 B2.4 ममानघ; D9–11 तद(D11 °म)द्भुतं (for तवाद्भुतम्). Ś2 Ñ1 V3 B1.3 D1–4.8.12.13 समेत(D8 °मत्व)स्य मम त्वया(D4 समश्रय [sic]). —ᶜ) B4 अथ (for अद्य). Ś2 Ñ2 V B1.2.4 D1–3.8.12 M1.2 transp. भूतानि and पश्यन्तु. Ñ1 B3 D13 पश्यंतु सर्वभूतानि; D4 पश्यत्सु सर्वभूतेषु (before corr. °तानि). —ᵈ) D6 T2.3 स्मर- (for शक्र-). V2 D8 अपि (for इव).

43 B3 reads 42–43ᵇ within brackets. —ᵃ) Ñ1 B3 D4.13 त्वया हि(D4 यत्त्वया) विविधैरस्त्रैर्; D7 G2 कृतप्रतिकृतं कर्म. —ᵇ) Ñ1 D4 ह्यस्त्र-; Ñ2 बाहु-; B3 हस्त-; D1 वा स्व-; D6 T2.3 शस्त्र-; D8 चात्र; D9 वास्त्र-; D13 यत्र (for चास्त्र-). Ñ V1.2 B2–4 D1.4.13 -लाघवं (for -कौशलम्). —G2 repeats consecutively 43ᶜ–44. —ᶜ) Ñ2 V1.2 B3.4 D2–4.8 M1.2 प(B4 घा)तिताश् (for पातिता). Ś2 V3 B1 D1–3.8.12 च प्रवीरा ये(V3 B1 मे); Ñ2 V1.2 B2.4 च महावीरास्(Ñ2 B2 °र्यास्); B3 D13 हरयः शूरा (for हरिवीराश्च). —ᵈ) Ñ1 D4 नो; D5 M3 वै; M5 ते (for [ए]ते). B3 D13 बलिनो (for त्वयैते). Ś2 Ñ2 V B1.2.4 D1–3.8.12 [अ]नुपमतेजसा(Ś2 D2.8.12 °सः); T1 भीमपराक्रमाः (for [ए]ते भीमविक्रमाः).

44 ᵃ) Ś2 V1.3 B1 D2.3.8–11 चैव; D1 वीर; D4 वापि; D12 चैष (for चापि). —ᵇ) D4 नामी (for नासि). D1 भीत्या; D6 वीरा; D7 वीर्यान् (for वीर). D4 हताः (for हतः). Ś2 V3 D2.3.8.12 transp. मया and हतः. —V3 om. 44ᶜ–45. D1 om. (hapl.?) 44ᶜ–45ᵇ. —ᶜ) Ś2 Ñ V1.2 B3 D4.6 -कर्म- (for -कर्मा). B2 [अ]थ विश्रांतो (for परिश्रान्तो). —ᵈ) Ñ1 B3 D4.13 पश्य मे सु(D4 मेद्य)महद्ब(B3 °द्वाव)लं; Ñ2 पश्य मेद्य बलं महत्.

45 V3 om. 45; D1 om. 45ᵃᵇ (for both, cf. v.l. 44). —ᵃ) V1.2 B4 ततः (for तेन). —ᵇ) Ñ1 D4.13 साभिमानेन; Ñ2 B1.3.4 D9 साप°; T2.3 सावज्ञेनाव-; Cr.g.t as in text (for सावमानेन). Ś2 D6.8.12 T1 मानिनः; Ñ V1.2 B2 D4.13 कर्षितः; B3 धर्षितः; B4 कुप्यतः; Cg as in text (for मानितः). —ᶜ) Ś2 D8.12 -[आ]हुतेर्यद्वत्(D12 °थैव); Ñ1 B1.2 D2.4.5.7.13 T G2.3 M3.5 -[आ]हुतस्ये(D5 °स्यै)व. —ᵈ) Ś2 B3 D1–4.8.12.13 व्यवर्धत; B1 विवर्धत; B4 [अ]नुवर्धते; T2.3 G2.3 M5 [अ]भ्यवर्तत (for [अ]भ्यवर्धत). Ñ1 तस्य कोपो व्यवर्धत. —After 45, Ñ2 V1.2 B D13 ins.:

1480* युद्धायाभिमुखश्चैनमभ्ययाद्राक्षसर्षभः।

[Ñ2 V1.2 B4 -मुखश्चैवम्; D13 -मुखस्त्वेवम्. B2 अभ्यगाद्.] —Thereafter all the above MSS. cont.; while Ñ1 D4–7.9–11 S ins. after 45:

1481* ततः कुम्भस्तु सुग्रीवं बाहुभ्यां जगृहे तदा।
गजाविवावीतमदौ निश्वसन्तौ मुहुर्मुहुः।
अन्योन्यगात्रग्रथितौ कर्षन्ताावितरेतरम्।
सधूमां मुखतो ज्वालां विसृजन्तौ परिश्रमात्।
तयोः पादाभिघाताच्च निमग्ना चाभवन्मही। [5]
व्याघूर्णिततरङ्गश्च चुक्षुभे वरुणालयः।
ततः कुम्भं समुत्क्षिप्य सुग्रीवो लवणाम्भसि।
पातयामास वेगेन दर्शयन्नुदधेस्तलम्।
ततः कुम्भनिपातेन जलराशिः समुत्थितः।
विन्ध्यमन्दरसंकाशो विससर्प समन्ततः। [10]

[(l. 1) M1.2 बली (for तदा). —For l. 1, Ñ V1.2 B D4.13 subst.:

1481(A)* सुग्रीवः कौम्भकर्णिश्च युद्धाय समुपस्थितौ।

[B2 कुंभकर्णिश्. Ñ1 B3 D13 सुग्रीवकुंभौ तु (B3 स; D13 च) तदा; D4 उभौ सुग्रीवकुंभौ च (for the prior half). Ñ1 B3 D4.13 समाजग्म(D4 °ग्न)तुराहवे (for the post. half).]

—(l. 2) Ñ B1.2.4 D4 [आ]पीत-; D5 T1 G3 M5 स्फीत-; D6 [अ]र्पित-; D7.9 G2 Cg [आ]हित-; T2 [अ]पेत-; T3 [अ]न्वित- (for [अ]वीत-). B3 महामत्तौ; D13 मदोन्मत्तौ (for [अ]वीतमदौ). B4 D6.7.13 M1 निःश्वसंतौ. Ñ1 V1.2 B1.3.4 D4.13 M1.2 पुनः पुनः. ❀ Ck.t: अवीतमदौ अनपगतमदौ। 'आवीतमदौ' इति च्छेदे (Ck °दे तु) व्याप्तमदाविल्यर्थः. ❀ —(l. 3) G (ed.) अन्योन्यं. Ñ1 B3 D4.13 -बाहु-; B1 -गाढ- (for -गात्र-). Ñ2 B2 D13 -मथितौ; B1.4 G3 -व्यथितौ (for -ग्रथितौ). V1.2 D10 घर्षताव्; D9 धर्षताव्; D11 वर्षताव्; G3 हर्षताव् (sic) (for कर्षन्ताव्). B2 इतरेतरौ. —After l. 3, Ñ2 ins.:

1481(B)* .......... (illeg.) जघ्नतुश्च परस्परम्।
उल्लिखन्तौ च दंष्ट्राभिः सिंहाविव विरेजतुः।
रुधिरोक्षितसर्वाङ्गौ पुष्पिताविव किंशुकौ।
तौ मुहूर्तं समाश्वस्य पांसुना चावगुण्ठितौ।
करैर्नागकरप्रख्यैर्भूय एवाभिपेततुः। [5]
वानरा राक्षसाश्चैव प्रेक्षका निश्चलाः स्थिताः।
इतरेतरयोः कीर्णं कथयन्तः परस्परम्।
कपिराक्षसराजानौ भर्तृकार्ये व्यवस्थितौ।

ततः कुम्भः समुत्पत्य सुग्रीवमभिपद्य च ।
आजघानोरसि क्रुद्धो वज्रवेगेन मुष्टिना ॥ ४६
तस्य चर्म च पुस्फोट संजज्ञे चास्य शोणितम् ।
स च मुष्टिर्महावेगः प्रतिजघ्नेऽस्थिमण्डले ॥ ४७
तदा वेगेन तत्रासीत्तेजः प्रज्वालितं मुहुः ।
वज्रनिष्पेषसंजातज्वाला मेरौ यथा गिरौ ॥ ४८
स तत्राभिहतस्तेन सुग्रीवो वानरर्षभः ।
मुष्टिं संवर्तयामास वज्रकल्पं महाबलः ॥ ४९
अर्चिःसहस्रविकचं रविमण्डलसप्रभम् ।
स मुष्टिं पातयामास कुम्भस्योरसि वीर्यवान् ॥ ५०

G. 6. 55. 86
B. 6. 76. 89
L. 6. 54. 119

—(l. 4) D4 श्वासं क्षणात्क्षणाद्वीरो (for the prior half). Ñ1 निश्वसंतौ; Ñ2 V1.2 B1.3.4 D4.13 विमुंचंताव्; M5 उद्गिरंतौ (for विसृजन्तौ). Ñ2 V1.2 B1.2.4 उभौ (for परि-). D4 -क्रमात् (for -श्रमात्). —(l. 5) M1.2 तु (for first च). Ñ V1.2 B D13 -[अ]वगाढा च( Ñ1 °ढाच; V1.2 B4 °ढेन); D4 -विनिः-क्षेपात्; D9 -[अ]भिभूता च (for -[अ]भिघाताच्च). Ñ2 V1.2 B1.2.4 निम्नदेशा; B3 D4.13 निमग्नेव; D6 T2 निर्भग्ना च (for निमग्ना च). —(l. 6) D5 T1 G3 -तरंगैश्च; M5 -तरंगौघश्च्. Ñ1 B1.3 D4.13 मकर- (for वरुण-). —(l. 7) D5 T1 G3 स तं; G (ed.) तत्र (for ततः). Ñ1 समुत्पत्य; G (ed.) समाक्षिप्य. —(l. 8) V2 उदधेः स्थलं. ❀ Ck: दर्शयन्नुदधेस्तलमिति। स्थवलं दर्शयन्भूत्वा(?) उदधेस्तलमतिक्रम्य लवणाम्भसि कुम्भं पातयामास।; so also Ct which reads स्थलम् for तलम् both times as above comm. and adds 'उदधेस्तलम्' इति पाठे तद्दर्शयंल्लवणाम्भसि पातयामासेत्यर्थः. ❀ —(l. 9) D4.13 M5 समुच्छ्रितः (for °स्थितः). —(l. 10) D4 -संकाशं. B1 विषमोभूत्; G3 विससर्ज (for विससर्प). ]

46 [a]) B1 च स (for कुम्भः). —[b]) Ś2 B3 D1.3–5.7–12 T3 G2.3 M5 अभिपत्य च; Ñ2 V1.2 B2.4 उपगृह्य च; D2 अभिपद्यत; D13 अभिसृत्य च; G1 अभिपाल्य च. —[c]) M5 जघान च (for आजघान). —[d]) Ñ2 B2 D4.6.7.9–11 T2.3 -कल्पेन (for -वेगेन).

47 [a]) D7.10.11 वर्म (for चर्म). D5 M1.2 विपुस्फोट; D6 च विफोटः (sic) (for च पुस्फोट). Ś2 V3 D1–3.8.12 T3 च(D2 व)र्म प्रस्फुटितं तस्य; Ñ1 B3 D4 G (ed.) स्फुटिताचर्म(G [ed.]°द्दर्म)णस्तस्य; Ñ2 V1.2 B2.4 चर्म प्रस्फोट (B4 विस्फोट्य) वेगेन; B1 सचर्म स्फुटितं तस्य(sic); D13 स्फोटिता वर्मपास्तस्य. —[b]) D5.9–11 G1 चापि; D6 तस्य; T2 तत्र (for चास्य). Ś2 Ñ2 V1.2 B2.4 D1–3.8.12 T3 प्रसुस्राव च; Ñ1 D4 M3 बहु सुस्राव; V3 B1.3 D13 सुस्राव बहु (B1 बहु in marg.) (for संजज्ञे चास्य). —[c]) Ś2 V3 B1 D1–3.8.12 T3 Cm स तु; D9–11 Ct तस्य; Cg as in text (for स च). V3 तस्य (for मुष्टिर्). Ñ2 V1.2 B2.4 मुष्टिप्रहारेण; D6 T2 मुष्टिं समुद्यम्य; Cg.t as in text (for मुष्टिर्महावेगः). —G1 damaged for [d]. —[d]) Ś2 V3 B1 D2.8.12 पतितो हि; D1.3 पतितोपि; D13 संनिजघ्ने (for प्रतिजघ्ने). Ś2 V3 B1 D1–3.8.12 -संचये; Ñ2 V1.2 B2–4 D4.7.13 G2 -मंडलं; T3 -संक्षये (for -मण्डले). ❀ Cm: स तु मुष्टिमिति पाठः।; Cg: स च मुष्टिर्महावेग इति पाठः. ❀

48 [a]) Ñ V1.2 B2–4 D4.7.9–11 M1.2 तस्य (for तदा). D6 T2 तस्यास्थि- (for तत्रासीत्). D13 transp. तदा and तत्र. —[b]) G3 ज्वाला- (for तेजः). Ñ2 V1.2 B2.4 पुनः; B3 बहु; D9–11 M5 महत् (for मुहुः).—For 48[ab], Ś2 V3 B1 D1–3.8.12 T3 subst.:

1482* वेगेन महता तस्य तेजः समुदपद्यत ।

[ T3 तस्य महता (by transp.). D1–3 समुपपद्यत. V3 B1 क्षतजः समपद्यत (for the post. half). ]

—[c]) M5 -निष्पिष्ट-. Ś2 D2.12 -संभ्रांता; Ñ1 V3 B1 D1.3.7.10.11 G1.3 M1–3 -संजाता; Ñ2 V1.2 B2.3 D4.13 -सं(B3 नि)ह्रादा; B4 -संसर्गा; D8 om. (for -संजात-). —G2 om. (hapl.) from 48[d] up to the prior half of 1483*. —[d]) D9 M5 -ज्वाले (for -ज्वाला). Ñ V B2–4 D4.7.10.11.13 M1.2 मेरोर्; M5 मेरु-. Ñ V B2–4 D4.10.11.13 M1.2 यथा गिरेः; D6 T2.3 गिराविव; D7 गिरेर्यथा; M5 -गिरौ यथा (by transp.) (for यथा गिरौ). ❀ Cv.r: 'वज्रनिष्पेषसंजातज्वाला मेरौ यथा( Cr ** ) गिरौ' इति पाठः. ❀ —After 48, D7 ins.; G2 ins. after 48[c] (owing to omission):

1483* मुष्टिना तेन संजज्ञे ज्वाला विद्युदिवोत्थिता ।

[ G2 om. the prior half. ]

49 [a]) Ś2 Ñ2 V B1.4 D1–3.8.12 M1.2 तथा; Ñ1 B3 D4.13 M5 तदा; G1 तल-; Ct as in text (for तत्र). —[b]) Ś2 V3 B1 D1–3.6.8.12 T2.3 वानरेश्वरः; Ñ2 V1.2 B2–4 D4.13 वानराधिपः. —[c]) B1 संवर्धयामास. —[d]) Ś2 Ñ V1.2 B D1–3.8.12.13 वज्रवेगं; V3 स वज्राभं (for वज्रकल्पं).

50 [a]) Ñ2 B2 -विकटं; V1.2 D11 G2 -विकच-; D7 G3 -कवचं; M5 -विततं; Cg.k.t as in text (for -विकचं). Ś2 V3 B1 D1–3.8.12 ज्वलितानलसंकाशं; Ñ1 B3 D4 G (ed.) तमर्चिज्वा(G [ed.]°र्ज्वा)लाविकचं(B3 °टं); D13 तद्दीर्घज्वालविकचं. —[b]) Ś2 Ñ V2.3 B1.3.4 D1–4.6–8.12.13 T2.3 G2 M5 -संनिभं; V1 D9–11 M1.2 Ck.t -वर्चसं; Cg as in text (for -सप्रभम्). —[c]) Ś2 Ñ V B D1–4.8.12.13 मुष्टिं सं-(Ś2 B1 D3.8.12.13 स [by transp.]) (for स मुष्टिं). B4 D4 -वर्तयामास; T2 पा**मास(damaged) (for पातयामास). —[d]) Ś2 B1.3.4 D2.4.8.12.13 [उ]परि (for [उ]रसि). Ś2 Ñ1 B1.3 D1–4.8.12.13 M1.2 वानरः. —After 50, Ñ V1.2 B2–4 D4–7.9–11.13 S ins.:

G. 6. 55. 0
B. 6. 76. 91
L. 6. 54. 120

मुष्टिनाभिहतस्तेन निपपाताशु राक्षसः ।
लोहिताङ्ग इवाकाशाद्दीप्तरश्मिर्यदृच्छया ॥ ५१

कुम्भस्य पततो रूपं भग्नस्योरसि मुष्टिना ।
बभौ रुद्राभिपन्नस्य यथा रूपं गवां पतेः ॥ ५२

तस्मिन्हते भीमपराक्रमेण
प्लवंगमानामृषभेण युद्धे ।
मही सशैला सवना चचाल
भयं च रक्षांस्यधिकं विवेश ॥ ५३

इति श्रीरामायणे युद्धकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

1484* स तु तेन प्रहारेण विह्वलो भृशताडितः ।
निपपात तदा कुम्भो गतार्चिरिव पावकः ।

[ (l. 1) $B_3$ भूतेन ( for तु तेन ). $B_2$ हृदि ( for भृश- ). Ñ $V_{1.2}$ $B_{2-4}$ $D_{4.10.13}$ $T_1$ $G_1$ $M_5$ -पीडितः ( for -ताडितः ). —(l. 2) Ñ$_2$ $V_{1.2}$ $B_{2.4}$ रुधिरार्द्रो ( for निपपात ). Ñ $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ रणे ( for तदा ). Ñ $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ निर्वमन्पावकार्चिषः ( $B_3$ $D_4$ °स्रुधिरं बहु ) ( for the post. half ). ]

51 $D_3$ om. 51. G ( ed. ) om. 51$^{ab}$. —$^{a}$) $B_1$ निहतस् ( for [ अ ]भि° ). $M_5$ चाशु ( for तेन ). Ñ$_2$ $V_{1.2}$ $B_{2.4}$ हर्षयन्वानरान्सर्वान् . —$^{b}$) Ñ $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ $M_{1.2.5}$ स ( for [ आ ]शु ). —After 51$^{ab}$, $V_3$ wrongly repeats 51$^{a}$. —$^{c}$) Ñ$_1$ $D_4$ -[ अ ]र्कसंकाशो; $D_{13}$ -समाकाशो ( for इवाकाशाद् ). —$^{d}$) Ñ$_1$ $D_{13}$ इवाभवत् ( for यदृच्छया ). $D_4$ संध्यार्क इव सागरे.

52 $^{a}$) $D_4$ [ आ ]पततो ( for पततो ). $D_3$ नित्यं ( for रूपं ). —$^{b}$) $M_{1.2}$ भिन्नस्य; Cm.t as in text ( for भग्नस्य ). Ś$_2$ $B_3$ $D_{2.3.8.12}$ [ उ ]परि ( for [ उ ]रसि ). —$^{c}$) Ś$_2$ Ñ V B $D_{1-4.8.12.13}$ ईश्वरेणाभिपन्नस्य. —$^{d}$) Ś$_2$ $V_3$ $B_1$ $D_{2.3.8.12}$ ददृशुर्गोपतेरिव; Ñ $V_{1.2}$ $B_{2.4}$ रूपमासीत्पशोरिव; $B_3$ $D_{1.4.13}$ रूपं पशु( $B_3$ मृग )पतेरिव( $D_1$ °र्यथा ). ❀ Cv : गवां पतेः पूष्णः । ; so also Cr.m.g. ❀

53 $^{a}$) $D_7$ यस्मिन् ( for तस्मिन् ). Ś$_2$ $V_3$ $B_{1.3}$ $D_{1-3.8.12.13}$ ततो हते ते( $D_{13}$ °तस्ते )न महापराक्रमे( $B_1$ महाक्रमे तु; $B_3$ $D_{13}$ पराक्रमेण ). —$^{b}$) $D_{13}$ अधिपेन ( for ऋषभेण ). Ś$_2$ Ñ$_1$ $V_3$ $D_{1-4.8.12.13}$ संयुगे; $G_3$ तेन ( for युद्धे ). —$^{c}$) Ś$_2$ Ñ V B $D_{1-4.8.12.13}$ वि( $B_3$ प्र; $D_4$ [ अ ]पि; $D_{13}$ च )-चचाल सापगा( $D_4$ °गरो ) ( for सवना चचाल ). —$^{d}$) $D_{13}$ रक्षःसु ( for रक्षांसि ). Ś$_2$ Ñ V B $D_{1-4.8.12.13}$ L ( ed. ) समाविशत् ( L [ ed. ] °शन् ) ( for विवेश ).

Colophon. —*Kāṇḍa name* : Ñ$_2$ $V_3$ om. Ñ$_1$ B $D_{2.4.13}$ लंकाकांडे. —*Sarga name* : Ś$_2$ Ñ V B $D_{1-4.8.12.13}$ कुंभवधो; $D_9$ कंपनशोणिताक्षप्रजंघयूपाक्षकुंभवधो. —*Sarga no.* ( figures, words or both ): Ñ$_1$ $V_3$ $B_2$ $D_{2.4.8.12.13}$ om. ; Ś$_2$ 54 ; Ñ$_2$ 57 ; $V_1$ $D_1$ 56 ; $V_2$ 55 ; $B_1$ 51 ; $B_3$ 50 ; $B_4$ $D_9$ 53 ; $D_3$ 58 ; $D_{5-7.10.11}$ $T_1$ G $M_{3.5}$ 76 ; $T_2$ 81 ; $T_3$ 83; $M_{1.2}$ 77. —After colophon, G $M_{1.2}$ conclude with श्रीरामाय नमः ; $M_5$ with श्रीरामचन्द्राय नमः .

# ६४

निकुम्भो भ्रातरं दृष्ट्वा सुग्रीवेण निपातितम् ।
प्रदहन्निव कोपेन वानरेन्द्रमवैक्षत ॥ १

ततः स्रग्दामसंनद्धं दत्तपञ्चाङ्गुलं शुभम् ।
आददे परिघं वीरो नगेन्द्रशिखरोपमम् ॥ २

हेमपट्टपरिक्षिप्तं वज्रविद्रुमभूषितम् ।
यमदण्डोपमं भीमं रक्षसां भयनाशनम् ॥ ३

तमाविध्य महातेजाः शक्रध्वजसमं रणे ।
विननाद विवृत्तास्यो निकुम्भो भीमविक्रमः ॥ ४

उरोगतेन निष्केण भुजस्थैरङ्गदैरपि ।
कुण्डलाभ्यां च मृष्टाभ्यां मालया च विचित्रया ॥ ५

निकुम्भो भूषणैर्भाति तेन स्म परिघेण च ।
यथेन्द्रधनुषा मेघः सविद्युत्स्तनयित्नुमान् ॥ ६

परिघाग्रेण पुस्फोट वातग्रन्थिर्महात्मनः ।
प्रजज्वाल सघोषश्च विधूम इव पावकः ॥ ७

G. 6. 56. 7
B. 6. 77. 7
L. 6. 55. 7

## 64

Ś1 om. Sarga 64 (cf. v.l. 6. 62.1).

1 $^{b}$) Ñ1 V1.2 B3.4 D13 हतं रणे( Ñ1 D13 तदा; B3 बले ) ; Ñ2 B2 रणे हतं; B1 D6 T2.3 [अ]भिपातितं (for निपातितम् ). D4 सुग्रीवनिहतं तदा. —V3 om. 1$^{c}$ – 2. —$^{c}$) D5.7 T1 प्रहसन्. D6 एव (for इव ). D5 कायेन. —$^{d}$) Ñ2 V2 B2 D9–11 M1.2 उदैक्षत; T3 अथैक्षत (for अवैक्षत ). Ś2 B1 D1–3.8.12 सुग्रीवं प्रत्य( D1 सम )वैक्षत; Ñ1 B3 D4.13 द्रुतमश्वानचोदयत्.

2 V3 om. 2 (cf. v.l. 1). D4 om. 2$^{ab}$. —$^{a}$) Ñ2 V1.2 B2.4 -संछन्नं; B1 -संपन्नं (for -संनद्धं ). Ś2 D1–3.8.12 कृतसंग्राममालिर्यग्( D1–3 °ल्यं च ) ; Ñ1 B3 D13 कृतस्रग्दाममालं( B3 °ल्यं ) च. —$^{b}$) B3 -[अं]गुलांतरं; M5 -[अं]गुलिं शुभं. T3 परिघं हेमभूषितं. —$^{c}$) T3 बलवान् (for परिघं ). D5.10.11 धीरो; M5 धीरं (for वीरो ). —$^{d}$) Ñ1 V2 B3.4 D4.13 गिरींद्र- ; D3.9–11 G1 महेंद्र- (for नगेन्द्र- ).

3 $^{a}$) T1 damaged for हेम. —For 3$^{ab}$, Ś2 Ñ V B D1–4.8.12.13 subst. :

1485* विनद्धमायसैः पट्टैर्हेममालिनमायसम् ।

[ Ñ B2.3 D4.13 निबद्धम्; V1 B1 D3 पिनद्धम्; B4 संनद्धं (for विनद्धम् ). Ś2 D1.2.8.12 आयतैः ; Ñ2 V1.2 B3.4 D4 कांचनैः (for आयसैः ). G (ed.) पाशैर् (for पट्टैर् ). D1 हेमैर् (for हेम- ). B1 D1.3 -ज्वलितम् (for -मालिनम् ). Ś2 V3 D8.12 हेमज्वलितमायतं( V3 °कुंडलैः ) ; D2 हेमैर्ज्वलितमायसैः (for the post. half ). ]

—Thereafter Ñ1 D4.13 read 5$^{cd}$ ( D4 alone repeating it in its proper place ). —$^{c}$) Ś2 Ñ V B D1–4.8.12.13 घोरं (for भीमं ). —$^{d}$) Ś2 -नाशिनं (for -नाशनम् ).

4 D8 repeats 4$^{ab}$ consecutively. —$^{a}$) D4 आविध्यत (hypm.) (for आविध्य ). —$^{b}$) D5 T1 -निभं तदा; D6 T2.3 M3.5 -समं तदा( T2 °था ) ; D7.9–11 G2 Ct -समौजसं (for -समं रणे ). Ś2 Ñ V B D1–4.8( both times ).12 महा( B1 यंत्र )शक्रध्वजोपमं; D13 परिघेंद्रध्वजोपमं; G1.3 शक्रतुल्यपराक्रमः ; G (ed.) वेगेन महता तदा. —$^{c}$) D6.9 M1.2 निननाद; Cg विननाद( as in text ). —$^{d}$) B3 विनदन् (for निकुम्भो ). Ś2 Ñ V B D1–4.8.12 भैरवं रवं; D13 भैरवस्वनं (for भीमविक्रमः ).

5 B1 reads 5–7$^{b}$ in marg. —$^{a}$) Ñ1 B3 D4.13 हारेण (for निष्केण ). —$^{b}$) Ś2 Ñ V B D1–4.8.12.13 अपि ( B3 इव ) चांगदैः( V3 damaged from गदैः up to त्र in $^{d}$) (for अङ्गदैरपि ). —Ñ1 D4.13 read 5$^{cd}$ after 1485* ( D4 alone repeating it here). —$^{c}$) B1 D2.3 सु- ; G1.3 तु (for च ). Ś2 D8.12 सुतप्ताभ्यां; D1.4 (second time).9–11 M3 च( D1 वि- ; D4 सु- ) चित्राभ्यां (for च मृष्टाभ्यां ). —$^{d}$) Ś2 Ñ1 B1 D1–3.4( both times ).8.12 स्रजा च सु- (for मालया च ). D6 reads च विचित्रया in marg. B3 सु- ; D9–11 स (for वि- ). D13 स्रजा नवसुचित्रया.

6 B1 reads 6 in marg. (cf. v.l. 5). —$^{b}$) Ś2 Ñ V B D1–4.8.12.13 परिघेणायते( Ñ2 V1 B2.4 D1.3.4.13 °से )न च. —$^{d}$) Ś2 Ñ2 V3 B2 D5.8.9.12.13 स्तनयित्नुवान्( Ś2 D8.12 °ना ) ; D4 जलदागमे.

7 B1 reads 7$^{ab}$ in marg. (cf. v.l. 5). —$^{ab}$) V3 B1 संस्फोट्य (for पुस्फोट ). Ñ1 B3 प्रास्फोट्य दिवि घातेन; Ñ2 V1.3 B2 D13 प्रा( Ñ2 B2 प्र; V1 आ )स्फोट्य परिघाग्रे( D13 °ग्रे )ण; B4 पुस्फोट परिघग्रंथिर् (for $^{a}$). T1 M1 -ग्रंथिं (for -ग्रन्थिर् ). Ñ2 B2.4 महास्वनः. Ñ1 B3 D13 वाताविद्धो महास्वनः ; V1.3 B1 स कृत्वा भैरवं रवं (for $^{b}$). Ś2 D1–3.8.12 परिघाग्रं तथास्फोट्य वर( D3 दृढ )ग्रंथिर्महास्वनं( D3 °रं ) ; D4 प्रास्फोटयन्दित्वं घोषैर्वातविद्धा महास्वनाः. —$^{c}$) B3 स (for प्र- ). B2.3 सधूमोत्र; D6 सुघोषश्च; G (ed.) निकुंभोपि (for सघोषश्च ). Ś2 Ñ V B1.4 D1–4.8.12.13 जज्वाल च( V3 illeg. from च up to पा in 8$^{a}$) स( B1 सह )धूमोत्र. ❀ Cr : प्रजज्वाल सघोषश्चेत्यत्र परिघः

G. 6. 56. 0
B. 6. 77. 8
L. 6. 55. 8

नगर्या विटपावत्या गन्धर्वभवनोत्तमैः ।
सह चैवामरावत्या सर्वैश्च भवनैः सह ॥ ८
सतारागणनक्षत्रं सचन्द्रं समहाग्रहम् ।
निकुम्भपरिघाघूर्णं भ्रमतीव नभस्तलम् ॥ ९
दुरासदश्च संजज्ञे परिघाभरणप्रभः ।
क्रोधेन्धनो निकुम्भाग्निर्युगान्ताग्निरिवोत्थितः ॥ १०
राक्षसा वानराश्चापि न शेकुः स्पन्दितुं भयात् ।
हनूमांस्तु विवृत्योरस्तस्थौ प्रमुखतो बली ॥ ११
परिघोपमबाहुस्तु परिघं भास्करप्रभम् ।
बली बलवतस्तस्य पातयामास वक्षसि ॥ १२
स्थिरे तस्योरसि व्यूढे परिघः शतधा कृतः ।
विशीर्यमाणः सहसा उल्काशतमिवाम्बरे ॥ १३
स तु तेन प्रहारेण चचाल च महाकपिः ।
परिघेण समाधूतो यथा भूमिचलेऽचलः ॥ १४

कर्ता।; Cg: सघोषः ससिंहनाद इति निकुम्भविशेषणम्। परिघविशेषणं वा. ❀ —[d]) Ś2 Ñ2 V1 B1 D1-3.8.12 संघर्षाद्; Ñ1 V2 B2.3 D4.13 सज्वाल; B4 यज्वने (metri causa); M5 सधूम (for विधूम).

8 V3 illeg. up to पा in 8[a] (cf. v.l. 7). G (ed.) om. 8-10. V2 illeg. for 8. —[a]) D4 जगर्ज; M5 नभसा (for नगर्या). Ñ B2 D4 लंकया सार्धं; B4 विटपाभग्ना (sic) (for विटपावत्या). B1 सद्वीपाब्धिनगाढ्या; D11.13 नगर्यां विटपावत्यां. —B3 om. (hapl.) 8[bc]. —[b]) V3 B1 D5 गंधर्वैर्. Ś2 Ñ2 V3 B1 D1-3.8.12 -नगरैरपि; Ñ1 V1 B2 D4.13 -भवनैः सह; B4 -नगरैः सह (for -भवनोत्तमैः). —B2 D9-11.13 (B2 D13 [hapl.]; see var.) om. 8[cd]. —[c]) Ś2 D2.8.12 M1.2.5 सहसैव; Ñ1 सह वै च (for सह चैव). —[d]) D4 संवैश् (for सर्वैश्). D1 M3 भुवनैः सह; G1.3 भवनोत्तमैः.

9 G (ed.) om. 9 (cf. v.l. 8). —[a]) Ñ2 B3.4 D7 T1.3 -ताराग्रह-; D5.6.9 G M3.5 -तारग्रह-(D9 °गण-) (for -तारागण-). Ś2 D2.8.12 -नक्षत्रैः. —[b]) Ñ1 V B2 D3.5.10.11 T3 सचंद्र-. Ś2 D2.8.12 तु (for second स-). D1 * * * सुमहा * *; D4 सचंद्रं पालयन्निव; M1.2 ससमुद्रमहाग्रहं; M5 सचंद्रग्रहतारकं. —V3 om. 9[c] - 10. —[c]) Ś2 Ñ V1.2 B D1-3.8.12.13 -[उ]द्धूतं; D4 -[उ]द्वृत्तं; M5 -[आ]कीर्णं (for -[आ]घूर्णं). ❀ Cg: निकुम्भपरिघाघूर्णम्। अत्र परिघशब्देन तद्वात उपलक्ष्यते। इवशब्दो वाक्यालङ्कारे. ❀ —[d]) Ñ1 V2 B4 D5.7.10.11 S नभ(T2 °भः)स्थलं. D6 संवीक्ष्य सहसा तदा.

10 V3 G (ed.) om. 10 (cf. v.l. 9 and 8 respy.). —[ab]) Ś2 D2.8.12 दुराधर्षः. Ñ1 B2 D13 स (for च). Ś2 B1 D1-3.8.12 स संकोपात्; Ñ2 V1.2 B4 समं जज्ञे; B3 सुसंज्ञश्च (for च संजज्ञे). T2 Cm -[अं]तरण- (for -[आ]भरण-). M5 -श्रमः; Cm.g.k.t as in text (for -प्रभः). D4 वानराणां भयं जज्ञे कालस्येव भयं जने. ❀ Cm: परिघान्तरणप्रभ इति पाठः।; Cg: परिघेणाभरणैश्च प्रभातीति परिघाभरणप्रभः। यद्वा परिघाभरणान्येव प्रभा यस्य स तथा।; Ck.t: परिघाभरणाभ्यां प्रभा(Ck प्रभे प्रतापः) कान्तिर्यस्य सः (Ck स तथा). ❀ —[c]) Ś2 D8.12 कपींधनो; Ñ1 B2 कोपेन स; Ñ2 V1.2 B1.3 D1-3.13 कोपेंधनो; B4 बंधापन्नो; D4 जज्वाल च; D5-7 T G2.3 M कपीनां स (for क्रोधेन्धनो). B2 D13 निकुंभोपि; G3 M5 निकुंभाच्च. —D13 om. from 10[d] up to राक्षसा वा in 11[a]. —[d]) Ñ1 B2.3 जज्वालाग्निर्; D4 वडवाग्निर् (for युगान्ताग्निर्).

11 D13 om. up to राक्षसा वा in 11[a] (cf. v.l. 10). —[a]) D8 राक्षसान्. B3 transp. राक्षसा and वानराश्. Ś2 Ñ2 V1.3 B1.2.4 D1.4.8.12 [ए]व (for [अ]पि). —[b]) Ś2 D8.12 मथितुं; D13 वदितुं (for स्पन्दितुं). D4 नश्येयुरन्विता भयात्. —[c]) D4 च (for तु). Ś2 D8.12 विवृत्ताक्षस्; Ñ2 V1.3 B D1.2.13 विवृत्तोरुस्; D4 महावीरस् (for विवृत्योरस्). —[d]) Ś2 D2.3.8.12 प्रतिमुखो; D1 (also as in Ś2) प्रतिबलो; D6 T2.3 M3 तस्याग्रतो; Cg as in text (for प्रमुखतो).

12 [a]) Ñ1 V1.2 B1-3 D3.13 स; Ñ2 (*sup. lin.* also as in Ñ1) V3 च (for तु). D4 -बाहुभ्यां (for -बाहुस्तु). M1.2 ततस्तु स महाबाहुः. —[b]) Ñ1 B3 D4.13 G (ed.) भासु(B3 °स्क; G [ed.] °स्व)रं महत्; Ñ2 B2.4 D9 भास्करोपमं(D9 reads *sec. m.* from स्क up to युद्ध in colophon) (for भास्करप्रभम्). —[c]) Ñ V2 B2 D4 बलेन बलिनस्तस्य; B4 परिघं तं निकुंभस्तु. —[d]) B4 राक्षसः (for वक्षसि).

13 V1 om. 13-14[b]. —[a]) Ś2 D3 स्थितस्; Ñ V2 B4 क्षिप्तस्; V3 B1 T3 स्थिते; B3 कपेस् (for स्थिरे). G2 क्रुद्धो (for व्यूढे). B2 क्षिप्तश्चोरसि च व्यूढे; D13 स तस्योरसि व्यूढे च. —[b]) Ś2 Ñ V2.3 B D1-3.8.12 गतः (for कृतः). —Note hiatus between [c] and [d]. —[c]) Ñ1 B3 D13 M1.2 विकीर्यमाणं; Ñ2 V2.3 B1.2.4 D3-7.9-11 T G Ct विकी(D6 T3 G1 °दी)र्यमाणः. Ś2 V3 B1 D1-3.8.12 प्रभया; Ñ1 D4.13 G1 शतधा; Ñ2 B2.4 विश्वभाव्; B3 (in m.) विभया (for सहसा). M5 विदार्यमाणस्य तदा. —[d]) Ś2 V3 B1.3 D1-3.12 M5 (all to avoid hiatus) ह्युल्काशतम् (D1.3 °निर्); Ñ2 B4 उल्काशनिर्; D4 समुत्क्रांतम्; D13 उल्कापातम् (for उल्काशतम्).

14 V1 om. 14[ab] (cf. v.l. 13). —[a]) Ś2 V3 B1 D1.2.3.12 विनिर्भिन्नो (for प्रहारेण). —[b]) Ś2 Ñ V1.3

स तथाभिहतस्तेन हनूमान्प्लवगोत्तमः ।
मुष्टिं संवर्तयामास बलेनातिमहाबलः ॥ १५

तमुद्यम्य महातेजा निकुम्भोरसि वीर्यवान् ।
अभिचिक्षेप वेगेन वेगवान्वायुविक्रमः ॥ १६

ततः पुस्फोट चर्मास्य प्रसुस्राव च शोणितम् ।
मुष्टिना तेन संजज्ञे ज्वाला विद्युदिवोत्थिता ॥ १७

स तु तेन प्रहारेण निकुम्भो विचचाल ह ।
स्वस्थश्चापि निजग्राह हनूमन्तं महाबलम् ॥ १८

विचुक्रुशुस्तदा संख्ये भीमं लङ्कानिवासिनः ।
निकुम्भेनोद्धृतं दृष्ट्वा हनूमन्तं महाबलम् ॥ १९

स तथा ह्रियमाणोऽपि कुम्भकर्णात्मजेन हि ।
आजघानानिलसुतो वज्रवेगेन मुष्टिना ॥ २०

G. 6. 56. 18
B. 6. 77. 19
L. 6. 55. 20

B1.2.4 D1–4.7.8.12 G1.3 M1–3 वि( M1.2 सं )चचाल; D9–11.13 न( D13 स ) चचाल; G3 च चचाल ( by transp. ). D13 महाबलः . —$^c$ ) Ñ1 B3 D4.13 समुद्धृतो; T2 समाघातो (sic) (for समाधूतो). —$^d$ ) B3 D1 -तले ( for -चले ). T3 यथा भूमिधरो बली. ❀ Cr.g.k.t : भूमिचले भूकम्पे( Cr °म्पने; Ck भूमिकम्पकाले ). ❀

15 $^a$ ) D1 स ह ( hypm. ) ( for स ). D4.6.13 T2.3 M3.5 तदा ( for तथा ). —$^b$ ) Ñ1 D4 प्लवगेश्वरः ; Ñ2 V B D1–3 प्लवगर्षभः ; D13 वानरेश्वरः ( for प्लवगोत्तमः ). Ś2 D8.12 परिघेण प्लवंगमः . —$^c$ ) D13 संचूर्णयामास. —$^d$ ) D6 बले च ( for बलेन ). M5 [ अ ]पि ( for [ अ ]ति- ). M1.2 -बलस्तथा ( for -महाबलः ). Ś2 Ñ V B D1–4.8.12.13 वज्रवेगो( Ñ2 V1.2 B2 °पातो; B4 °घातो )पमं बली.

16 $^a$ ) Ñ1 B3.4 D2.4.13 सम्- ( for तम् ). Ś2 Ñ2 D1–3.8.12 महावीरो( D1–3 °र्यो ) ; V B1.2.4 महावेगो. M5 समुद्धृत्य महावेगान्. —$^b$ ) Ś2 B1 D1–3.8.12 निकुंभं प्रति ( for निकुम्भोरसि ). —$^c$ ) Ñ V1.2 B2.4 D4 अपातयत; B3 D13 G2 अव( G2 अपि )चिक्षेप. Ś2 V3 B1 D1–3.8.12 असि( Ś2 D8.12 मुष्टिं )संपातयामास. —$^d$ ) D1.13 वेगवत् ; D7 बलवान् . Ś2 D8.12 तज्जिघांसया; V3 B1 D2 स म( B1 वि; D2 सि )मर्दिपुः ; D1 संविमर्दितुं; D3.13 संमि( D13 सुवि )-मर्दिपुः ; D6 T2.3 वायुनंदनः ( for वायुविक्रमः ). Ñ V1.2 B2–4 D4 वज्रमिंद्र इवाचले.

17 $^a$ ) Ś2 D9–11 तत्र ( for ततः ). Ś2 V3 B1 D1.3 प्रस्फोट्य. D1.3.7.10.11 वर्म; D2 मर्म ( for चर्म ). Ñ1 प्रास्फोटयच्च चर्मास्य; Ñ2 V1 B2 चर्म तस्याथ( V1 °स्य च ) प्रस्फोट्य; V2 B4 च( B4 व )र्मे प्रस्फोट्य तस्याथ( B4 वेगेन ); B3 प्रपुस्फोट च वर्मास्य; D4 स च प्रास्फोट्य चर्माणि; D6 T2.3 G M5 तस्य पुस्फोट चर्मास्यात् ; D13 प्रास्फोट्य हृदयं तस्य. —$^b$ ) Ś2 Ñ B D1–4.8.12.13 प्रावर्तत च( D13 बहु[ hypm. ] ) ; V1 बहु सुस्राव ( for प्रसुस्राव च ). —$^c$ ) D1 om. ; M5 चैव ( for तेन ). Ñ V1.2 B2.4 D4 समरे ( for संजज्ञे ). —$^d$ ) D5 T1 घने; D7.9–11 G2.3 M5 मेघे ( for ज्वाला ). Ñ V1.2 B2.4 D4 जले वाताहतेव नौः . ❀ Cv : मुष्टिना तेन संजज्ञे ज्वाला विद्युदिवोक्षि( त्थि ? )तेति पाठः . ❀

18 $^a$ ) D13 वेग- ( for तेन ). —$^b$ ) V1 प्र- ; D5–7 T [ ऽ ]पि ( for वि- ). D9–11 च; T3 G2 हा ( for ह ). Ś2 Ñ1 V3 B1.3 D1–4.8.12.13 व्य( V3 B1.3 ह्या )जृंभत मुहुर्मुहुः . —$^c$ ) Ś2 D8.12 आश्वस्तुत्य; V3 B1 D2.3 आश्वस्तस्तु; D1 आश्वंगेषु; D4 संज्ञां लभ्य; M5 स्वस्थश्चोप- ( for स्वस्थश्चापि ). V3 [ अ ]भि- ; D4 तु; T2 स ( for नि- ). Ñ V1.2 B2–4 आश्वस्तश्चाभ्ययाद्भूयो; D13 जग्राह च तमभ्यासे. —$^d$ ) Ś2 Ñ V B D1–4.8.12.13 स राक्षसः; M3 महाबलः ( for महाबलम् ). —After 18, Ñ1( m. ).2 V2 B2.3 ( after 18$^{ab}$ ) D4 ins. :

1486* जघान शङ्खदेशे च मुष्टिना कपिकुञ्जरम् ।
स तु तेन प्रहारेण किंचिन्मूर्छान्वितोऽभवत् ।
तं तु मूर्छितमादाय गन्तुमैच्छत्स राक्षसः ।

[ ( l. 1 ) D4 कंठ- ( for शङ्ख- ). — ( l. 3 ) D4 स ( for तं ). Ñ1 जग्राह तदवस्थं च; B3 जग्राह च तदवस्थं ( for the prior half ). Ñ1 B3 हनूमंतं ( for गन्तुमैच्छत् ). Ñ2 ऐच्छत ( sic ); D4 ऐच्छच्च ( for ऐच्छत्स ). ]

—Thereafter Ñ1 cont. in marg. 1487*.

19 T1 om. ( hapl. ) 19. —$^a$ ) D9–11 चुक्रुशुश्च; Cg.k.t as in text ( for विचुक्रुशुस् ). D6 G1 M5 तदा सर्वे; M1.2 तु संहृष्टा ( for तदा संख्ये ). Ś2 V3 B1 D1–3.8.12 ततो रक्षोभिरुत्क्रुष्टं; Ñ V1.2 B2–4 D13 उच्चुक्रुशुस्तदा भीमं ( Ñ1 B3 D13 °तः सर्वे ); D4 प्रचुक्रुशुर्महानादं. —$^b$ ) Ñ2 V1.2 B2.4 सर्वे; D1 रक्षै; G2 M5 भीमा ( for भीमं ). Ś2 V3 B1 D1–3.8.12 -गतैरपि; Ñ2 B2 -[ अ ]धिवासिनः . —$^c$ ) Ś2 B4 D5.6.8.12 [ उ ]द्धतं; Ñ V1.2 B2 D1–3.7.9–11 T2.3 G1.3 M3.5 [ उ ]द्यतं; V3 B1 हृतं; G2 [ उ ]त्थितं ( for [ उ ]द्धृतं ). D4 निकुंभो मूर्छितं दृष्ट्वा ( sic ). —$^d$ ) Ś2 V2.3 B1 D1.3.8.12 जयैषिणा; Ñ V1 B2–4 D2.13 जयैषिणः( Ñ1 B3 D13 °णं ); D4 रणाजिरे ( for महाबलम् ). —After 19, Ñ2 V1.2 B2–4 D4 ins. ; while Ñ1 cont. in marg. after 1486* :

1487* अपरेऽदुद्रुवंस्तत्र दृष्ट्वा तं रक्षसां गणाः ।
आदीपको गृहीतोऽयं निकुम्भेन बलीयसा ।

[ ( l. 1 ) Ñ त्वन्नुवंस् ; B3 चाद्रवंस् ; B3 दुद्रुवुस् ; D4 चुक्रुशुस् ( for ऽदुद्रुवंस् ). V2 B4 राक्षसं रणे; B2.3 राक्षसांगनाः ( sic ) ( for रक्षसां गणाः ). D4 दृष्ट्वा तान्राक्षसान्गणान् ( for the post. half ). — ( l. 2 ) Ñ आदाहको; D4 हनूमांश्च; G ( ed. ) आदीपिको ( for आदीपको ). ]

20 V3 om. 20. Ñ1 B1 D13 transp. 20 and 21. D1.3 repeat 20 after 21. —$^a$ ) D6.9–11.13 T2.3 M3

G. 6. 56. 19
B. 6. 77. 20
L. 6. 55. 21

आत्मानं मोचयित्वाथ क्षितावभ्यवपद्यत ।
हनूमानुन्ममाथाशु निकुम्भं मारुतात्मजः ॥ २१
निक्षिप्य परमायत्तो निकुम्भं निष्पिपेष च ।
उत्पत्य चास्य वेगेन पपातोरसि वीर्यवान् ॥ २२
परिगृह्य च बाहुभ्यां परिवृत्य शिरोधराम् ।
उत्पाटयामास शिरो भैरवं नदतो महत् ॥ २३

अथ विनदति सादिते निकुम्भे
पवनसुतेन रणे बभूव युद्धम् ।
दशरथसुतराक्षसेन्द्रचम्वो-
र्भृशतरमागतरोषयोः सुभीमम् ॥ २४

इति श्रीरामायणे युद्धकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

---

तदा (for तथा). Ñ D13 क्रि(D13 ध्रि)यमाणो; D1.3 (both second time).6 T3 हन्यमानो (for ह्रियमाणो). Ś2 Ñ2 V1 B2.4 D4.8.12 तु; D9 T1 G1.3 हि (for ऽपि). V2 स तथाभिहतस्तेन. —$^{b}$) Ñ2 V1.2 B2.4 तु; T2.3 M1.2 वै; G2 ह्य; M3 ह; M5 च (for हि). Ś2 B1 D1–3.8.12 (D1.3 first time) -सुतं तदा; Ñ1 B3 D13 -सुतेन वै; D1.3 (both second time) -[आ]त्मजो बली; D6 -[आ]त्मजोपि वै (for -[आ]त्मजेन हि). D9–11 हनूमांस्तेन रक्षसा. —$^{c}$) D4 (orig. as in text; m. also) संज्ञां प्राप्य (for आजघान). D1.3 (both second time) -सुतं (for -सुतो). Ś2 B1 D1–3.8.12 (D1.3 first time) नि(B1 आ)-जघानोरसि क्रुद्धो. —$^{d}$) Ñ1 बहु- (for वज्र-). D7.9–11.13 T2 G1.2 M3.5 -कल्पेन (for -वेगेन). Ñ2 V1.2 B2.4 D4 तलेनैव महाबलः. —After 20, Ś2 D1–3.8.12 (D1.3 after first time) read 1489*; while Ñ2 V1.2 B2.4 D4 read $22^{ab}$. —After 20 (r.), D1.3 ins.:

1488* स तथाभिहतस्तेन प्रमृज्य नयने कपिः ।

21 Ñ1 B1 D13 transp. 20 and 21. —$^{a}$) D7.9–11 G M1.2 मोक्षयित्वा. Ñ2 च (for [अ]थ). Ś V3 B1 D2.3.8.12 वि(D3 स)मोक्षयित्वा चात्मानं; Ñ1 V1.2 B2–4 D1.4.13 स(B3 प्र-) मोचयित्वा चा(Ñ1 D13 °तुमा)त्मानं. —$^{b}$) B1 D1.3 क्षितिम् (for क्षिताव्). Ñ2 B3 -[उ]पपद्य(B3 °त्य) च; V1 D5 T1 -[उ]पपद्यत; B2 -[उ]त्पपात ह; G2 -[अ]वपद्य च (for -[अ]वपद्यत). Ś2 D8.12 क्षितिमभ्याससाद ह; Ñ1 V2 B4 D2.13 क्षितिमभ्युपपद्यत(Ñ1 °द्य ह; D2 °द्य च); V3 क्षितिमभ्यपतद्बली; D4 क्षितिमित्युत्पपात च. —V3 om. $21^{cd}$. D6 reads $21^{cd}$ (except हनू) in marg. —$^{c}$) Ś2 Ñ V1.2 B1 D2.3.12.13 उत्पपाताशु; B2 D6 T2.3 G1 स ममंथाशु; B4 अहनत्पार्श्वे; D4 च जघानाशु (for उन्ममाथाशु). D1.3 हनिष्यन्नुत्पपाताशु. —$^{d}$) Ñ1 निकुंभान्. D4 कुंभकर्णात्मजं तथा. —After 21, D1.3 repeat 20.

22 B3 om. $22^{ab}$. Ñ2 V1.2 B2.4 D4 read $22^{ab}$ after 20. —$^{a}$) D7.9 G1.2 उत्क्षिप्य. Ñ1 V2 D13 ददंश हनुमान्पार्श्वे; Ñ2 V1 B2.4 D4 अ(D4 आ)दशैव तं पार्श्वे (D4 °र्श्वं). —$^{b}$) Ñ2 V1.2 B2.4 D4 विननाद (for निष्पिपेष). Ñ1 वै; D5.6 T2 G3 M1–3 ह; T3 ह्य (for च). —For $22^{ab}$, Ś2 V3 B1 D1–3.8.12 subst. and read (except V3 B1) after 20 (D1.3 after first time):

1489* उत्क्षिप्य हनूमांस्तं च निष्पिपेषाशु वीर्यवान् ।

[D2 स (for च). V3 B1 प्रक्षिप्य(B1 उत्क्षिप्य) तु हनूमांस्तं; D1.3 उत्क्षिप्य(D1 °प्य च [hypm.]) हनुमंतं स (for the prior half). V3 [अ]थ (for [आ]शु).]

—$^{c}$) G (ed.) उत्प्लुत्य (for उत्पत्य). T1 damaged for चास्य वेगेन. D7 G2 [आ]शु (for [अ]स्य). Ś2 V3 B1 D1–3.8.12 समुत्पत्य च; V1.2 B4 समुत्पत्याथ; B2 समुत्पपात (for उत्पत्य चास्य). —$^{d}$) D6.9–11 T2 G3 वेगवान् (for वीर्यवान्). Ś2 V3 B1 D1–3.8.12 निपपातास्य(V3 B1 °शु) वक्षसि; Ñ2 V1.2 B2.4 स्कंधमारुह्य वीर्य(Ñ2 वेग)वान्.

23 $^{a}$) D3 स (for च). Ñ2 V1.2 B2.4 -जग्राह (for -गृह्य च). D4 विगृह्य ह्यस्य बाहुभ्यां. —$^{b}$) Ñ1 D13 अपसृह्य; Ñ2 V1.3 B1.2.4 D1–3 आवृत्य च(B4 स); V2 आरुह्य च; D4 अपसृत्य; D6 परिवृत्त-; M1.2 परिवर्त्य (for परिवृत्य). Ñ2 B2–4 D2.8 M1.2 शिरोधरं. —$^{c}$) Ñ1 V2 B3 D4.13 तदा; T2 ततो (for शिरो). Ś2 V3 B1 D1–3.8.12 अपातयत्तस्य शिरो. —$^{d}$) Ś2 D1.8.12 स्वरं; Ñ2 V1 B2 मुहुः; V3 B1 D2.3 स्वनं; B4 बहु (for महत्). Ñ1 V2 B3 D4.13 विक्ष(Ñ1 D4 °कुं; D13 °कृ)तं तस्य तच्छिरः. —After 23, D7 G1.3 ins.:

1490* अथ देवाः सगन्धर्वा विद्याधरमहोरगाः ।
आकाशचारिणः सर्वे अप्सरोभिः सहामराः ।
हनूमन्तं महाबाहुं वायुपुत्रमरिंदमम् ।
प्रशंसन्तः परैर्वाक्यैः प्रसूनैरभ्यपूजयन् ।

[(l. 2) Note hiatus between the two halves. —(l. 4) K (ed.) अभ्यवर्षयन् (for अभ्यपूजयन्).]; while M5 ins. 1491*.

24 $^{a}$) D5 om. after अथ up to l. 1 of 1491*. D8.10.11 G2 Ck.t निनदति. V3 B1 D1–3.9 सूदिते (for सादिते). Ś2 D8.12 समिति निसूदिते; Ñ V1.2 B2–4 D13 नदति

# ६५

निकुम्भं च हतं श्रुत्वा कुम्भं च विनिपातितम् ।
रावणः परमामर्षी प्रजज्वालानलो यथा ॥ १
नैर्ऋतः क्रोधशोकाभ्यां द्वाभ्यां तु परिमूर्छितः ।
खरपुत्रं विशालाक्षं मकराक्षमचोदयत् ॥ २
गच्छ पुत्र मयाज्ञप्तो बलेनाभिसमन्वितः ।
राघवं लक्ष्मणं चैव जहि तौ सवनौकसौ ॥ ३

G. 6. 57. 4
B. 6. 78. 3
L. 6. 56. 3

निपातिते; $D_4$ नदति च पतिते क्षितौ (for विनदति सादिते). —$^b$) $D_6$ संप्र- (for रणे). Ś$_2$ $V_3$ $B_1$ $D_{1-3.8.12}$ बभूव तत्र युद्धं; Ñ $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ तदा रणस्य मध्ये (for रणे बभूव युद्धम्). —$^c$) $T_2$ -नृप- (for -सुत-). $D_2$ -बंधोर् (sic); $D_{6.7.11}$ $T_2$ $M_3$ -सून्वोर्; $D_9$ $G_1$ $M_{1.2.5}$ -सैन्ययोर्; $D_{10}$ -सूनोर् (sic) (for -चम्वोर्). Ñ $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ -वाहिनी समग्राः; $V_3$ $D_{1.3.8}$ -राक्षसेशबंधोर्( $V_3$ °योस्तद्; $D_{1.3.8}$ [sic]); $B_1$ -राक्षसेशयोर् (for -राक्षसेन्द्रचम्वोर्). —$^d$) $G_3$ दृढतरम् (for भृश°). $D_1$ तु भीमं. Ñ $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ परमभशात्सकला तदा( Ñ$_1$ om.; $V_2$ तथा; $D_4$ च सं- ) प्रहर्षं. —After 24, Ñ$_1$ $D_{5-7.9-11}$ T G $M_{1-3}$ ins.; while $M_5$ ins. after 23:

1491* व्यपेते तु जीवे निकुम्भस्य हृष्टा
  विनेदुः प्लवंगा दिशः सस्वनुश्च ।
 चचालेव चोर्वी पफालेव च द्यौ-
  र्बलं राक्षसानां भयं चाविवेश ।

[ $D_5$ om. up to l. 1. —(l. 1) $D_7$ दृश्वा (for हृष्टा). —(l. 2) $T_1$ damaged for विनेदुः प्लवंगा. $M_5$ सागराश् (for सस्वनुश्). $G_3$ व्यनेदुः प्लवगा दिशः सस्वनाः (unmetric). —For l. 1–2, Ñ$_1$ subst.:

1491(A)* अथ व्यपगतजीविते निकुम्भे
  हृष्टा विनेदुः प्लवगा दिशश्च ।

—(l. 3) Ñ$_1$ $D_{6.7}$ $G_2$ पफाल (for चचाल). Ñ$_1$ $D_7$ चचाल; $D_{6.9-11}$ T पपात (for पफाल). Ñ$_1$ खं; $D_{6.9-11}$ $T_3$ सा (for second च). —(l. 4) Ñ$_1$ बले (for बलं). $M_3$ transp. बलं and भयं. ];

while $B_3$ ins. (in m.) after 24:

1492* हतं निकुम्भं च निशम्य हृष्टा
  विनेदुरुच्चैः प्लवगोत्तमास्ते ।
 चचाल चोर्वी गगनं दिशश्च
  भृशं च रक्षांसि भयं विवेश ।

Colophon. —*Kāṇḍa name*: Ñ B $D_{2.4.13}$ लंकाकांडे. —After Kāṇḍa name, $D_{2.13}$ ins. युद्धपर्वणि. —*Sarga name*: Ñ V B $D_{1-4.8.12.13}$ निकुंभवधः. —*Sarga no.* (figures, words or both): Ś$_2$ Ñ$_1$ $V_3$ $B_{2.4}$ $D_{2.4.8.12.13}$ om.; Ñ$_2$ 58; $V_1$ $D_1$ 57; $V_2$ 56; $B_1$ 52; $B_3$ 51; $D_3$ 59; $D_{5-7.10.11}$ $T_1$ G $M_{3.5}$ 77; $D_9$ 54; $T_2$ 82; $T_3$ 84; $M_{1.2}$ 78. —After colophon, $D_2$ concludes with राम; while G $M_{1.2}$ conclude with श्रीरामाय नमः; $M_5$ with श्रीरामचन्द्राय नमः.

## 65

Ś$_1$ om. Sarga 65 (cf. v.l. 6.62.1). Cv does not comment on 6.65.

1 $^a$) Ś$_2$ $D_{1.3.8.12}$ तु हतं; Ñ V $B_{1.3.4}$ $D_{2.4.6.7.9-11.13}$ $T_{2.3}$ G $M_5$ निहतं; Cg.k च हतं (as in text). Ñ$_1$ $B_3$ $D_{4.9-11}$ दृष्ट्वा (for श्रुत्वा). —$^b$) Ñ$_2$ $V_{1.2}$ $B_{2.4}$ [ए]व; $D_5$ $T_1$ [अ]पि (for वि-). Ñ$_1$ $D_{4.13}$ श्रुत्वा कुंभं च घातितं. —$V_{1.2}$ $B_{2.4}$ om. 1$^{cd}$. —$^c$) $B_3$ परमामर्षात्. —$^d$) Ś$_2$ Ñ$_2$ $V_3$ $B_1$ $D_{1-3.8.12}$ यथानलः (by transp.); $B_3$ $D_{13}$ [अ]नलप्रभः (for [अ]नलो यथा). Ñ$_1$ $D_4$ जज्वालानलसंनिभः.

2 $^a$) Ñ$_2$ $V_{1.2}$ $B_{2.4}$ रावणः; $M_5$ राक्षसः (for नैर्ऋतः). —$^b$) $T_1$ damaged for तु परिमूर्छि. $D_{1.13}$ च (for तु). Ñ$_2$ $V_{1.2}$ $B_{2.4}$ $D_4$ उपर्युपरि मूर्छितः; $M_5$ उभाभ्यां स तु मूर्छितः. —After 2$^{ab}$, Ś$_2$ Ñ V B $D_{1-4.8.12.13}$ ins.:

1493* ततः संचिन्त्य मनसा दशग्रीवश्चिरात्स्वयम् ।

[ Ñ$_1$ $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ अथ (for ततः). Ś$_2$ $D_{8.12}$ विचिंत्य. ]

—$^d$) $V_3$ $B_1$ व्यदेशयत्; $B_3$ अवोचत; $D_{1.2}$ अनोदयत्; $G_2$ अरोचयत्; $M_{1.2}$ अचूचुदत (for अचोदयत्).

3 $V_3$ om. 3$^{ab}$. —$^b$) $D_7$ $T_1$ $G_2$ [अ]पि (for [अ]भि-). Ś$_2$ Ñ$_1$ $B_{1.3}$ $D_{1-4.8.12.13}$ $M_5$ बलेन महता वृतः; Ñ$_2$ $V_{1.2}$ $B_{2.4}$ बलेन रिपुघातिना. —$D_{12}$ om. (hapl.?) from 3$^c$ up to l. 1 of 1494*. —$^d$) Ś$_2$ $V_{2.3}$ $B_1$ $D_{1-3.8}$ $M_3$ जहि तांश्च( $V_2$ $D_3$ °स्तु ) वनौकसः; Ñ $V_1$ $B_{2.4}$ $G_2$ जहि चाद्य( $G_2$ तौ च ) वनौकसः; $D_{4.13}$ जहि चाद्य ( $D_{13}$ सर्वं- ) वनौकसं. —After 3, Ś$_2$ Ñ V B $D_{1-4.8.12}$ (after 3$^{ab}$ owing to om.)$_{.13}$ ins.:

1494* शल्यमुद्धर मे क्षिप्रं स्वपौरुषमुपाश्रितः ।
 अयं ते शक्रजित्पुत्रः पृष्ठतोऽनुगमिष्यति ।
 खरस्य सदृशो वीर्ये त्वमप्यमितविक्रमः ।
 बली दिव्यास्त्रविच्चैव मायाशतविशारदः ।
 एवमुक्त्वा स तं वीरं समुत्थायासनाद्द्रुतम् । [5]
 स्वयं गन्धैश्च माल्यैश्च वासोभिश्च समर्चयत् ।

[ $V_3$ $D_{12}$ om. l. 1. —(l. 1) $B_1$ शत्रुम् (for शल्यम्). $B_4$ transp. मे and क्षिप्रं. Ś$_2$ Ñ$_2$ $D_{1.3.8}$ स्वपौरुषसमाश्रि- (Ś$_2$ $D_8$ °वृ )तः; Ñ$_1$ $V_2$ $B_3$ $D_4$ पौरुषं समुपाश्रितः; $D_{13}$ पौरुषं च समाश्रितः (for the post. half). —(l. 2) $B_1$ अयं मे; $D_{4.8}$ अथ ते. Ś$_2$ $D_{2.8.12}$ वीर; Ñ$_1$ $D_4$ पश्चात्; $V_3$ $B_1$ $D_1$ वीरः;

G. 6. 57. 7
B. 6. 78. 4
L. 6. 56. 7

रावणस्य वचः श्रुत्वा शूरो मानी खरात्मजः ।
बाढमित्यब्रवीद्धृष्टो मकराक्षो निशाचरः ॥ ४
सोऽभिवाद्य दशग्रीवं कृत्वा चापि प्रदक्षिणम् ।
निर्जगाम गृहाच्छुभ्राद्रावणस्याज्ञया बली ॥ ५
समीपस्थं बलाध्यक्षं खरपुत्रोऽब्रवीदिदम् ।
रथमानीयतां शीघ्रं सैन्यं चानीयतां त्वरात् ॥ ६
तस्य तद्वचनं श्रुत्वा बलाध्यक्षो निशाचरः ।
स्यन्दनं च बलं चैव समीपं प्रत्यपादयत् ॥ ७
प्रदक्षिणं रथं कृत्वा आरुरोह निशाचरः ।
सूतं संचोदयामास शीघ्रं मे रथमावह ॥ ८
अथ तान्राक्षसान्सर्वान्मकराक्षोऽब्रवीदिदम् ।
यूयं सर्वे प्रयुध्यध्वं पुरस्तान्मम राक्षसाः ॥ ९
अहं राक्षसराजेन रावणेन महात्मना ।
आज्ञप्तः समरे हन्तुं तावुभौ रामलक्ष्मणौ ॥ १०
अद्य रामं वधिष्यामि लक्ष्मणं च निशाचराः ।
शाखामृगं च सुग्रीवं वानरांश्च शरोत्तमैः ॥ ११

---

D3 धीरः; D13 भ्राता (for पुत्रः). —V3 om. l. 3–4. —(l. 3) Ñ1 V1 B3 D4.13 भवान(B3 °वने)तुलविक्रमः B2 त्वमप्रतिमविक्रमः (for the post. half). —(l. 4) Ś2 D1–3.8.12 तथा; B1 त्वं च (for बली). B1 शूरो; B4 चापि (for चैव). —(l. 5) Ś2 V3 B1 D1–3.8.12 ख(V3 damaged after ख up to दश in $5^{a}$)रसुतं; Ñ2 B4 स तं वीरः (B4 भीमं) (for स तं वीरं). Ś2 D8.12 [आ]सनात्स्वयं; B4 °नाश्रितं (for °नाद्भुतम्). —(l. 6) Ś2 D8.12 द्रुतं (for स्वयं). Ñ2 V2 B4 माल्यैश्च गंधैश्च (by transp.). Ñ V1.2 B1 D1.12 समार्चयत; D4 [अ]र्चयत्वरं (for समर्चयत्). B2 स्वयं माल्यैश्च वासोभिः सुगंधैश्च समर्चयत्.]

4 V3 damaged for 4 (cf. v.l. 1494*). —$^{a}$) D6 T2.3 स रावण- (for रावणस्य). —$^{b}$) Ś2 Ñ2 V1 B1–3 D1–4.8–12 G1 M3 शूरमानी. Ś2 D8.12 निशाचरः (for खरात्मजः). —G2 om. $4^{c}$ – 5. —$^{d}$) Ś2 D8.12 खरात्मजः; B (ed.) निशाचरं (for निशाचरः).

5 V3 damaged up to दश in $5^{a}$ (cf. v.l. 1494*). G2 om. 5 (cf. v.l. 4). D13 G1 repeat $5–6^{c}$ (D13 5 only) erroneously after $7^{ab}$. —$^{b}$) Ś2 Ñ1 V3 B1.2 D4.8.12.13 T2 [अ]भि-; B3 त्रिः; T3 [ए]व (for [अ]पि). —After $5^{ab}$, B2.4 D13 ins.:

1495* ब्राह्मणांश्च नमस्कृत्य कृत्वा च त्रिः प्रदक्षिणम् ।
[B4 नमस्कृत्वा. B4 [ए]व; D13 [अ]भि- (for त्रिः).]

—Ś2 V3 B1 D1–3.8.12 om. $5^{c} – 6^{b}$. —$^{c}$) T1 damaged for निर्जगाम. D7 शुद्धाद् (for शुभ्राद्). —$^{d}$) Ñ V1.2 B2–4 D4.13 शनैः; G1 द्रुतं; M5 तदा (for बली).

6 Ś2 V3 B1 D1–3.8.12 om. $6^{ab}$ (cf. v.l. 5). G1 repeats $5 – 6^{c}$ erroneously after $7^{ab}$. —$^{a}$) Ñ V1.2 B2–4 D4.13 आदिशच्च (for समीपस्थं). —$^{b}$) Ñ V1.2 B2–4 D4.13 महाबलः; D6.10 G3 [ऽ]ब्रवीद्वचः; G2 °दमुं (for ऽब्रवीदिदम्). —$^{c}$) B2 D9.11.12 M5 रथ; M3 रथश् (for रथम्). M3 चानीयतां. V B1.2.4 क्षिप्रं; B3 D9–11 तूर्णं (for शीघ्रं). —$^{d}$) D5.7 T1 G3 आनीयतां; B (ed.) त्वानी° (for चानी°). D9 G2 त्वया; T3 इह; G1 त्वर; Cr.m.g.t as in text (for त्वरात्). Ś2 V3 B1 D1–3.8.12 सैन्यं चे(D1 वे)-त्यब्रवीत्त्वरन्(Ś2 D8.12 °द्रुतं; B1 °द्वचः); Ñ1 B3 D4.13 इत्युवाच स राक्षसः; Ñ2 V1.2 B2.4 सैन्यं चा(B2 °न्यमा)-हूयतामिति; M1.2 सैन्यं चैवोपनीयतां. ❀ Cr.m.g.t : त्वरात् त्वरया. ❀

7 $^{a}$) D13 स तस्य (for तस्य तद्). —$^{b}$) M1.2 ह्यभि-त्वरन् (for निशाचरः). —After $7^{ab}$, D13 G1 repeat $5 – 6^{c}$ (D13 5 only) erroneously. —Ś2 D8 om. (hapl.) $7^{c} – 8^{b}$. —$^{c}$) V3 ततस्तस्य; B1 ततस्तु तं (for स्यन्दनं च). —$^{d}$) D4 समानं. Ñ V B D1–4.12.13 समुपानयत्; D6 T2.3 तस्य चान°; M5 प्रत्यवेद°; Cg as in text (for प्रत्यपादयत्).

8 Ś2 D8 om. $8^{ab}$ (cf. v.l. 7). Note hiatus between $^{a}$ and $^{b}$. —$^{a}$) V3 damaged from णं up to $8^{b}$. D4 transp. प्रदक्षिणं and रथं. —$^{b}$) B1.4 D2.12 ह्यारुरोह; D7.9 G1.2 समारुह्य; D10.11 समाहूय; M5 त्वारुरोह (for आरुरोह). —$^{c}$) D13 सूतं च; M5 तं सूतं. V2.3 B1 संदेश-यामास; B2 संप्रेष° (for संचोद°). —$^{d}$) B4 क्षिप्रं (for शीघ्रं). D6.7.10 T2.3 G2 M3.5 वै (for मे). Ś2 V3 B1 D1.2.8.12 माम(Ś2 D8.12 सम)भिवाहय(D2 °ह्य च); Ñ V1.2 B2.4 D4.13 याहीति देशि(Ñ V1 B4 दंशि[sic])तः; B3 D3.9 G1 वै (D3 मां) सूत वाहय; D11 वै रथमाहवे; Cr.g.t as in text (for मे रथमावह).

9 $^{a}$) D13 वीरान् (for सर्वान्). —$^{b}$) M5 निशाचरः (for ऽब्रवीदिदम्). —$^{c}$) D6.9–11 T2.3 G1.3 M5 एते (for यूयं). D5 [ऽ]द्य (for प्र-). Ś2 Ñ V B D1–4.8.12.13 आगच्छत प्रयास्यामः. —$^{d}$) Ś2 V3 B1 D1–3.8.12 M5 पुरतो (for पुरस्तान्).

10 $^{a}$) T2 आह (sic) (for अहं). —$^{b}$) Ś2 दुरात्मना (for महा°).

11 $^{a}$) Ś2 B2 D8 हनिष्यामि (for वधि°). —$^{b}$) Ñ2 V1 B2.3(m. also).4 सविभीषणं; V3 B1 चापि वानरान्; M1.5 च महाबलाः(M5 °लं) (for च निशाचराः). V2 निपत

अद्य शूलनिपातैश्च वानराणां महाचमूम् ।
प्रदहिष्यामि संप्राप्तां शुष्केन्धनमिवानलः ॥ १२

मकराक्षस्य तच्छ्रुत्वा वचनं ते निशाचराः ।
सर्वे नानायुधोपेता बलवन्तः समाहिताः ॥ १३

ते कामरूपिणः शूरा दंष्ट्रिणः पिङ्गलेक्षणाः ।
मातंगा इव नर्दन्तो ध्वस्तकेशा भयानकाः ॥ १४

परिवार्य महाकाया महाकायं खरात्मजम् ।
अभिजग्मुस्तदा हृष्टाश्चालयन्तो वसुंधराम् ॥ १५

शङ्खभेरीसहस्राणामाहतानां समन्ततः ।
क्ष्वेडितास्फोटितानां च ततः शब्दो महानभूत् ॥ १६

प्रभ्रष्टोऽथ करात्तस्य प्रतोदः सारथेस्तदा ।
पपात सहसा चैव ध्वजस्तस्य च रक्षसः ॥ १७

G. 6. 57. 24
B. 6. 78. 17
L. 6. 56. 19

च सलक्ष्मणं. —V3 B1 D5 om. (hapl.) 11$^{c}$–13$^{b}$. —$^{c}$) Ñ1 B3 D4 शाखामृगान्ससुग्रीवान्. —$^{d}$) B3 बलिनश्च (for वानरांश्च). M5 सर्वैस्तैर्वानरोत्तमैः.

12 V3 B1 D5 om. 12 (cf. v.l. 11). —$^{a}$) Ñ2 B2.4 शूलनिपातेन; D2.12.13 °तैस्तु; M1.2 तीक्ष्णेन शूलेन (for शूलनिपातैश्च). —After 12$^{a}$, D9 erroneously repeats 11$^{d}$ and 12$^{a}$. —Ś2 D8.12 om. 12$^{b}$–13$^{c}$. —$^{b}$) D13 महात्मनां (for °चमूम्). —$^{c}$) Ñ2 V1.2 B2–4 संप्रधक्ष्यामि; D13 प्रधक्ष्यामि च; L (ed.) आदहिष्यामि (for प्रदहिष्यामि). Ñ1 B3 D1–4.13 संप्राप्य; Ñ2 V2 B2 D7 G1.2 M3 संप्राप्तः; B4 D9.11 T1 G3 M1.2.5 संप्राप्तं; D6 संप्राप्तौ; T3 संक्रुद्धः (for संप्राप्तां).

13 V1.3 B1 D5 om. 13$^{ab}$ (for V3 B1 D5, cf. v.l. 11). Ś2 D8.12 om. 13$^{abc}$ (cf. v.l. 12). —$^{a}$) B3 D1–3.7 G2 मकराक्षवचः श्रुत्वा. —$^{b}$) D1–3 ते तु घोरा; D7 G2 वि(G2 नि)नर्दंतो; L (ed.) ते च घोरा (for वचनं ते). —$^{d}$) D5 बलवंतं. Ś2 V3 B1 D1–3.8.12 [ऽ]तिवेगिताः (D1.12 °नः); Ñ V2 B2.4 D6.9.13 T2.3 G1 M3 Cg समागताः; D4 उपागताः; M5 महाबलाः (for समाहिताः). V1 सत्वरं समुपागताः.

14 $^{a}$) D6.9–11 T2 M5 क्रूरा; M3 सर्वे (for शूरा). —$^{b}$) D4 कपिलेक्षणाः (for पिङ्गले°). —$^{c}$) Ñ2 V1.2 B2.4 गर्जंतः; D8.12 नंदंतो (for नर्दन्तो). —$^{d}$) M5 lacuna for ध्वस्तकेशा भ. Ñ2 V1.2 B2.4 D13 पिंगकेशा; D4 धूम्र° (for ध्वस्तकेशा). Ñ1 B3 D4.6.7.9–11.13 T2.3 G Cg.t भयावहाः; Ck भयानकाः (as in text).

15 V3 om. 15. —$^{a}$) V1 महामाया; B1 [आ]शु सहसा; B4 °कायं (for महाकाया). D4 तं परिवार्य सहसा; D6 T2.3 ते राक्षसा महाकायं. —$^{b}$) V1 B2.4 महामायं; V2 °त्मानं; B1 D4 °कायाः; B3 मकराक्षं; D6 T2.3 परिवार्य (for महाकायं). —$^{c}$) B2 D5.10.11 अभिजग्मुस्. V2 तथा; B2 D6.7.9–11 T2.3 G M3 ततो; D8.12 मुदा (for तदा). —$^{d}$) G1.3 बलवंतो. D9–11 नभस्तलं (for वसुंधराम्).

16 $^{a}$) V1 B1 ततो; D13 अथ (for शङ्ख-). —T1 damaged from स्रा up to च in 18$^{c}$. B2.4 -मृदंगानाम् (for -सहस्राणाम्). —$^{b}$) B4 अहितानां. Ś2 D2.8.12 तु सर्वतः; V3 B1 सुनिस्वनः; D1.3 च सर्वशः; D9 सहस्रशः (for समन्ततः). —$^{c}$) B2 D5–7.10.11 T2.3 G M1–3 क्ष्वेलित- (for क्ष्वेडित-). D4 क्ष्वेडितः स्फोटितश्चैव; M5 स्फोटिता-क्ष्वेलितानां च. —$^{d}$) Ś2 Ñ V B D1–4.7–13 G1.2 तत्र (for ततः). —After 16, Ñ1(m.).2 V1.2 B2–4 D4.13 (only l. 1) ins.:

1496* समारूढो रथं दिव्यं दीप्तानलसमप्रभम् ।
रणोपकरणैः सर्वैः कीर्णं हेमपरिष्कृतम् ।
युक्तं वृहद्भिस्तुरगैर्जाम्बूनदसमप्रभैः ।
दंशितः स शरी खड्गी कवची रुक्मकुण्डलः ।
शुशुभे राक्षसश्रेष्ठः सूर्यश्लिष्ट इवाम्बुदः । [5]
स वृतो बलिभिर्वीरै राक्षसैर्घोरदर्शनैः ।
विनिर्ययौ रणश्लाघी यियासुर्यमसादनम् ।

[ (l. 1) D4 आरुरोह (for समारूढो). Ñ V1.2 B4 D4.13 -शिखोपमं (for -समप्रभम्). —(l. 2) V1 B2.3 रथोपकरणैः. Ñ1 V2 -परिप्लुतः; Ñ2 -पुरस्कृतं (for -परिष्कृतम्). —(l. 3) Ñ V1.2 B2.4 -विभूषणैः; B3 D4 -विभूषितैः (for -समप्रभैः). —V2 B3 om l. 4. —(l. 4) Ñ2 V1 स दंशितः (by transp.). D4 चारुकुंडलः. —(l. 5) Ñ2 सूर्याश्लिष्ट; V2 B4 सूर्यपृष्ठ; D4 सूर्याक्लिष्ट (for सूर्यश्लिष्ट). —(l. 6) Ñ1 V2 वृतः स (by transp.); Ñ2 V1 B2–4 वृतः स्व-; D4 वृतश्च (for स वृतो). V2 भीमै (for वीरै). B4 D4 भीमविक्रमैः (for घोरदर्शनैः). —(l. 7) Ñ2 बलश्लाघी. Ñ1 यथा सूर्यसमप्रभः; D4 राक्षसैश्च समावृतः (for the post. half).]

17 T1 damaged for 17 (cf. v.l. 16). —$^{a}$) V2 B1 संभ्रष्टो; D13 प्रसृष्टश्च (for प्रभ्रष्टो). Ñ1 D13 च; D5 [ऽ]धः; D7 तु (for ऽथ). B2 रथात् (for करात्). B4 G1 प्रभ्रष्टो मकराक्षस्य; D4 G3 प्रहृष्टस्य वरस्त(G2 करात्त)स्य; D6 T2.3 युद्धार्थं त्वरतस्तस्य. ❀ Cg : करात्तस्य आत्तकरस्य वशीकृतकरस्य, लघुहस्तस्येति यावत्. ❀ —$^{b}$) M5 damaged for प्रतोदः सार. D6 T2.3 करात् (for तदा). —$^{c}$) Ñ1 B3 D4.13 तस्य; D7 G2 भूमौ; D9–11 दैवात् (for चैव). —$^{d}$) D5.7.9–11 G3 M1.2 तु (for च). Ś2 Ñ V B D1–4.8.12.13 राक्षसस्य रथ(D1.3 °थात्)-ध्वजः(V2.3 B1 कराद्धतुः).

G. 6. 57. 25
B. 6. 78. 18
L. 6. 56. 20

तस्य ते रथसंयुक्ता हया विक्रमवर्जिताः ।
चरणैराकुलैर्गत्वा दीनाः सास्रमुखा ययुः ॥ १८
प्रवाति पवनस्तस्य सपांसुः खरदारुणः ।
निर्याणे तस्य रौद्रस्य मकराक्षस्य दुर्मतेः ॥ १९
तानि दृष्ट्वा निमित्तानि राक्षसा वीर्यवत्तमाः ।
अचिन्त्य निर्गताः सर्वे यत्र तौ रामलक्ष्मणौ ॥ २०
घनगजमहिषाङ्गतुल्यवर्णाः
समरमुखेष्वसकृद्गदासिभिन्नाः ।
अहमहमिति युद्धकौशलास्ते
रजनिचराः परिबभ्रमुर्नदन्तः ॥ २१

इति श्रीरामायणे युद्धकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

---

18 $T_1$ damaged up to च in $18^c$ (cf. v.l. 16). —$^a$) $Ś_2$ $V_3$ $B_1$ $D_{8.12}$ ये रथयुक्तास्ते; $Ñ_1$ $V_2$ $B_{2.3}$ ये ते रथे ($B_3$ °था-) युक्ता; $Ñ_2$ $V_1$ $D_4$ ते वै($D_4$ सर्वे) रथे युक्ता; $B_4$ $D_{13}$ चैते($D_{13}$ पेतू) रथे युक्ता; $D_{2.7}$ $T_{2.3}$ $G_{1.2}$ M ते रथयुक्ताश्च($D_2$ °स्ते). —$^b$) $V_3$ $B_1$ विभ्रम- (for विक्रम-). $T_3$ -संयुताः ; Cm.g.k.t as in text (for -वर्जिताः). $D_4$ सहसा विक्रमर्षिताः (sic). —$^c$) Ñ V $B_{1-3}$ $D_{2-4.12}$ $G_2$ गत्या; $G_3$ $M_{1.2}$ Ck युक्ता; Ct as in text (for गत्वा). —$^d$) $Ś_2$ Ñ V B $D_{1-4.8.12.13}$ साश्रुपात-($D_{13}$ °पूर्ण-) ; $D_{6.7.9}$ दीनाः साश्रु- (for दीनाः सास्र-).

19 $V_1$ om. $19^{ab}$. —$^a$) $Ñ_2$ $V_2$ $B_{2.4}$ ववौ च; $M_5$ स वाति (for प्रवाति). $Ñ_2$ $V_2$ $B_{2.4}$ $D_{5.6.9-11}$ T $G_{1.3}$ $M_3$ तस्मिन् ; $M_{1.2}$ चैव; $M_6$ तत्र (for तस्य). $Ñ_1$ $B_3$ $D_{4.13}$ प्रववौ मारुतस्तस्मिन्. —$^b$) $Ñ_1$ समये (for सपांसुः). —$T_1$ damaged from रुणः up to $21^b$. $V_3$ $B_1$ $D_3$ $T_3$ $M_2$ खरनि($D_3$ °निः)स्वनः ; Cg as in text. —$^c$) $Ś_2$ $V_3$ $B_1$ $D_{1-3.8.12}$ चातिरौद्रस्य; $D_6$ $T_2$ तस्य रूक्षस्य; $T_3$ ह्यतिरूक्षस्य (for तस्य रौद्रस्य). —$^d$) $D_4$ राक्षसस्य च दुर्मतेः.

20 $T_1$ damaged for 20 (cf. v.l. 19). —$^a$) $G_1$ कानि (sic) (for तानि). $D_5$ विनिमित्तानि (hypm.). $Ñ_2$ $V_{1.2}$ $B_{2.4}$ ते दृष्ट्वाप्य($B_4$ °थ)निमित्तानि. —$^b$) $Ś_2$ $V_3$ $B_1$ $D_8$ वीरसंमताः ; Ñ $V_1$ $B_{2-4}$ $D_{1-4.12}$ वीर्यसंमताः ; $V_2$ °संयुताः ; $D_{6.13}$ $G_2$ °सत्तमाः ; $M_{1.2}$ °वत्तराः ; $M_5$ बलवत्तराः (for वीर्यवत्तमाः). —$^c$) $Ś_2$ $V_3$ $B_1$ $D_{1-3.8.12}$ असंचिंत्य; $Ñ_2$ $V_{1.2}$ $B_{2.4}$ अविचिंत्य (for अचिन्त्य निर्-). —$^d$) $D_6$ $T_{2.3}$ यत्र रामः सलक्ष्मणः.

21 $T_1$ damaged for $21^{ab}$ (cf. v.l. 19). —$^a$) $Ñ_1$ $D_4$ $G_1$ वनगज-. $B_3$ -महिषादि- (for -महिषाङ्ग-). —$V_3$ illeg. for $^b$ (except समर). —$^b$) $Ñ_1$ -मुखाश्च (for -मुखेषु). $T_3$ [अ]सुहृद् (for [अ] सकृद्). $Ñ_2$ $V_2$ $B_3$ $D_{13}$ $M_5$ -हस्ताः (for -भिन्नाः). $Ś_2$ $D_8$ सकृच्छरांसि भिन्नाः ; $Ñ_1$ $B_{2.4}$ $M_1$ सकृद्र($B_2$ शार्ङ्ग )दासिहस्ताः($M_1$ °भिन्नाः) ; $B_1$ सकृच्छरान्वितत्य; $D_{1-3.9.12}$ [अ]सकृच्छरासिभिन्नाः($D_2$ °भियुक्ताः ; $D_9$ °द्गदाभिपक्षाः) ; $T_1$ °दा*** (damaged) ; Cg.k.t as in text (for [अ]सकृद्गदासिभिन्नाः). $D_4$ रणमिच्छंत इतस्ततो भ्रमंतः. —$D_9$ om. $21^{cd}$. —$^c$) $D_5$ om. (hapl.) मह. $G_1$ om. युद्ध. $Ś_2$ Ñ V B $D_{1-4.8.12.13}$ युद्धलालसास्; $M_5$ °कोविदास् (for °कौशलास्). —$^d$) $M_5$ damaged for भ्रमुर्नदन्तः. $Ś_2$ $D_{8.12}$ परिचुक्रुशुर् ; $Ñ_1$ $B_3$ $D_{4.13}$ °निर्ययुर् ; $D_{1.2}$ °चक्रमुर् (for °बभ्रमुर्). $D_5$ $T_1$ $G_3$ $M_3$ परितः समुन्नदंतः ; $D_{10.11}$ परिबभ्रमुर्मुहुस्ते.

Colophon : $D_9$ om. (cont. the Sarga). —*Kāṇḍa name* : Ñ B $D_{2.4.13}$ लंकाकांडे. —*Sarga name* : $Ś_2$ Ñ V B $D_{1.3.4.8.12}$ मकराक्षनिर्याणं($D_{4.8}$ °णः) ; $D_{2.13}$ युद्धपर्वणि मकराक्षनिर्याणं. —*Sarga no.* (figures, words or both): $Ñ_1$ $V_3$ $B_{2.4}$ $D_{2.4.8.12.13}$ om. ; $Ś_2$ 56 ; $Ñ_2$ 59 ; $V_1$ $D_1$ 58 ; $V_2$ 57 ; $B_1$ 53 ; $B_3$ 52 ; $D_3$ 60 ; $D_{5-7.10.11}$ $T_1$ G $M_{3.5}$ 78 ; $T_2$ 83 ; $T_3$ 85 ; $M_{1.2}$ 79. —After colophon, $Ñ_1$ concludes with श्रीरामः ; G $M_{1.2.5}$ with श्रीरामाय नमः.

G. 6. 70. 26
B. 6. 90. 54
L. 6. 69. 21

शरौ प्रतिहतौ दृष्ट्वा तावुभौ रणमूर्धनि ।
व्रीडितौ जातरोषौ च लक्ष्मणेन्द्रजितावुभौ ॥ १९
सुसंरब्धस्तु सौमित्रिरस्त्रं वारुणमाददे ।
रौद्रं महेन्द्रजिद्युद्धे व्यसृजद्युधि विष्ठितः ॥ २०
तयोः सुतुमुलं युद्धं संबभूवाद्भुतोपमम् ।
गगनस्थानि भूतानि लक्ष्मणं पर्यवारयन् ॥ २१
भैरवाभिरुते भीमे युद्धे वानररक्षसाम् ।
भूतैर्बहुभिराकाशं विस्मितैरावृतं बभौ ॥ २२

$\tilde{N}_1$ क्षितौ; $V_3$ $D_4$ गतौ (for कृतौ). $B_4$ अन्योन्यशरविक्षतौ (for the post. half).]

19 $^{a}$) Ś $B_1$ $D_{1-4.8.12}$ निहतौ; $\tilde{N}_2$ $B_3$ बलिनौ; $V_3$ तानितौ(sic); $B_2$ व्यथितौ; $D_5$ G M व्रीलितौ (for व्रीडितौ). $V_1$ तु; $B_1$ तौ (for च). $M_5$ -संरोषौ (for -रोषौ च). $V_2$ न व्रीडितौ जातरोषौ; $D_{13}$ निहतौ वीक्ष्य संक्रुद्धौ. ❀ Cm.t cite Ck: व्रीडितौ स्वस्वप्रयुक्तशरस्य मोघत्वदर्शनेन संजातलज्जौ। यद्यपि रावणेरेव व्रीडा युक्ता, लक्ष्मणस्य तु तद्बाणनिवारणाय प्रयोक्तुः सार्थक्यसत्त्वेन व्रीडाभावस्तथापि तन्निराकरणपूर्वकं रिपुवधपर्यन्तव्यापारेणोपादानात्तदभावेन तस्यापि लज्जेति बोध्यम्। छत्रिन्यायेन द्विवचनप्रयोग इति कतकः। (Cm छत्रि° into brackets); so also Ck. ❀ —$^{d}$) $D_1$ अपि; $D_{5-7.9-11}$ T G $M_{3.5}$ तदा (for उभौ). Ñ $V_{1.3}$ $B_{2-4}$ जातौ ($B_3$ **; $B_4$ ततो) लक्ष्मणरावणी.

20 $B_3$ om. 20. —$^{a}$) $D_{10}$ स (for सु-). —$^{c}$) Ś $V_2$ $B_1$ $D_{1-4.8.12.13}$ रौद्रं स चेंद्रजित्क्रुद्धो; $D_7$ $G_2$ रौद्रमिंद्रजिदप्यस्त्रं. —$^{d}$) $D_{9-11}$ [ऽ]प्यसृजद्; $M_5$ ह्यसृजद् (for व्यसृजद्). $D_{10.11}$ युद्ध- (for युधि). Ś $D_{1.3.4.8.12.13}$ तदनंतरं; $V_2$ $D_3$ स($D_2$ त)मनंतरं; $B_1$ स समंततः; $D_{5.6}$ T $G_3$ $M_3$ युधि निष्ठितः; $M_{1.2}$ युधि तिष्ठतः (for युधि विष्ठितः). —For 20, Ñ $V_{1.3}$ $B_{2.4}$ subst.; while Ś $V_2$ $B_1$ $D_{1-4.8.12.13}$ subst. only l. 1 for $20^{ab}$:

1725* सौमित्रिरथ संक्रुद्धः संदधेऽस्त्रं सुदारुणम् ।
असुरास्त्रमसौ युद्धे रावणिर्व्यसृजत्तदा ।

[(l. 1) $\tilde{N}_1$ $V_2$ $B_{2.4}$ संधाय (for संदधे). —After l. 1, $D_1$ ins.:

1725(A)* महेन्द्रं शत्रुदर्पघ्नं ज्वलनाकृतिदुःसहम् ।

—(l. 2) $V_3$ illeg. for व्यसृजत्तदा.]

—After 20, $D_{5-7.9-11}$ S ins.; while Ñ $V_{1.3}$ $B_{2-4}$ ins. l. 7–9. and 11 ($V_3$ only l. 11) after 20:

1726* तेन तद्विहतं शस्त्रं वारुणं परमाद्भुतम् ।
ततः क्रुद्धो महातेजा इन्द्रजित्समितिंजयः ।
आग्नेयं संदधे दीप्तं स लोकं संक्षिपन्निव ।
सौरेणास्त्रेण तद्वीरो लक्ष्मणः पर्यवारयत् ।
अस्त्रं निवारितं दृष्ट्वा रावणिः क्रोधमूर्छितः । [5]
आसुरं शत्रुनाशाय घोरमस्त्रं समाददे ।
तस्माच्चापाद्विनिष्पेतुर्भास्वराः कूटमुद्गराः ।
शूलानि च भुशुण्ड्यश्च गदाः खड्गाः परश्वधाः ।
तद्दृष्ट्वा लक्ष्मणः संख्ये घोरमस्त्रमथासुरम् ।
अवार्यं सर्वभूतानां सर्वशत्रुविनाशनम् । [10]
माहेश्वरेण द्युतिमांस्तदस्त्रं प्रत्यवारयत् ।

[(l. 1) $G_1$ येन (for तेन). $D_{7.9.11}$ विहितं (for विहतं). $D_7$ $G_1$ चास्त्रं; $T_{2.3}$ $M_3$ स्वस्त्रं (for शस्त्रं). $D_{9.11}$ दारुणं (for वारुणं). —(l. 3) $D_{11}$ $T_3$ संददे (for संदधे). $D_9$ इव संक्षये (for संक्षिपन्निव). —(l. 4) $G_1$ $M_5$ सूर्येण (for सौरेण). $D_{9-11}$ $G_1$ तं (for तद्). $D_{5.7}$ $T_1$ $G_{2.3}$ $M_3$ प्रत्यवारयत्. —After l. 4, $D_{5.6}$ T $G_3$ $M_{1.2.5}$ read 21. —(l. 5) $D_9$ निपातितं (for निवारितं). ❀ Ct: 'शस्त्रं निवारितं' इति पाठे शस्त्रशब्दोऽस्त्रपर्यायः. ❀ —(l. 6) $D_6$ $T_3$ समादधे; $D_7$ उपाददे (for समाददे). $D_{9-11}$ $G_1$ आददे निशितं बाणमासुरं शत्रुदार($G_1$ रु)णं. —(l. 7) $D_6$ $T_{2.3}$ अस्त्रात्समुत्पेतुर् (for चापाद्विनिष्पेतुर्). $\tilde{N}_1$ भासुराः. —(l. 8) Ñ $V_1$ $B_{2-4}$ [अ]थ (for च). $D_6$ T G M मुसुंढ्यश् ($T_1$ °ठ्यश्); K (ed.) मुशुंठ्यश् (for भुशुण्ड्यश्). $D_7$ गदाखड्ग-. —(l. 9) $\tilde{N}_2$ $D_{5.7.9-11}$ $T_3$ $G_1$ $M_{1.2}$ तं (for तद्). Ñ $V_1$ $B_4$ महासुरं; $B_2$ $D_{7.9-11}$ $G_{1.2}$ सुदारुणं; $B_3$ महेश्वरं (for अथासुरम्). —(l. 10) $D_{9-11}$ सर्वशस्त्र- (for °शत्रु-). $D_{7.9-11}$ G -विदारणं. —(l. 11) Ñ $V_1$ $B_{2.4}$ $D_6$ $T_{2.3}$ $M_5$ पर्यवारयत्.]

21 $D_{5.6}$ T $G_3$ $M_{1.2.5}$ read 21 after l. 4 of 1726*. —$^{a}$) $D_6$ तत्तुमुलं; $D_{9-11}$ समभवद् (for सुतुमुलं). —$^{b}$) $D_{9-11}$ अद्भुतं रो($D_{11}$ लो)महर्षणं; $G_{2.3}$ बभूवाद्भुतदर्शनं. —For $21^{ab}$, Ś Ñ V B $D_{1-4.8.12.13}$ subst.:

1727* तयोः सुतुमुले युद्धे प्रवृत्ते लोमहर्षणे ।

[$D_4$ तु (for सु-). $\tilde{N}_1$ $V_3$ $B_{2-4}$ तत्र (for युद्धे). Ñ $V_{1.3}$ $B_{2-4}$ संग्रामे; $B_1$ प्रदत्ते (for प्रवृत्ते). Ś $\tilde{N}_2$ $V_{1.2}$ $D_{8.13}$ रोम- (for लोम-).]

—Then Ñ $V_{1.3}$ $B_{2-4}$ cont.:

1728* अस्त्रैरस्त्राणि दिव्यानि वारयन्तं रणाजिरे ।

[$\tilde{N}_2$ संयोज्य and वारयंतो (for दिव्यानि and वारयन्तं).]

—$^{c}$) $V_3$ damaged from second नि up to $22^{a}$. $B_3$ (m. also as in text) सर्वाणि (for भूतानि). $D_{13}$ गगनस्थाः स्थिता देवा. —$^{d}$) Ñ $B_{2-4}$ समवारयन्.

22 $V_3$ damaged for $22^{a}$ (cf. v.l. 21). —$^{ab}$) Ś $D_{8.12}$ -[अ]भिनये; $\tilde{N}_1$(m. also) °वृते; $\tilde{N}_2$ $B_2$ °भवे; $B_4$ $D_{13}$ °रवे; $D_7$ $T_{2.3}$ $G_2$ °रुतैर्; $M_5$ °युते; Cm.g.t as in text (for -[अ]भिरुते). $D_{6.7}$ $T_{2.3}$ $G_2$ भीमैर् (for भीमे). $V_3$ भीमे (for युद्धे). Ś Ñ $V_{1.2}$ B $D_{1-4.8.12.13}$ transp. भीमे and युद्धे. —$V_3$ om. $22^{cd}$. —$^{c}$) $D_9$ जातैर् (for भूतैर्). Ś $D_{8.9.12}$ आकाशे. —$^{d}$) $B_1$ सस्मितैर् (for विस्मितैर्). $B_3$ आचितं; G (ed.) चावृतं. Ś $D_{1.12}$ आवृतावुभौ (for आवृतं बभौ).

ऋषयः पितरो देवा गन्धर्वा गरुडोरगाः ।
शतक्रतुं पुरस्कृत्य ररक्षुर्लक्ष्मणं रणे ॥ २३
अथान्यं मार्गणश्रेष्ठं संदधे राघवानुजः ।
हुताशनसमस्पर्शं रावणात्मजदारणम् ॥ २४
सुपत्रमनुवृत्ताङ्गं सुपर्वाणं सुसंस्थितम् ।
सुवर्णविकृतं वीरः शरीरान्तकरं शरम् ॥ २५
दुरावारं दुर्विषहं राक्षसानां भयावहम् ।
आशीविषविषप्रख्यं देवसंघैः समर्चितम् ॥ २६
येन शक्रो महातेजा दानवानजयत्प्रभुः ।
पुरा देवासुरे युद्धे वीर्यवान्हरिवाहनः ॥ २७
तदैन्द्रमस्त्रं सौमित्रिः संयुगेष्वपराजितम् ।
शरश्रेष्ठं धनुःश्रेष्ठे नरश्रेष्ठोऽभिसंदधे ॥ २८
संधायामित्रदलनं विचकर्ष शरासनम् ।
सज्यमायम्य दुर्धर्षः कालो लोकक्षये यथा ॥ २९
संधाय धनुषि श्रेष्ठे विकर्षन्निदमब्रवीत् ।
लक्ष्मीवाँल्लक्ष्मणो वाक्यमर्थसाधकमात्मनः ॥ ३०

G. 6. 70. 36
B. 6. 90. 69
L. 6. 69. 32

---

23 $^{b}$) Ñ2 V B2.4 D5.6.9–11.13 T G M1.2.5 गंधर्व- (for गन्धर्वा). D1 पतगोरगाः ; D13 -मरुतो गणाः ; G3 -गरुडोपमाः. —$^{cd}$) G1 damaged for पुरस्कृत्य रर. D13 रक्षस्तं (sic) (for ररक्षुर्). —After 23, Ñ V1.3 B2–4 ins. :

1729* पूज्यमानस्ततो देवैर्हृष्टैः शक्रपुरोगमैः ।

[ V3 damaged from देवै up to सं in $24^{b}$. Ñ1 B2.3 हृष्टः (for हृष्टैः).]

24 V3 damaged up to सं in $24^{b}$ (cf. v.l. 1729*). —$^{a}$) B3 अन्योन्यं (sic). B1–3 D1.5 मार्गणं (for मार्गण-). B3 श्रेष्ठो (for -श्रेष्ठं). —$^{b}$) Ñ2 रावणात्मज (sic); D1 G2 रावणानुजः (sic) (for राघवानुजः). —$^{c}$) D2 आशीविष- ; D8 **शन- (for हुताशन-). —B1 om. (hapl.) $24^{d}$–$26^{c}$. G (ed.) om. $24^{d}$–$25^{a}$. —$^{d}$) Ś D1.4.6.12 -वारणं ; Ñ V B2–4 -नाशनं ; D2 -वानरं (sic); D3.8.13 -रावणं ; D5.7 T2.3 -दारुणं (for -दारणम्).

25 B1 om. 25; G (ed.) om. $25^{a}$ (for both, cf. v.l. 24). V3 om. 25–$26^{b}$. Ś D8.12 transp. $25^{ab}$ and $26^{cd}$. —$^{ab}$) Ś V2 D8.12 दृढांतमृजु- ; Ñ1 B2.3 D1–4.13 दृढं तमृजु- ; V1 *** मृजु- (illeg.); B4 सुदृढमृजु- (for सुपत्रमनु-). D13 -सर्वांगं (for -वृत्ताङ्गं). B3 तु सुस्थितं ; D1.3 सुसंस्कृतं ; D11 समुत्थितं ; T2.3 सुतेजसं ; G2 सुसंहितं ; Cm.g.k.t as in text (for सुसंस्थितम्). Ñ2 सुदृढं तं सुपर्वाणमृजुवृत्ताग्रसंस्थितं. —G (ed.) om. $25^{c}$. —$^{c}$) B3 सुपर्व- ; T2 M3 सुपर्ण- ; Cm.g.k.t as in text (for सुवर्ण-). D13 तीक्ष्णं (for वीरः). —G (ed.) reads $25^{d}$ in place of $26^{b}$. —$^{d}$) D7 शुभं; G (ed.) भृशं (for शरम्). G2 शरीरांतकशंकरं (sic).

26 B1 om. $26^{abc}$ (cf. v.l. 24). V3 om. $26^{ab}$ (cf. v.l. 25). —$^{a}$) Ś V2 B3 D4.8.12 दुराधर्षं; Ñ V1 B2.4 दुराराधं ; D1–3.13 दुराध(D3 °धा)रं ; D5.6 T G3 °सदं ; D9 °वहं ; Ck.t as in text (for दुरावारं). Ś1 दुर्विषह्यं ; V2 °गाहं ; D9–11 °षमं (for दुर्विषहं). —$^{b}$) Ś Ñ V1 B2–4 D1–4.8.12.13 विदारणं (for भयावहम्). —Ś D8.12 transp. $25^{ab}$ and $26^{cd}$. —$^{c}$) D2 हुताशन- (for आशीविष-). T2 -विषमिव (for -विषविष-). Ś Ñ V B2–4 D1–4.8.12.13 -समस्पर्शं ; G1 -समप्रख्यं (for -विषप्रख्यं). —$^{d}$) D7 सुपूजितं ; D9 समर्पितं ; M1.2 निषेवितं ; M5 समाहितं ; Ck.t as in text (for समर्चितम्). Ś V2 D8.12 वेगेनात्यंतदर्पि(V2 °मूर्जि)तं ; Ñ1 V1.3 B2–4 दिव्यं संपन्नमर्चिषा ; Ñ2 दिव्यं देवगणार्चितं ; B1 वेगसंपत्तिसंचितं ; D1–4 वेगसंपन्नसमर्चितं ; D13 रावणात्मजनाशनं.

27 $^{a}$) D9 तेन. Ś1 B4 D8 प्रविद्धोभूद् ; Ś2 Ñ V B1–3 D1–3.12.13 प्रयु(Ś2 B2 °वृ ; D13 °बु)द्धोभूद् (V3 damaged from भूद् up to वा in $27^{d}$); D4 प्रयुक्तोभूद् (for महातेजा). —$^{b}$) Ś Ñ V1.2 B D1–4.8.12.13 दानवांतकरः (D8 °रं); D9 °न्वाजयत् (for °नजयत्). D8 शरं ; D13 शरः ; G2 मुहुः (for प्रभुः). —$^{c}$) T1 दैवासुरे (for देवासुरे). —$^{d}$) D13 अरिबाधनः (for हरिवाहनः).

28 $^{a}$) D9–11 अथ ; T2 तथा (for तदा). Ś Ñ V B1.2.4 D1–4.8.12.13 तमिंद्रदत्तं (Ś1 D8 °जिति; Ś2 D12 °जितं); B3 अथैंद्रदत्तं (for तदैन्द्रमस्त्रं). —$^{b}$) Ś B1 D1–4.8.12.13 समरेष्वपराजितः. —$^{c}$) D1 शरं (for शर-). V3 धनु **. —D10.11 G3 om. (hapl.) $28^{d}$–$30^{a}$. —$^{d}$) Ś V3 D8.12 रथ(V3 **)श्रेष्ठो ; D3 लक्ष्मणश्च ; M5 रघुश्रेष्ठो (for नरश्रेष्ठो). Ñ2 [ऽ]ति- ; D4.6 [ऽ]थ ; T2.3 [ऽ]पि (for ऽभि-).

29 D10.11 G3 om. 29 (cf. v.l. 28). Ś1 om. 29–$30^{b}$. —$^{a}$) Ś2 B1 D8.12 -मथनो; Ñ V1.3 B2.4 T2.3 G3 -दमनं (V3 °नो); V2 D1–4.7.13 -मथनं ; B3 -दहनं ; M1.2 -हरणं ; Cg as in text (for -दलनं). —V3 damaged from $29^{b}$ up to का in $29^{d}$. —$^{b}$) B1 व्यवकृष्य ; D1–4 व्य(D3 चा ; D4 न्य)पकृष्य ; D13 अपकृष्य (for विचकर्ष). M3 सनातनं. Ś2 D8.12 विपक्षं स्वशरासनात्. —$^{c}$) G1 आदाय (for आयम्य). D6 T2.3 G2 M3 दुर्धर्षं (for दुर्धर्षः). Ś2 B1 D1–4.8.12.13 संधा(D1–3.13 °धी)यमानं दुर्धर्षं ; Ñ V1 B2.4 संजिहीर्षुः सुदुर्धर्षं ; V2 B3 संजिहीर्षुर्दुराधर्षं ; D9 सज्जमादाय दुर्धर्षं. —$^{d}$) Ś2 B1 D1–4.8.9.12.13 कालं (for कालो). D9 लोकक्षयं.

30 D10.11 G3 om. $30^{a}$ (cf. v.l. 28). Ś1 om. $30^{ab}$ (cf. v.l. 29). —$^{a}$) M1.2 स संधाय (hypm.). Ś2 Ñ

G. 6. 70. 37
B. 6. 90. 69
L. 6. 69. 33

धर्मात्मा सत्यसंधश्च रामो दाशरथिर्यदि ।
पौरुषे चाप्रतिद्वंद्वस्तदेनं जहि रावणिम् ॥ ३१
इत्युक्त्वा बाणमाकर्णं विकृष्य तमजिह्मगम् ।
लक्ष्मणः समरे वीरः ससर्जेन्द्रजितं प्रति ।
ऐन्द्रास्त्रेण समायुज्य लक्ष्मणः परवीरहा ॥ ३२
तच्छिरः सशिरस्त्राणं श्रीमज्ज्वलितकुण्डलम् ।
प्रमथ्येन्द्रजितः कायात्पपात धरणीतले ॥ ३३
तद्राक्षसतनूजस्य छिन्नस्कन्धं शिरो महत् ।
तपनीयनिभं भूमौ ददृशे रुधिरोक्षितम् ॥ ३४
हतस्तु निपपाताशु धरण्यां रावणात्मजः ।
कवची सशिरस्त्राणो विध्वस्तः सशरासनः ॥ ३५
चुक्रुशुस्ते ततः सर्वे वानराः सविभीषणाः ।
हृष्यन्तो निहते तस्मिन्देवा वृत्रवधे यथा ॥ ३६

$B_{2.4}$ $D_{1.8.12}$ च धनुःश्रेष्ठे; V $B_{1.3}$ $D_{2-4}$ च( $D_2$ स ) धनुःश्रेष्ठं; $D_{13}$ च नरश्रेष्ठो ( for धनुषि श्रेष्ठे ). —$^b$) $\tilde{N}_2$ $V_1$ $B_4$ चिकीर्षन् ( for विकर्षन् ). —$^d$) Ś $\tilde{N}_2$ $V_{1.3}$ $B_{1.2.4}$ $D_{1-3.8.9.12.13}$ -साधनम्; $D_4$ -संधानम् ( for -साधकम् ). $G_1$ अब्रवीत्; Ck.t as in text ( for आत्मनः ).

31 $V_3$ mostly damaged for $^a$. —$^a$) $\tilde{N}_1$ सत्यात्मा सत्यधर्मश्च. —$^b$) Ś Ñ V B $D_{1-3.8.12.13}$ यथा; $D_4$ स्वयं; $D_6$ युधि ( for यदि ). —$V_3$ $D_{11}$ om. $31^{cd}$. —$^c$) $B_{3.4}$ $D_3$ $G_3$ पौरुषेण( $D_3$ °षि ) ( for पौरुषे च ). $B_3$ $D_3$ [अ]-प्रतिद्वंद्वं. $D_4$ पौरुषत्वसमायुक्तस्. —$^d$) $D_5$ तथैनं; $D_7$ तमेनं; $D_{9.10}$ $T_1$ तदैनं; G M शरैनं ( for तदेनं ). Ś Ñ $V_{1.2}$ B $D_{1.2.4.8.12.13}$ तथेमं( $B_4$ °दैनं ) जहि राक्षसं; $D_3$ तथेमं राक्षसं जहि. —After 31, $\tilde{N}_2$ $B_3$( in marg. ) ins.:

1730* पितृभक्तो देववरो वीरव्यूहरणे रतः ।
भक्तानुकम्पी भूतानां तथेमं जहि राक्षसम् ।

—Then $B_3$ cont.:

1731* यदि रामपदद्वंद्वे भक्तिर्मे निश्चला भवेत् ।
प्रासव्या यदि सा सीता जहीमं पापराक्षसम् ।

32 $^a$) Ñ $V_{2.3}$ B $D_{1.2.5.13}$ $T_1$ $M_{1.2}$ आकर्णाद् ( for आकर्णं ). —$^b$) $Ś_2$ $D_{8.12.13}$ आकृष्य ( for विकृष्य ). $V_1$ तमजित्ततः ( sic ); $D_6$ $G_2$ च महाबलः ( for तमजिह्मगम् ). —$D_{10}$ reads in marg. $32^{cdef}$. —After $32^{cd}$, Ś $B_{1.3}$ (m.) $D_{1-4.8.12}$ ins.; $V_2$ cont. after 1734*; while $D_{13}$ cont. after 1733*:

1732* संधाय चाप्रमेयेन रक्षसां शातनेन च ।

[ $D_1$ वा न प्रमेये ( sic ); $D_4$ [अ]प्रमेयेन ( subm. ); $D_8$ वाप्रमेयेन; $D_{13}$ चापरेणैव ( for चाप्रमेयेन ). $B_1$ रक्षसः ( for रक्षसां ). $V_2$ पातनेन च; $D_4$ तनये बत ( for शातनेन च ). Ś $D_{8.12}$ राक्षसानां शतेन च ( for the post. half ). ]

—After $32^{cd}$, $D_{13}$ ins.:

1733* चकर्त बाहुयुगलं रक्षसोऽस्त्रसमन्वितम् ।

—G ( ed. ) om. $32^{ef}$. $G_3$ repeats $32^{ef}$ after $34^{ab}$. —$^e$) $D_7$ $T_{2.3}$ $G_3$ $M_{1.2.5}$ Cv.m.g समायोज्य ( for समायुज्य ). Ś Ñ V B $D_{1-5.8.12.13}$ $T_1$ रै( $D_5$ $T_1$ दें )द्रेणास्त्रेण संयो( $D_{13}$ °यु )ज्य. ❀ Cr : बाणमैन्द्रास्त्रेण संयोज्य ससर्जेति संबन्धः ।; so also Cm.g which add एको लक्ष्मणशब्दो लक्ष्मीवद्व( Cg °क्ष्मीयुक्तव )चनः. ❀ —After 32, Ñ $V_{1.3}$ $B_{2-4}$ ins.; while $V_2$ ins. after $32^{cd}$:

1734* क्षुरप्रं रावणेरर्थे सर्वेषां चैव रक्षसाम् ।
स तु बाणाग्निदीप्तार्चिः प्रज्वलन्निव तेजसा ।

[ (l. 1) $V_{2.3}$ $B_{2.3}$ क्षुराखं ( for क्षुरप्रं ). $V_1$ illeg. for सर्वेषां चैव. ]

33 $^a$) Ś $B_1$ $D_{1-3.5.8.12}$ $M_{3.5}$ स शिरः; L ( ed. ) स शरः ( for तच्छिरः ). $D_{13}$ शिरः क्षतजसंदिग्धं. —$^b$) $B_3$ भीमं; $D_{13}$ शीत- ( for श्रीमज् ). $\tilde{N}_1$ शिखोज्ज्वलित-. —$V_3$ om. ( hapl. ) $33^c$–$34^b$. —$^d$) Ś $\tilde{N}_2$ $V_2$ $B_1$ $D_{1-4.7.8.10-13}$ $G_1$ $M_3$ पातयामास भूतले.

34 $V_3$ om. $34^{ab}$ ( cf. v.l. 33 ). —$^a$) Ś $B_1$ $D_{1-4.8.12.13}$ रावण- ( for राक्षस- ). —$^b$) $B_1$ $D_{1-4.13}$ छिन्नं ( $D_{3.13}$ °न्न- ) स्कंधात्; $D_{9-11}$ $G_2$ भिन्नस्कंधं ( for छिन्नस्कन्धं ). Ñ $V_{1.3}$ $B_{2-4}$ शिरो ज्वलितकुंडलं. —After $34^{ab}$, $G_3$ repeats $32^{ef}$. —$^c$) $M_5$ भीमं ( for भूमौ ). $V_3$ पतितं सहसा भूमौ. —$^d$) $D_{1-4.13}$ ददृशुः. $D_{3.7}$ $G_2$ शोणितोक्षितं; $M_{1.2}$ [s]सृक्समुक्षितं; Ct as in text ( for रुधिरोक्षितम् ). —After 34, $D_{13}$ ins. a passage relegated to App. I ( No. 48 ).

35 $^a$) Ś $V_2$ $D_{2.8.12.13}$ ततः स( $D_{2.12}$ सं- ); Ñ $B_3$ ततस्तु; $V_3$ $D_{1.4.9-11}$ हतः स; $B_1$ $D_3$ हतः सं- ( for हतस्तु ). $D_1$ प्रपपात ( for निपपात ). $V_3$ $D_{9-11}$ [अ]थ ( for [आ]शु ). —$^b$) $G_1$ अल्पजीवितः ( for रावणात्मजः ). —$^c$) Ñ $V_{1.3}$ $B_{2-4}$ व्य( $\tilde{N}_1$ अ )पविद्ध- ( for कवची स- ). Ś $D_{8.12}$ -शरः खड्गी; $V_2$ $B_1$ $D_{1-4.13}$ -शरी खड्गी ( for -शिरस्त्राणो ). —$^d$) Ñ $V_{1.3}$ $B_{2-4}$ सशरः स-; $D_{2.7}$ विध्वस्तः धु-( $D_7$ °स्तश्च ); $D_{9-11}$ विप्रविद्ध-; $G_1$ प्रविध्वस्त- ( for विध्वस्तः स- ). $D_7$ -शरासनात्.

36 $^a$) $V_3$ जहसुस् ( for चुक्रुशुस् ). $D_4$ महानादं; $D_6$ तदा सर्वे ( for ततः सर्वे ). —$^c$) Ś $D_{8.12}$ प्रहृष्टा; Ñ V $B_{1.2.4}$ $D_{1-4.13}$ प्रहर्षान्; $B_3$ प्रहर्षेण ( hypm. ); $D_{6.10}$ $G_3$ हृष्यंते; $M_{1.2}$ राक्षसे ( for हृष्यन्तो ). $D_7$ $G_2$ अहृष्यन्पतिते तस्मिन्. —$^d$) $D_4$ वृत्रवधं.

अथान्तरिक्षे भूतानामृषीणां च महात्मनाम् ।
अभिजज्ञे च संनादो गन्धर्वाप्सरसामपि ॥ ३७
पतितं समभिज्ञाय राक्षसी सा महाचमूः ।
वध्यमाना दिशो भेजे हरिभिर्जितकाशिभिः ॥ ३८
वानरैर्वध्यमानास्ते शस्त्राण्युत्सृज्य राक्षसाः ।
लङ्कामभिमुखाः सर्वे नष्टसंज्ञाः प्रधाविताः ॥ ३९
दुद्रुवुर्बहुधा भीता राक्षसाः शतशो दिशः ।
त्यक्त्वा प्रहरणान्सर्वे पट्टसासिपरश्वधान् ॥ ४०
केचिल्लङ्कां परित्रस्ताः प्रविष्टा वानरार्दिताः ।
समुद्रे पतिताः केचित्केचित्पर्वतमाश्रिताः ॥ ४१
हतमिन्द्रजितं दृष्ट्वा शयानं समरक्षितौ ।
राक्षसानां सहस्रेषु न कश्चित्प्रत्यदृश्यत ॥ ४२
यथास्तंगत आदित्ये नावतिष्ठन्ति रश्मयः ।
तथा तस्मिन्निपतिते राक्षसास्ते गता दिशः ॥ ४३
शान्तरश्मिरिवादित्यो निर्वाण इव पावकः ।
स बभूव महातेजा व्यपास्तगतजीवितः ॥ ४४

G. 6. 70. 50
B. 6. 90. 82
L. 6. 69. 48

37 [a]) D6 तथा (for अथ). Ñ2 B2 अंतरीक्षे च; B1.2 D13 अथांतरीक्षे. Ś D5.7.8.12 T1 G2.3 M3 देवानाम् (for भूतानाम्). —[b]) D13 महर्षीणां (for ऋषीणां च). Ñ1 महासुरः (sic) (for °त्मनाम्). D7 G2 M1.2 ऋषीणां भावितात्मनां. —[c]) G1 हि (for च). Ś V2 B1 D1–4.8.12.13 बभूव तत्र; D9–11 जज्ञेथ जय- (for अभिजज्ञे च). Ñ V1.3 B2–4 संजज्ञे तलसंपातो (Ñ1 °शब्दो). —After 37, D7 G2 read 48–50, M5 reads 48, 49 and 51, for the first time, all except D7 repeating them in their proper place.

38 V3 om. 38. —[a]) B1 पातितं. D5 G3 M3 तम् (for सम्-). Ś V2 B1 D1–4.8.12.13 रावणिं ज्ञात्वा (Ś D8.12 मत्वा; D2 दृष्ट्वा) (for समभिज्ञाय). Ñ V1 B2–4 निहतं तमथ (B4 °थो) ज्ञात्वा. —[b]) Ś V2 B1 D1–4.8.12.13 सा राक्षस-; Ñ V1 B2–4 D6 T2.3 G2 M5 राक्षसानां (for राक्षसी सा). —[c]) Ś V2 B1 D1–4.8.12.13 प्रदुद्राव (for दिशो भेजे). —[d]) Ñ V1 B2–4 वानरैर् (for हरिभिर्).

39 [a]) D9 युध्यमानास्ते. Ś Ñ V B D1–4.8.12.13 ते वध्यमाना हरि (Ñ1 V3 B2.3 कपि) भिः. —[c]) Ś D4.8.12 जग्मुर्; Ñ B1.3.4 D1.2.5.6.9–11 T2.3 G M1.2.5 सस्रुर्; V1.3 पेतुर्; D7 तूर्णं (for सर्वे). D13 ते लंकाभिमुखास्त्यास्तु-. —[d]) D10.11 भ्रष्ट- (for नष्ट-). Ś Ñ V B D1–4.8.12.13 नदं (Ñ1 °दं) तो नष्टचेतसः (Ñ2 B4 °नाः).

40 G (ed.) om. 40. —[ab]) Ś D8.12 वसुधां; Ñ1 V1.3 B1.2 सहसा; B3 बहुशो; D13 विविधा (for बहुधा). Ś V2 B1 D1–4.8.12.13 वीरा (for भीता). Ñ2 प्रदुद्रुवुर्बंधाद्भीता (for [a]). D7 G2 transp. बहुधा and शतशो. Ś V2 B1 D1.3.4.8.12.13 सहसा दिशः; Ñ V1.3 B2–4 ते दिशो दश; D2 सहसार्दिताः (for शतशो दिशः). —[c]) V2 om. (hapl. ?) सर्वे. Ś Ñ V1.3 B D1–4.8.12.13 प्रहरणान्या (B3 °णांश्चा; D13 °णाना) शु-. —[d]) Ś Ñ V1.3 B D पट्टिशा (Ś2 D5.8.12 °सा) सि-; V2 सपट्टिश- (for पट्टसासि-). D1–4.7.11.13 -परस्वधान्.

41 [a]) Ś V2 B1 D8.12 अभि (V2 B1 प्रति) मुखाः; D1–4.13 अभिमुखं; D5 T1 G3 प्रविष्टास्ते (for परित्रस्ताः). —[b]) B4 प्रविशन्; D5 T1 G3 राक्षसा (for प्रविष्टा). —D4 repeats within brackets from केचित् in 41[c] up to 42[a] before 1736*. —[c]) V2 B1 D1–4.13 समुद्रं. B1 विविशुः (for पतिताः). —[d]) Ś B1 D1–3.4 (both times). 8.12.13 शै (D1 सा) लान्समाश्रिताः; Ñ1 पर्वतसंश्रिताः; D6 °तमास्थिताः (for पर्वतमाश्रिताः).

42 [b]) V2 पतितं (for शयानं). Ś V2 B1 D1–4.8.12.13 धरणीतले; Ñ V1.3 B2–4 D6 समरे क्षिता; D9–11 च रण° (for समरक्षितौ). —After 42[ab], D13 ins.:

1735* अस्तंगतमिवादित्यं प्रशान्तमिव पावकम् ।
यथातिमिव पुण्यान्ते देवलोकात्परिच्युतम् ।

—V3 om. 42[c]–43[b]. —[c]) D13 G1 सहस्रं (G1 °स्रे) तु (for सहस्रेषु). —[d]) D12 किंचिद् (for कश्चिद्). Ś V2 D1–4.8.12.13 अवतिष्ठते (V2 °ति); Ñ B2.4 व्यवतिष्ठत; V1 प्रत्यतिष्ठत; B1 अथ वर्तते (for प्रत्यदृश्यत). B3 न च कश्चिद्यतिष्ठत. —After 42, Ś V2 B1 D1–4.8.12.13 ins.:

1736* ततो विनेदुः संहृष्टाः समरे हरियूथपाः ।
चिक्षिपुर्दुद्रुवुश्चैव लाङ्गूलानि प्रहर्षिताः ।

[V2 B1 om. l. 2. —(l. 2) Ś D8.12 चुकुशुर्; D1.3 विक्ष्वेडुर् (for चिक्षिपुर्). Ś दुधुवुश्; D4.13 मुमुचुश्; D8 युयुधुश्; D12 मृदुवुश् (sic) (for दुद्रुवुश्). D13 लांगूलं च (for लाङ्गूलानि).]

43 V3 om. 43[ab] (cf. v.l. 42). —[b]) D5 T1 G3 M1.2 नैव; M5 न च (for नाव-). Ñ V1 B2–4 तिष्ठंतीह (for [अ]वतिष्ठन्ति). —[c]) D1 विनिहते (for निपतिते). M5 तथास्मिन्पतिते वीरे. —Ś D8.12 om. (hapl.) 43[d]–45[c]. —[d]) M1.2 दिशो गताः (by transp.). Ñ V1.3 B2–4 जग्मुस्ते राक्षसा दिशः (V3 damaged from दिशः up to पाव in 44[b]); V2 B1 D2.4.13 नावतिष्ठंति राक्षसाः; D1.3 नाभ्य (D3 न व्य) तिष्ठंत राक्षसाः.

44 Ś D8.12 om. 44; V3 damaged up to पाव in 44[b] (for both, cf. v.l. 43). —[a]) D2 शीत- (for शान्त-). —[b]) D4 निर्धूम (for निर्वाण). —D3 om. 44[cd]. —[c]) T1 G3 अतिष्ठत्स; M5 बभूव स (by transp.). V2

G. 6. 70. 51
B. 6. 90. 83
L. 6. 69. 49

प्रशान्तपीडाबहुलो विनष्टारिः प्रहर्षवान् ।
बभूव लोकः पतिते राक्षसेन्द्रसुते तदा ॥ ४५
हर्षं च शक्रो भगवान्सह सर्वैः सुरर्षभैः ।
जगाम निहते तस्मिन्राक्षसे पापकर्मणि ॥ ४६
शुद्धा आपो नभश्चैव जहृषुर्दैत्यदानवाः ।
आजग्मुः पतिते तस्मिन्सर्वलोकभयावहे ॥ ४७
ऊचुश्च सहिताः सर्वे देवगन्धर्वदानवाः ।
विज्वराः शान्तकलुषा ब्राह्मणा विचरन्त्विति ॥ ४८
ततोऽभ्यनन्दन्संहृष्टाः समरे हरियूथपाः ।
तमप्रतिबलं दृष्ट्वा हतं नैर्ऋतपुंगवम् ॥ ४९
विभीषणो हनूमांश्च जाम्बवांश्चर्क्षयूथपः ।
विजयेनाभिनन्दन्तस्तुष्टुवुश्चापि लक्ष्मणम् ॥ ५०

---

B1 G1 महाबाहुः (for °तेजा). Ñ V1.3 B2–4 D1–4.7.9–11.13 G2 बभूव स( Ñ1 D7.11.13 सु- ) महाबाहुर् . —$^{d}$) Ñ2 B4 व्यपासुर्; V1.3 रुद्रास्त्र- ; V2 B1 D1–4.13 T2.3 समरे ; T1 व्यपास्तो; G2 शस्त्रास्त्र- ; M5 रावणिर् ; Cr.m.g.k.t as in text (for व्यपास्त-). Ñ1 V1.3 B2–4 -हत- (for -गत-).

45 Ś D8.12 om. $45^{abc}$ (cf. v.l. 43). —$^{a}$) D9 -चित्तो बहुशो; M5 -पीडोरुबलो (for -पीडाबहुलो). Ñ V B D1–4.13 प्रशांतः परुषो( D4 प्रवत्रौ ) वायुः. ❀ Cm.g.k प्रशान्तपीडाबहुलः प्रशान्तबहुलपीडः. ❀ —$^{b}$) Ñ V1.2 B1.2.4 D1–4.13 G1.2 M3 नष्टारि( D1.13 °नि )ष्टः( G2 °श्च ) (for विनष्टारिः). Ñ1 B4 D1.5 प्रहर्षयन् ; B1 G1 प्रहृष्टवान् ; B2 M1–3 प्रतापवान् (for प्रहर्षवान्). V3 निर्यातस्तनयित्नुवान् ; B3 इष्टोनिष्टप्रधर्षकः. —$^{d}$) V3 damaged from से up to सुर in $46^{b}$. D7 तस्मिन्रक्षोधिपात्मजे.

46 V3 damaged up to सुर in $46^{b}$ (cf. v.l. 45). —$^{a}$) Ś Ñ V1.2 B2–4 D1–4.8.12.13 जहर्ष (for हर्षं च). B4 देवा* (for भगवान्). —$^{b}$) Ś Ñ2 V1 B3.4 D2.4.5.7.8.12 सुरर्षिभिः ; D6 T2.3 मरुद्गणैः ; D9–11 महर्षिभिः (for सुरर्षभैः). —$^{c}$) Ñ1 तथा वि- ; Ñ2 V1.3 B तदा वि- ; D1 जग्मुश्च ; D3 जहास (for जगाम). D6 T2.3 G1 transp. निहते and तस्मिन्. Ś D8.12 लक्ष्मणेन हते तस्मिन्. —$^{d}$) D7 क्रूरकर्मणि. —After 46, D5–7.9–11 S ins. :

1737* आकाशे चापि देवानां शुश्रुवे दुन्दुभिस्वनः ।
नृत्यद्भिरप्सरोभिश्च गन्धर्वैश्च महात्मभिः ।
ववर्षुः पुष्पवर्षाणि तदद्भुतमभूत्तदा ।
प्रशशंसुर्हते तस्मिन्राक्षसे क्रूरकर्मणि ।

[ (l. 1) D5.6 शुशुभे (for शुश्रुवे). D7 देवदुंदुभिः ; D9 चापि निस्वनः (for दुन्दुभिस्वनः). —(l. 3) M3 Cg ववृषुः ; Cv as above (for ववर्षुः). D7.9–11 इवाभवत् (for अभूत्तदा). ❀ Cv : ववर्षुः प्रशशंसुरित्यत्रोभयत्रापि देवाः कर्तारः ।; so also Cg. ❀ —(l. 4) D7.10.11 G1.2 M5 प्रशशाम ; M1.2 प्रशांतानि (for प्रशशंसुर्). G3 पाप- (for क्रूर-). ]

47 $^{a}$) Ś Ñ2 V1.3 B4 D8.12 चापो ; Ñ1 V2 B2 ह्यापो (for आपो). D5.6 T2.3 G3 M दिशश् (for नभश्). —$^{b}$) Ś D5–8.12 जहर्षुर् (for जहृषुर्). Ś Ñ V B D1–4.7.8.10–13 G3 देव- ; D13 दिवि (for दैत्य-). D6.9 T2.3 देवतागणाः (for दैत्यदानवाः). —D4 om. (hapl.) $47^{c}$–$48^{b}$ ; D7 om. $47^{cd}$. —$^{c}$) Ñ V3 B2.4 जग्मुश्च (for आजग्मुः). —V3 damaged from वै in $^{d}$ up to गन्ध in $48^{b}$.

48 D4 om. $48^{ab}$ ; V3 damaged up to गन्ध in $48^{b}$ (for both, cf. v.l. 47). D7 G2 read 48–50, M5 reads 48, 49 and 51 after 37 for the first time, all except D7 repeating them here. —$^{a}$) Ñ2 V1.2 B2–4 D2.7.9–11.13 G1.2 (both times) तुष्टा; B1 D3.6 T2.3 हृष्टा; D1 स्रष्टा ; M5 (both times) देवा (for सर्वे). Ś D8.12 ऊचुश्च निहतारिष्टा. ❀ Cv : 'ऊचुश्च सहिता' इत्यादि श्लोकत्रयं केषुचित्कोशेषु द्विर्लिख्यते । तत्र प्रथमलेखनं प्रमादकृतं वेदितव्यम्. ❀ —$^{b}$) M5 (both times) यक्ष- (for देव-). D1 -राक्षसाः (for -दानवाः). —After $48^{ab}$, Ñ V1.3 B2.4 ins. :

1738* शतक्रतुमुखाः सर्वे परं हर्षमुपागताः ।

—V3 om. $48^{c}$–$51^{b}$. —$^{c}$) Ś B1 D1–4.6.8.12.13 T2.3 विज्वराश्च सुरा( B1 ततो ) जाता( D6 T2.3 सर्वे ). —$^{d}$) M1.2 ऋषयो (for ब्राह्मणा). B3 [ इ ]ह (for [ इ ]ति). Ś D8.12 निहते पापराक्षसे ; B1 D4.6 T2.3 हते तस्मिन्निशाचरे; D1–3.13 हतेस्मि( D13 हते तस्मि [ hypm. ] )न्पापराक्षसे. —After 48, D6 T2.3 ins. a passage relegated to App. I (No. 49).

49 V3 om. 49 (cf. v.l. 48). D6 T2.3 om. 49–$52^{b}$. D7 G2 read 48–50, M5 reads 48, 49 and 51 after 37 for the first time, all except D7 repeating them here. —$^{a}$) Ś B1 D1–4.8.12.13 सौमित्रिं (for संहृष्टाः). —D1.2 om. (hapl.) $49^{c}$–$50^{b}$. —$^{c}$) D4 तमश्च निचयं दृष्ट्वा (sic). —$^{d}$) Ñ V1 B2–4 D13 राक्षस- (for नैर्ऋत-).

50 V3 D6 T2.3 om. 50; D1.2 om. $50^{ab}$ (cf. v.l 48 and 49 respy.). M5 om. 50. D7 reads 48–50 after 37. G2 reads 48–50 for the first time after 37, repeating them here. —$^{a}$) Ś V2 B1 D3.4.8.12.13 [ ऽ ]थ हनुमाश् . —$^{b}$) Ś D4.8.12 हरि- ; Ñ V1.2 B2–4 D7.13 G2 (both times) ऋक्ष- (for चर्क्ष-). B2.4 D4.13 -यूथपाः ; D13 G1 -पुंगवः (for -यूथपः). —$^{c}$) Ñ V1 B4 D1.2.8.13 [ अ ]भ्य( Ñ2 °त्य )नंदंत; V2 B1 D4 [ अ ]भ्यनंदंस्तं( D4 °दंस्तु ); B2.3 [ अ ]थ नंदंतस् (for [ अ ]भिनन्दन्तस्). —$^{d}$) V1 B2–4 [ ए ]व (for [ अ ]पि). Ś D1.2.4.8.12.13 प्रशशंसुश्च ; Ñ2 संहृष्टाश्चैव ; V2 B1 D3 प्रशंसंतश्च (for तुष्टुवुश्चापि).

क्ष्वेडन्तश्च नदन्तश्च गर्जन्तश्च प्लवंगमाः ।
लब्धलक्षा रघुसुतं परिवार्योपतस्थिरे ॥ ५१
लाङ्गूलानि प्रविध्यन्तः स्फोटयन्तश्च वानराः ।
लक्ष्मणो जयतीत्येवं वाक्यं व्यश्रावयंस्तदा ॥ ५२
अन्योन्यं च समाश्लिष्य कपयो हृष्टमानसाः ।
चक्रुरुच्चावचगुणा राघवाश्रयजाः कथाः ॥ ५३
तदसुकरमथाभिवीक्ष्य हृष्टाः
प्रियसुहृदो युधि लक्ष्मणस्य कर्म ।
परममुपलभन्मनःप्रहर्षं
विनिहतमिन्द्ररिपुं निशम्य देवाः ॥ ५४

G. 6. 70. 0
B. 6. 90. 94
L. 6. 69. 58

इति श्रीरामायणे युद्धकाण्डे अष्टसप्ततितमः सर्गः ॥ ७८ ॥

---

51 V3 om. $51^{ab}$; D6 T2.3 om. 51 (cf. v.l. 48 and 49 respy.). M5 reads 48, 49 and 51 for the first time after 37, repeating them here. —$^{a}$) Ñ1 क्ष्वेडयंतश्च (hypm.); Ñ2 क्ष्वेडयंतो ; B1 खेलंतश्च ; D5 T1 G M (M5 both times) क्ष्वेलंतश्च (for क्ष्वेडन्तश्च). Ś D8.12 प्रहृष्टाश्च ; V1 [अ]पि नदंतो; V2 B1 D1–4 प्रनृत्ताश्च; D9–11 प्लुवंतश्च (for नदन्तश्च). D13 प्रक्ष्वेलंतः प्रनृत्यंतो. —$^{c}$) Ś D8.12 लक्ष्मणं तं ; V1 B1.3 D1–3 लब्धलक्षं( D2 °क्ष्यं ); D13 लक्ष्मलक्षं (for लब्धलक्षा). D4 राजसुतं ; D7 रघुवरं (for रघुसुतं). ※ Ck.t : लब्धलक्षाः प्राप्तहर्षावसराः। रलयोरभेदात्प्राप्तरक्षणा इत्यपि. ※ —$^{d}$) Ś V3 D1–4.8.12.13 [अ]व- (for [उ]प-). V1 परिसृष्टावतस्थिरे.

52 D6 T2.3 om. $52^{ab}$ (cf. v.l. 49). V3 damaged from न्तः in $52^{a}$ up to ती in $52^{c}$. —$^{a}$) Ñ1 प्रयुध्यंतः ; V2 G1 च विध्यंतः ; B1.2 प्रधुन्वंतः; D3 प्रवृध्यंतः (sic); D4.13 प्रवर्धंतः ; M5 प्रविध्यंति (for प्रविध्यन्तः). —$^{b}$) Ś V1 B1 D8.12 प्लवंगमाः (for च वानराः). —$^{c}$) V1 M1.2 विजयीति ; B1 D4 [ऽ]पि जयति ; D13 जयताम् (for जयतीति). Ś Ñ1 D7–12 G1 M5 [ए]व ; D6 T2.3 [उ]च्चैः (for [ए]वं). —$^{d}$) Ś2 D3.8 वाच्यं ; Ñ1 B4 वाचा ; Ñ2 V1.2 B1 D4.12 वाचं ; V3 वचो ; B2.3 D1 वाचो (for वाक्यं). Ś1 V2 B1.2 D1.5.7.9–11 T1 G2.3 M3.5 Cr.g.t विश्रावयंस् ; Ś2 B3 D8 वाश्रावयंस् (for व्यश्रावयंस्). Ñ V1(m. also as in text).2.3 B1.2.4 D1.4 ततः (for तदा). D2 वाचं व्यश्राव्य तेंततः; D6 T2.3 प्रोचुः सर्वे प्लवंगमाः; D13 वाचमंत ** ततः. ※ Cg.t : विश्रावयन् व्यश्रावयन्. ※

53 $^{a}$) B3 समालिंग्य ; D1 समासाद्य (for समाश्लिष्य). —$^{b}$) D7.9–11 G1 हरयो (for कपयो). —$^{c}$) Ś D8.12 उच्चा बहु-. Ñ2 V1.3 B2–4 -गुणै ; D6 T2.3 -[आ]कारा ; D13 [अ]न्योन्यं (for -गुणा). —$^{d}$) B1 -[अ]नुजगाः; D4 -स्तवजाः; D9–11 -[आ]श्रयसत्- (for -[आ]श्रयजाः). D13 राघवाय जयाः कथाः.

54 G (ed.) om. 54. —$^{a}$) B4 ततः स्वकरम् (sic) (for तदसु°). M5 [अ]पि (for [अ]भि-). Ś D8.12 अथाप्यदृष्टपूर्वं ; V2 D3 अवाप्य( D3 °वेक्ष्य ) संहृष्टाः ; B1 D1.2.13 अवाप्य संप्रहृष्टाः (for अथाभिवीक्ष्य हृष्टाः). D4 तदसुरवधमवाप्य हृष्टाः. —$^{b}$) T3 हृदि (for युधि). Ś D8.12 युधि परमस्य च (for प्रियसुहृदो युधि). —$^{c}$) D4.12 परम् (for परमम्). Ś Ñ V2.3 B D1–4.8.12.13 उप( B3 D1.4 °पा )गता (for उपलभन्). V1 परमिह मुनयो ** प्रहर्षं ; D9 परममुपलभमानः प्रहर्षं. —$^{d}$) D13 रणहतम्. Ñ2 V2 D4 इंद्रजितं (for °रिपुं). D5 T1 निशाम्य (for निशम्य). ※ Cg : उपलभन्नित्यत्र अडात्मनेपदाभावावार्षौ । देवाः इन्द्ररिपुं विनिहतं निशम्य परमं मनःप्रहर्षम्, उपलभन् उपालभन्त:।; so also Ct. ※ —After 54, D2 ins. श्रीरामः.

Colophon : —*Kāṇḍa name* : Ñ V1 B D3.4.12 लंकाकांडे. —After *Kāṇḍa name*, D3.13 ins. युद्धपर्वणि. —*Sarga name* : Ś Ñ V B D1–4.8.12.13 G2.3 M1.2 इंद्रजिद्वधः. —*Sarga no.* (figures, words or both): Ś1 Ñ1 V3 B2 D2.4.8.12.13 om. ; Ś2 69 ; Ñ2 D1 72 ; V1.2 70 ; B1.3.4 66 ; D3 74 ; D5–7.10 T1 G M3.5 91 ; D9 67; D11 90 ; T2 94 ; T3 98 ; M1.2 92. —After colophon, D2 concludes with कृष्ण; G M1.2 with श्रीरामाय नमः ; M5 with श्रीरामचन्द्राय नमः .

## ७९

G. 6. 71. 1
B. 6. 91. 1
L. 6. 70. 1

रुधिरक्लिन्नगात्रस्तु लक्ष्मणः शुभलक्षणः ।
बभूव हृष्टस्तं हत्वा शक्रजेतारमाहवे ॥ १
ततः स जाम्बवन्तं च हनूमन्तं च वीर्यवान् ।
संनिवर्त्य महातेजास्तांश्च सर्वान्वनौकसः ॥ २
आजगाम ततः शीघ्रं यत्र सुग्रीवराघवौ ।
विभीषणमवष्टभ्य हनूमन्तं च लक्ष्मणः ॥ ३
ततो राममभिक्रम्य सौमित्रिरभिवाद्य च ।
तस्थौ भ्रातृसमीपस्थः शक्रस्येन्द्रानुजो यथा ।
आचचक्षे तदा वीरो घोरमिन्द्रजितो वधम् ॥ ४

## 79

1 $^{a}$) Ś $D_{5.12}$ -क्षत- ; $D_4$ -[आ]क्लिन्न- (for -क्लिन्न-). $D_6$ $T_{2.3}$ रुधिराप्लुतदेहस्तु. —$^{b}$) $D_4$ शुभलक्ष्मणः ; $D_6$ $T_{2.3}$ हृष्टमानसः (for शुभलक्षणः). Ñ $V_{1.3}$ $B_{2-4}$ राघवस्यानुजो बली. —$B_1$ om. $1^{cd}$. —$^{c}$) Ś $D_{1-4.6.8.12.13}$ $T_{2.3}$ राक्षसं (for हृष्टस्तं). $D_{11}$ भूत्वा (sic) (for हत्वा). —$^{d}$) $Ś_1$ $Ñ_2$ V $B_{2-4}$ $D_{1.10.11}$ शत्रु- (for शक्र-). —After 1, Ś $V_2$ $D_{1-4.6.8.12.13}$ $T_{2.3}$ ins.; while Ñ $V_{1.3}$ $B_{2-4}$ ins. before 1; whereas G (ed.) ins. only l. 2 after $1^{ab}$:

1739* महानुभावः कवची लक्ष्मणः शुभलक्षणः ।
बभूव विक्षततनुः समरे तेन रक्षसा ।

[ (l. 1) $D_6$ $T_{2.3}$ तुष्टात्मा (for कवची). Ś $D_{5.12}$ शुभलक्षणसंयुतः ; $V_2$ $D_{1-4.12}$ राजलक्षणसंमतः ($D_{1.4}$ °मितः; $D_{12}$ °स्थितः) ; $D_6$ $T_{2.3}$ वीरलक्ष्म्या समावृतः ($D_6$ °श्रितः ; $T_3$ °गतः) (for the post. half). —(l. 2) $D_6$ $T_{2.3}$ शरसंवृतसर्वांगः शोभते लक्ष्मणो रणे. ]

—Then $T_{2.3}$ cont. :

1740* धातुधारावृतः श्रीमान्हिमवानिव पर्वतः ।
तत्र स्थाप्य जयस्तम्भं नाम विश्राव्य चात्मनः ।

[ (l. 1) $T_2$ हेमवान्. ]

2 $^{ab}$) Ñ $V_{1.3}$ $B_{2-4}$ लक्ष्मणो; $B_1$ बभूव (sic) (for ततः स). $G_3$ तु (for the first च). Ś $V_2$ $B_1$ $D_{1.2.4.8.12.13}$ रभसं ($V_2$ $D_{1.2.13}$ शरभं; $B_1$ राक्षसं) वीरं जांबवंतं (for जाम्बवन्तं च हनूमन्तं). $D_2$ स वीर्यवान्. —$V_3$ om. (hapl.) $2^{c}$ – 3. $Ñ_2$ repeats erroneously $2^{c}$ after 3. —$^{c}$) Ś $D_8$ स निवर्त्य ; $Ñ_{1.2}$ (both times) $V_1$ $B_{2.4}$ पूजयित्वा ; $V_2$ $D_{12}$ स निवर्त्य ; $B_3$ (marg. also) पूरयित्वा; $D_{7.9-11}$ $M_{1.2.5}$ Ck.t संनिपत्य; $M_3$ Cg संनिहत्य (for संनिवर्त्य). Ś $V_2$ $B_1$ $D_{1-4.8.12.13}$ महावेगांस् (for °तेजास्). —$^{d}$) Ñ $V_1$ $B_{2-4}$ सह सर्वैः प्लवंगमैः. —For 2, $T_{2.3}$ subst. :

1741* जाम्बवन्तं हनूमन्तमङ्गदं च विभीषणम् ।
सर्वांश्च वानरश्रेष्ठान्संनिवर्त्य रघूत्तमः ।

—Then $T_{2.3}$ (only l. 1) cont. :

1742* संवृतो वानरेन्द्रैश्च सर्वशोभासमन्वितः ।
पूर्ववत्सागरं तीर्त्वा रामदर्शनलालसः ।

3 $V_3$ om. 3 (cf. v.l. 2). —$^{a}$) Ś $V_2$ $B_1$ $D_{1-4.8.12.13}$ प्रहृष्टात्मा; $M_3$ ततस्तीव्रं (for ततः शीघ्रं). —$^{c}$) $T_{2.3}$ समालंब्य; Cm.g.k.t as in text (for अवष्टभ्य). —$^{d}$) Ś $B_1$ $D_{1-4.8.12.13}$ वानरं; Ñ $V_{1.2}$ $B_{2-4}$ $T_{2.3}$ वीर्यवान् (for लक्ष्मणः). —After 3, $Ñ_2$ repeats $2^{c}$.

4 $^{a}$) $B_1$ $G_1$ अतिक्रम्य; $D_{13}$ प्रणम्याशु; Ct as in text (for अभिक्रम्य). Ñ V $B_{2-4}$ ततः स राममभ्येत्य ($B_{2.3}$ °मागत्य; G [ed.] °मासाद्य) ; $D_4$ ततो रामेति संक्रम्य. —$^{b}$) $D_{13}$ सुग्रीवम् (for सौमित्रिर्). —$^{c}$) Ś Ñ V B $D_{1-4.8.12.13}$ तस्थावदूरतो भ्रातुः. —$^{d}$) Ś Ñ V B $D_{1-9.12.13}$ $T_1$ G M Cr.m.g इंद्र (Ś $V_2$ $B_1$ $D_{1-4.8.12.13}$ सोम) स्येव ($D_3$ °स्य च) बृहस्पतिः. ❀ Cr.m.g: इन्द्रस्येव बृहस्पतिः । प्रधानोपसर्जनभावेनावस्थानमात्रे (Cr °त्रोऽयं) दृष्टान्तः इत्यर्थः. ❀ —After $4^{cd}$, Ñ V $B_{2-4}$ ins. :

1743* पप्रच्छ भ्रातरं रामः किं वृत्तमिति लक्ष्मणम् ।

[ $V_3$ राघव (for लक्ष्मणम्). ]

—Then they cont. ; while $D_{5-7.9-11.13}$ $T_1$ G M ins. after $4^{cd}$ :

1744* निष्टनन्निव चागम्य राघवाय महात्मने ।

[ Ñ V $B_{2.4}$ अनिष्टम् ; $B_3$ (marg. also as in Ñ) सुनिष्टम्; $D_{6.7.9}$ निः ($D_6$ नि) श्वसन् (for निष्टनन्). $V_{1.3}$ $D_{7.9-11}$ Ct [आ]गत्य (for [आ]गम्य). $D_{13}$ स समीपमुपागम्य (for the prior half). $D_{13}$ रावणाय (sic) (for राघवाय). ❀ Cm: निष्टनन्निवेत्यत्र इवशब्दो वाक्यालङ्कारे ।; so also Cg which adds आयासस्याभिनयनमात्रेणालीकत्वद्योतनाय वा. ❀ ]

—$^{e}$) $Ñ_1$ V $B_{2-4}$ नाचचक्षे (for आचचक्षे). $Ñ_2$ $G_1$ $M_5$ महावीरो (for तदा वीरो). —$^{f}$) Ñ V $B_{2-4}$ स्वयम् (for घोरम्). —For 4, $T_{2.3}$ subst. ; while Ś $B_1$ $D_{1-4.8.12.13}$ subst. only l. 4 for $4^{ef}$; whereas $V_2$ ins. only l. 4 after 4 :

1745* स्नेहेन विनयेनाशु ववन्दे भ्रातरं गुरुम् ।
त्वत्प्रसादाद्रघुश्रेष्ठ हत्वा रावणिमागतः ।
स्वस्थो भव रघुश्रेष्ठ हतो रावणिराहवे ।
अथाचचक्षे धर्मात्मा राघवाय विभीषणः ।

[ (l. 4) Ś $D_{4.8.12}$ $T_2$ आचचक्षे स ($D_4$ च; $T_2$ °क्षेथ); $V_2$ तथाचचक्षे (for अथाचचक्षे). $D_2$ महात्मने (for विभीषणः). ]

रावणेस्तु शिरश्छिन्नं लक्ष्मणेन महात्मना ।
न्यवेदयत रामाय तदा हृष्टो विभीषणः ॥ ५

उपवेश्य तमुत्सङ्गे परिष्वज्यावपीडितम् ।
मूर्ध्नि चैनमुपाघ्राय भूयः संस्पृश्य च त्वरन् ।
उवाच लक्ष्मणं वाक्यमाश्वास्य पुरुषर्षभः ॥ ६

G. 6. 71. 13
B. 6. 91. 12
L. 6. 70. 11

5 [a]) G2 वधश् (sic) (for शिरश्). Ś V2 B1 D1–4.8.12.13 छिन्नमिंद्रजितः शीर्षं; T2.3 निहतो रावणिर्देव. —[cd]) Ś D1.8.12 निवेद्य तच्च; V2 B1 D2–4.13 निवेदयित्वा (for न्यवेदयत). Ñ V1.3 B2–4 इत्येवं कथयामास (for °). Ś V2 B1 D1–4.8.12.13 तस्थौ (for तदा). T2.3 इत्युक्त्वा प्रणतो भूत्वा तस्थौ संतुष्टमानसः. —After 5, Ś V2 B1 D1–4.8.12.13 T2.3 ins.:

1746* विभीषणवचः श्रुत्वा हर्षव्याकुललोचनः।
विभीषणं पुरस्कृत्य हनूमन्तं च राघवः।
जाम्बवन्तं च सुग्रीवं संभाव्य च वनौकसः।
शूरमिक्ष्वाकुशार्दूलं समाश्वासयतानुजम्।
राम इन्द्रसमो भ्राता लक्ष्मणं शुभलक्षणम्। [5]

[D4 om. l. 1. —(l. 1) T2.3 दृष्ट्वा लक्ष्मणमागतं (for the post. half). —(l. 2) D13 स (for च). Ś D8.12 वानरम्; D2 राघवं (sic) (for राघवः). B1 पुरस्कृत्य हनूमंतं विभीषणं च राघवः (unmetric); T2.3 प्रतिनंद्य शुभैर्वाक्यैः स्नेहेनालोक्य वानरान्. —(l. 3) Ś D8.12 संपूज्य; V2 B1 D1.3.4 संभाष्य (for संभाव्य). T2.3 रामो लक्ष्मणमाकृष्य समालिंग्याभिहर्षितः. —(l. 4) Ś V2 D8.12 शीघ्र (V2 शूर) मिक्ष्वाकुशार्दूलः (for the prior half). B1 [अ]ग्रजः (for [अ]नुजम्). D13 समाश्वाय ततोनुजं (for the post. half). —(l. 5) L (ed.) रविंद्र- (for इन्द्र-). D3 भूत्वा (for भ्राता). T2.3 रामः कमलपत्राक्षो (for the prior half).];

while Ñ V1.3 B2–4 D5–7.9–11 T1 G M ins.:

1747* श्रुत्वैव तु महावीर्यो लक्ष्मणेनेन्द्रजिद्वधम्।
प्रहर्षमतुलं लेभे रामो वाक्यमुवाच ह।
साधु लक्ष्मण तुष्टोऽस्मि कर्म चासुकरं कृतम्।
रावणेर्हि विनाशेन जितमित्युपधारय।
स तं शिरस्युपाघ्राय लक्ष्मणं लक्ष्मिवर्धनम्। [5]
लज्जमानं बलात्स्नेहादङ्कमारोप्य वीर्यवान्।

[(l. 1) Ñ1 V1 B3.4 [ए]वैतन्; Ñ2 चैतन्; V3 B2 [ए]व तन्; D5 T1 M3 [ए]तत्तु; G1 [ए]व तं; G3 M5 [ए]तं तु (for [ए]व तु). M1.2.5 महावीरो; Cg as above (for °वीर्यो). Ñ V1.3 B2–4 वीरेणेंद्रजितं हतं (for the post. half). —(l. 2) Ñ V1.3 B2–4 वाक्यमेतद्; D6 वाक्यं चैतद्; D9–11 G1 वाक्यं चेदम् (for रामो वाक्यम्). —(l. 3) Ñ V1.3 B2 ते सुकृतं; B4 ते दुष्करं; D5.6 M5 चासुकृतं (for चासुकरं). B3 कर्म ते चातिदुष्करं; M3 कर्मणा सुकृतं कृतं (for the post. half). —(l. 4) Ñ V1.3 B2–4 रावणोस्य (for रावणेर्हि). G (ed.) हत (for जितम्). Ñ V1.3 B2–4 जित इत्ये (V3 °त्य)व; M1.2 जितमित्यव-; Ck.t as above (for जितमित्युप-). V3 D9 -धारयन्. —After l. 4, Ñ V1 B2–4 ins. only l. 1–2 of 1748*. —(l. 5) Ñ2 चाघ्राय (for [उ]पाघ्राय). Ñ2 शुभलक्षणं; V3 B2–4 लक्ष्मीवर्धनं; D6.7.9–11 कीर्तिवर्धनं. —(l. 6) Ñ V1.3 B2–4 अंकमध्ये न्यवेशयत् (for the post. half). ❀ Cm: स तमित्यादिश्लोकद्वयमेकं वाक्यम्। क्रियाबाहुल्यात्तमिति द्विरुक्तिः।; so also Cg.t. ❀]

6 [a]) M1.2 समुत्संगे. T2.3 उत्संगे स्थापयित्वैनं. —[b]) Ś B1.3 D1–4.8.9.12.13 G1 च पीडितं; Ñ V B2.4 च राघवः; T2.3 च लक्ष्मणं; G2 निपीड्य तं; M1.2 [अ]वपीडनं; Cm.g.k.t as in text (for [अ]वपीडितम्). —After 6[ab], Ś B1 D1–4.8.12.13 T2.3 ins.; while Ñ V1 B2–4 ins. only l. 1–2 after l. 4 of 1747*; whereas V2 ins. after l. 2 of 1749*:

1748* पीडितं सायकैर्दृष्ट्वा दुःखितो राघवस्तदा।
दुःखहर्षयुतो रामः संमूर्छित इवाबभौ।
उपलभ्य ततः संज्ञां लक्ष्मणं समुदैक्षत।

[(l. 1) Ñ1 पातितं; B2.3 घातितं; B4 स्पंदितं; D3 विक्षतं (for पीडितं). Ñ V1 B2–4 चापि (B3 चैव) दृष्ट्वाथ (Ñ1 B2.3 तं दृष्ट्वा) (for सायकैर्दृष्ट्वा). D13 पीडितो (for दुःखितो). D3 transp. दुःखितो and राघवस्. Ś D8.12 [ऽ]ब्रवीत्; V2 B1 D3 [ऽ]भवत् (for तदा). —For l. 1, T2.3 subst.:

1748(A)* शरावृतं शरीरं तु स्पृष्ट्वा भ्रातुर्महात्मनः।
बभूव व्यथितो रामः संतुष्टोऽपि रिपौ हते।

—(l. 2) Ñ2 V1 -जितस्; D13 -गतो (for -युतो). Ñ V1 B2–4 तत्र (for रामः). Ś D8.12 स (for सं-). Ñ V1 B2–4 T2.3 [अ]भवद् (for [आ]बभौ).]

—After 6[ab], Ñ V B2–4 D5–7.9–11 T1 G M ins.:

1749* भ्रातरं लक्ष्मणं स्निग्धं पुनः पुनरुदैक्षत।
शल्यसंपीडितं शस्तं निश्वसन्तं तु लक्ष्मणम्।
रामस्तु दुःखसंतप्तस्तं तु निश्वसितस्तदा।

[(l. 1) G2 स रामो (for भ्रातरं). V3 damaged for रुदैक्षत. —After l. 1, V3 ins.:

1749(A)* ******** **** न तादृशम्। (damaged)

—V3 om. l. 2–3. —(l. 2) D5 om. शस्तं. Ñ V1.2 B2–4 -संपीडितांगं तु; D11 -संपीडितस्तस्य (for -संपीडितं शस्तं). B3 श्वसंतं तं; D6.7 M2.5 निःश्वसंतं (for निश्वसन्तं). Ñ V2 च (for तु). V2 दुःखितं (for लक्ष्मणम्). B2 निश्वसंस्तत्र लक्ष्मणं; B4 न्यश्वसनत्तत्र लक्ष्मणं (for the post. half). —(l. 3) Ñ V1 B2–4 दुःखमापन्नस्; D7.9–11 °संतप्तं (for °संतप्तस्). D6 निःश्वसितं; M1.2 चाश्वासयंस्. Ñ V1 B2.4 तेन निश्वस (Ñ1 B4 °स्वन)ता भृशं (Ñ2 B4 तदा); B3 निस्वनंतमथानुजं; D7.9–11 तदा निश्वासपीडितं; G2 M3.5 तदा निश्वसितो भृशं (M5 °तोभवद्) (for

G. 6. 71. 13
B. 6. 91. 13
L. 6. 70. 12

कृतं परमकल्याणं कर्म दुष्करकारिणा ।
निरमित्रः कृतोऽस्म्यद्य निर्यास्यति हि रावणः ।
बलव्यूहेन महता श्रुत्वा पुत्रं निपातितम् ॥ ७

तं पुत्रवधसंतप्तं निर्यान्तं राक्षसाधिपम् ।
बलेनावृत्य महता निहनिष्यामि दुर्जयम् ॥ ८
त्वया लक्ष्मण नाथेन सीता च पृथिवी च मे ।
न दुष्प्रापा हते त्वद्य शक्रजेतरि चाहवे ॥ ९

the post. half). ❀ Cv: रामस्तु दुःखसंपन्नस्तं तु निश्वसितस्तदेति पाठः ।; Cr: तं तु निश्वसितस्तदेति पाठः. ❀ ]

—$^c$) $T_3$ चैवम् (for चैनम्). —$^d$) $B_2$ नृप: (for भूयः). Ñ $V_{1.3}$ [आ]तुरं; $B_{2.3}$ [अं]तरं; $M_{1.2}$ त्वरात्; Cm.g.t as in text (for त्वरन्). Ś $B_1$ $D_{1-4.8.12.13}$ रामः($D_4$ स रामः [hypm.]) शूरमु($B_1$ पुनरु)वाच तं(Ś $D_{4.8.12}$ ह); $B_4$ भूयः स्पृश्य च चार्णवं; $T_{2.3}$ रामो लक्ष्मणमब्रवीत्. —$^e$) G (ed.) वाचं (for वाक्यम्). Ś $B_1$ $D_{2-4.8.12.13}$ भ्रातरं परमेश्वासम्($D_{13}$ °सः); $D_1$ भ्रातरं पुरुषव्याघ्रम्; $T_{2.3}$ भ्रातरं धन्विनां श्रेष्ठम्. —$^f$) Ñ V $B_{2-4}$ राघवः; $D_9$ आश्वसन् (for आश्वास्य). Ñ $V_2$ $B_4$ $D_{3.4.7}$ $T_{2.3}$ $G_{1.2}$ पुरुषर्षभं. $D_{13}$ समाश्वास्य रघूत्तमः.

7 $^a$) Ś $B_1$ $D_{1-4.8.12}$ सुकृत-; $D_{13}$ दुष्कृत- (for परम-). —$^b$) $D_{5-7.9-11}$ $T_1$ G M Cm.g.t -कर्मणा (for -कारिणा). Ś $D_{8.12}$ कर्म दुःख($D_{12}$ °खं)कृतं त्वया; $V_2$ $B_1$ $D_{1-4.13}$ कर्मेदं दुष्करं($D_{13}$ °ष्कृतं) त्वया. —For $7^{ab}$, $T_{2.3}$ subst.:

1750* कृतमिष्टं तु कर्माद्य दुष्करं च कृतं त्वया ।

—Then $T_{2.3}$ cont.:

1751* रावणिस्तु दुराधर्षः सदातीवबलो रिपुः ।
देवानां चापि सर्वेषां संतोषः समजायत ।
तस्मिन्हते महावीर्ये हत एव हि रावणः ।
विभूतिर्बलमैश्वर्यं हतमद्य दुरात्मनः ।
हतं पुत्रं निशम्याशु सर्वशस्त्रास्त्रवेदिनम् । [5]
राक्षसानां च सर्वेषां वल्लभं प्रियमात्मनः ।
अद्यैव चापि शोकार्तस्त्यक्त्वा सर्वान्मनोरथान् ।

[ (l. 4) $T_3$ (after corr.) अस्य (for अद्य). —(l. 7) $T_3$ [अ]ति- (for [अ]पि). ]

—Then $T_3$ further cont.:

1752* सर्वशस्त्रवृतोऽद्यैव योद्धुमायाति मां प्रति ।
असह्यपुत्रनाशेन हतमानबलोन्नतिः ।
हन्यतेऽद्य मया संख्ये चतुरङ्गबलैः सह ।
पश्यन्तु सर्वभूतानि हतं राक्षसपुंगवम् ।
एवमुक्त्वा रघुश्रेष्ठो रामो राजीवलोचनः । [5]
शरभिन्नशरीरं तु परस्पर्शालिङ्ग्य पाणिना ।
प्रमुमोद रघुश्रेष्ठो लक्ष्मणोऽपि गतज्वरः ।

—After $7^{ab}$, Ś $V_2$ $D_{1-4.8.12.13}$ ins.:

1753* दुरवापं प्रसह्याद्य वधेनेन्द्रजितो रणे ।

[ $D_4$ दुरवाप्यं; $D_{13}$ दुरावापं. Ś $D_{8.12}$ प्रकृत्याद्य; $V_2$ प्रसह्यात्र; $D_{13}$ प्रसह्याथ (for प्रसह्याद्य). $D_2$ वधम् (for वधेन). ]

—Thereafter $V_2$ cont., while Ñ $V_{1.3}$ $B_{2-4}$ $D_{5-7.9-11}$ $T_1$ G M ins. after $7^{ab}$:

1754* अद्य मन्ये हते पुत्रे रावणं निहतं युधि ।
अद्याहं विजयी शत्रौ हते तस्मिन्दुरात्मनि ।
रावणस्य नृशंसस्य दिष्ट्या वीर त्वया रणे ।
छिन्नो हि दक्षिणो बाहुः स हि तस्य व्यपाश्रयः ।
विभीषणहनूमद्भ्यां कृतं कर्म महद्रणे । [5]
अहोरात्रैस्त्रिभिर्वीरः कथंचिद्विनिपातितः ।

[ $V_3$ damaged from l. 1 up to अद्या in l. 2. —(l. 1) Ñ $V_{1.2}$ $B_{2-4}$ हतं पापं (for हते पुत्रे). $G_2$ हि हतं (for निहतं). $M_{1.2}$ transp. रावणं and निहतं. Ñ $V_{1.3}$ $B_{2-4}$ रावणं राक्षसाधिपं (for the post. half). —(l. 3) $Ñ_1$ कृत्वा (for दिष्ट्या). —(l. 4) $D_5$ $T_1$ $G_3$ भिन्नो (for छिन्नो). Ñ $V_1$ $B_{2-4}$ [ऽ]स्य; $V_{1.3}$ वै (for हि). —$V_3$ damaged for l. 5-6. —(l. 5) $Ñ_2$ $B_4$ $M_{1.2}$ सुदुष्करं (for महद्रणे). —(l. 6) $G_1$ $M_5$ वीर (for वीरः). ]

—$^c$) Ñ $V_{1.3}$ $B_3$ हतमित्रः (for निरमित्रः). $Ñ_1$ $B_3$ ह्यद्य; $Ñ_2$ $V_{1.3}$ ह्यस्य; $D_4$ [ऽ]द्याहं; $D_8$ [ऽ]*द्य (for ऽस्म्यद्य). $V_3$ $B_2$ हतमिंद्र($V_3$ damaged)जितं श्रुत्वा; $B_4$ हतमित्रस्ततो ह्यद्य; $D_{13}$ निमित्तोहं कृतस्त्वद्य. —$^d$) $Ñ_1$ शैर्यास्यति रावणः; $Ñ_2$ V $B_{2-4}$ स निर्यास्यति रावणः. —After $7^{cd}$, $D_{10.11}$ ins.:

1755* बलव्यूहेन महता निर्यास्यति हि रावणः ।

—$^f$) Ñ $V_{1.3}$ $B_{2-4}$ transp. श्रुत्वा and पुत्रं. $D_4$ श्रुत्वा पुत्रनिपातनं.

8 $^b$) $D_{2.3.5.9.13}$ $T_3$ निर्यातं (for निर्यान्तं). Ś $V_2$ $B_1$ $D_{1-4.8.12.13}$ राक्षसेश्वरं. —$V_3$ om. $8^c$–9. —$^c$) Ś $V_2$ $B_1$ $D_{1-4.8.12.13}$ [अ]हं($D_4$ हि) समासाद्य; Ñ $V_1$ $B_{2-4}$ महतावृत्य(by transp.) (for [आ]वृत्य महता). —$^d$) Ś $V_2$ $B_1$ $D_{1-4.8.12.13}$ ह($D_1$ निह[hypm.])निष्यामि रिपुं रणे; Ñ $V_1$ $B_{2-4}$ हनिष्ये रावणं रणे.

9 $V_3$ om. 9 (cf. v.l. 8). —$^a$) $M_{1.2}$ त्वया नाथेन सीता च. ❀ Cg: नाथेन याचमानेन ।; Ct: नाथेन । उपलालनार्थं नाथशब्दप्रयोगः. ❀ —$^b$) $M_{1.2}$ संप्राप्ता (for सीता च). $B_4$ [इ]व (for second च). —$^c$) Ś $B_4$ $D_{1-3.8.13}$ $G_{1.2}$ न दुष्प्रापे($B_4$ $G_1$ °पं); $D_4$ सुदुष्प्रापे; $D_{13}$ न दुष्प्राप्यं; $M_{1.2}$ दुष्प्रापे च (for न दुष्प्रापा). Ś $B_1$ $D_{8.12}$ हतो(Ś °ते) यत्र; Ñ $V_1$ $B_{2-4}$ हतो यस्माच्; $V_2$ $D_{1-4.13}$ हतो($D_2$ °ते) ह्यद्य; $D_{7.9-11}$ हते तस्मिन् (for हते त्वद्य). —$^d$) Ś Ñ $V_{1.2}$ B $D_{1-4.8.12.13}$ शक्र(Ś $D_{8.12}$

स तं भ्रातरमाश्वास्य परिष्वज्य च राघवः ।
रामः सुषेणं मुदितः समाभाष्येदमब्रवीत् ॥ १०
सशल्योऽयं महाप्राज्ञः सौमित्रिर्मित्रवत्सलः ।
यथा भवति सुस्वस्थस्तथा त्वं समुपाचर ।
विशल्यः क्रियतां क्षिप्रं सौमित्रिः सविभीषणः ॥ ११
ऋक्षवानरसैन्यानां शूराणां द्रुमयोधिनाम् ।
ये चान्येऽत्र च युध्यन्तः सशल्या व्रणिनस्तथा ।
तेऽपि सर्वे प्रयत्नेन क्रियन्तां सुखिनस्त्वया ॥ १२
एवमुक्तः स रामेण महात्मा हरियूथपः ।
लक्ष्मणाय ददौ नस्तः सुषेणः परमौषधम् ॥ १३
स तस्य गन्धमाघ्राय विशल्यः समपद्यत ।
तदा निर्वेदनश्चैव संरूढव्रण एव च ॥ १४

G. 6. 71. 25
B. 6. 91. 25
L. 6. 70. 19

[with hiatus] इंद्र)जित्सुमहाबलः (B2 °धनः); G2 शक्रजेत्वरिताह्वे (sic).

10 V3 damaged for 10^ab. —^a) Ś D8.12 स तु; D6 सर्वे (for स तं). —^b) Ś D8.12 पुनः पुनः; Ñ V1 B2–4 च पीडितं; V2 B1 D1–4.13 च वीर्यवान्; G2 च राघवं (for च राघवः). —^c) V3 D1–4.13 सुखेनं. Ñ V B2–4 पार्श्वस्थं; D6.13 मुदितं; G2 उद्दिश्य (for मुदितः). —^d) Ś V2 B1 D1–4.8.12.13 समवेक्ष्य; Ñ1 समाश्वस्य; T1 G2 समाहूय; Cr.m.g.k.t as in text (for समाभाष्य). Ñ2 B3.4 संभाष्येदमथाब्रवीत्.

11 B4 om. 11. —^a) Ś D8.12 शल्यविद्धो; D10.11 T2.3 G1 विशल्योयं. Ś D2.3.6.8.11.12 G2.3 M3 महाप्राज्ञ (for °प्राज्ञः). —^b) Ś Ñ V B1–3 D1–4.8.12.13 -नंदनः (for -वत्सलः). —D9 om. (hapl.) 11^c–f. —^c) Ś V3 B1 D1–4.8.12.13 निःशल्यस्; Ñ1 वै स्वस्थस्; V3 विस्वस्थस्; B2.3 वै सुस्थस्; D10.11 सुस्वस्थं (for सुस्वस्थस्). Ñ2 G1 यथा वै (G1 स यथा) भवति स्वस्थस्. —^d) D6 reads तथा in marg. M5 [त्व]द्य (for त्वं). Ś Ñ V B1–3 D1–4.8.12.13 कर्तुमर्हसि; D7.10.11 G1.2 M5 समुदाचर; Cg as in text (for समुपाचर). —After 11^cd, D13 ins.:

1756* एवमुक्तः सुषेणस्तु प्रयातोऽरातिनापि तम्।
प्रत्युवाच ततो रामं ससंभ्रान्तमिदं वचः।
अस्त्यौषधं महावीर शल्योद्धरणमुत्तमम्।
युद्धेऽस्मिन्ननभूयिष्ठे तत्प्रयोक्ष्यामि लक्ष्मणे।

—Ś B1 D1–4.8.12.13 om. 11^ef. —^e) M1.2 शीघ्रं (for क्षिप्रं). —^f) D10.11 मित्रवत्सलः (for सविभीषणः).

12 Ś V2 (repeats) B1 D1–4.8.12.13 read 12^ab (all except D13 followed by 1757*) after 1765*. —^a) V3 illeg. for ऋक्षवानर-. Ś V2 (second time) B1 D1–4.8.12.13 -योधानां (for -सैन्यानां). —^b) Ś V2 (second time) B1 D1–4.8.12 पर्वत-; T2.3 वीराणां (for शूराणां). D13 समरे घातयोधिनां. —After 12^ab, Ś B1 D1–4.8.12 ins.; while V2 ins. after the second occurrence of 12^ab:

1757* समरे प्रतियोधानां हरीणां च महाबलः।
[B1 D1–3 -युद्धानां (for -योधानां).]

—Ś B1 D1–4.8.12.13 om. 12^c–f. —^c) D6.9 T1 G1.2 [त्व]न्येप्यत्र; D7 M1.2 [त्व]प्यन्ये च; D9–11 G2 M3 [त्व]प्यन्य (D10 G2 M3 °न्ये)त्र; T2.3 [त्व]न्ये तत्र (for [त्व]न्येऽत्र च). D6.7.9–11 T2.3 G1.2 M युध्यंति (for युध्यन्तः). ❀ Ck: ये च वानराः सशल्या युध्यन्ति ते चापि वानराः विशल्याः कार्याः. ❀ —^d) T2.3 G1.2 विशल्याः. D6.9 T2.3 G1.2 M1.2.5 प्राणिनस् (for व्रणिनस्). D6 G1.2 तदा. —For 12^cd, Ñ V B2–4 subst.:

1758* ये चान्ये व्रणितास्तत्र संग्रामे वानरर्षभाः।

—^e) M1.2 च (for ऽपि). —^f) Ñ2 V1.2 B2 D5.6.9–11 T G M3 क्रियतां (for क्रियन्तां). Ñ1 V1 B3.4 D6 तदा; V2.3 B2 D7.9–11 T2.3 G M1.2.5 तथा (for त्वया).

13 ^a) Ñ V B2–4 D5 T2.3 M तु (for स). —^b) Ñ V B2–4 सुषेणो (V2.3 °खेनो) वानराधिपः. —For 13^ab, Ś B1 D1–4.8.12.13 subst.; while Ñ V B2–4 ins. after 13^ab:

1759* विशल्यकरणीं नाम वने हैमवतीं शुभाम्।
[Ś D4.8.12 विशल्यकरणी. Ñ V1.2 B2.4 D3 ततो; V3 B3 तदा; B1 शैले (for वने). Ś B1 D1.4.8.12 हैमवते शुभे (D4 °भा) (for °वतीं शुभाम्). B3 (marg. also) औषधीं परमां शुभां (for the post. half).]

—Then D1 cont.:

1760* स रामवचनात्तत्र गत्वा चाशु समानय।

—After 13^ab, T2.3 ins.:

1761* सुषेणश्च ततो गत्वा तामादायागतः पुनः।

—^c) Ś D8.12 नस्ये; Ñ V B D4.8.13 T1 G3 नस्यं; D3 नास्ये; D5 तस्य; D6 तस्मै; Cr.m.g.k.t as in text (for नस्तः). ❀ Cr: नस्तः नासिकायाम्. ❀ —^d) D1.2.4.12 सुखेनः. Ś1 Ñ V B D1.2.12 -[मौ]षधीं; Ś2 D2.8.13 -[मौ]षधीः; D4.8 T1 G3 M3 -[मौ]षधिं. —For 13^cd, T2.3 subst.:

1762* दर्शयामास तां राज्ञे लक्ष्मणाय महात्मने।

—Then T2.3 cont.:

1763* विभीषणस्य सर्वेषां वानराणां महात्मनाम्।
विशल्यकरणीं वीरः सुषेणो हरिसत्तमः।

—After 13, B3 ins. (in marg.) 1765*.

14 ^a) Ś Ñ1 B1 D1–4.8.12.13 T2.3 M3 तस्या (for तस्य). Ś D8.12 गंधमादाय; B3 °मात्रेण (for °माघ्राय).

G. 6. 71. 25
B. 6. 91. 26
L. 6. 70. 20

विभीषणमुखानां च सुहृदां राघवाज्ञया ।
सर्ववानरमुख्यानां चिकित्सां स तदाकरोत् ॥ १५
ततः प्रकृतिमापन्नो हृतशल्यो गतव्यथः ।
सौमित्रिर्मुदितस्तत्र क्षणेन विगतज्वरः ॥ १६

तथैव रामः प्लवगाधिपस्तदा
विभीषणश्चर्क्षपतिश्च जाम्बवान् ।
अवेक्ष्य सौमित्रिमरोगमुत्थितं
मुदा ससैन्याः सुचिरं जहर्षिरे ॥ १७

G1 तस्य गंधमवघ्राय. —D9 om. 14$^{c}$ – 15. V3 om. 14$^{cd}$. —$^{cd}$) Ś D13 तया; V2 B1 D1–4.8.13 M3.5 तथा; G2 ततो (for तदा). D2 निर्भेदनश्च; D5 निर्वेदनं (for निर्वेदनश्च). B4 D10.11 संरुद्धप्रा (B4 °व्र)णः; M5 सुरूढ° (for संरूढव्रण). T2.3 वेदना च हता सर्वा बभूव ललितं वपुः. —After 14, T2.3 ins.:

1764* हतक्लेशास्ततः सर्वे वानराश्चारुविग्रहाः।
बभूवुर्मुदिताः सौम्याः परिवार्य रघूत्तमौ।
ततस्तु स महातेजाः सुग्रीवो वानरेश्वरः।
आज्ञापयामास तदा वानरान्भीमविक्रमान्।
रामलक्ष्मणयोः प्रीत्या सर्वशोभासमन्वितः। [ 5 ]
बले रूपे च बुद्ध्या च यूयमिन्द्रसमप्रभाः।
शशिसूर्यसमं रूपं धारयध्वं प्लवंगमाः।
ते श्रुत्वा वचनं तस्य सुग्रीवस्य महात्मनः।
शशिरूपसमं रूपं दधुर्वानरपुंगवाः।
सर्वाभरणसंयुक्ताः सर्वशोभासमन्विताः। [ 10 ]
नृत्तवादित्रगीतैश्च राघवौ तुष्टमानसौ।
चक्रुः सिंहनिनादं च नानारूपा यशस्विनः।
तुष्टुवुर्मुदिताः सर्वे प्रियवाक्यैः सुशोभनैः।

[ (l. 3) T2 सु- (for स). —(l. 7) T3 -सूर्यमयं (for -सूर्यसमं). ]

15 D9 om. 15 (cf. v.l. 14). T2.3 om. 15–16$^{b}$. V3 illeg. for $^{b}$. —$^{b}$) D2 रावण- (sic) (for राघव-). —$^{c}$) Ñ V1 B2–4 ऋक्ष- (for सर्व-). G1 सुषेणः कपिमुख्यानां. —$^{d}$) Ñ V1 B1–3 D10.11 अकरोत्तदा; D7 G2 तु तदाकरोत्. —For 15$^{cd}$, Ś V2 B1 D1–4.8.12.13 subst.; while B3 ins. (in m.) after 13:

1765* तामौषधीं महाबाहुः सुषेणः प्रददौ तदा।

[ D3 ओषधीं. B3 महाप्राज्ञः (for °बाहुः). D1.2.4 सुखेनः. ]

—Thereafter, Ś V2 (repeats) B1 D1–4.8.12.13 read 12$^{ab}$ (all except D13 followed by 1757*).

16 T2.3 om. 16$^{ab}$ (cf. v.l. 15). —$^{a}$) Ś B1 D1.2.4.8.12.13 आपेदुर्; V3 D2 आपन्ना (for आपन्नो). —$^{b}$) V3 D6 G1 गत- (for हृत-). Ñ V1.3 B2.3 D6.7.9–11 G2 -क्लमः; B4 -श्रमः; G1 damaged (for -व्यथः). Ś V2 B1 D1–4.8.12.13 हृतशल्या गतक्लमाः (D13 प्लवंगमाः). —$^{c}$) G1 damaged for सौमित्रिर्मुदि. D6.9–11 मुमुदे (for मुदितस्). —$^{d}$) G1 लक्ष्मणो (for क्षणेन). —For 16$^{cd}$, Ś V1.2 B1 D1–4.8.12.13 T2.3 subst.:

1766* सौमित्रिप्रमुखाः सर्वे वानरा विगतज्वराः।

[ D1.2.4 -क्लमाः; T2.3 -श्रमाः (for -ज्वराः). D13 वानराधिपतक्लमाः (for the post. half). ]

—Then Ś V1.2 B1 D1–4.8.12.13 cont.; while Ñ V3 (only l. 1) B2–4 further cont. only l. 1 and l. 3 after 1770*:

1767* बभूवुर्मुदितास्तत्र प्राप्यामृतमिवामराः।
लक्ष्मणस्तु तदा हृष्टस्ते च वानरयूथपाः।
उत्साहं द्विगुणं प्रापुस्तथा वीर्यपराक्रमौ।
तुष्टुवुर्वानराः सर्वे सद्वाग्भी रामलक्ष्मणौ।

[ (l. 1) Ñ2 transp. मुदितास् and तत्र. Ñ2 प्राश्य (for प्राप्य). V3 इवा ** (illeg.) (for इवामराः). —(l. 2) D1 च (for तु). Ś D8.12 तथा (for ते च). —(l. 3) Ñ V1.2 B2–4 D3 प्रासाद्; D13 प्राप्य (for प्रापुस्). D2 तदा (for तथा). Ñ2 B2.3 -पराक्रमाः; B4 D2 -पराक्रमैः (for -पराक्रमौ). —(l. 4) D2 च नराः (for वानराः). D2 वाग्भिर्मो (for सद्वाग्भी). ];

while T2.3 cont. after 1766*:

1768* संतुष्टा राममभ्येत्य प्राप्यामृतमिवामराः।
लक्ष्मणो नरदेवश्च सुग्रीवश्च विभीषणः।
अङ्गदो मारुतिर्नीलः सुषेणो जाम्बवांस्तथा।
सर्वे वानरमुख्यास्ते पूर्णकामाः समाहिताः।
विहरन्ति यथाकामं हत्वा रावणिमुद्धतम्। [5]

[ (l. 5) T2 उद्रितं (sic) (for उद्धतम्). ]

—For 16$^{cd}$, Ñ V3 B2–4 subst.:

1769* गतज्वरः क्षणे तस्मिन्सौमित्रिर्मित्रनन्दनः।

[ B3 वीतज्वरः. ]

—Then all the above MSS. cont.:

1770* ते च शाखामृगाः सर्वे लक्ष्मणे विगतक्लमे।

[ V3 लक्ष्मणो विगतक्लमः (for the post. half). ]

17 V1 om. from 17 up to colophon. —$^{a}$) Ś Ñ1 V2.3 B D1–5.8.12.13 ततस्तु; Ñ2 T2.3 ततः स; D6.9–11 M1.3 तदैव (for तथैव). D3 प्लवंग- (for प्लवग-). Ś Ñ V2.3 B2.4 D1–5.7–13 T3 M5 तथा (for तदा). —$^{b}$) D13 ऋक्षपतिश्च. B1 D2.6.7.9–11.13 T1 वीर्यवान्; T2 moth-eaten; T3 बांधवान् (for जाम्बवान्). —$^{c}$) D1 अदीनम्; G2 अवेगम् (sic) (for अरोगम्). —$^{d}$) B1 D1–4.13 तदा (for मुदा). G1 सुहृदं; G2 परमं (for सुचिरं). V2 प्रहर्षिरे. Ñ V3 B2–4 मु (Ñ1 त) दा ससैन्याश्चिरमभ्यनंदन् (B3 [ *sup. lin.*

अपूजयत्कर्म स लक्ष्मणस्य
सुदुष्करं दाशरथिर्महात्मा ।
हृष्टा बभूवुर्युधि यूथपेन्द्रा
निशम्य तं शक्रजितं निपातितम् ॥ १८

G. 6. 71. o
B. 6. 91. 29
L. 6. 70. 25

इति श्रीरामायणे युद्धकाण्डे एकोनाशीतितमः सर्गः ॥ ७९ ॥

also ].4 °दयन् ). ❀ Cg: जहर्षिर इत्यत्र गुण आर्षः. ❀ —For $17^{cd}$, $T_{2.3}$ subst. :

1771* सौमित्रिमालोक्य जयश्रिया युतं
तदा ससैन्यानि नदन्ति हर्षिताः ।

[ (l. 1) $T_3$ वृतं ( for युतं ). ]

18 $V_1$ om. 18 ( cf. v.l. 17 ). —$^a$) $\tilde{N}_2$ $V_3$ $B_4$ संपूजयन् . $Ś_2$ $\tilde{N}$ $V_{2.3}$ $B_{1.3.4}$ $D_{1-4.8.12.13}$ $T_{2.3}$ च; $M_{1.2}$ सु- ( for स ). $D_{1.4}$ लक्ष्मणस्य ( $D_4$ °णस्य च ) तत्. —$^b$) $\tilde{N}_1$ दाशरथेर् . Ś $\tilde{N}$ $V_{2.3}$ B $D_{1.2.8.12.13}$ महायतिः( $D_{13}$ °बलः ) ; $G_2$ महात्मनः ( for महात्मा ). —$^c$) Ś $B_1$ $D_{1-4.6.8.12}$ $T_{2.3}$ बभूव हृष्टश्च ( $D_6$ $T_{2.3}$ °ष्टः सु-) दुरासदस्तथा( $B_1$ °सदश्च; $D_{1-3}$ °सदं तदा; $D_{4.6}$ $T_2$ °सदस्तदा ) ; $\tilde{N}$ $V_{2.3}$ $B_{2-4}$ $D_{13}$ बभूव हृष्टश्च रणे दुरासदं ( $D_{13}$ °दो ); $D_{7.9-11}$ बभूव हृष्टो युधि वानरेंद्रो. —$^d$) $D_9$ om. तं. $D_6$ $T_{2.3}$ $M_5$ शक्ररिपुं. Ś $\tilde{N}_2$ $D_{8.12}$ तु पातितं; $D_{13}$ नियामितं ( for निपातितम् ). $M_3$ transp. निशम्य and निपातितम् .

Colophon : $V_1$ om. ( cf. v.l. 17 ). —*Kāṇḍa name:* $\tilde{N}$ $B_{1.3.4}$ $D_{2.4.13}$ लंकाकांडे. —*Sarga name* : Ś $D_{8.12}$ लक्ष्मणाश्वासनं; $\tilde{N}_1$ $V_2$ विजयोपाख्यानं; $\tilde{N}_2$ जयाख्यानं; $V_3$ $D_{2.13}$ विजया( $D_2$ युद्धविजया )ख्यापनं; $B_1$ जयाख्यापनं; $B_{2.3}$ $D_6$ युद्धविजयाख्यानं ; $B_4$ $D_1$ लक्ष्मणविजयाख्या ($D_1$ °ख्याप)नं; $D_3$ इंद्रजिद्वधाख्यापनं. —*Sarga no.* (figures, words or both ) : $Ś_1$ $\tilde{N}_1$ $V_3$ $B_{2.4}$ $D_{2.4.8.12.13}$ om. ; $Ś_2$ 70 ; $\tilde{N}_2$ $D_1$ 73 ; $V_2$ 71 ; $B_{1.3}$ 67 ; $D_3$ 75 ; $D_{5-7.10.11}$ $T_1$ G $M_{3.5}$ 92 ; $D_9$ 68 ; $T_2$ 95 ; $T_3$ 99 ; $M_{1.2}$ 93. —After colophon, G $M_{1.2.5}$ conclude with श्रीरामाय नमः .

विभीषणवचः कुर्याद्यदि स्म धनदानुजः ।
श्मशानभूता दुःखार्ता नेयं लङ्कापुरी भवेत् ॥ २०

कुम्भकर्णं हतं श्रुत्वा राघवेण महाबलम् ।
प्रियं चेन्द्रजितं पुत्रं रावणो नावबुध्यते ॥ २१

मम पुत्रो मम भ्राता मम भर्ता रणे हतः ।
इत्येवं श्रूयते शब्दो राक्षसानां कुले कुले ॥ २२

रथाश्चाश्वाश्च नागाश्च हताः शतसहस्रशः ।
रणे रामेण शूरेण राक्षसाश्च पदातयः ॥ २३

रुद्रो वा यदि वा विष्णुर्महेन्द्रो वा शतक्रतुः ।
हन्ति नो रामरूपेण यदि वा स्वयमन्तकः ॥ २४

हतप्रवीरा रामेण निराशा जीविते वयम् ।
अपश्यन्त्यो भयस्यान्तमनाथा विलपामहे ॥ २५

रामहस्ताद्दशग्रीवः शूरो दत्तवरो युधि ।
इदं भयं महाघोरमुत्पन्नं नावबुध्यते ॥ २६

न देवा न च गन्धर्वा न पिशाचा न राक्षसाः ।
उपसृष्टं परित्रातुं शक्ता रामेण संयुगे ॥ २७

G. 6. 74. 30
B. 6. 94. 27
L. 6. 73 28

[ (l. 1) V2 B4 ततो लोक- ; B3 तदा किं नः (for ततो नो न). —B3 reads in marg. from प्रथयिंना in l. 2 up to prior half of l. 5. —(l. 3) V1 पंच (for सप्त). —V1 om. (hapl.) l. 6–7. —(l. 6) V1 च सागरे (for महोदधौ). —(l. 7) B2.3 वंध्या (for रुद्धा). ]

—[d]) D7 G1.2 [ए]वं (for [इ]यं). D9 विनश्यति; D10.11 भविष्यति (for -पुरी भवेत्).

21 V3 om. 21 (cf. v.l. 19). —[a]) B3 दृष्ट्वा (for श्रुत्वा). —[b]) Ś Ñ V1.2 B D1–4.6.8.12.13 T2.3 महात्मना (for महाबलम्). —After 21[ab], D4–7.9–11 S ins.:

1860* अतिकायं च दुर्धर्षं लक्ष्मणेन हतं तथा ।

[ D9–11 दुर्मर्षं (for दुर्धर्षं). D6.7.9–11 तदा; M3 पुनः; M5 ततः (for तथा). D5 T1 G3 निपातितं; M1.2 तथा हतं (by transp.) (for हतं तथा). ]

—[c]) Ś D4.8.12 इंद्रजितं. —[d]) Ś B1 D1–3.8.12.13 नानुशोचते (D8.13 °ति); T1 G1.3 नैव बुध्यते; Cm.g.t as in text (for नावबुध्यते). Ñ V1.2 B2–4 शोचता (V1 °चिता; B3.4 °चते)द्य न (B3 स; B4 om. [subm.]) रावणः. —After 21, Ñ V1.2 B2–4 ins.:

1861* ततः संरक्तनयनाः संततास्रुनिपातनात् ।
अभूतपूर्वव्यसना राक्षस्यः पर्यदेवयन् ।

[ (l. 1) Ñ2 B3.4 -निपातनाः. —(l. 2) Ñ V1 B4 परिदेवयन्. ];
while D7 (l. 1 only) K (ed.) ins.:

1862* पुरा हनुमता लङ्कां दग्धां लाङ्गूलवह्निना ।
हतमक्षकुमारं च दृष्ट्वासौ नावबुध्यते ।

[ (l. 1) D7 लंका दग्धा (for लङ्कां दग्धां). ]

22 V3 om. 22 (cf. v.l. 19). —[b]) Ś Ñ V1.2 B1–3 D1–3.7.8.12 G2 हतो रणे (by transp.); B4 हतो युधि (for रणे हतः). —[c]) Ś1 D1 [ए]व; D5.6.9–11 T G1.2 M5 [ए]ष (for [ए]वं). B3.4 शुश्रुवे (for श्रूयते). —[d]) Ñ V1.2 B3.4 D1–3.7.9–11 M1.2 राक्षसीनां (for राक्षसानां). Ś Ñ V1.2 B D1–4.8.9.12.13 गृहे गृहे (for कुले कुले).

23 V3 om. 23[ab] (cf. v.l. 19). —[a]) B4 D13 अश्वाश्च; G (ed.) साश्वाश्च (for चाश्वाश्च). Ñ1 रथायुधाश्च. Ś B1 D1.3.8.12 रथा नागास्तथाश्वाश्च; D2.4 रथा नागा हताश्वा (D4 °ता अ)श्वा; D9–11 रथाश्वनागाश्च हतास्. —[b]) Ñ2 V1.2 हताः शत- ; D9–11 तत्र तत्र (for हताः शत-). —[c]) D12 वीरेण (for शूरेण). —[d]) V3 D9–11 हताश्चापि (for राक्षसाश्च). B1 महाबलाः (for पदातयः).

24 [b]) B1 D1 [ऽ]थ (for वा). —[d]) D2 च (for वा). Ñ V B2–4 कालो वा सुदु (B4 वायुर्दु)रासदः.

25 [a]) B2.4 D9 G2 हताः; Cr.g as in text (for हत-). B1 D13 हताश्च वीराः; D4 हता वीराश्च. Ś Ñ V B D1–4.8.12.13 बहवो (for रामेण). —[c]) Ñ V B2–4 D5–7.9–11 T1.3 G1 M3 Cr.m.g.t अपश्यंतो. Ś B1 D1–3.8.12.13 व्यसनांतमपश्यंतो (D1 °त्यो); D4 व्यसनांतं न पश्यामो. ❀ Cr.m.t : अपश्यन्तः अपश्यन्त्यः । ; Cg : वयमित्येतदपेक्षया अपश्यन्त इति पुंलिङ्गम्. ❀ —[d]) Ś B1 D1.2.4.8.12.13 ह्यनाथा; D3 विनाथा; D5 T1 G1.2 M5 निराशा (for अनाथा). ❀ Cg : विलपामहे इत्यात्मनेपदमार्षम् . ❀

26 [a]) Ś B1 D1–3.8.12 राघवास्त्र; Ñ V B2–4 ब्रह्मणो हि; D4 स राघवाद्; D13 राघवं तु (for रामहस्ताद्). —[b]) Ś Ñ V1.2 B1.3.4 D1–4.8.12 लब्ध- ; B2 सर्व- (for दत्त-). Ś B1 D1–4.8.12 -पराक्रमः; Ñ V1.2 B2 D5–7.9–11 T G2.3 M3.5 -महावरः ; V3 B4 -महाबलः ; B3 -वरो महान्; G1 -महारथः (for -वरो युधि). D13 प्राणांतकरमक्षयं. —[c]) Ñ2 इत्थं (for इदं). Ś D8.12 इमं क्षयं (for इदं भयं). Ñ V B2–4 महद्भयं; B1 D2–4.13 महाभयं (by transp.); D7 भयं महद् (for भयं महा-). —[d]) Ś Ñ V B D1–4.6–13 T2.3 G1.2 M5 समुत्पन्नं न बुध्यते.

27 V3 om. 27[ab]. —[ab]) Ś Ñ V1.2 B D1–4.6–12 T2.3 G2 तं न (Ś D12 तत्र; Ñ1 V2 यं न) देवा न; G1 न च देवा न (by transp.); M5 न देवा नापि; Cr as in text (for न देवा न च). Ñ V1.2 B2.4 नासुरोरग-; B3 नासुरा न च; D3 पिशाचा न च (for न पिशाचा न). D13 तं च देवाश्च गंधर्वात्पन्नगाद्यक्षराक्षसात्. —[c]) B2 उपसृष्टां; B4 °स्पृष्टां; D2 °दिष्टं; D3 °सृज्यं; D6 °विष्टं (sic); D8 T2.3

G. 6. 74. 31
B. 6. 94. 28
L. 6. 73. 29

उत्पाताश्चापि दृश्यन्ते रावणस्य रणे रणे ।
कथयिष्यन्ति रामेण रावणस्य निबर्हणम् ॥ २८
पितामहेन प्रीतेन देवदानवराक्षसैः ।
रावणस्याभयं दत्तं मानुषेभ्यो न याचितम् ॥ २९
तदिदं मानुषान्मन्ये प्राप्तं निःसंशयं भयम् ।
जीवितान्तकरं घोरं रक्षसां रावणस्य च ॥ ३०
पीड्यमानास्तु बलिना वरदानेन रक्षसा ।
दीप्तैस्तपोभिर्विबुधाः पितामहमपूजयन् ॥ ३१
देवतानां हितार्थाय महात्मा वै पितामहः ।
उवाच देवताः सर्वा इदं तुष्टो महद्वचः ॥ ३२
अद्यप्रभृति लोकांस्त्रीन्सर्वे दानवराक्षसाः ।
भयेन प्रावृता नित्यं विचरिष्यन्ति शाश्वतम् ॥ ३३
दैवतैस्तु समागम्य सर्वैश्चेन्द्रपुरोगमैः ।
वृषध्वजस्त्रिपुरहा महादेवः प्रसादितः ॥ ३४

---

M1.2 °स्पृष्टं; D12 तपस्पृष्टं (sic); D13 °स्त्रष्टुं; Cv as in text (for उपसृष्टं). B2.4 पुरीं; D2 परं (for परि-). —$^{d}$) Ñ V3 B2.3 रावणं; B4 सांप्रतं (for संयुगे). —After 27, Ñ2 ins.:

1863* उपसृष्टा पुरी लङ्का सा तु रामेण संयुगे।

28 $^{a}$) Ś Ñ V B D1–4.8.12.13 निमित्तानि हि (Ś D4.8.12.13 °नि च; Ñ2 V3 D1 °नि ह; B4 °नीह); G2 उत्पपाताश्च (sic) (for उत्पाताश्चापि). —$^{b}$) Ñ V B2–4 राक्षसानां (for रावणस्य). Ś D8.12 महारणे; V3 वधे रणे; B2 D13 दिने दिने. —$^{cd}$) D9–11 Ck.t कथयंति हि; Cv.r.m.g as in text (for कथयिष्यन्ति). Ñ V B2–4 फलि (B2 करि) ष्यंति ध्रुवं (Ñ2 V1 रणे) तानि; D6 T2.3 ते च मन्ये फलि (T3 भरि)-ष्यंति (for $^{c}$). ❀ Cv: कथयिष्यन्ति दर्शयिष्यन्ति ।; Cr.m: कथयिष्यन्ति कथय (Cm सूचयिष्य) न्तीत्यर्थः ।; Cg: कथयिष्यन्ति, इतः परमपि कानिचिन्निमित्तानि प्रादुर्भूय कथयिष्यन्तीत्यर्थः। वर्तमानतात्पर्यमित्यप्याहुः. ❀ Ñ V B3.4 निबर्हणात्; D6 T2.3 निबर्हणे (for निबर्हणम्). Ś B1 D1–4.8.12.13 तानि रामे (D4 मन्ये) फलिष्यंति रावणे नि (D4 रामेण च) हते रिपौ.

29 $^{b}$) ❀ Cr.m.g.t: देवदानवराक्षसैः देवदानवराक्षसेभ्यः (Ct °सैः। तेभ्यः). ❀ —For $29^{ab}$, Ś Ñ V B D1–4.8.12.13 subst.:

1864* देवदानवयक्षेभ्यो ददौ ब्रह्माभियाचितः।

[Ś D8.12 पितामहः; D2 [अ]पि याचितः (for [अ]भियाचितः).]

—$^{c}$) Ñ2 रावणेन (for रावणस्य). Ś Ñ V B D1–4.8.12.13 युद्धे (for दत्तं). —$^{d}$) Ś Ñ2 V D6.9–11 T1 G1 मनुष्येभ्यो (for मानुषेभ्यो). Ś Ñ2 V1 B1 D1–3.8.12 T3 याचितः; Ñ1 V2 B2.3 (m. also as in text).4 भाषितं (for याचितम्).

30 $^{a}$) D10.11 G M3.5 Cg मानुषं (for मानुषान्). Ś D1–4.8.12 शंके; Ñ1 V B2.3 अद्य; Ñ2 B4 एव; B1 संख्ये; D13 रक्षो-; M1.2 रामात्; L (ed.) सर्वं; Cv.g as in text (for मन्ये). —$^{b}$) Ś B1 D1–4.8.12 नैराश्यं समुपागतं; Ñ V B2–4 भयं घोरमुपस्थितं; D13 नैराश्यमभ्युपागमत्. —V3 om. $30^{c}$–$31^{b}$. —$^{c}$) Ñ V1.2 B2–4 युद्धे; B1 वैरं (for घोरं). D4 जीवितांतं कृतं वैरं.

31 V3 om. $31^{ab}$ (cf. v.l. 30). D13 om. 31–36. —$^{a}$) M5 च (for तु). D4.6 T2.3 विबुधा (for बलिना). —$^{b}$) Ś D8.12 -दृप्तेन; Ñ V1.2 B D1–3 -दत्तेन (for -दानेन). —D12 om. $31^{c}$ – 33. G2 om. from पो in $31^{c}$ up to स in $33^{b}$. M1 reads $31^{cd}$ after $33^{ab}$. —$^{c}$) D4 वचोभिर् (for तपोभिर्). Ś B1 D1–3.8 नियमैः; B3 D4.6 T2.3 विविधैः (for विबुधाः). —$^{d}$) Ś Ñ2 V1 B1 D1–3.8 अतोषयन् (for अपूजयन्).

32 D12.13 G2 om. 32 (cf. v.l. 31). —$^{a}$) Ś D8 देवानां स (for देवतानां). Ś Ñ V B D1–4.6.8 T2.3 G1 M1.2.5 हितार्थं तु (Ñ2 च) (for हितार्थाय). —$^{b}$) Ś Ñ V B D1–3.8 महातेजा; D4.6 T2.3 महात्मा स (for महात्मा वै). Ñ V B2–4 महाबलः (for पितामहः). —$^{cd}$) D9 तुष्ट; G1 सार्धम् (for सर्वा). D4 विबुधान्सर्वान् (for देवताः सर्वा). Ś B1 D1–4.8 परि- (for इदं). D9 सर्वं (for तुष्टो). D10.11 transp. सर्वा and तुष्टो. D1–3 बृहद्; D6 T2.3 तदा (for महद्). —For $32^{cd}$, Ñ V B2–4 subst.:

1865* उवाच वचनं तत्र ब्रह्मा लोकपितामहः।
शृण्वन्तु देवताः सर्वा मयोक्तं सुमहद्वचः।

[(l. 1) B3 transp. तत्र and ब्रह्मा. B4 तास्तु (for लोक-).]

33 D12.13 om. 33; G2 om. up to स in $33^{b}$ (for both, cf. v.l. 31). —$^{a}$) Ś B1 D1–3.8 लोकेषु; G1 त्रीन्लोकान् (by transp.) (for लोकांस्त्रीन्). —$^{b}$) B2 देव-; D9 सर्व- (for सर्वे). Ś B1 D1.2.8 ये भूता (D2 भूता वै) भयवर्जिताः; D3 भूता भयविवर्जिताः. —After $33^{ab}$, M1 reads $31^{cd}$. —D4 om. $33^{cd}$. M1 reads $33^{cd}$ twice. —$^{c}$) D10.11 Ck.t प्रभृता; G1 प्रापिता; M1 (both times).3 व्यापृता (for प्रावृता). —$^{d}$) D6 T2.3 शाश्वताः. —For $33^{cd}$, Ś B1 D1–3.8 G (ed.) subst.:

1866* भयार्तास्ते पुनरिह भविष्यन्त्येव राक्षसाः।

[Ś1 [इ]व; B1 [इ]ति; D1 ह; D2 [इ]ह; D3 हि (for [ए]व). G (ed.) विचरिष्यंति (for भविष्यन्त्येव).]

34 D13 om. 34 (cf. v.l. 31). —$^{a}$) D6 T1 G M5 Ck च (for तु). Ś B1 D1–4.8.12 अथ देवैः; Ñ V B2–4 D6

प्रसन्नस्तु महादेवो देवानेतद्वचोऽब्रवीत् ।
उत्पत्स्यति हितार्थं वो नारी रक्षःक्षयावहा ॥ ३५

एषा देवैः प्रयुक्ता तु क्षुद्यथा दानवान्पुरा ।
भक्षयिष्यति नः सीता राक्षसघ्नी सरावणान् ॥ ३६

रावणस्यापनीतेन दुर्विनीतस्य दुर्मतेः ।
अयं निष्टानको घोरः शोकेन समभिप्लुतः ॥ ३७

तं न पश्यामहे लोके यो नः शरणदो भवेत् ।
राघवेणोपसृष्टानां कालेनेव युगक्षये ॥ ३८

इतीव सर्वा रजनीचरस्त्रियः
परस्परं संपरिरभ्य बाहुभिः ।
विषेदुरार्तातिभयाभिपीडिता
विनेदुरुच्चैश्च तदा सुदारुणम् ॥ ३९

G. 6. 74. 42
B. 6. 94. 41
L. 6. 73. 42

इति श्रीरामायणे युद्धकाण्डे द्व्यशीतितमः सर्गः ॥ ८२ ॥

---

T2.3 ततो देवैः ( for दैवतैस्तु ). —b) Ñ2 तदा ( for सर्वैश् ). Ś D1.6.8.12 T2.3 इंद्र- ; Ñ V1.2 B3.4 शक्र- ; B1 D2–4 सेंद्र- (for चेन्द्र- ). B2 शतक्रतु- ( for सर्वैश्चेन्द्र- ). —V3 damaged from 34c up to प्रसन्न in 35a. —c) Ś B1 D1–4.8.12 वृषकेतुस्. —d) D3 देव- ( for महा- ). D9–11 प्रतोषितः .

35 D13 om. 35 (cf. v.l. 31). V3 damaged up to प्रसन्न in a (cf. v.l. 34). —a) Ś B1 D1–4.8.12 T2.3 महातेजा; B3 तदा देवस् ( for महादेवो ). —b) G1 एत-द्देवान् ( by transp. ). Ś Ñ V B D1–4.8.12 रुद्रो( Ñ1 ततो; Ñ2 V B2–4 तुष्टो ) देवानुवाच ह. —cd) B1 D2 [ अ ]भयार्थं ( for हितार्थं ). G1 च ( for वो ). Ś Ñ V B2 D1.3.4.8.12 उत्पत्स्यतेभयार्थं वो; B3 उत्पत्स्यतेक्ष( *sup. lin.* also as in B2 )यार्थं वो ( for c ). D5.9 रक्षोभयावहा. Ś D8.12 नरो रक्षःक्षयावहः ; D4 नारी वार्या भयावहा ( for d ). B4 उत्पत्स्यते भयार्तार्था नारायणक्रमावहा.

36 V3 D13 om. 36 (for D13, cf. v.l. 31). —a) B1 सैषा दैव- ( for एषा देवैः ). M5 हि ( for तु ). —b) B1 दानवान्सर्वथा क्षुधा; D6 T2.3 क्षयं नेष्यति दानवान्. —For 36ab, Ś D1–4.8.12 subst. :

1867* सैष देवप्रयुक्तस्तु दानवानां यथा क्षुधा।

[ D1–4 सैषा and -प्रयुक्ता ( for सैष and -प्रयुक्तस् respy. ). D4 हि; D12 च ( for तु ). Ś2 D8.12 क्रुधा; D4 क्षयं ( for क्षुधा ). ];

whereas Ñ V1.2 B2–4 G (ed.) subst. :

1868* सैषा देवैः प्रसृष्टा तु क्षुधिता जनकात्मजा।

[ G (ed.) दैव- ( for देवैः ). Ñ1( m. also ) प्रयुक्ता ( for प्रसृष्टा ). B4 च ( for तु ). Ñ2 देवैः प्रसृष्टा सैषा तु ( for the prior half ). B3( *sup. lin.* also as above) क्षुभिता; B4 क्रुधिता ( for क्षुधिता ). ]

—c) B3( *sup. lin.* also as in text ) वै ( for नः ). Ś B1 D1–4.8–12 सर्वान् ( for सीता ). —d) M5 रक्षोघ्नी च ( for राक्षसघ्नी ). Ś B1 D1–4.8.12 राक्षसा( D3 नैरृता )न्सह-रावणान् ; Ñ V1.2 B2–4 रावणं राक्षसैः सह. ❀ Cg : असच्छ-ब्दापेक्षया सरावणानित्युक्तिः . ❀

37 a) V2 [ अ ]पनीतस्य; D6.7.9.13 T2.3 G1 M1.2 [ अ ]विनीतेन; Cr.m.t as in text ( for [ अ ]पनीतेन ). —b) B3( *sup. lin.*; orig. as in text ) दुर्विनीतेन; D4 दुर्वृत्तस्य च ( for दुर्विनीतस्य ). —B3 reads c in marg. —c) B2 निस्त्राणको; D6 T2.3 निर्वाणदो ( for निष्टानको ). —V3 damaged from को घोरः up to लो in 38a. D13 मेवः ( for घोरः ). Ś D8.12 अयमिष्टक्षयकरः ; B3 अद्यानिष्टक्षयकरः( sic ) ; D4 जीवितांतकरो घोरः. —d) D9 समुपागतः ( for समभिप्लुतः ). Ś Ñ V1.2 B D1–4.6.8.12.13 T2.3 शोको नः( Ś D8.12 °कोयं; B2 °कौघः ) समुपागतः( D13 °पस्थितः ).

38 V3 damaged up to लो in a (cf. v.l. 37). —a) Ś V1 B1 D1–3.8.12.13 न तं ( by transp. ) ( for तं न ). ❀ Cg: पश्यामहे इत्यात्मनेपदमार्षम् . ❀ —b) M1.2 योद्य नः शरणं भवेत्. —c) D1 रावणेन ( sic) ( for राघवेण ). —d) D2.3.7.13 [ ए ]व ( for [ इ ]व ). D1 प्रजाः ( for युग- ). —After 38, D4–7.9–11 S ins. :

1869* नास्ति नः शरणं कश्चिद्भये महति तिष्ठताम्।
दवाग्निवेष्टितानां हि करेणूनां यथा वने।
प्राप्तकालं कृतं तेन पौलस्त्येन महात्मना।
यत एव भयं दृष्टं तमेव शरणं गतः।

[ D4 om. l. 1. —(l. 1) D9–11 किंचिद् ( for कश्चिद् ). —(l. 2) D4.6.9.10 G1 M1.2 दावाग्नि- . D7 वै ( for हि ). M5 दवाग्निना परीतानां ( for the prior half ). —(l. 3) D6 येन ( sic ) ( for तेन ). D4 विषण्णेन; Cr.m.g.k.t as above ( for पौलस्त्येन ). M5 दुरात्मना. ]

39 a) B3.4 D6 T2.3 इत्येव ( for इतीव ). Ś D8.12 इती( Ś2 °त्ये )व शोकाद्रुदती( D8 °तीं[ sic ] ) वरस्त्रियः ; B1 D1–4.13 इतीव ( B1 अतीव; D4 इति स्म ) सर्वे रजनीचरास्तदा. —b) Ś D8.12 वै; D1 ते; D4 om.; D13 तान् ( for सं- ). D5.6 T1 G3 -परिगृह्य (!for -परिरभ्य ). B3 परस्परं वक्षसि बाहुभिर्हताः . —c) D7 G2 विलेपुर् ( for विषेदुर् ). D5.7 T1 G3 M3 आर्ता भयभार- ; G2 M1.2 आर्ताश्च( G3 M3 °र्ताति- ) भयाति- . —d) M1.2 तु ( for च ). G3 तथा ( for तदा ). —For 39cd, Ś B1 D1–4.6.8.12.13 T2.3 subst. :

# ८३

G. 6. 75. 1
B. 6. 95. 1
L. 6. 74. 1

आर्तानां राक्षसीनां तु लङ्कायां वै कुले कुले ।
रावणः करुणं शब्दं शुश्राव परिदेवितम् ॥ १
स तु दीर्घं विनिश्वस्य मुहूर्तं ध्यानमास्थितः ।
बभूव परमक्रुद्धो रावणो भीमदर्शनः ॥ २
संदश्य दशनैरोष्ठं क्रोधसंरक्तलोचनः ।
राक्षसैरपि दुर्दर्शः कालाग्निरिव मूर्छितः ॥ ३
उवाच च समीपस्थान्राक्षसान्राक्षसेश्वरः ।
भयाव्यक्तकथांस्तत्र निर्दहन्निव चक्षुषा ॥ ४

---

1870* भृशं विनेदुर्भयशोककर्शिता
जजल्पुरुच्चैश्च वचः सुदारुणम् ।

[ (l. 1) D4 विलेपुर् (for विनेदुर्). D13 भृश- (for भय-). Ś B1 D8.12 -कर्षिता; D6 T2.3 -पीडिता; D13 -सादिता (for -कर्शिता). —(l. 2) D4 जजल्पतुश्चैव (sic) (for जजल्पुरुच्चैश्च). ]
—Thereafter T2.3 cont. :

1871* रामं वने कामसहस्ररूपं
वृद्धा कराली वनिता विरूपा ।
प्रकामिता शूर्पणखा कथं हा
विनाशनायैव निशाचराणाम् ।

[ (l. 1) T3 -समान- (for -सहस्र-). ]
—For 39$^{cd}$, Ñ V B2-4 subst. :

1872* विनेदुरुच्चैर्वदनैर्विचेतसो
महास्वनाः क्रान्तसुदारुणं वचः ।

[ V3 damaged up to महास्व in l. 2. —(l. 2) B3 दुराश्रयाः (for महास्वनाः). ]

Colophon.—*Kāṇḍa name*: Ś1 V3 D6 om.; Ñ V1 B1.3.4 D2.4.13 लंका°. —After Kāṇḍa name, D13 ins. युद्धपर्वणि. —*Sarga name*: Ś D8.12 परिदेवनं; Ñ V3 राक्षस( Ñ1 नगर )स्त्रीविलापः ; V1.2 B2-4 स्त्रीविलापः ; B1 D3 राक्षसीविलापः ; D1.2 राक्षसविलापः ; D4 राक्षसपरिदेवनं; D13 युद्धनिर्याणं. —*Sarga no.* (figures, words or both) : Ś1 Ñ1 V3 B2 D2.4.8.12.13 om. ; Ś2 V1 73 ; Ñ2 77 ; V2 74 ; B1.3.4 70 ; D1 76 ; D3 78 ; D5-7.10.11 T1 G M3.5 95 ; D9 71 ; T2 98 ; T3 102 ; M1.2 96. —After colophon, G M2 conclude with श्रीरामाय नमः ; M3 with श्रीरामाय नमः । चतुर्दश्यां मूलबलवधः प्रलापश्च; M5 with श्रीरामचन्द्राय नमः .

## 83

1 $^{a}$) Ñ1 V D4 राक्षसानां. Ñ B2 D4.5.13 T1 G1.3 च (for तु). Ś B1 D1-3.6.8.12 T2.3 रक्षसां तेषां( D2 चैव ) (for राक्षसीनां तु). —$^{b}$) G1 राक्षसानां (for लङ्कायां वै). Ś B1 D1-4.6.8.12.13 T2.3 व्यथितानां ( D4 लंकायां वै; D6 T2.3 राक्षसीनां; D13 रुदतीनां ) गृहे गृहे; Ñ V B2-4 राक्षसा ( Ñ1 V राक्षसी; Ñ2 रुदंती )नां तु ( Ñ1 V2.3 B2.4 च ) वेश्मसु; G (ed.) रक्षसां च गृहे गृहे. —$^{c}$) Ś Ñ V B D1-3.8.12.13 सर्वं; G1 वाक्यं; G2 स्त्रीणां (for शब्दं). —$^{d}$) D1 परिवेदितं (meta.). —After 1, Ś Ñ2 V1 B1.4 D1-4.6.8.12 T2.3 (Ś B1 D1-4.8.12 repeating after 1876*; V1 B4 repeating after 8) ins. ; while Ñ1 V2.3 B2.3 ins. after 8:

1873* स्वबलं क्षयितं दृष्ट्वा समग्रं ससुतं रणे ।
सुतान्भ्रातॄन्विनिहताञ्शक्रतुल्यपराक्रमान् ।

[ (l. 1) Ñ1 V1( second time ).2.3 स (for स्व-). Ś2 D1-4.6.8.12 T2.3 ( Ś2 D3.8.12 both times; D1.2 first time ; D4 second time ) क्षपितं; Ñ1 V1( second time ).2.3 B2.3 व्यथितं; B4 D1 ( both second time ) निहतं (for क्षयितं). D1 om. (hapl. ?) समग्रं in second occurrence. D4 (first time) असुरं; D4 (second time) सोसुरं; D12( both times ) सुसुतं (for ससुतं). Ñ1 V B2-4 (V1 B4 second time) तुमुलं लोमहर्षणं; V1( first time ) G (ed.) सामात्यं( G[ ed. ] समग्रं ) ससुहृद्गणं (for the post. half). —(l. 2) Ś Ñ1 V1.3 B D1-4.6.8.12 T2.3 (Ś V1 B1.4 D1-3.8.12 second time ; D4 first time ) तथा; V1 D4( second time ) यथा; B1 D1-3 ( all first time ) सर्वान् (for सुतान्). Ś B1 D1-3.8.12( all second time ) वीरान्; V1( first time ) च तान् (for भ्रातॄन्). B4 ( first time ) च विविधान् (for विनिहताञ्). Ś B1 D1-3.8.12 (all second time) राक्षसानंतकोपमान् (for the post. half). ]

2 V3 mostly damaged for $^{a}$. —$^{a}$) D7.13 विनिःश्वस्य. Ś B1 D1-4.8.12 स( B1 सु- ) दीर्घमथ निः( D2 नि )श्वस्य; Ñ V1.2 B2-4 दीर्घमुष्णं च( Ñ2 वि- ) निः( Ñ1 V2 नि )श्वस्य; D6 T2.3 स दीर्घमुष्णं नि( D6 निः )श्वस्य. —$^{c}$) B1.4 D1.4 परमः (for परम-). —$^{d}$) Ś D2.3.8.12.13 राक्षसो (for रावणो). D1.3 भीमविक्रमः .

3 V3 om. 3. V1 om. 3$^{ab}$. —$^{a}$) Ś D8.12 दशनेनौष्ठं; D1-3 दशनैरोष्ठान्. —D12 om. 3$^{c}$ – 4$^{b}$. —$^{c}$) Ñ B2-4 दुष्प्रेक्ष्यः ; V1.2 D13 दुःप्रेक्ष्यः ; D5-7 T2.3 दुर्धर्षः (for दुर्दर्शः). Ś B1 D1-4.8 राक्षसेंद्रः सुदुर्धर्षः . —$^{d}$) D9-11 मूर्तिमान् (for मूर्छितः).

4 D12 om. 4$^{ab}$ (cf. v.l. 3). —$^{a}$) Ś Ñ V B4 D3 स; D6 वचः (hypm.) (for च). —$^{b}$) D13 राक्षसाधिपः. —$^{c}$) Ñ V1.2 D7 भयत्य( D7 °यात्य )क्त- ; D6 भयादव्यक्त- (hypm.); G2 भियाव्यक्त- (for भयाव्यक्त-). V2 -कथांस्ते तु (sic); D5-7 T1 G2.3 M3 Cv.r.m*p*.g.k.t

महोदरं महापार्श्वं विरूपाक्षं च राक्षसम् ।
शीघ्रं वदत सैन्यानि निर्यातेति ममाज्ञया ॥ ५
तस्य तद्वचनं श्रुत्वा राक्षसास्ते भयार्दिताः ।
चोदयामासुरव्यग्रान्राक्षसांस्तान्नृपाज्ञया ॥ ६
ते तु सर्वे तथेत्युक्त्वा राक्षसा घोरदर्शनाः ।
कृतस्वस्त्ययनाः सर्वे रावणाभिमुखा ययुः ॥ ७
प्रतिपूज्य यथान्यायं रावणं ते महारथाः ।
तस्थुः प्राञ्जलयः सर्वे भर्तुर्विजयकाङ्क्षिणः ॥ ८
अथोवाच प्रहस्यैतान्रावणः क्रोधमूर्छितः ।
महोदरमहापार्श्वौ विरूपाक्षं च राक्षसम् ॥ ९
अद्य बाणैर्धनुर्मुक्तैर्युगान्तादित्यसंनिभैः ।
राघवं लक्ष्मणं चैव नेष्यामि यमसादनम् ॥ १०
खरस्य कुम्भकर्णस्य प्रहस्तेन्द्रजितोस्तथा ।
करिष्यामि प्रतीकारमद्य शत्रुवधादहम् ॥ ११

G. 6. 75. 13
B. 6. 95. 11
L. 6. 74. 13

-कथस्तत्र; Cr*p*.m as in text (for -कथांस्तत्र). Ś Ñ1 (marg. also) B1 D1–3.8.12 T2.3 भया(D1.12 °य)सक्तानिदं तत्र; V3 B2–4 भयत्य(B4 °यात्त्य)क्तकथ(B3 [after corr. *sec. m.*] °थां)स्तत्र; D4 भयासंक्रंदितं तत्र; D9 भयासक्तकथस्तत्र; D10.11 Ck.t क्रोधाव्यक्तकथस्तत्र; D13 संभ्रमादक्तवदनो; M5 कालाग्निरिव संक्रुद्धो.

5 $^{a}$) Ñ1 V B2–4 मत्तो(B2.3 दो)न्मत्तौ महावीर्यौ (B3 °रौ); Ñ2 D13 अकंपनं पिशाचं च; D4.6 T2.3 युद्धोन्मत्तं च(D4 स्व-) मत्तं च; G1 M Cg महोदरमहापार्श्वौ. ❀ Cg: इमौ महोदरमहापार्श्वौ सचिवौ। पूर्वहतौ तु मत्तप्रमत्तापरपर्यायौ रावणभ्रातरौ. ❀ —$^{b}$) B3 तु (for च). M4 दुर्धरं (for राक्षसम्). —After $5^{ab}$, D13 ins.:

1874* प्रजङ्घं स्थूलजङ्घं च हस्तिकर्णं चतुर्मुखम्।
विद्युज्जिह्वं महामायं सिंहवक्त्रं सुराष्ट्रकम्।

—$^{c}$) Ś B1.3.4 D1–3.8.12 रक्षांसि (for सैन्यानि). D6 नर्दंत गच्छध्वं; D13 हि दश रक्षांसि (for वदत सैन्यानि). —$^{d}$) B4 निर्यांतु ते (for निर्यातेति). D5 M1.3.5 मदाज्ञया; Cg as in text (for ममाज्ञया).

6 $^{b}$) Ś B1.3 D2.8.13 भयातुराः; D4 °श्रिताः; D7 G1.2 °कुलाः; D12 भयांतराः (for भयार्दिताः). —After $6^{ab}$, D4 ins.:

1875* मन्दं च चक्रुर्निर्याणमव्यग्रा व्यथिता अपि।

—$^{cd}$) Ś D1.3.8 नोदयामासुर्; V1 B1 D13 देशया°; G2 रोचया° (for चोदयामासुर्). Ś Ñ1 B2.4 D2.6.8.12.13 T2 अव्यग्रा (for अव्यग्रान्). Ś D8.12.13 T2 राक्षसास् (for राक्षसांस्). Ś D8.12 ते तदाज्ञया; D7.13 G1.2 M1.2 रावणाज्ञया (for तान्नृपा°). D4 चोदयामास सोद्वेगान्निर्यातेति पुनः पुनः.

7 D7 transp. 7 and 8. —$^{a}$) Ñ2 हि (for तु). D2 सर्वं (for सर्वे). —$^{b}$) D7.9–11 भीम- (for घोर-). —$^{c}$) Ś D1.2.8.12 हृष्टा (for सर्वे). —$^{d}$) V3 D5.9–11 ते रणाभिमुखा; B4 रावणाभिमुखं; D4.7 T1 G2.3 M3 रणायाभिमुखा (for रावणा°). D13 राक्षसास्तु विनिर्ययुः.

8 D7 transp. 7 and 8. —$^{a}$) Ś D1.8.12 अभिपूज्य; Ñ2 प्रतिगृह्य; D13 ते संपूज्य (for प्रतिपूज्य). D2.8 T2.3 यथान्याय्यं; M1.2 महात्मानं (for यथान्यायं). —$^{b}$) Ś D8.12.13 तु; D7 G2 तं (for ते). V1 महाबलाः; D4.5 T1 G3 M3 निशाचराः; D13 महायशाः (for महारथाः). —$^{d}$) D13 तस्थुर् (for भर्तुर्). —After 8, Ñ1 V2.3 B2.3 ins., while V1 B4 repeat 1873*.

9 $^{a}$) D9–11 Ct ततोवाच; Cg as in text (for अथोवाच). Ś Ñ V B D1–4.8.12 महातेजा (for प्रहस्यैतान्). —$^{b}$) M1.2 राक्षसान् (for रावणः). —D13 om. $9^{c}$ – $11^{b}$. —$^{c}$) Ś B1 D8.12 महोदरं महाकायं(B1 °पार्श्वं); Ñ V B2–4 मत्तो(B2.3 °दो)न्मत्तौ महावीर्यौ(B3 °रौ); D4.6 T2.3 युद्धोन्मत्तं च मत्तं च; Cr महोदरमहापार्श्वौ (as in text). —$^{d}$) D9 विरूपा***क्षसं. —After 9, Ś Ñ V B D1–4.6.8.12 T2.3 ins.:

1876* शीघ्रमापूर्य वाद्यानि निर्गच्छत ममाज्ञया।
रामलक्ष्मणसुग्रीवान्हत्वा प्रतिनिवर्तत।

[(l. 1) B1 D2.4.6 T2.3 वाद्यंतु; B2 आहत्य (for आपूर्य). Ś D8.12 शीघ्रं निशाचराः सर्वे; D1.3 वाद्यंतामाशु वाद्यानि (for the prior half). B1.3 D1–4.6 T2.3 निर्गच्छंतु. —D6 T2.3 om. l. 2. —(l. 2) Ñ2 V1.2 B4 प्रतिनिवर्तथ; V3 D4 °निवर्तय (for °निवर्तत).]

—Thereafter Ś B1 D1–4.8.12 repeat 1873*.

10 D13 om. 10 (cf. v.l. 9). B4 om. $10^{ab}$. D6 reads $10^{ab}$ (except अद्य बाणै) in marg. —$^{a}$) B3 विनिर्मुक्तैर् (for धनुर्मुक्तैर्). D4 रावणिं च विनिर्मुक्तैर् (sic). —$^{b}$) D6 -तेजसैः (for -संनिभैः). V3 B1 युगांताग्निसमप्रभैः; D4 युगाग्निरिव सप्रभैः. —$^{c}$) D12 लक्ष्मणं राघवं (by transp.). Ś B1.3 D1–4.8.12 चोभौ (for चैव). —Ś D8.12 om. $10^{d}$ – $11^{a}$. —$^{d}$) Ñ1 V B2.4 नयामि; D1–4 नयिष्ये (for नेष्यामि).

11 D13 om. $11^{ab}$ (cf. v.l. 9). Ś D8.12 om. $11^{a}$ (cf. v.l. 10). —$^{b}$) V3 B1–3 D2–4.6.7(before corr. as in text).10.11 -[इं]द्रजितस्. D2 M5 तदा; D5 T1 G3 युधि; D9 यथा (for तथा). —$^{cd}$) Ś B1 D1–4.8.12 उद्ध(Ś B1 D8.12 °त्त)रिष्ये क्षयकरस् (for $^{c}$). D6 T2.3 शत्रोर्वधाद् (for शत्रुवधाद्). D4 महाशक्तिधरो ह्यहं (for $^{d}$). D13 उद्धरिष्ये परिक्लिष्टाद्राघवस्य बलादहं.

G. 6. 75. 14
B. 6. 95. 12
L. 6. 74. 14

नैवान्तरिक्षं न दिशो न नद्यो नापि सागरः ।
प्रकाशत्वं गमिष्यन्ति मद्बाणजलदावृताः ॥ १२
अद्य वानरयूथानां तानि यूथानि भागशः ।
धनुःसमुद्रादुद्भूतैर्मथिष्यामि शरोर्मिभिः ॥ १३
व्याकोशपद्मवक्त्राणि पद्मकेसरवर्चसाम् ।
अद्य यूथतटाकानि गजवत्प्रमथाम्यहम् ॥ १४
सशरैरद्य वदनैः संख्ये वानरयूथपाः ।
मण्डयिष्यन्ति वसुधां सनालैरिव पङ्कजैः ॥ १५
अद्य युद्धप्रचण्डानां हरीणां द्रुमयोधिनाम् ।
मुक्तेनैकेषुणा युद्धे भेत्स्यामि च शतंशतम् ॥ १६
हतो भर्ता हतो भ्राता यासां च तनया हताः ।
वधेनाद्य रिपोस्तासां करोम्यस्रप्रमार्जनम् ॥ १७

12 V3 om. $12^{ab}$. —$^{a}$) M1.2 च ( for [ए]व ). Ñ V1.2 D4 [ अं ]तरीक्षं. B3 marg. ; D13 नैव द्यौर् ( for न दिशो ). —$^{b}$) V3 B1 D3.7.10.11 G1.2 M1.2 च द्यौर् ; D4 नभो ( for नद्यो ). Ñ2 B2.4 च ( for [अ]पि ). Ś Ñ1 B3 D4 च द्यौर्न च; D1 द्यौरपि न; D2 M5 द्यौर्नापि च; D12 च द्यौ नैव; D13 सूर्यो न च (for नद्यो नापि). Ś(Ś2 moth-eaten) Ñ V1.2 B2-4 D1-3.5-12 T G3 M5 सागराः . —$^{c}$) Ś D1.3.4.8.12.13 प्रकाशतां ( for प्रकाशत्वं ). Ñ V B2.4 प्रकाशा हि भविष्यंति; B1 प्रकाशमागमिष्यंति; B3 सुप्रकाशा भविष्यंति. —$^{d}$) Ś D8.12 बाणजालैर्मया वृताः ; Ñ V B2-4 मम बाणव्रजै( Ñ2 V1 °गणै )र्वृताः; B1 D1-4 बाणजालैर्वृ( D1.3 °लव्रृ; D2 °लाव्रृ )ता मया( D4 मम ).

13 Ś1 om. 13–16. —$^{a}$) Ś2 Ñ2 V B3 D1-4.6-12 T G1.2 M1.2.5 -मुख्यानां; D13 -यूथानि (for -यूथानां). —$^{b}$) Ñ V1.2 B2-4 D4 वृंदानि (for यूथानि). —After $13^{ab}$, D4-7.9-11 S ins. :

1877* धनुषा शरजालेन वधिष्यामि पतत्रिणा।
अद्य वानरसैन्यानि रथेन पवनौजसा।

[ (l. 1) D6 T2.3 धनुषः (for धनुषा). D5 T1 G3 धनुर्मुक्तैर्महावेगैर् ( for the prior half ). G1 सुदारुणं; Cv.t as above ( for पतत्रिणा ). D4.5 T1 G2.3 M3.5 Cr.m विधमिष्यामि पत्रिणा( D5 T1 G3 °भिः ; G2 शक्तिभिः) ( for the post. half ). —(l. 2) D4 अथ ( for अद्य ). T2.3 परमौजसा ( for पवनौजसा ). D4 वीरौ तौ रामलक्ष्मणौ ( for the post. half ).] —D6 om. $13^{cd}$. V3 damaged for $13^{cd}$ (except र्मिभिः ). —$^{c}$) Ś2 उ**र् ( moth-eaten ) ; T1 G1.3 M1.2.5 उद्धृतैर् ; G2 उद्वृत्तैर् ( for उद्भूतैर् ). —$^{d}$) Ś2 B1 D1-5.8.12.13 विधमिष्ये( D1 °ष्येहं [ hypm. ] ); B3 व्यथिष्यामि; D4 वधिष्यसि ( sic ) ; T2.3 M2 वधिष्यामि ( for मथिष्यामि ). Ś2 D8.12 महोर्मिभिः ; B1 शरांबुभिः ; B4 परोर्मिभिः ; D9 शरोत्तमैः ( for शरोर्मिभिः ).

14 Ś1 om. 14 (cf. v.l. 13). G3 om. $14–16^{b}$. —$^{a}$) Ś2 V2 B1 D2.4.6 आकाश-; B3 प्रकाश-; B4 व्याकोष-; D1.2 G1 M3 Cv.g आकोश- ; D8.12 आकाशे; D9 अशोक- ; T2.3 G2 व्याकोच- ; Cr.k.t as in text ( for व्याकोश- ). D3 -सम- ( for -पद्म- ). Ś2 Ñ1 V1 B D1-4.8.12 T3 -वक्त्राणां; D9 T1 -पत्राणि; D13 -पंकानां; T2 -पत्राणां; Cv.g.k.t as in text (for -वक्त्राणि ). —$^{b}$) D13 शर- (for पद्म-). Ś2 D1-4.8.12 -किंजल्क-; Ñ V1.2 B2-4 D13 -केशर-; B1 -किंशुक- ( for -केसर- ). —$^{c}$) D6 कपि- ( for अद्य ). Ñ2 V B2-4 D7.9 G2 M1.2 व्यूह- (D9 °ह्य; G2 °हं); Cm.k.t as in text ( for यूथ- ). Ś2 Ñ V B2-4 D1-4( before corr. ).8.12 -तडागा( Ś2 D8.12 °का )नि; D4( after corr.) -तडागानां ( for -तटाकानि ). —$^{d}$) Ś2 Ñ V B D1-4.8.12 विगाहिष्ये गजेंद्रवत् . ❀ Cg : प्रमथामि प्रमथ्नामि श्नाभाव आर्षः ।; Ck.t प्रमथामि प्रमथिष्यामि( Ck °ष्यामीति यावत् ). ❀

15 Ś1 G3 om. 15 (cf. v.l. 13 and 14). Ś2 B1 D1-3.8.12.13 om. 15. —$^{a}$) B3 अग्नि( *sup. lin.* )वदनैः. D4 सशरै रथसंघट्टैर् . —$^{b}$) D4 अथ; M2 सर्वे (for संख्ये). —$^{c}$) Ñ1 V2 मंडयंतु महात्मानः( V2 °नं ); V1.3 मंडयंतु महीमेनां ( V3 damaged from महीमेनां up to द्रु in $16^{b}$); B2.3 मंडयंतु स्वमात्मानं( B3 रणे भूमिं ).
—After 15, Ñ1 ins. :

1878* रम्यमायोधनसरो मद्बाणशतछेदितैः।

16 Ś1 om. 16 (cf. v.l. 13). G3 om. $16^{ab}$ (cf. v.l. 14). V3 damaged up to द्रु in $^{b}$ (cf. v.l. 15). —$^{a}$) D1.4 अथ ( for अद्य ). Ś2 D8.10-12 यूथ- ( for युद्ध- ). D13 व्यूहानि सर्वाणि; G1 प्रचंडयुद्धानां (for युद्धप्रचण्डानां ). —$^{c}$) D1.5 [ इ ]षुणा ( subm. ) ( for [ ए ]केषुणा ). B2 निःशंकिणेषुणा (sic). Ś2 B4 D8.12 संख्ये; B1 D1-3 सैन्यं; M1.3 संघे ( for युद्धे ). D13 प्रयुक्तो रक्षसां संख्ये. —$^{d}$) Ñ V B D1.6 T2.3 निर्भेत्स्यामि; D4 निर्मथ्नामि; D8.12 नियोत्स्यामि; D13 हनिष्यामि; M1.2 भेत्स्यामि द्वि- ( for भेत्स्यामि च ). D1 संयुगे (subm.) ( for शतं शतम् ). Ś2 नियो** ** *तं (damaged) ; D2.3 निर्विभेत्स्यामि संयुगे.

17 $^{a}$) D13 हतपुत्रो ( for हतो भर्ता). D5 अहो (with hiatus) ( for second हतो ). Ñ V B D1-4.7 G2 transp. भर्ता and भ्राता. D9-11 हतो भ्राता च येषां वै. —$^{b}$) D9-11 M1.2 येषां ( for यासां ). Ś1 B2 D8-12 तनयो हतः . D13 येन मे तत्समाहितः . —B3 om. $17^{c}–18^{b}$. —$^{c}$) D8.12 [अ]स्य ( for [अ]द्य ). —V3 damaged after रि in रिपोस् up to $18^{a}$. Ñ2 V1.2 B1.2 D9-11 M1.2 तेषां ( for तासां ). D13 विनिपात्य रिपोस्तस्य. —$^{d}$) Ñ V1.2 B2.4 D5.6.9-11 T2.3 M1.2 [अ]श्रु-; T1 G M3.5 [आ]स्र- ( for [अ]स्र- ). Ś B1 D1-4.8.12.13 करिष्येश्रु- ( for करोम्यस्र- ).

अथ मद्बाणनिर्भिन्नैः प्रकीर्णैर्गतचेतनैः ।
करोमि वानरैर्युद्धे यत्नावेक्ष्यतलां महीम् ॥ १८
अद्य गोमायवो गृध्रा ये च मांसाशिनोऽपरे ।
सर्वांस्तांस्तर्पयिष्यामि शत्रुमांसैः शरार्दितैः ॥ १९
कल्प्यतां मे रथः शीघ्रं क्षिप्रमानीयतां धनुः ।
अनुप्रयान्तु मां युद्धे येऽवशिष्टा निशाचराः ॥ २०
तस्य तद्वचनं श्रुत्वा महापार्श्वोऽब्रवीद्वचः ।
बलाध्यक्षान्स्थितांस्तत्र बलं संत्वर्यतामिति ॥ २१
बलाध्यक्षास्तु संरब्धा राक्षसांस्तान्गृहाद्गृहात् ।
चोदयन्तः परिययुर्लङ्कां लघुपराक्रमाः ॥ २२
ततो मुहूर्तान्निष्पेतू राक्षसा भीमविक्रमाः ।
नर्दन्तो भीमवदना नानाप्रहरणैर्भुजैः ॥ २३
असिभिः पट्टसैः शूलैर्गदाभिर्मुसलैर्हलैः ।
शक्तिभिस्तीक्ष्णधाराभिर्महद्भिः कूटमुद्गरैः ॥ २४

G. 6. 75. 25
B. 6. 95. 25
L. 6. 74. 25

18 B3 om. $18^{ab}$; V3 damaged up to $^{a}$ (for both, cf. v.l. 17). —$^{a}$) M5 -बाहु- (for -बाण-). —$^{b}$) Ś B1 D2.4.8.12 विकीर्णैर्; D3 विवर्णैर्; D9–11 G1 प्रस्तीर्णैर् (for प्रकीर्णैर्). Ś D8.12 गतजीवितैः; Ñ V B2.4 गाढवेदनैः (for गतचेतनैः). D1 विकीर्णो रनचेतनैः (sic). —For $18^{ab}$, D13 subst.:

1879* अद्य बाणविभिन्नाङ्गैः प्रकीर्णयन्त्रकेतनैः ।

—V3 om. $18^{cd}$. —$^{c}$) Ś B1 D1–4.6.8.12.13 T2.3 करिष्ये (for करोमि). —D9 om. (hapl.) $18^{d}$ – $20^{c}$. —$^{d}$) Ś D8.12 प्रच्छन्नैक-; D1–3 यत्नान्वेष्य-; M1.2 यत्नान्वेक्ष्य-; Cg.k.t as in text (for यत्नावेक्ष्य-). Ñ1 V1 B2.3 यत्नान्वेक्ष्यां (Ñ1 °ष्यां) वसुंधरां; Ñ2 संछन्नां च वसुंधरां; V2 B1 D4 परिछिन्नां महीमिमां; B4 यत्नगम्यां वसुंधरां; D13 सर्वां तां निःप्रभां महीं.

19 D9 om. 19 (cf. v.l. 18). —$^{a}$) Ś D8.12 ये च (for गृध्रा). B3 D6.13 T2.3 गोमायुगृध्रा ये (B3 D13 °ध्राश्च); D10.11 काकाश्च गृध्राश्च. —$^{b}$) Ś B1 D1–4.6.8.12.13 T2.3 ये चान्ये पिशिताशनाः (D13 मांसभोजिनः). —$^{c}$) V तान्सर्वान् (by transp.); D7 सर्वांश्च (for सर्वांस्तांस्). —$^{d}$) Ś1 शरद्युतैः (sic); Ś2 Ñ1 D8.12 शराचितैः; B1 शरोक्षितैः; D4 सशोणितैः; D7 G2 M3 शरार्पितैः; D8 शराद्युतैः; D10.11 शराहतैः; D13 शरोद्धृतैः (for शरार्दितैः). D1.2 क्षिप्रमानीयतां धनुः (= $20^{b}$).

20 D9 om. $20^{abc}$ (cf. v.l. 18). V3 om. 20. —$^{a}$) Ś D8.12 कल्पं (Ś °ल्प्यं)तां; B2 युज्यतां; D1.2.4.6.11 कल्पतां; Cg as in text (for कल्प्यतां). Ś D8.12 रथाः; D4 रथं (sic) (for रथः). D3 श्रीमान् (for शीघ्रं). —$^{b}$) D4 (marg.) शीघ्रम्; D13 प्रियम् (for क्षिप्रम्). B1 D1.2 असिः (for धनुः). Ñ V1.2 B2–4 G (ed.) योधाः सज्जीभवंतु वः (Ñ1 च; V2 B4 नः; G [ed.] मे). —$^{c}$) Ś D8.12 प्र (D8.12 आ)यांतु ते च मे; Ñ1 V1.2 B D1–4 अनु- (Ñ1 V1.2 °न्वा)यांतु च मां (D1 मे); Ñ2 आयांतु तुरगाः; D13 अथायांतश्च मा (sic); M1.2 अनुयास्यंतु मां (for अनुप्रयान्तु मां). Ñ V1.2 B2–4 शीघ्रं; D7 G2 M3 सर्वे (for युद्धे). —$^{d}$) Ñ1 B4 D1.7 M5 च शिष्टा; B2 च शेषा; B3 च शिष्ट-; D3.9–11 [ऽ]त्र शिष्टा; D6 T2.3 G3 [ऽ]वशेषा; D13 G1.2 विशिष्टा (for ऽवशिष्टा).

21 $^{b}$) Ñ V B2–4 विरूपाक्षो (for महापार्श्वो). Ś D1.8.12 इदं (for वचः). D4.6 T2.3 मत्तो वचनमब्रवीत्. —$^{c}$) M1.2 सर्वान् (for तत्र). Ś Ñ V1.2 B D1–3.8.12.13 बलाध्यक्षं स्थितं तत्र (D3 पार्श्वे). —$^{d}$) Ś Ñ1 D8.12 संनह्यताम्; V3 संश्रियताम्; B3 सांत्वयताम्; D3 संबध्यताम्; D6 संत्वरताम्; D13 संधार्यताम् (for संत्वर्यताम्). D2 क्षिप्रमानीयतामिति. —After 21, D7 G2 ins.:

1880* बलाध्यक्षास्तु तच्छ्रुत्वा महापार्श्वस्य भाषितम् ।

22 V3 om. 22. —$^{a}$) D7 T1 G2.3 तरसा; D9–11 संयुक्ता; M1.2 संक्रुद्धा; Cg as in text (for संरब्धा). Ś B1 D4.5.8.12.13 बलाध्यक्षस्तु संग्रामे (B1 D4 त्वरितो; D5 तरसा; D13 संभ्रांतो); Ñ V1.2 B2–4 त्वरितस्तु (Ñ2 V1 B3 °तं तु) बलाध्यक्षो; D1–3 बलाध्यक्षः स (D1 सं-) त्वरितो. —$^{b}$) D2.5.13 राक्षसानां (for राक्षसांस्तान्). Ś Ñ V1.2 B D2.3.7–13 T1 G3 गृहे गृहे; D4 गृहाद्गृहं; D5 स्वनं गृहे (for गृहाद्गृहात्). —D7 reads $22^{cd}$ in marg. —$^{cd}$) Ś D8.12 चोदयन्सं-परिययौ; Ñ V1.2 B2–4 G (ed.) संचोदयन् (Ñ1 °न्त्व)प (G [ed.] °न्परि)ययौ; B1 प्रेरयन्वै परिययौ; D1–4 नो (D4 चो)दयन्वै परिययौ (for $^{c}$). Ś B1.2.4 D1–4.8.12 G1 -पराक्रमः. Ñ V1.2 B2 लंकायां लघुविक्रमः; M3 लंकायां तु महाबलाः (for $^{d}$). D13 देशमातः पराक्रांतो लंकां प्राक्रोशत क्रमात् (sic).

23 $^{a}$) D1 मूहूर्तमिष्टो तु (sic); D2.3.13 मुहूर्तान्निःपेत्. —$^{b}$) Ś D8.12 मंदविक्रमाः; Ñ2 B4 D5–7.9–11 T G M3.5 भीमदर्शनाः (for भीमविक्रमाः). —$^{c}$) Ñ1 V3 D7.9–11 G नदंतो; B2 गर्जंतो (for नर्दन्तो). Ñ V2.3 B2–4 नि (Ñ1 V2 नि)नदंतश्च (V3 damaged from नदं up to णा in $^{d}$ [see var.]); V1 [ऽ]तिप्रहृष्टाश्च; M1.2 भीतवदना (for भीमवदना). Ś D8.12 संप्र (Ś2 °नि)विष्टा विनिर्वृत्ताः B1 D1–4.13 संप्रहृष्टा (D4 °मत्ता) विनर्दंतो. —After $23^{c}$, D4 reads erroneously (first time) $29^{b}$–$30^{c}$. —$^{d}$) D2 भुवि (for भुजैः). Ñ V B2–4 नानाप्रहरणा (V3 damaged) युधाः.

24 B1 om. 24–$25^{b}$. M5 reads $24^{ab}$ twice. —$^{a}$) Ś1 D8.12 पाशासि (D12 °भि-); Ś2 चापासि-; D1–4 प्रासासि- (for असिभिः). Ś Ñ V B2–4 D1–4.6–13 पट्टिशैः (D8.12 °सैः) (for पट्टसैः). —$^{b}$) Ś D8 मुसुलैर्. Ś

G. 6. 75. 0
B. 6. 95. 26
L. 6. 74. 26

यष्टिभिर्विमलैश्चक्रैर्निशितैश्च परश्वधैः ।
भिण्डिपालैः शतघ्नीभिरन्यैश्चापि वरायुधैः ॥ २५
अथानयन्बलाध्यक्षाश्चत्वारो रावणाज्ञया ।
द्रुतं सूतसमायुक्तं युक्ताष्टतुरगं रथम् ॥ २६
आरुरोह रथं दिव्यं दीप्यमानं स्वतेजसा ।
रावणः सत्त्वगाम्भीर्याद्दारयन्निव मेदिनीम् ॥ २७

Ñ2 B3 D1–4.8.9.12 अपि; Ñ1 V B2 D13 तथा( V2 °दा ); D5 T1 G3 शरैः ; G2 हुडैः ; M1.2 Cg हुलैः ; M5 भुजैः ; Ct as in text (for हलैः). B4 मुसलायुधैः ; G1 मुसलार्गलैः . ❀ Cv: वगुलैः द्विफलवक्त्राग्रैः. ❀ —$^{c}$) B3 शक्तिभिः सायकैश्चैव. —$^{d}$) B3 बहुभिः ; D13 राक्षसैः (for महद्भिः). D2 क्रूरमुद्गरैः . D4 अन्यैश्च विविधायुधैः .

25 Ñ V1.2 B om. 25$^{ab}$ (for B1, cf. v.l. 24). Ś1 V3 D4 om. 25. —$^{a}$) Ś2 D1–3.6.8.12 ऋ( D6 मु )ष्टिभिर्. Ś2 D1.2.7–13 G2 विविधैश् ; D3 तोमरैश् ; G1 निशितैश् (for विमलैश्). D3 चापि; D13 उग्रैर् (for चक्रैर्). —$^{b}$) D3 विविधैश् ; G1 विमलैश् (for निशितैश्). D1.3.5.7.11.13 परश्वधैः ; G M1.3.5 परश्वथैः . —D9 om. 25$^{cd}$. —$^{c}$) Ñ V1.2 B D6 भिंदिपालैः ; D1 भिंडमालैः ; T भिंडिवालैः (for भिण्डिपालैः). —$^{d}$) Ś2 Ñ V1.2 B2–4 D8.12 अपि (for चापि). Ś2 Ñ V1.2 B1.2 D2.3.13 तथा( B1 °दा )युधैः ; B4 शतायुधैः ; D8.12 तथाविधैः (for वरायुधैः). D1 अन्यैश्च विविधायुधैः .

26 $^{a}$) D5 T1 G3 बलाध्यक्षांश् ; G2 M3 Cg °ध्यक्षस् (for बलाध्यक्षाश्). Ś Ñ V B2–4 D1–3.8.12.13 आनयच्च (D1 °यंस्तं ) बलाध्यक्षस्. —$^{b}$) Ś D8.12 तं रथं; Ñ V B D1–3 चतुरो; D6 T2.3 तद्रथं; D13 राक्षसान् ; G2 सर्वतो; M3 Cg सत्वरो (for चत्वारो). —After 26$^{ab}$, D7 K (ed.; within brackets) ins.:

1881* रथानां नियुतं साग्रं नागानां नियुतत्रयम् ।
अश्वानां षष्टिकोट्यस्तु खरोष्ट्राणां तथैव च ।
पदातयस्त्वसंख्याता जग्मुस्ते राजशासनात् ।
बलाध्यक्षाश्च संस्थाप्य राज्ञः सेनां पुरःस्थिताम् ।
एतस्मिन्नन्तरे सूतः स्थापयामास तं रथम् । [5]
दिव्यास्त्रवरसम्पन्नं नानालंकारभूषितम् ।
दिव्यवाजिसमायुक्तं दिव्यालंकारभूषितम् ।
नानायुधसमाकीर्णं किङ्किणीजालसंयुतम् ।
नानारत्नपरिक्षिप्तं रत्नस्तम्भैर्विराजितम् ।
जाम्बूनदमयैश्चैव सहस्रकलशैर्युतम् । [10]
तं दृष्ट्वा राक्षसाः सर्वे विस्मयं परमं गताः ।
तं दृष्ट्वा सहसोत्थाय रावणो राक्षसेश्वरः ।
कोटिसूर्यप्रतीकाशं ज्वलन्तमिव पावकम् ।

[ K (ed.) variants: (l. 4) बलाध्यक्षश्. —(l. 6) दिव्यास्त्रवर-. —om. (hapl.) l. 7. —(l. 10) वृतं (for युतम्). ]

—$^{c}$) D4 भव्य-; G1 रथं (for द्रुतं). D12 सूतं; D13 सर्वं (for सूत-). Ñ2 -समाश्वस्तो (for -समायुक्तं). —$^{d}$) B4 युक्तं तु (for युक्ताष्ट-). D6 क्षणात् (for रथम्). Ś D8.12 -सु( D8.12 स )तुरंगमं. D4 उत्कृष्टतुरगान्वितं; D13 युक्तार्थं च तुरंगमैः. ❀ Cg : अथानयद्बलाध्यक्षः सत्वरो रावणाज्ञया। द्रुतं सूतसमायुक्तं युक्ताष्टतुरगं रथमिति पाठः. ❀ —After 26, Ñ V B2–4 ( B3 only l. 1–3 ) ins.; while B3 cont. l. 4 and the prior half of l. 5 after 1883*:

1882* सुवर्णवेदिकायुक्तं रत्नैश्च समलंकृतम् ।
युक्तं वैदूर्यनालैश्च पताकाभिश्च शोभितम् ।
केतुना नवशीर्षेण काञ्चनेन विराजितम् ।
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
विराजन्राक्षसश्रेष्ठो धनेश इव पुष्पकम् । [5]

[ (l. 1) V3 -वेदिकाभिश्च. —(l. 2) B2 -जालैश्; B3 -माल्यैश् (for -नालैश्). V2 सु- (for second च). B4 अलंकृतं (for च शोभितम्). —(l. 3) G (ed.) नरशीर्षेण. —(l. 4) B2 पांडरेण. —(l. 5) Ñ2 व्यराजद्; B3.4 रराज (for विराजन्). ]

27 D13 transp. $^{a}$ and $^{c}$. —$^{a}$) B1 D3 [अ]थ तं; M1.2 शुभं (for रथं). Ś Ñ1 V2.3 B1.2 D2.8.12 दीप्तं; D1.3 om.; T2.3 भीमं; M3 Cg भीमो (for दिव्यं). D5 T1 G3 शुभं हैमं; D6 स तं भीमं; D7.9–11 G2 तदा भीमं (D7 G2 °मो ); G1 शुभं भीमं (for रथं दिव्यं). B3 तमारुरोह त्वरितो. —After 27$^{a}$, B3 ins.:

1883* रावणो युद्धदुर्मदः ।

—Thereafter B3 cont. l. 4 and the prior half of l. 5 of 1882*. —$^{b}$) Ś Ñ V B1–3 D3.7.8.12.13 दीप्यमानः (for दीप्यमानं). Ñ1 V2.3 D8 सुतेजसा; D13 च तेजसा (for स्वतेजसा). —After 27$^{ab}$, D5–7.9–11 S ins.:

1884* ततः प्रयातः सहसा राक्षसैर्बहुभिर्वृतः ।
[ T3 वृतैः. ]

—$^{c}$) Ś T3 -गांभीर्यः ; B1 D4 -संपन्नो; Cm.g.t as in text (for -गाम्भीर्याद्). D13 तत्र चैव दशग्रीवो. —$^{d}$) Ś D8.12 कंपयन् ; Ñ V B3.4 D13 ना( V1 न )मयन् ; B1.2 D1–3 नादयन् ; D4.7.9 वारयन् ; D6 T2.3 निर्दहन् (for दारयन्). —After 27, D7 K (ed.; within brackets) ins.:

1885* ततश्चासीन्महानादस्तूर्याणां च ततस्ततः ।
मृदङ्गैः पटहैः शङ्खैः कलहैः सह रक्षसाम् ।
आगतो रक्षसां राजा छत्रचामरसंयुतः ।
सीतापहारी दुर्वृत्तो ब्रह्मघ्नो देवकण्टकः ।
योद्धुं रघुवरेणेति शुश्रुवे काहलध्वनिः । [5]
तेन नादेन महता पृथिवी समकम्पत ।
तं शब्दं सहसा श्रुत्वा वानरा दुद्रुवुर्भयात् ।
रावणस्तु महाबाहुः सचिवैः परिवारितः ।
आजगाम महातेजा विजयाय रणं प्रति ।

रावणेनाभ्यनुज्ञातौ महापार्श्वमहोदरौ ।
विरूपाक्षश्च दुर्धर्षो रथानारुरुहुस्तदा ॥ २८
ते तु हृष्टा विनर्दन्तो भिन्दन्त इव मेदिनीम् ।
नादं घोरं विमुञ्चन्तो निर्ययुर्जयकाङ्क्षिणः ॥ २९
ततो युद्धाय तेजस्वी रक्षोगणबलैर्वृतः ।
निर्ययावुद्यतधनुः कालान्तकयमोपमः ॥ ३०
ततः प्रजवनाश्वेन रथेन स महारथः ।
द्वारेण निर्ययौ तेन यत्र तौ रामलक्ष्मणौ ॥ ३१
ततो नष्टप्रभः सूर्यो दिशश्च तिमिरावृताः ।
द्विजाश्च नेदुर्घोराश्च संचचाल च मेदिनी ॥ ३२
ववर्ष रुधिरं देवश्चस्खलुश्च तुरंगमाः ।
ध्वजाग्रे न्यपतद्गृध्रो विनेदुश्चाशिवं शिवाः ॥ ३३

G. 6. 75. 35
B. 6. 95. 44
L. 6. 74. 34

[ K ( ed. ) variants : ( l. 5 ) कलहध्वनिः . —( l. 9 ) जयाय विजयं ( for विजयाय रणं ). ]

—After 27, D10.11 read $29^{cd}$ for the first time, repeating it in its proper place.

28 D3.5 om. ( hapl. ) $28–29^{b}$. M1.2 read $28–29^{b}$ twice. —$^{a}$ ) D4.6 T2.3 [ अ ]भ्यनुज्ञातो ( for °ज्ञातौ ). Ś D8.12 नादान्घोरान्विमुंचंतौ. —$^{b}$ ) Ñ V B2.4 मत्तो( B2 °दो )-न्मत्तौ निशाचरौ; B3 मदोन्मत्तौ महाबलौ; D4 युद्धोन्मत्तश्च राक्षसः ; D6 T2.3 युद्धोन्मत्तो महाबलः. —V3 om. $28^{c}–29^{b}$. —$^{c}$ ) Ñ1 तु दुर्धर्षो; D1 सुदुर्धर्षो; D4.6 T2.3 च मत्तश्च. —$^{d}$ ) Ñ1 तथा; D6 T2.3 त्रयः ( for तदा ). B4 रथमारुरुहे तथा; D4 रथमारुरुहुस्त्रयः . —For 28, D13 subst. :

1886* अकम्पनः पिशाचश्च विरूपाक्षो निशाचरः ।
रावणेनाभ्यनुज्ञाता रथानारुरुहुस्तदा ।

29 V3 D1.3.5 om. $29^{ab}$ ( for V3 D3.5, cf. v.l. 28 ). M1.2 read $28–29^{b}$ twice. —$^{a}$ ) B3 [ अ ]ति- ( for तु ). Ś D8.12 तांस्तान् ; D2.4 दृष्ट्वा; G2 दृष्टा ( for हृष्टा ). Ś1 विनद्ंतो; V1 B2 D10.11.13 [ अ ]भिनर्दंतो; B3 D2 विमर्दंतो; T1 निनर्दंतो ( for विनर्दन्तो ). —D4 reads erroneously ( first time ) $29^{b}–30^{c}$ after $23^{c}$. —After $29^{ab}$, D13 erroneously repeats 1886* ( except रुरुहुस्तदा ). —D10.11 repeat $29^{cd}$ here ( cf. v.l. 27 ). —$^{c}$ ) Ś D3.6.8.12 T2.3 नादान्घोरान् ; M1.2 ( both both times ) घोरान्नादान् ( for नादं घोरं ). B1 D1.2.4.13 नादान्घोरा ( D1 °षा )न्विनर्दंतो. —$^{d}$ ) Ś B1 D3.8.12.13 T2.3 युद्धकांक्षिणः . —For $29^{cd}$, Ñ V B2–4 subst. :

1887* निर्ययुः सहिता राज्ञा सर्वे संत्यक्तजीविताः ।

[ B3 सहितो रक्षो ( corrupt ). ]

—Then all the above MSS. cont. :

1888* स राक्षसमहाराजः कोटिभिरभिसंवृतः ।
दशभिर्हतशेषाभिर्निर्ययौ कम्पयन्महीम् ।

[ ( l. 1 ) Ñ1 V2 राक्षसैर् . Ñ1 V1 B3 म( V1 B3 -म )हातेजा ( for °राजः ). —B3 om. l. 2. —( l. 2 ) V2.3 कंपयन्निर्ययौ ( by transp. ). ]

30 $^{a}$ ) D6 रणे ( for ततो ). —$^{b}$ ) Ś1 B1 D2.4.6.8.12 T2.3 -समावृतः ; Ś2 Ñ V B2–4 D1.3.13 -समन्वितः ( for -बलैर्वृतः ). —Ś D8 om. $30^{c}–32^{b}$. V3 om. $30^{c}–31^{b}$. —$^{c}$ ) D12 रावणस्तत्र; D13 त्वरितः श्रीमान् ( for उद्यतधनुः ). —$^{d}$ ) D4 दशग्रीवो महाबलः ; D12 वीरो वै रावयन्महीं; D13 * * * तिमिरानलः .

31 Ś D8 om. 31 ; V3 om. $31^{ab}$ ( for both, cf. v.l. 30 ). D12 om. $31–32^{b}$. D13 om. $31^{ab}$. —$^{a}$ ) M1.2 तदा; G ( ed. ) अथ ( for ततः ). Ñ V1.2 B D1.3.7.10.11 T1 M1.2 प्रजविताश्वेन; D2.9 प्रव्रजिताश्वेन; D4 प्रतारिताश्वेन; D5 प्रज्वलिताश्वेन ; G3 प्रज * * श्वेन. —$^{b}$ ) B2 D3 सु( D3 च )महारथः ; D7 G1.2 स महाबलः . —$^{c}$ ) D7 प्रययौ ( for निर्ययौ ). —After 31, D13 ins. :

1889* पञ्च रथसहस्राणि राक्षसेन्द्रानुगामि तु ।
पञ्चत्रिंशत्सहस्राणि साग्रहाणां तु वाजिनाम् ।
मातंगानां ससज्जानि सपञ्चान्येकविंशतिः ।
गजाश्वरथसंकीर्णा राक्षसैर्मेदिनी कृता ।
तुरंगखुरविध्वस्तरथनेमिसमुद्धतः । [5]
आच्छादयन्महीं रेणुर्दिशः खं द्युमणिं तथा ।

32 Ś D8.12 om. $32^{ab}$ ( for Ś D8, cf. v.l. 30 and for D12, cf. v.l. 31 ). D13 om. $32^{ab}$. —$^{a}$ ) G1 बभौ; Cg.k as in text ( for ततो ). —$^{b}$ ) V3 विदिशास्तथा. —$^{c}$ ) D7 G1.2 विनेदुर् ( for च नेदुर् ). Ś1 प्रादुर्बभूवुर्मेघाश्च; Ś2 D8.12 पिद्धुर्यां तदा मेघाः ; Ñ V1.2 B D1–3 घोरं( B1 घीरा; D1 धीरं; D2 दीनं; D3 भीमं ) विनेदुर्मेघाश्च; V3 घोरं जगर्जे मेघश्च; D12 शंखदुंदुभिघोषेण. —$^{d}$ ) D13 प्रचचाल. M3 [ इ ]व ( for च ). B2 वसुंधरा ( for च मेदिनी ). —After 32, D13 reads $35^{ab}$.

33 D13 om. $33^{ab}$. —$^{a}$ ) V3 B3 ववृषु ; G2 ववर्षुं ( for ववर्ष ). V3 B3 G2 देवाः . —$^{b}$ ) Ś D1–4.8.12 प्रास्खल-न्रथवाजिनः ; Ñ V B2–4 D5 T1 G M प्रा( V3 अ )स्खलं ( D5 T1 G M चस्खलु )स्तुरगाः पथि; B1 च स्खलन्रथवाजिनः ; T3 संस्खलंश्च तुरंगमाः . —$^{c}$ ) Ñ B2.3 D6.13 T2.3 ध्वजे च; B1.4 D1–3 ध्वजेस्य ( for ध्वजाग्रे ). D6 T2.3 न्यपतन्गृध्रा. Ś1 चीचीति शारिका नेदुर् ; Ś2 D8.12 पक्षिणो मंद-( D8 °णोमंग )लं चक्रुर् ; V ध्वजमूर्ध्न्यपतद्गृध्रो. —$^{d}$ ) D9–11 M1.2 चाशिवाः शिवाः ; G2 अशिवाः शिवाः . T3 वायसैरनुनादिताः.

G. 6. 75. 36
B. 6. 95. 45
L. 6. 74. 35

नयनं चास्फुरद्वामं सव्यो बाहुरकम्पत ।
विवर्णवदनश्चासीत्किंचिदभ्रश्यत स्वरः ॥ ३४
ततो निष्पततो युद्धे दशग्रीवस्य रक्षसः ।
रणे निधनशंसीनि रूपाण्येतानि जज्ञिरे ॥ ३५
अन्तरिक्षात्पपातोल्का निर्घातसमनिस्वना ।
विनेदुरशिवं गृध्रा वायसैरनुनादिताः ॥ ३६
एतानचिन्तयन्घोरानुत्पातान्समुपस्थितान् ।
निर्ययौ रावणो मोहाद्वधार्थी कालचोदितः ॥ ३७
तेषां तु रथघोषेण राक्षसानां महात्मनाम् ।
वानराणामपि चमूर्युद्धायैवाभ्यवर्तत ॥ ३८
तेषां सुतुमुलं युद्धं बभूव कपिरक्षसाम् ।
अन्योन्यमाह्वयानानां क्रुद्धानां जयमिच्छताम् ॥ ३९
ततः क्रुद्धो दशग्रीवः शरैः काञ्चनभूषणैः ।
वानराणामनीकेषु चकार कदनं महत् ॥ ४०

34 V3 om. $34^{ab}$.—$^{a}$) B3 प्रास्फुरद्; T3 वास्फुरद् (for चास्फुरद्). Ś B1 D1–3.8.12.13 सव्यं (for वामं). —$^{b}$) D7.9–11 G1.2 M1.2.5 वामो (G1 °म-) (for सव्यो). Ñ1 वह्निश् (for बाहुर्). Ś2 Ñ B3.4 च कंपितः; D4 च कंपते (for अकम्पत). —$^{c}$) M1.2 विषण्ण- (for विवर्ण-). D13 -वदनं चास्य (for -वदनश्चासीत्). —$^{d}$) V3 B3 चाभ्रश्यत; D6 अभ्रसत (sic); G3 अभ्रंशित- (for अभ्रश्यत). D7.10.11 G2 स्वनः (for स्वरः). Ś Ñ V1.3 B1 D1–4.8.12 भग्नमनोरथः (V1 °नाभवत्); D9 प्रभ्रंशितस्वनः. B4 तत्किंचिच्चाभ्रमपते (sic); D13 गद्गदश्चाभवत्स्वनः.

35 V3 om. $35^{ab}$. D13 reads $35^{ab}$ after 32. —$^{a}$) Ś B1 D1–4 तस्य; Ñ2 V1.2 B3.4 G2 तदा (for ततो). V1 D2.3 निःपततो; D6.7 T2.3 निष्क्रमतो (for निष्पततो). Ś D8.12 तस्य निष्क्रमतोतीव; D13 तस्य निर्गच्छतो योद्धुं. —$^{c}$) T2 -शब्देन (for -शंसीनी).

36 $^{a}$) V3 D4.6.11.13 अंतरीक्षात्; B4 अंतरीक्षे (for °रिक्षात्). D3 पतंति (for पपात). —$^{b}$) Ñ1 V1.3 B2–4 निर्घाताश्; D8 निर्वात- (for निर्घात-). Ś V2 B1 D1.2.5–8.12.13 -समनिःस्वना; Ñ1 B3 चारुदर्शनाः; V1.3 B2.4 चोग्रनिस्वनाः; D3 -समनिस्वनाः (for -समनिस्वना). Ñ2 निर्घाताः पेतुरंबरात्; D4 निर्घातेन समन्विता. —V3 om. $36^{cd}$. —$^{c}$) D5.7.9–11 T G M3 अशिवा (for अशिवं). Ñ V1.2 B2–4 चक्रवाकाश्च; D13 च वराकाशे (for अशिवं गृध्रा). Ś B1 D1–3.8.12 चीची (D3 वाचो) वाचो विनेदुश्च (Ś D8.12 °दुः खाद्); D4 चक्रवाका विनेदुश्च. —$^{d}$) Ś D8.12 अनुसंश्रिताः; Ñ V1 B D1.3.4 अनुमिश्रिताः; V2 D7.9–11 G2 अभिमिश्रिताः; D5 अनुवादिताः. D2 वायसा वटमाश्रिताः; D13 वायसाश्च ववाशिरे. —After 36, Ś B1.2.3 (marg.) D1–4.6.8.12.13 T2.3 ins.; Ñ2 V2 cont. after 1891*:

1890* शुष्काशनिः पपातोच्चैः प्रजज्वाल ननाद च ।
वेपथुः सहसा चास्य सर्वगात्रेष्वजायत ।

[(l. 1) Ś D8.12 शक्राशनिः; V2 वज्राशनिः; B3 D4 उल्काशनिः (for शुष्का°). —D4 om. l. 2. —(l. 2) V2 सर्वसैन्येषु जायते; D6 T2.3 गात्रेषु समवर्तत (for the post. half).]

—B2.3 cont.; Ñ V1.2 B4 ins. after 36:

1891* गृध्रचक्रं च बभ्राम तस्योपरि महात्मनः ।
अश्रूणि चास्य मुमुचुर्वाजिनो रथसंसदि ।

[(l. 1) B2 गृध्रचक्रश्च. B4 महास्वनं (for महात्मनः). —(l. 2) V2 B2.3 अस्त्राणि (for अश्रूणि).]

37 $^{a}$) B1 D1–4.13 स तान् (for एतान्). B3 एव (for घोरान्). —$^{b}$) V3 damaged from त्पाता up to रावणो in $^{c}$. B1 D1–4 अतिदारुणान्; D6.7.9–12 T3 समवस्थितान्; D13 इव दारुणान् (for समुपस्थितान्). B2 उत्पातान्तानुपस्थितान्; B3 तानुत्पातानवस्थितान्. —$^{c}$) D1–3 रावणो निर्ययौ (by transp.). D6 T2.3 [ऽ]मर्षाद् (for मोहाद्). —$^{d}$) Ś D8.12 आहवं; Ñ V B D1–4.9–11.13 वधार्थं; D5 T1 G3 M1.3 जयार्थी (for वधार्थी). V1.2 B1 D13 कालदेशितः; V3 सर्ववैरिणां; D1–3 कालनोदितः; D4 कालदर्शितः (for कालचोदितः).

38 B3 om. $38^{ab}$. —$^{a}$) B2 तुरग- (for तु रथ-). Ś Ñ V B1.4 D1–4.8.12 -शब्देन (for -घोषेण). —$^{b}$) V3 B4 दुरात्मनां; G2 तरस्विनां (for महात्मनाम्). B1 D1–4 रक्षसां युद्धकांक्षिणां. —B1 om. $38^{c}$ – 39. —$^{d}$) M5 [अ]भिवर्तते. D4 युद्धायाभ्युपपद्यत.

39 B1 om. 39 (cf. v.l. 38). D10.11 om. $39^{ab}$. —$^{a}$) Ñ1 V3 B2–4 सु (V3 स) तुमुलः; Ñ2 V1.2 तु तुमुलः; D2.5.7.9.12.13 T1 G M3.5 तु तुमुलं; D4 च तुमुलं (for सुतुमुलं). Ñ V B2–4 शब्दो (for युद्धं). —V3 damaged from $^{b}$ up to जयमि in $^{d}$. —$^{c}$) Ñ1 आहूयमानां; Ñ2 मार्गमाणानां; D13 एवाह्वयतां; Cg.k.t as in text (for आह्वयानानां). B4 G1 अन्योन्याह्वयमानानां. ❀ Cg: आगमशासनस्यानित्यत्वान्मुगागमाभावः. ❀ —$^{d}$) D3 सर्वेषां; G1 युद्धार्थं (for क्रुद्धानां). Ś D2–4.6.8.12.13 T2.3 जयकांक्षिणां. D1 अन्योन्यजयकांक्षिणां. —After 39, Ś Ñ V B (B1 after $38^{ab}$ owing to om.) D1–4.6.8.12.13 T2.3 (D1.6 T2.3 repeat here) ins. l. 1–42 of a long passage relegated to App. I (No. 39).

40 D13 om. $40^{ab}$. —$^{ab}$) G2 अग्निशिखोपमैः (for काञ्चनभूषणैः). Ś Ñ V B D1–4.6.8.12 T2.3 स पुनः सूर्यसंकाशैरिषुभिर्मर्मभेदि (Ś2 D4 °वेधि) भिः. —After $40^{ab}$, Ñ V B2–4 ins.:

निकृत्तशिरसः केचिद्रावणेन वलीमुखाः ।
निरुच्छ्वासा हताः केचित्केचित्पार्श्वेषु दारिताः ।
केचिद्विभिन्नशिरसः केचिच्चक्षुर्विवर्जिताः ॥ ४१

दशाननः क्रोधविवृत्तनेत्रो
यतो यतोऽभ्येति रथेन संख्ये ।
ततस्ततस्तस्य शरप्रवेगं
सोढुं न शेकुर्हरियूथपास्ते ॥ ४२

इति श्रीरामायणे युद्धकाण्डे त्र्यशीतितमः सर्गः ॥ ८३ ॥

G. 6. 75. ० B. 6. 95. 53 L. 6. 74. ०

1892* धूम्रं तथाष्टादशभिस्तारं च दशभिः पुनः ।
सुषेणं पञ्चविंशत्या अशीत्या गवयं पुनः ।
विद्ध्वा दधिमुखं चैव षष्ट्या बाणैरजिह्मगैः ।

[ (l. 1) V शरैः (for पुनः). —(l. 2) V3 mostly damaged for l. 2. Note hiatus between the two halves. Ñ1 B4 ह्यशीत्या; V1.2 चाशीत्या (all to avoid hiatus) (for अशीत्या). Ñ V B4 तथा (for पुनः). —(l. 3) V1 दशमुखं. V3 खर- (for षष्ट्या). ]

—c) Ś Ñ V B D1–4.6.8.12.13 T2.3 अनी(Ś1 °ने)कानि (for अनीकेषु). —d) Ś D1–3.6.8.12 T2.3 ममंथ; Ñ V B1.2.4 D4 ममर्द (for चकार). Ś Ñ V B1.2.4 D4.6.8.12 T2.3 परमाहवे (for कदनं महत्). B3 विममर्द महाहवे; D13 निर्मथ्य निशितैः शरैः. —After 40, D7 ins. l. 1 only of 1895*.

41 V3 damaged for 41ab except निकृत्त. —a) D7 केचिन्निकृंतशिरसो. —b) B2 बलीयसा (for वलीमुखाः). —After 41ab, D5–7.9–11 T1 G1.3 M ins.; G2 cont. after 1895*:

1893* केचिद्विच्छिन्नहृदयाः केचिच्छ्रोत्रविवर्जिताः ।

[ G3 M5 विभिन्न- (for विच्छिन्न-). M1.2 transp. the post. half and 41d. D6 केचिच्छत्रुविनिर्जिताः; M1.2.5 केचिच्छ्रोत्रेषु दारिताः (for the post. half). ]

—c) D13 निरुत्साहाद्; G2 निरुच्छ्वासं. V3 कृताः (for हताः). —After 41c, D6 ins.:

1894* केचित्पार्श्वेषु ताडिताः ।
विभिन्नशिरसः केचित्.

—d) Ñ1 B D13 G2 पार्श्वे वि- (for पार्श्वेषु). D4 T2.3 ताडिताः (for दारिताः). —e) D5 विच्छिन्न-; G2 विहीन- (for विभिन्न-). Ñ V B2–4 -हृदयाः (for -शिरसः). B1 D1–4.6.13 T2.3 विबा(B1 निर्बा)हवः कृताः केचित्; M1.2 विभिन्नशिरसः केचित्. —f) V3 damaged; D7.9–11.13 -विनाकृताः (for -विवर्जिताः). Ñ2 M1.2 केचिन्नेत्रेषु(Ñ2 °चक्षुषि) दारिताः. —For 41, Ś D8.12 subst.; Ñ V1.2 B1.3.4 D1–4.13 G2 subst. only l. 1 for 41ab and ins. l. 3 after 41; V3 D6.9 T2.3 ins. l. 3 only after 41; B2 ins. l. 1 after 41ab and l. 3 after 41; D7 ins. l. 1 only after 40:

1895* विभिन्नशिरसः केचिदपतन्त महीतले ।
निरुच्छ्वासाः कृताः केचित्पेतुश्चक्षुर्विवर्जिताः ।
भिन्नगात्राः शरैः केचिद्रावणेन बलीयसा ।

[ (l. 1) Ñ1 V1.2 B1.3 G2 निकृत्त-; D7 निकृंत-; D13 निकृत्ताः (for विभिन्न-). B3 केचित्कबंधा निपेतुर् (for the prior half). —D12 om. (hapl.) from the post. half of l. 1 up to the prior half of l. 2. V2 B1 D1–3.13 न्यपतंत (for अपतन्त). Ñ V1 B2–4 D4.7 G2 निष्टनंतो(Ñ2 नष्टसंज्ञा; B2.4 निश्वसंतो; D4 पतंति च) मही गताः (for the post. half). —(l. 3) D9 छिन्न- (for भिन्न-). V1 कृताः (for शरैः). D13 तीक्ष्णैः (for केचिद्). Ñ2 विदारिताः; D1.2.4.6.9 T2.3 G2 वलीमुखाः; D3 प्लवंगमाः (for बलीयसा). ]

—Thereafter Ñ V B2–4 D13 cont. 1896*; while D6 T2.3 cont. l. 1–2 only of 1896*.

42 a) G2 कोप- (for क्रोध-). M5 -लोचनो (for -नेत्रो). —b) D6 क्षणे क्षणे (for यतो यतो). D6 T2.3 संयुगे (for संख्ये). —c) D5 ततस्त**स्य (om. hapl.). —d) D4.5 T G1.3 M3 -पुंगवास्ते (for -यूथपास्ते). —For 42, Ś B1 D1–3.8.12 subst.; Ñ V B2–4 D13 cont. after 1895*; D6 T2.3 cont. only l. 1–2 after 1895*; while D4 ins. before 6.84.1:

1896* आकुलां वानरीं सेनां शरजालेन मोहिताम् ।
रावणः परमप्रीत्या ददर्श रुधिरोक्षिताम् ।
ततस्तु विद्रुताः सर्वे वानरा रावणार्दिताः ।
राघवं शरणं जग्मुः प्रजापतिमिवामराः ।

[ (l. 1) Ñ2 वाहिनीं (for वानरीं). D13 शरजालैस्तु. —(l. 2) Ñ D3.4 परया (for परम-). —V3 damaged from the post. half up to राक्ष (see var.) in l. 3. Ñ V1.2 B2–4 D13 क्षतजोक्षितां. D4 रुधिरेण समुक्षितां (for the post. half). —(l. 3) Ñ V1.2 B D4.12.13 ते (for तु). Ñ V1.2 B D4 transp. विद्रुताः and वानरा. Ñ V (V3 damaged up to राक्ष) B2–4 D13 राक्षस- (for रावण-). —(l. 4) Ñ V B2–4 प्राप्ताः (for जग्मुः). Ñ V1.2 B2–4 D13 प्रजाः; B1 [अ]सुराः (for [अ]मराः). ]

—Thereafter Ś B1 D1–4.8.12.13 cont.; while B3 cont. after 1899*:

G. 6. 87. 8
B. 6. 102. 46
L. 6. 84. 8

दशग्रीवं जयेत्याहुरसुराः समवस्थिताः ।
देवा राममथोचुस्ते त्वं जयेति पुनः पुनः ॥ ८
एतस्मिन्नन्तरे क्रोधाद्राघवस्य स रावणः ।
प्रहर्तुकामो दुष्टात्मा स्पृशन्प्रहरणं महत् ॥ ९
वज्रसारं महानादं सर्वशत्रुनिबर्हणम् ।
शैलशृङ्गनिभैः कूटैश्चितं दृष्टिभयावहम् ॥ १०
सधूममिव तीक्ष्णाग्रं युगान्ताग्निचयोपमम् ।
अतिरौद्रमनासाद्यं कालेनापि दुरासदम् ॥ ११
त्रासनं सर्वभूतानां दारणं भेदनं तथा ।
प्रदीप्त इव रोषेण शूलं जग्राह रावणः ॥ १२
तच्छूलं परमक्रुद्धो मध्ये जग्राह वीर्यवान् ।
अनेकैः समरे शूरै राक्षसैः परिवारितः ॥ १३
समुद्यम्य महाकायो ननाद युधि भैरवम् ।
संरक्तनयनो रोषात्स्वसैन्यमभिहर्षयन् ॥ १४
पृथिवीं चान्तरिक्षं च दिशश्च प्रदिशस्तथा ।
प्राकम्पयत्तदा शब्दो राक्षसेन्द्रस्य दारुणः ॥ १५

---

8 Ñ1 D4.13 transp. $^{ab}$ and $^{cd}$. —$^{a}$) Ś1 Ñ1 V B2.3 D2.3 दशग्रीव ( for दशग्रीवं ). Ñ2 V B2–4 [ ऊ ]चुर् ( for [ आ ]हुर् ). —$^{b}$) B4 राक्षसाः ; D4 अमराः ( sic ) ( for असुराः ). Ñ1 V D4.6 G2 M3 समुपस्थिताः ; D13 समरे स्थिताः ; T1 सम *** ( damaged ) ; M1 गगने स्थिताः. —$^{cd}$) Ś B1 D1–3.8.12 T2.3 G1.2 M1.2.5 च ( for ते ). B3 देवाश्च राममूचुस्ते ( for $^{c}$ ). Ś B1 D1–3.8.12 जयस्वेति; D6 T2.3 जयेति च ( for त्वं जयेति ). Ñ1 D4.13 तत्रोचुश्च जयस्वेति पुनः पुनररिंदम.

9 V3 om. 9–10$^{b}$. —$^{a}$) Ś B1 D1–3.8.12 M1 क्रुद्धो; Ñ1 D4 रोषाद् ; Ñ2 V1.2 B2–4 M2 कोपाद् ; D13 घोरां ( sic ) ; Cg as in text ( for क्रोधाद् ). —$^{b}$) Ś Ñ2 V1.2 B2–4 D1–3.8.12 राघवाय; D7 G2 राघवं स; Cg as in text ( for राघवस्य ). D5.7.9–11 T2.3 G2 M1.5 च ( for स ). —$^{c}$) D4 [ ऽ ]स्य शितं ( for दुष्टात्मा ). —$^{d}$) Ś D8.12 स्पृष्ट्वा; D4 बाणं ( for स्पृशन् ). Ñ1 D13 प्राणहरं ( for प्रहरणं ).

10 V3 om. 10$^{ab}$ (cf. v.l. 9 ). —$^{a}$) D13 चक्र- ( for वज्र- ). Ś Ñ V2 B D1–4.8.12.13 -धारं; D6 T2.3 -घोरं ( for -सारं ). Ś B1 D3.8.12 -नाभं; M1 -वेगं ( for -नादं ). V1 transp. -सारं and -नादं. —$^{b}$) D4.13 सर्वशस्त्र-; G2 शत्रुदर्प- ( for सर्वशत्रु- ). D13 -विगर्हणं ( for -निबर्हणम् ). —G ( ed.) om. 10$^{c}$ – 11$^{b}$. —$^{c}$) T3 शूलैश्; Cg.k.t as in text ( for कूटैश् ). —$^{d}$) Ś Ñ1 V1.2 B1 D8.12.13 G3 M5 चित्रं; D2 चित्रैर् ; D6.7.10.11 G2 चित्त- ( for चितं ). D1 दृष्ट्वा; D3 वृष्टि- ( for दृष्टि- ). D7 -भयावहेः .

11 D6 G(ed.) om. 11$^{ab}$ ( for G [ed.], cf. v.l. 10 ). —$^{a}$) D9 तीक्ष्णाग्रे. —$^{b}$) Ñ2 B4 D7 -समप्रभं; V3 -समुत्थितं; T2.3 -भयावहं; Ct as in text ( for -चयोपमम् ). Ś1 युगाग्निनिचयोपमं; V1.3 B2.3 युगांताग्निमिवोत्थितं. —$^{c}$) Ś Ñ V B D1–4.8.12.13 अनौपम्यम् ( for अतिरौद्रम् ). Ś D8.12 अनासह्यं; Ñ2 V B2–4 अनाधृष्यं; D4 समासाद्य ( for अनासाद्यं ). —$^{d}$) D13 बलेन ( for कालेन ). Ś D1–3.8.12 सुदुःसहं; B1 सुदुष्करं ( for दुरासदम् ).

12 V3 damaged up to दारणं in $^{b}$. —$^{b}$) Ś Ñ V1.2 B2–4 D2–4.6.8.9.11 T1.2 G3 M2.5 दारुणं; G1 तारणं; Cg as in text ( for दारणं ). Ś D8.12 निनदंस्तथा; Ñ1 D4 नादयंस्तथा( D4 °दा ); Ñ2 V B2–4 चांतकोपमं; B1 D1–3.13 दारु( D2.3 °र )णं तथा( B1 °तः ). —D13 reads 12$^{cd}$ twice. —$^{c}$) B1 G2 M3 प्रदीप्तम् ; D5 T1 G3 स दीप्त. V3 इति ( for इव ). B1 घोरेण ( for रोषेण ). —$^{d}$) M2 पाणिना; Cg as in text ( for रावणः ).

13 Ñ1 D4 om. 13–15. D13 om. 13$^{ab}$. —$^{a}$) Ś B1 D8.12 रावणः ; B3( *sup. lin. also* ) D1–3 राक्षसः ; M1 सतत- ( for परम- ). —$^{b}$) Ś Ñ2 V B D1–3.8.12 प्र( Ñ2 V1 B4 सं )गृह्य युधि; D6.7.9–11 T2.3 G1.2 M2.5 जग्राह युधि ( for मध्ये जग्राह ). —$^{c}$) Ñ2 V1.3 D7.9–11 Ct अनीकैः ( for अनेकैः ). D13 वीरो ( for शूरै ). —V3 damaged from सैः in 13$^{d}$ up to 16$^{a}$. B3 reads 13$^{d}$ – 15 in marg. —$^{d}$) Ś D8.12 रावणः( sic ) ( for राक्षसैः ). G3 परिपालितः ( for °वारितः ). —After 13, M2 ins.:

3001* रिपूणां शोकजननं सुहृदां भयनाशनम् ।

14 Ñ1 D4 om. 14; V3 damaged for 14; B3 reads 14 in marg. ( for all, cf. v.l. 13 ). —$^{a}$) Ñ2 B4 समुद्यम्य( B4 °द्गृह्य ) ; B2 अनदृत्सु- ; B3 D3 तमुद्यम्य ( for समुद्यम्य ). Ś Ñ2 V1.2 B D1–3.8.12 G1 M5 -नादं ( for -कायो ). —Ñ2 V2 B2.4 om. 14$^{bc}$. —$^{c}$) D1 हर्षात् ; D13 क्रुद्धः ; M1 क्रोधात् ( for रोषात् ). —$^{d}$) Ś D8.12 स ( for स्व- ). D3.6 अति- ( for अभि- ). Ś2 -वर्षयन् ; B4 -नादयन् ( for -हर्षयन् ).

15 Ñ1 D4 om. 15; V3 damaged for 15 ; B3 reads 15 in marg. (for all, cf. v.l. 13 ). —$^{a}$) Ñ2 B1.2.4 अं( B1.2 चां )तरीक्षं ( for चान्तरिक्षं ). —$^{b}$) Ś Ñ2 B1.2.4 D2.3.8.12 दिशोथ ( for दिशश्च ). Ś B3 D8.12.13 विदिशस् ( for प्रदिशस् ). D11 तदा ( for तथा ). —$^{c}$) Ś B1.3 D2.3.8.12.13 प्रा( D13 अ )कंपयत शब्देन. —$^{d}$) T2 G1.2 दारुणं. Ś1 B1 D1–3.8.12.13 राक्षसेंद्रः सुदारुणः( Ś1 D8.12 °णं ); Ś2 ( marg. also as in Ś1 ) राक्षसेंद्रः प्रतापवान् .

अतिनादस्य नादेन तेन तस्य दुरात्मनः ।
सर्वभूतानि वित्रेसुः सागरश्च प्रचुक्षुभे ॥ १६
स गृहीत्वा महावीर्यः शूलं तद्रावणो महत् ।
विनद्य सुमहानादं रामं परुषमब्रवीत् ॥ १७
शूलोऽयं वज्रसारस्ते राम रोषान्मयोद्यतः ।
तव भ्रातृसहायस्य सद्यः प्राणान्हरिष्यति ॥ १८
रक्षसामद्य शूराणां निहतानां चमूमुखे ।
त्वां निहत्य रणश्लाघिन्करोमि तरसा समम् ॥ १९
तिष्ठेदानीं निहन्मि त्वामेष शूलेन राघव ।
एवमुक्त्वा स चिक्षेप तच्छूलं राक्षसाधिपः ॥ २०
आपतन्तं शरौघेण वारयामास राघवः ।
उत्पतन्तं युगान्ताग्निं जलौघैरिव वासवः ॥ २१
निर्ददाह स तान्बाणान्रामकार्मुकनिःसृतान् ।
रावणस्य महाशूलः पतंगानिव पावकः ॥ २२

G. 6. 87. 22
B. 6. 102. 62
L. 6. 84. 22

16 V3 damaged for 16ᵃ ( cf. v.l. 13 ). M1 om. 16. V1 illeg. for 16ᵃ. —ᵃ) Ñ2 V2 B2-4 अतीव तेन; D7.9-11 अतिकायस्य ( for अतिनादस्य ). Ś Ñ1 B1 D1-4.8.12.13 अ( Ñ1 D4.13 प्र )तिनादेन तेनास्य. —ᵇ) Ś Ñ1 V B1 D1-4.8.12.13 घोरेणाप्यु( Ñ1 V1 °प्यु )ग्र( V2.3 °तीव ) कर्मणा( B1 D1-3.13 °णः ); Ñ2 B2-4 तानि तस्यांतकात्मनः ( B2 °नि च ). —ᵈ) Ś B1 D1-3.8.12 M2 [ अ ]पि ( for प्र- ). Ñ1 D4.13 सागराश्च प्रचुक्षुभुः. —After 16, Ñ2 V B2-4 ins. :

3002* स्वस्त्यस्तु लोकेभ्य इति तत्रोचुः परमर्षयः।

17 ᵃ) V3 damaged from महा up to रामं in ᵈ. Ñ1 D4.13 -घोरं; Ñ2 V1.2 B2-4 G1 M5 -बाहुस्; M1 -तेजाः ( for -वीर्यः ). —ᵇ) Ñ2 V1.2 B2-4 transp. शूलं and तद्. V3 [ऽ]स्म्यहं; D6 महान् ( for महत् ). —ᶜ) V2 स विनद्य ; D4 विनद्य च ( for विनद्य सु- ). —ᵈ) Ś B1 D1-3.8.12 परुषं वाक्यम् ; Ñ1 D4.13 रामं वचनम् ; G1 परुषं रामम् ( by transp. ) ( for रामं परुषम् ).

18 ᵃ) B1 D1-3 ते ( for ऽयं ). Ñ1 -धारो मे; Ñ2 V1.2 B2-4 D4.13 -धारस्ते; B1 D1.2 -धारोयं; D3 -घोषोयं ( for -सारस्ते ). Ś D8.12 शूलहस्तो वज्रधरो. —ᵇ) Ś D8.12 रामं. Ś B1 D8.12 T3 समुद्यतः; M1 मयेरितः ( for मयोद्यतः ). —ᶜ) Ś D8.12 घोरान् ; B1 योयं; D1-3 घोरो ( for तव ). D3 धातृ- ( for भ्रातृ- ). —ᵈ) D3 समं; D9-11 G3 सम्यक् ( for सद्यः ). D13 प्राणं ( for प्राणान् ). Ś2 B3.4 D4.8.13 हनिष्यति.

19 ᵃ) Ś Ñ1 V2 B1.3 D1-4.8.12.13 राक्षसानां च ( for रक्षसामद्य ). M1 राक्षसानां सुघोराणां. —V3 damaged from ᵇ up to र in ᶜ. —ᵇ) M1 त्वया रणे ( for चमूमुखे ). —ᶜ) D6.12 त्वा. G3 निहत्वा. B3 D3 रणे ( for रण- ). Ś1 -श्लाघ्य; Ñ1 V B2-4 D4.9-11.13 T2.3 -श्लाघी. —ᵈ) D6.9 G3 शमं; Cv.r.m.g.t as in text ( for समम् ). Ś Ñ V B D1-4.8.12.13 करिष्ये( Ñ V B2-4 D13 °रोम्य )श्रु( Ś2 D8.12 °स्रु )-प्रमार्जनं; M1 करोम्यास्रप्रमार्जनं.

20 V3 om. 20-27ᵇ. —ᵃ) D4 निहत्य; G3 निहतस् ; Cm as in text ( for निहन्मि ). G3 त्वम्. —ᵇ) D6 ह्येतच् ; M1 अहं ( for एष ). Ñ2 V1.2 B3-4 शूलेनानेन ( for एष शूलेन ). —D1 om. ( hapl. ? ) 20ᶜ-21ᵇ. —ᶜ) Ś1 D8.12 च; B1 वि-; D2 तु ( for स ). D3 इत्युक्त्वा प्राहिणोच्छूलं. —ᵈ) Ñ1 D4 शूलं तं; D3 तच्छीघ्रं; D13 शूलं तद् ( by transp. ) ( for तच्छूलं ). M2 राक्षसेश्वरः. —After 20, Ñ1 B2.3 D4-7.9-11 S ins. :

3003* तद्रावणकरान्मुक्तं विद्युन्मालासमाकुलम् ।
अष्टघण्टं महानादं वियद्गतमशोभत ।

[ ( l. 1 ) D6 T3 M1 -करोन्मुक्तं. D6.7 M3 Cm.g विद्युज्ज्वाला-. D5.10 T1 G3 -समावृतं; Cm as above ( for -समाकुलम् ). —B3 om. l. 2. — ( l. 2 ) D4 -चंड-; D5 G M5 -घंटा- ( for -घण्टं ). Ñ1 B2 D4 उत्पतंतम् ( for वियद्गतम् ). ]

—Thereafter all the above MSS. cont. ; while Ñ2 V1.2 B4 ins. after 20 :

3004* तच्छूलं राघवो दृष्ट्वा ज्वलन्तं घोरदर्शनम् ।
ससर्ज विशिखान्रामश्चापमायम्य वीर्यवान् ।

[ ( l. 1 ) Ñ1 V2 B4 D4 तं ( for तच् ). Ñ2 V1.2 B2-4 चापि ( for शूलं ). M2 ज्वलितं ( for ज्वलन्तं ). — ( l. 2 ) Ñ V1.2 B2-4 D4 G3 निशितान्बाणांश्च ( for विशिखान्रामश्च ). M1 विससर्ज शरान्घोरांश्च ( for the prior half ). Ñ1 D4 आदाय; Ñ2 V1.2 B2-4 उद्यम्य ( for आयम्य ). ]

21 V3 om. 21 ; D1 om. 21ᵃᵇ ( for both, cf. v.l. 20 ). —ᵃ) Ś Ñ2 V1.2 B D2.3.8.12.13 शरौघैस्तं( B3 °स्तैर् ) ( for शरौघेण ). —ᵇ) Ñ1 D4.13 बिभेद युधि ; Ñ2 V1.2 B2-4 जघान युधि; D5 T1.2 नाशयामास; Ck.t as in text ( for वारयामास ). Ś D8.12 युगांताग्निसमप्रभं. —D6.13 om. 21ᶜᵈ. —ᶜ) Ñ2 V2 B2.4 M1 Ck आपतंतं. —ᵈ) Ñ2 B4 T3 शरौघैर् ; B2.3 धा( B2 नी )रौघैर् ( for जलौघैर् ). B1.2 D1-3 सागरः ( for वासवः ). —For 21ᶜᵈ, Ś D8.12 subst. :

3005* निर्बिभेद तदा रामो विरामो रिपुसम्पदाम् ।

22 V3 D4 om. 22 ( for V3, cf. v.l. 20 ). —ᵃ) D9 अनिर्दहत् ( for निर्ददाह ). Ś V2 B1 D1-3.6.8.12 T2.3 तदा ( for स तान् ). —ᵇ) D5.11 T G3 M5 -निसृतान् . —ᶜ) Ś D8.12 तदा; Ñ2 B2 D9-11 G2.3 महान् ; B4 D7 महच् ( for महा- ). Ś Ñ1 V2 B4 D2.6-8.12.13 T2.3 -शूलं ( for -शूलः ).

G. 6. 87. 23
B. 6. 102. 63
L. 6. 84. 23

तान्दृष्ट्वा भस्मसाद्भूताञ्शूलसंस्पर्शचूर्णितान् ।
सायकानन्तरिक्षस्थान्राघवः क्रोधमाहरत् ॥ २३
स तां मातलिनानीतां शक्तिं वासवनिर्मिताम् ।
जग्राह परमक्रुद्धो राघवो रघुनन्दनः ॥ २४
सा तोलिता बलवता शक्तिर्घण्टाकृतस्वना ।
नभः प्रज्वालयामास युगान्तोल्केव सप्रभा ॥ २५
सा क्षिप्ता राक्षसेन्द्रस्य तस्मिञ्शूले पपात ह ।
भिन्नः शक्त्या महाञ्शूलो निपपात गतद्युतिः ॥ २६
निर्बिभेद ततो बाणैर्हयानस्य महाजवान् ।
रामस्तीक्ष्णैर्महावेगैर्वज्रकल्पैः शितैः शरैः ॥ २७
निर्बिभेदोरसि तदा रावणं निशितैः शरैः ।
राघवः परमायत्तो ललाटे पत्रिभिस्त्रिभिः ॥ २८

23 $V_3$ om. 23 (cf. v.l. 20). —$^{a}$) Ś $Ñ_2$ $V_{1.2}$ B $D_{1-3.8.12}$ transp. तान् and दृष्ट्वा. —$^{b}$) Ś Ñ $B_{1.3}$ $D_{1-4.8.12.13}$ -स्पर्शवि-; $T_3$ -संसर्ग- (for -संस्पर्श-). $Ñ_1$ -घूर्णितान्; $B_1$ -दारितान्; $D_1$ -धूनितान्; $D_{13}$ -वर्तितान् (for -चूर्णितान्). —$^{c}$) $Ñ_1$ $B_{1.4}$ $D_{4.6.13}$ अंतरीक्षस्थान्. —$^{d}$) Ś $B_1$ $D_{1.2.8.12}$ राघवं क्रोध आविशत्; $Ñ_2$ $V_{1.2}$ $B_{2-4}$ $D_{3.10}$ राघवः क्रोधमूर्छितः.

24 $V_3$ om. 24 (cf. v.l. 20). —$^{a}$) $Ñ_1$ $D_{4.13}$ ततो (for स तां). Ś $V_2$ $B_1$ $D_{1-3.8.12}$ दत्तां; B (ed.) नीतां (for [आ]नीतां). —$D_9$ om. (hapl.?) $24^{b}-25^{a}$. —$^{b}$) $D_1$ om. (hapl.) after शक्तिं up to the prior half of 3006*. Ś $Ñ_1$ $B_1$ $D_{2.3.8.10-12}$ $G_{1.2}$ $M_2$ -संमतां; $D_{13}$ -सप्रभां (for -निर्मिताम्). —After 24, Ś $V_1$ $B_1$ $D_{1-3.8.12}$ ins.:

3006* तोलयामास तां शक्तिं समरे लघुविक्रमः ।

[ $D_1$ om. up to the prior half and om. लघु-. ]

25 $V_3$ om. 25 (cf. v.l. 20). $D_9$ om. $25^{a}$ (cf. v.l. 24). —$^{ab}$) $D_{12}$ भगवता (for बलवता). $Ñ_1$ $D_{4.13}$ सा चोदि( $D_4$ नोदि; $D_{13}$ देशि )ता वीर्यवता (for $^{a}$). $M_5$ घन- (for घण्टा-). Ś $D_{1-3.8.12}$ -[अ]ट्टहासिनी; $B_1$ -निनादिनी; $D_{13}$ -महा° (for -कृतस्वना). $Ñ_2$ $V_{1.2}$ $B_{2-4}$ सा शक्तिस्तोलि( $B_4$ °क्तिः प्रेरि )ता तेन चंडघंटामहास्वना. —$D_{12}$ om. $25^{c}-30$. $B_4$ om. $25^{c}-28$. —$^{c}$) Ś $Ñ_1$ $V_1$ $D_{4.8.13}$ ततः (for नभः). Ś $D_{1.8}$ प्रजज्वाल च सा; $D_{13}$ $T_{2.3}$ प्रज्वलयामास; $G_1$ $M_5$ प्रभासयामास. —$^{d}$) $D_2$ $G_3$ -[अ]ग्नीव (for -[उ]ल्केव). Ś Ñ $B_2$ $D_{1-3.8}$ दीप्यती ( $D_{1.8}$ °ते ); $V_{1.2}$ $B_{1.3}$ $D_{4.13}$ दीपिता (for सप्रभा). $D_7$ युगांतेन समप्रभा. —After 25, Ś $B_{1.3}$(marg.) $D_{1-3.8}$ ins.:

3007* तोलयित्वा तु बलवाञ्शक्तिं घण्टाकृतस्वनाम् ।
चिक्षेप परमक्रुद्धस्तरसा रघुनन्दनः ।

[ (l. 1) $B_1$ स (for तु). Ś $D_8$ जवाच्छक्तिं घंटाशत- (for तु बलवाञ्शक्तिं घण्टा-). $D_1$ -समन्वितां; $D_8$ -कृतुस्वनां. —(l. 2) $B_1$ समरे (for परम-) and सहसा (for तरसा). ]

26 $V_3$ $B_4$ $D_{12}$ om. 26 (for $V_3$, cf. v.l. 20; for $B_4$ $D_{12}$, cf. v.l. 25). —$^{a}$) $D_{13}$ अपतद्; G (ed.) क्षिप्ता सा (by transp.) (for सा क्षिप्ता). $D_6$ $T_{2.3}$ रघुवीरेण; $M_2$ राक्षसेंद्राय (for राक्षसेन्द्रस्य). —$^{b}$) Ś $B_1$ $D_{2.3.8}$ शूले शक्तिः; $Ñ_1$ तस्मिन्काले; $D_1$ शक्तिः शूले (for तस्मिञ्शूले). $G_2$ हा (for ह). $Ñ_1$ $D_{4.13}$ [ऽ]शनिप्रभा( $D_4$ °भे ) (for पपात ह). $M_2$ राघवेण महात्मना. —After $26^{ab}$, $M_3$ ins.:

3008* वैजयन्ती महावेगा त्रासयामास राक्षसान् ।
स तया वीरघातिन्या राघवेण विमुक्तया ।

—$Ś_1$ $D_8$ om. $26^{cd}$. —$^{c}$) $G_1$ भग्नः (for भिन्नः). $D_6$ $T_{2.3}$ $M_{2.5}$ महा- (for महान्). Ñ $V_1$ $B_{2.3}$ $D_4$ स( $B_3$ प्र-; $D_4$ आ-) भिन्नो बहुधा शूलो; $V_2$ $B_1$ $D_{1-3.13}$ तद्भिन्नं ( $D_{13}$ सा भित्त्वा ) बहुधा( $B_1$ सहसा ) शूलं; $M_1$ भिन्नं शक्त्या तया शूलं. —$^{d}$) $B_1$ पपाताप-; $D_{1.13}$ निःपपात; $D_5$ $T_1$ $G_3$ पपात च (for निपपात). $Ñ_1$ $D_{13}$ महास्वनः( $D_{13}$ °नं ); $Ñ_1$ $V_{1.2}$ $B_{2.3}$ $D_{5.6}$ T G $M_{1.5}$ महाद्युतिः; $D_4$ महात्मनः; $M_3$ हतद्युतिः. —After 26, $D_7$ $G_{1.2}$ ins.:

3009* साधु साध्विति भूतानि प्रशशंसू रघूत्तमम् ।

27 $V_3$ om. $27^{ab}$ (cf. v.l. 20). $B_4$ $D_{12}$ om. 27 (cf. v.l. 25). $Ñ_1$ $D_{4.9.13}$ $G_2$ om. (hapl.) 27. —$^{ab}$) $M_5$ चास्य (for अस्य). Ś $B_1$ $D_{1-3.8}$ तस्य बाणैरश्वान् (for बाणैर्हयानस्य). Ś $D_8$ महाबलान्( $D_8$ °** ); $D_{5.11}$ $G_1$ $M_{1.5}$ मनोजवान् (for महाजवान्). —$^{c}$) $D_{2.3}$ तीव्रैस्; $D_{10.11}$ क्षिप्तैर् (for तीक्ष्णैर्). Ś $B_1$ $D_8$ ततस्तस्य; $D_1$ ततस्तं तु; $D_2$ तदा दुष्टं (for महावेगैर्). $M_2$ राघवः परमामर्षी. —$^{d}$) $D_7$ अजिह्मगैः; $M_1$ सुवाजितैः (for शितैः शरैः). Ś $Ñ_2$ V $B_{1-3}$ $D_{1.3.8}$ $M_2$ वज्रस्पर्शसमैः शरैः( $Ñ_2$ $V_{2.3}$ $B_{2.3}$ शितैः; $M_2$ °मैर्युधि ); $D_{10.11}$ बाणवद्भिरजिह्मगैः.

28 $B_4$ $D_{12}$ om. 28 (cf. v.l. 25). $T_{1.2}$ $G_1$ $M_5$ om. (hapl.) $28^{ab}$. —$^{a}$) Ś $B_1$ $D_{1-3.8}$ च तं; $Ñ_1$ $D_{4-6.13}$ $T_3$ $G_{2.3}$ $M_{2.3}$ ततो; $Ñ_2$ V $B_{2.3}$ क्रुद्धो (for तदा). —$^{b}$) Ś $B_1$ $D_{1.3.8}$ निशितैस्त्रिभिः; $Ñ_1$ $D_4$ पत्रवाजिभिः; $D_{13}$ सप्तभिः शरैः; $M_1$ च शितैः शरैः. —$^{c}$) $G_1$ रावणं (for राघवः). Ś Ñ $V_{1.2}$ $B_{1-3}$ $D_{1-3.8.13}$ परमायस्तो; $D_4$ $G_1$ $M_5$ परमक्रुद्धो. $M_2$ रामः परबलामर्दी. —$^{d}$) Ś $B_1$ $D_8$ ललाटं. Ś $B_1$ $D_{1-3.8}$ $M_{1.2.5}$ च( $B_1$ तु ) त्रिभिः शरैः( $D_2$ शितैः ); $Ñ_1$ $D_{4.13}$ दशभिः शरैः; $V_2$ $D_5$ $T_1$ $G_3$ च( $V_2$ [ऽ]पि ) त्रिभिस्त्रिभिः. $G_2$ ललाटेषु त्रिभिस्त्रिभिः. ❀ Cg: पत्रिभिस्त्रिभिरिति प्रयोगभेदान्न पुनरुक्तिः पत्रिभिः पत्रवद्भिरित्येके. ❀

स शरैर्भिन्नसर्वाङ्गो गात्रप्रस्रुतशोणितः ।
राक्षसेन्द्रः समूहस्थः फुल्लाशोक इवाबभौ ॥ २९

स रामबाणैरतिविद्धगात्रो
निशाचरेन्द्रः क्षतजार्द्रगात्रः ।
जगाम खेदं च समाजमध्ये
क्रोधं च चक्रे सुभृशं तदानीम् ॥ ३०

G. 6. 87. 0
B. 6. 102. 70
L. 6. 84. 31

इति श्रीरामायणे युद्धकाण्डे एकनवतितमः सर्गः ॥ ९१ ॥

---

29 $D_{12}$ om. 29 (cf. v.l. 25). —[a]) $Ñ_2$ $V_{2.3}$ $B_{2.3}$ $M_2$ कीर्ण- ( for भिन्न- ). $D_{1.4}$ transp. भिन्न and सर्व. $B_4$ शरै: प्रकीर्णसर्वांगो. —[b]) $Ś_2$ $B_1$ $D_{1-3.8}$ $M_2$ गात्रात् ; $D_{4.9.13}$ गात्रे; Ck.t as in text ( for गात्र- ). $Ś_1$ Ñ V $B_{1-3}$ $D_{6.7}$ $T_{2.3}$ G $M_5$ Ct -प्रसृत- ( for -प्रस्रुत- ). —[c]) Ś $D_8$ गि( $Ś_2$ ह )रींद्रस्थः; Ñ स च वभौ; $B_4$ समीपस्थः ( for समूहस्थः ). —[d]) Ñ $D_{4.13}$ इव द्रुमः.

30 $D_{12}$ om. 30 (cf. v.l. 25). —[a]) Ñ $V_2$ $B_{1.4}$ $D_{5.13}$ $G_3$ $M_3$ अभि- ( for अति- ). —[b]) $D_5$ -[ अ ]र्ध- ( for -[ आ ]र्द्र- ). Ñ V B $D_4$ क्षतजावसिक्तः( $B_1$ °र्द्रदेहः ); $D_{13}$ क्षरज्यवशित्तः ( corrupt ); $M_5$ क्षतविद्धगात्रः. —[c]) $D_5$ $T_1$ दैन्यं ; $D_{13}$ मोहं ( for खेदं ). Ś Ñ V B $D_{1-3.8.12}$ $G_2$ $M_2$ च ( $Ñ_1$ $D_{13}$ स ) समूह-; $D_4$ स मुमोह; $M_1$ भृशमाजि-; Cg as in text ( for च समाज- ). —[d]) Ś $B_1$ $D_{1-3.8}$ द्विगुणं ; $Ñ_1$ $B_4$ $D_{6.13}$ सुमहत् ; $Ñ_2$ V $B_{2.3}$ स तदा ; $D_6$ स भृशं ; $G_1$ सुभृतं ( for सुभृशं ). $Ñ_2$ V $B_{2.3}$ महांतं ; $G_2$ दशास्यः ( for तदानीम् ). $M_2$ भयं च चक्रे सुमहत्तरं सः.

Colophon. —*Kāṇḍa name* : Ñ $B_{1.3.4}$ $D_{2.4.13}$ लंकाकांडे. —After *Kāṇḍa name,* $D_{2.13}$ ins. युद्धपर्वणि. —*Sarga name* : Ś Ñ V $B_{1.2.4}$ $D_{3.4.8.12}$ रावणधर्षणं ; $B_3$ रावणप्रधर्षणं ; $D_{1.2}$ रामरावणयुद्धं ; $D_{13}$ रावणक्रोधः. —*Sarga no.* ( figures, words or both ) : $Ś_1$ $Ñ_1$ $V_{2.3}$ $B_{2.4}$ $D_{2.4.8.12.13}$ om.; $Ś_2$ 84; $Ñ_2$ $D_3$ 90; $V_1$ $D_9$ 86; $B_{1.3}$ 83; $D_1$ 85 ; $D_{5-7}$ $T_1$ G $M_{3.5}$ 104 ; $D_{10.11}$ 103; $T_2$ 112; $T_3$ 116; $M_{1.2}$ 105; B ( ed. ) 102; G( ed.) 87. —After colophon, $Ñ_1$ concludes with श्री श्रीः ; $D_2$ with राम; G $M_{1.2.5}$ with श्रीरामाय नमः.

# ९२

G. 6. 88. 1
B. 6. 103. 1
L. 6. 85. 1

स तु तेन तदा क्रोधात्काकुत्स्थेनार्दितो रणे ।
रावणः समरश्लाघी महाक्रोधमुपागमत् ॥ १
स दीप्तनयनो रोषाच्चापमायम्य वीर्यवान् ।
अभ्यर्दयत्सुसंक्रुद्धो राघवं परमाहवे ॥ २
बाणधारासहस्रैस्तु स तोयद इवाम्बरात् ।
राघवं रावणो बाणैस्तटाकमिव पूरयत् ॥ ३
पूरितः शरजालेन धनुर्मुक्तेन संयुगे ।
महागिरिरिवाकम्प्यः काकुत्स्थो न प्रकम्पते ॥ ४
स शरैः शरजालानि वारयन्समरे स्थितः ।
गभस्तीनिव सूर्यस्य प्रतिजग्राह वीर्यवान् ॥ ५
ततः शरसहस्राणि क्षिप्रहस्तो निशाचरः ।
निजघानोरसि क्रुद्धो राघवस्य महात्मनः ॥ ६

## 92

Ñ1 begins with श्री श्री and D12 with ॐ.

1 $^{a}$) M3 transp. तु and तेन. D6 T2.3 [अ]र्दितः ; G3 M3 तथा ; M2 सदा (for तदा). Ś Ñ2 V B2.4 D1–3.8.12 M2 युद्धे ; G1 M5 क्रुद्धः (for क्रोधात्). B1.3 महायुद्धे; D7 G2 प्रहारेण (for तदा क्रोधात्). —$^{b}$) Ś2 B1 D1–3.8.12.13 राघवेण ; V1 om. (for काकुत्स्थेन). Ś Ñ2 V B D1–3.8.12 M2 प्रधर्षितः ; D6 T2.3 [अ]रिघातिना ; D7.9–11 G2 [अ]र्दितो भृशं (for [अ]र्दितो रणे). —$^{c}$) Ś1 Ñ1 V1.2 B1.3 D1–4.8.12.13 परमामर्षी ; Ś2 समर ** (moth-eaten); Ñ2 V3 B2.4 समरामर्षी (for समरश्लाघी). —$^{d}$) Ñ2 V1.3 B D1–3 भृशं ; V2 पुनः ; G2 महान् (for महा-). V B1.4 D1.4.13 उपागतः; L (ed.) समाविशत् (for उपागमत्). Ś D8.12 भृशं कोप इवाविशत्.

2 $^{a}$) B3 D1 G2 सं- (for स). M1 -वदनो (for -नयनो). Ś B1 D1–3.8.12.13 क्रुद्धश्; Ñ2 V B2–4 D4 कोपाच्; D7.9–11 [ऽ]मर्षाच् (for रोषाच्). —$^{b}$) Ś Ñ V B2–4 D1–4.6–13 G2 उद्यम्य ; B1 आदाय ; T2.3 M5 आनम्य (for आयम्य). D1 वेगवान्. —$^{c}$) Ś Ñ V B D1.2.4.8.12 प्रत्यर्दयत (V1.3 D2 °यत्सु-); D3.6 T2.3 अभ्यवर्षत्सु-(D3 °र्षत); D5 T1 G अभ्यद्रवत्सु-(G1.2 °वत); D7 अभ्यधावत्सु- ; Ck.t as in text (for अभ्यर्दयत्सु-). D13 ततस्तु शरवर्षेण. —$^{d}$) Ś1 Ñ V1.2 B D1.2.8.12 पुनराहवे ; D3 शराहवे (sic) (for परमाहवे).

3 $^{a}$) Ś B1 D2.3.8.12 M2 तं ; M3 तैः (for तु). —$^{b}$) Ś Ñ V B D1–4.8.12.13 [अं]बरे; Cr.m.k.t as in text (for [अ]म्बरात्). M3 सतोय इव तोयदः. —$^{c}$) D1.2 transp. राघवं and रावणो. Ś V2 B1 D1–3.8.12 वीरस् ; M1 रोषात् ; Cr.m.g as in text (for बाणैस्). —$^{d}$) Ñ V1.2 B D1.2.4.6.13 तडागम् (for तटाकम्). Ñ V1 B2–4 D1.4.6.9–11.13 T G3 M Ck.t पूरयन् ; D2 पूरितं (sic) (for पूरयत्). Ś D3.8.12 तडागवदपूरयत्. ❀ Cm.g : पूरयत् अपूरयत्. ❀

4 $^{a}$) B4 D13 -वर्षेण (for -जालेन). —$^{b}$) Ś D8.12 मुहुर् ; G1.2 रक्षो- (for धनुर्-). V3 चांबरे (for संयुगे). M2 रावणेन स राघवः. —$^{c}$) B4 -गुरुर् (for -गिरिर्). Ś D8.12.13 [अ]कंपो (for [अ]कम्प्यः). —$^{d}$) Ñ1 V3 D13 प्रकंपत; Ñ2 B2.4 व्यकंपत; D4 व्यकंपयत् (for प्रकम्पते). Ś D8.12 राघवो न प्रकंपितः ; B1 D1–3 राघवो न व्यकंपत; D7 G2 काकुत्स्थो नैव कंपते. —After 4, Ś Ñ1 V1.2 B1 D1–3.8.12 ins. :

3010* शरांस्तान्नरशार्दूलो रामः परमदारुणान् ।

[ Ś D8.12 रक्षसः परदारणान् (for the post. half). ]

5 V3 om. $5^{ab}$. Ś V1.2 B1 D1–3.8.12 transp. $^{ab}$ (including 3011*) and $^{cd}$. B3 repeats $5^{ab}$ (in marg.) after 5. —$^{a}$) Ś Ñ V1.2 B D1–4.8.12.13 शरैस्तु (for स शरैः). Ñ1 D4.13 -जालं वै (for -जालानि). Ś2 श ** लानि (moth-eaten). —$^{b}$) Ś1 D8.12 निवार्य; Ñ1 व्यहरत् ; Ñ2 विधमन् ; V1 B1.3 (second time) D1–3.13 व्यधमत् ; B2–4 (B3 first time) विसह (B3.4 °हस [meta.] )न् ; D4 व्याहनन् (for वारयन्). Ś2 वार ***रे (moth-eaten). M1 युधि राक्षसः (for समरे स्थितः). —After $5^{ab}$, Ś V1.2 B1 D1–3.8.12 ins. ; while Ñ2 B2.3 (after second occurrence of $5^{ab}$ in marg.) ins. after 5 :

3011* जीमूत इव नर्दंश्च शरवृष्टिं व्यवर्षत ।

[ Ś2 moth-eaten for जीमूत. Ñ2 B2 घर्मांते; D3 गर्जन्स; D8.12 नंदंश्च (for नर्दंश्च). Ś D8 शरवर्षं (for °वृष्टिं). V1.2 B1 व्यवर्षयत. Ñ2 B2 शरवर्षं ववर्ष ह (Ñ2 च) ; D1–3 शरवृष्टीर्व्य-(D3 °र)वर्षत (for the post. half). ]

—$^{c}$) T3 G1.2 M5 गभस्तिम् (for गभस्तीन्). Ś V1.2 B1 D1.3.4.8.12 चार्कस्य (for सूर्यस्य). Ñ V3 B2–4 स गभस्तीनि-(V3 °स्तिमि )वार्कस्य; D2 गभस्तिसिरिवार्कस्य; D13 संतपंतमिवार्कं तु. —$^{d}$) G2 मेघवत् ; M1 राघवः (for वीर्यवान्).

6 $^{a}$) T1 damaged from स्रा up to शा in $^{b}$. Ñ1 D1–3.13 -सहस्रं स; Ñ2 V1 B D4 -सहस्रं हि (B1 च) ; D6 T2 M1 -सहस्रेण (for -सहस्राणि). —V3 om. $6^{c}$–$7^{b}$. —$^{c}$) Ś2 Ñ V1.2 B1.2.4 D1–5.8.12.13 G3 M1 निचखान (for निजघान). G1.2 M5 जघनोरसि संक्रुद्धो. —$^{d}$) Ś2 moth-eaten for महात्मनः.

स शोणितसमादिग्धः समरे लक्ष्मणाग्रजः ।
दृष्टः फुल्ल इवारण्ये सुमहान्किंशुकद्रुमः ॥ ७
शराभिघातसंरब्धः सोऽपि जग्राह सायकान् ।
काकुत्स्थः सुमहातेजा युगान्तादित्यवर्चसः ॥ ८
ततोऽन्योन्यं सुसंरब्धावुभौ तौ रामरावणौ ।
शरान्धकारे समरे नोपालक्षयतां तदा ॥ ९
ततः क्रोधसमाविष्टो रामो दशरथात्मजः ।
उवाच रावणं वीरः प्रहस्य परुषं वचः ॥ १०
मम भार्या जनस्थानादज्ञानाद्राक्षसाधम ।
हृता ते विवशा यस्मात्तस्मात्त्वं नासि वीर्यवान् ॥ ११
मया विरहितां दीनां वर्तमानां महावने ।
वैदेहीं प्रसभं हृत्वा शूरोऽहमिति मन्यसे ॥ १२
स्त्रीषु शूर विनाथासु परदाराभिमर्शक ।
कृत्वा कापुरुषं कर्म शूरोऽहमिति मन्यसे ॥ १३

G. 6. 88. 13
B. 6. 103. 13
L. 6. 85. 14

---

7 V3 om. $7^{ab}$ (cf. v.l. 6). —a) Ś2 **दिग्धः (moth-eaten); D8.12 -महादिग्धः (for -समा°). —c) Ś V1 B1 D1–4.8.12 बभौ फुल्ल; Ñ V2.3 B2–4 स (B2 सु-; B3 प्र-) पुष्पित; G3 वृक्षः फुल्ल (sic) (for दृष्टः फुल्ल). —d) Ñ1 किंशुको बभौ; D1 किंशुको द्रुमः; D3 इव किंशुकः; D4.13 किंशुको यथा (for किंशुकद्रुमः).

8 a) Ñ B4 D1–3.13 -घातात्; G1 M5 -हत- (for -घात-). Ś Ñ2 V B D1–3.8.12 G2 -संक्रुद्धः (for -संरब्धः). D6 T2.3 M1 शर (T2.3 °रा) घातेन संरब्धः (M1 °क्रुद्धः). —b) Ñ2 V2.3 B2–4 D7.9–11 [ऽ]भि- (for ऽपि). Ś D8.12 सायकं; Ñ2 G2 कार्मुकं (for सायकान्). —c) D6 T2.3 तु; D13 स (for सु-). Ś Ñ2 V2 B3.4 D1–3.8.12 -महावेगो; V1.3 B1.2 D6 °वेगात् (for °तेजा). —d) D5 T1 G3 M3 -तेजसः (for -वर्चसः). Ś B1 D1–3.8.12 -[अ]ग्निसमप्रभः (B1 D1.3 °भान्); Ñ1 V2 D4.13 -[अ]ग्निरिवोत्थितः; Ñ2 -[आ]दित्यवत्स्थितः (for -[आ]दित्यवर्चसः). —After 8, M5 ins.:

3012* तैर्विनिर्भिन्नसर्वाङ्गो राममुक्तैः शितैः शरैः ।
रुधिरं बहु सुस्राव रावणो राक्षसाधिपः ।

9 a) Ś D8.12 G1 तु संरब्धाव्; Ñ1 B1 D13 समारब्धा; G2 सुसंक्रुद्धाव् (for सुसंरब्धाव्). D1 तौ ततोन्योन्यसंक्रुद्धाव्. —V2 illeg. for $9^{b}$. —b) V3 B3 D7.9–11 तावुभौ (by transp.) (for उभौ तौ). —T1 damaged from second रा up to शरा in $9^{c}$. Ś B1 D2.3.8.12.13 उभौ राघवरावणौ; Ñ1 D1.4 उभौ रावणराघवौ. —c) Ś V1 B1 D1–3.8.12 महति; D6 in marg.; D13 ससते (sic); G1 तौ वीरौ (for समरे). —d) Ś Ñ2 V B1.3 D5–12 T1 G1.3 M1.2.5 Ct [उ]पलक्षयतां (B1 °तस्); Cm.g as in text (for [उ]पालक्षयतां). D3 यदा; T3 तथा (for तदा). Ñ1 B2 D4.13 न दृश्येते महाभुजौ; D1 नोपलक्ष्यौ बभूवतुः. —After 9, Ñ V B2–4 D4 ins.:

3013* संछन्नः शरजालेन रावणेन स राघवः ।
निष्पपात स तं भित्त्वा मेघादिव दिवाकरः ।

[(l. 1) D4 रावणः (sic) (for राघवः). —(l. 2) V3 damaged up to दिव. V1 निःपपात; D4 निपपात. Ñ1 तनांसीव (for मेघादिव). D4 विभाकरः (for दिवा°).]

10 a) G (ed.) अथ (for ततः). D2 कोप- (for क्रोध-). —c) Ñ1 वीरं; Ñ2 B4 क्रुद्धः; B2.3 क्रुद्धं (for वीरः). V3 रामः संक्रुद्धं (for रावणं वीरः). —d) V3 परमं (for परुषं).

11 a) V3 भार्यां (for भार्या). —V3 damaged from ना up to हा in $12^{b}$. —b) Ś V1.2 B1 D1.8.12 यत्त्वया; Ñ2 B2–4 इह ते; D2 रहिता; D3 मायया; D13 प्रहृता (for अज्ञानाद्). B3 राक्षसेश्वर; D1 °साधिप (for °साधम). Ñ1 D4 दुहिता जनकस्य च. —c) Ś D8.12 हृतात्र; Ñ1 D4 विवशा; Ñ2 V2 B2–4 D3 आनीता; B1 D1.13 (sic) हृता तु (for हृता ते). Ñ1 D4 यद्धृता (for विवशा). D2 त्वयावशा (for ते विवशा). V1 हृतानीता तु विवशा. —d) D3 तेन (for तस्मात्). Ś Ñ V1.2 B D1–4.8.12.13 न भविष्यसि (B3 [before corr.] °ति) (for नासि वीर्यवान्).

12 V3 damaged up to हा in $12^{b}$ (cf. v.l. 11). —a) D4 च (for वि-). D6 reads दीनां in marg. —T1 damaged for c (except त्वा). —c) Ś V2 B1 D1–3.8.12 विवशां; Ñ2 V1.3 B2–4 विजने (for प्रसभं). Ś Ñ1 (sic) D4 कृ (D4 marg. also हृ) त्वा (for हृत्वा). —d) B4 [ऽ]यम् (for ऽहम्). —After 12, G2 reads $15^{ab}$ for the first time, repeating it in its proper place; while D4 ins. l. 1–2 of 3015*.

13 D4 om. (hapl.) 13–14. M2 transp. 13 and 14. —a) Ñ V B2–4 चौ (Ñ1 V2 B3 शौ) र्यमनाथासु. —b) Ś B1 D1–3.8.12.13 -प्र (D1 -वि) धर्षक (D1.3.13 °कः); Ñ V B2–4 D5.9–11 T1.3 G1.3 M5 -[अ]भिमर्शनं (Ñ1 B2 °र्षणं D5 G3 °र्शनः); D6 °मर्षकं; G2° मर्शकं (for -[अ]भिमर्शक). —c) D9 कामं (for कर्म). —V3 damaged from $13^{d}$ up to $14^{c}$. —d) B2 reads in marg. from मि up to से. —After 13, D2 ins.:

3014* ब्राह्मणेषु च ये शूरा गोषु स्त्रीषु तपस्विषु ।
वृन्तादिव फलं पक्वं धृतराष्ट्रात्पतन्ति ते ।

G. 6. 88. 14
B. 6. 103. 14
L. 6. 85. 15

भिन्नमर्याद निर्लज्ज चारित्रेष्वनवस्थित ।
दर्पान्मृत्युमुपादाय शूरोऽहमिति मन्यसे ॥ १४
शूरेण धनदभ्रात्रा बलैः समुदितेन च ।
श्लाघनीयं यशस्यं च कृतं कर्म महत्त्वया ॥ १५
उत्सेकेनाभिपन्नस्य गर्हितस्याहितस्य च ।
कर्मणः प्राप्नुहीदानीं तस्याद्य सुमहत्फलम् ॥ १६
शूरोऽहमिति चात्मानमवगच्छसि दुर्मते ।
नैव लज्जास्ति ते सीतां चोरवद्व्यपकर्षतः ॥ १७

---

14 $D_4$ om. 14; $V_3$ damaged up to $14^c$ (for both, cf. v.l. 13). $M_2$ transp. 13 and 14. $D_1$ transp. 14 and 15. —$^b$) Ś $D_{8.12}$ चारित्रेपि; $B_3$ चरित्रेषु (for चारित्रेषु). $\tilde{N}_2$ $B_{2.4}$ $D_{1.3,5,6.8.11.13}$ $T_3$ $G_3$ [अ] नवस्थितः; $B_1$ [अ]व्यवस्थित (for [अ]नवस्थित). —$^c$) Ś $D_{8.12}$ उपा($D_{12}$ °प)स्थाय; $V_1$ $B_1$ $D_6$ $T_{2.3}$ इवादाय (for उपादाय). —After 14, $\tilde{N}_1$ $D_{13}$ ins. l. 1–2 of 3015*; $B_3$ reads for the first time (in marg.) l. 3–4 of 3015*, repeating them in their proper place; $D_1$ ins. 3015*.

15 $G_2$ repeats $15^{ab}$ here (cf. v.l. 12). $D_1$ transp. 14 and 15. —$^a$) $V_3$ परेण (for शूरेण). $D_8$ om. धनद-. —$^b$) Ś $D_{8.12}$ वर्गैः (for बलैः). $T_3$ साकं युतेन (for समुदितेन). $B_1$ बलेन मुदितेन च. —$^c$) $D_6$ प्रशस्यं च (from च up to $^d$ in marg.); $D_{7.9-11}$ महत्कर्म; Ck.t as in text (for यशस्यं च). $D_4$ (in marg.) निंद्यं चायशस्यं च (subm.). —$^d$) $B_3$ सुदुष्करं; $D_4$ (in marg.) गतत्रप (for महत्त्वया). $D_{7.9-11}$ यशस्यं च कृतं त्वया. —After 15, Ś $\tilde{N}_2$ V B ($B_3$ reads for the first time in marg. l. 3–4 after 14, repeating them here) $D_{2.3.8.12}$ ins.; $\tilde{N}_1$ $D_{13}$ ins. l. 1–2 after 14 and l. 5–10 after 15; $D_1$ ins. after 14; $D_4$ ins. l. 1–2 after 12 and l. 3–10 after 15:

3015* अनाथैश्चैव भीतैश्च पूज्यमानश्च राक्षसैः।
उत्सेकाच्चैव दर्पाच्च शूरोऽहमिति मन्यसे।
मायया मृगरूपेण मद्भार्यापहृता त्वया।
सर्वथा दर्शितं वीर्यं कृतं कर्म सुदुष्करम्।
धिक्कृतस्त्वं सदानार्य गर्हितश्चैव कर्मणा। [5]
श्लाघसे त्वं कथं नाम यस्य ते वृत्तमीदृशम्।
निशि नैव स्वपाम्यद्य दिवा वा रजनीचर।
न रावण लभे शान्तिं त्वामनुत्पाट्य मूलतः।
इमे मासास्त्वतिक्रान्तास्त्वद्वधं परिचिन्तिताः।
वधार्हस्य वधार्थं ते मृत्युद्वारमपावृतम्। [10]

[ (l. 1) $B_2$ सु- (for [ए]व). $\tilde{N}_1$ $D_4$ नीचैश्; $V_3$ $D_2$ भूतैश् (for भीतैश्). $Ś_2$ $B_1$ पूज्यमानैश्. $\tilde{N}$ $V_{1.2}$ $B_{2-4}$ $D_4$ [ऽ]थ; L (ed.) स्व- (for च). $V_3$ पूज्य *** राक्षसैः (damaged); $D_{13}$ युज्यमानो निशाचरैः (for the post. half). —$V_3$ om. l. 2–5. —(l. 2) $B_1$ इच्छयाच् (for उत्सेकाच्). —(l. 3) Ś $D_{8.12}$ [अ]नृत- (for मृग-). $D_4$ च हृता (for [अ]पहृता). —(l. 4) $D_4$ कृतं च कर्म सुकरं (unmetric) (for the post. half). —(l. 5) Ś $D_{8.12}$ निकृतस्; $D_{1.4}$ विकृतस् (for धिक्कृतस्). $\tilde{N}$ $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ चाप्यनार्यश्च ($D_{13}$ °नैश्वर्यो) (for त्वं सदानार्य). Ś $D_{8.12}$ त्वं च (for चैव). $D_{4.13}$ गर्हितव्यः स्वकर्मणा (for the post. half). —(l. 6) Ś $\tilde{N}_1$ V $B_3$ $D_{8.12}$ श्लाघ्यसे त्वं; $B_1$ श्लाघसे स; $D_4$ स श्लाघ्यते; $D_{13}$ श्लाघये त्वां (for श्लाघसे त्वं). $\tilde{N}_2$ $V_{1.3}$ $B_{2.4}$ पाप (for नाम). $D_1$ om. (subm.) (for ते). $V_1$ वीर्यम् (for वृत्तम्). $D_{13}$ यस्य ते दृश्यंते मीदृशं (corrupt) (for the post. half). —$V_3$ om. l. 7–8. —(l. 7) $V_2$ निशासु (hypm.) (for निशि). $\tilde{N}$ $V_1$ $B_{2-4}$ $D_{4.13}$ स्वपे($B_2$ शये) नाहं($\tilde{N}_1$ $D_{4.13}$ न स्वपामि) दिवारात्रौ; $B_1$ $D_{1-3}$ निशासु नैव स्वपिमि (for the prior half). $\tilde{N}_1$ $D_{4.13}$ कदाचिद्; $B_1$ $D_{2.3}$ दिवा च (for दिवा वा). $\tilde{N}_2$ $V_1$ $B_{2-4}$ रौद्रकर्म निशाचर (for the post. half). —(l. 8) $B_1$ सुखं स्वप्स्ये; $D_{1-3}$ शमं लप्स्ये (for लभे शान्तिं). Ś $D_{8.12}$ राक्षसा($Ś_2$ $D_{12}$ °वणा)धम दुर्बुद्धे (for the prior half). Ś $D_{8.12}$ अनुत्साद्य; $B_2$ विनोत्पाट्य (for अनुत्पाट्य). $\tilde{N}_1$ $V_2$ $D_{4.13}$ नोत्साद($D_{13}$ °त्पाट)यामि यावत्त्वां सपुत्रपशु($D_{13}$ धन)बांधवं. —(l. 9) $D_1$ इमा मायास् (for इमे मासास्). $B_1$ तव वधे; $D_3$ त्वपक्रांता (for त्वतिक्रांतास्). $\tilde{N}$ V $B_{2-4}$ अत्य($\tilde{N}_2$ $V_1$ $B_4$ °भ्य)क्राममिमान्मासान्; $D_{13}$ विनं शोकमतिक्रांतो (sic) (for the prior half). $D_{1.3}$ त्वद्वधे (for त्वद्वधं). $Ś_1$ $D_8$ L (ed.) न्या($D_8$ ध्या)यतः (L [ed.] ध्यायता) सदा; $\tilde{N}$ V $B_{2-4}$ परिचिंतयन् (for परिचिन्तिताः). $B_1$ ह्यतिक्रांता मयाधम; $D_{13}$ वधं चिंतयतस्तव (for the post. half). $D_4$ चिरं लोकव्यतिक्रांतं वधमिच्छन्ननात्मनः. —(l. 10) $Ś_1$ $D_{8.12}$ वधं तेद्य; $B_1$ $D_{1-3}$ वधे तेद्य (for वधार्थं ते). $V_1$ उपावृतं; $V_3$ उपागतं. $D_{4.13}$ कालप्राप्तोसि मे नूनं यथा ($D_{13}$ °दा) त्वं दर्शनागमं($D_{13}$ °नं गतः). ]

16 $D_4$ repeats 16 (var.) consecutively. —$^a$) Ś $\tilde{N}$ V B $D_{1.3.8.12}$ उत्सेकाद्; $D_2$ उत्सेकम् (for उत्सेकेन). Ś $B_1$ $D_{1-3.8.12}$ अभिपन्नस्त्वं; $\tilde{N}$ V $B_{2-4}$ °मानस्य (for °पन्नस्य). $D_4$ (first time) उत्सेकादतिमानाच्च; $D_4$ (second time) शूरोहमिति मानाच्च; $D_{13}$ उत्सेकाद्दर्पवादस्य (sic). —$G_2$ om. (hapl. ?) from हितस्य in $16^b$ up to स्या in $18^b$. —$^b$) $\tilde{N}_2$ च कर्मणः (for [अ]हितस्य च). Ś $D_{8.12}$ गर्हितं चाहितं च यत्; $\tilde{N}_1$ V $B_{2-4}$ $D_{13}$ गर्हिताद्गर्हितस्य च; $B_1$ गर्हितश्चापि शंकितः; $D_{1-4}$ ($D_4$ both times) गर्हितं चा($D_1$ वा)पि संचि($D_2$ सेवि)तं. —$^c$) $\tilde{N}_2$ संग्रामं (for कर्मणः). $B_1$ चाप्नुहि (for प्राप्नुहि). —$^d$) $D_{13}$ आसाद्य (for तस्याद्य). $D_2$ तु (for सु-). $\tilde{N}_1$ -बलं (for -फलम्). $D_4$ (both times) सुमहाफलं.

17 $G_2$ om. 17 (cf. v.l. 16). —$^a$) $\tilde{N}$ V B $D_{1-4.13}$

यदि मत्संनिधौ सीता धर्षिता स्यात्त्वया बलात् ।
भ्रातरं तु खरं पश्येस्तदा मत्सायकैर्हतः ॥ १८
दिष्ट्यासि मम दुष्टात्मंश्चक्षुर्विषयमागतः ।
अद्य त्वां सायकैस्तीक्ष्णैर्नयामि यमसादनम् ॥ १९
अद्य ते मच्छरैश्छिन्नं शिरो ज्वलितकुण्डलम् ।
क्रव्यादा व्यपकर्षन्तु विकीर्णं रणपांसुषु ॥ २०
निपत्योरसि गृध्रास्ते क्षितौ क्षिप्तस्य रावण ।
पिबन्तु रुधिरं तर्षाद्बाणशल्यान्तरोत्थितम् ॥ २१
अद्य मद्बाणभिन्नस्य गतासोः पतितस्य ते ।
कर्षन्त्वन्त्राणि पतगा गरुत्मन्त इवोरगान् ॥ २२
इत्येवं स वदन्वीरो रामः शत्रुनिबर्हणः ।
राक्षसेन्द्रं समीपस्थं शरवर्षैरवाकिरत् ॥ २३
बभूव द्विगुणं वीर्यं बलं हर्षश्च संयुगे ।
रामस्यास्त्रबलं चैव शत्रोर्निधनकाङ्क्षिणः ॥ २४

G. 6. 88. 30
B. 6. 103. 24
L. 6. 85. 31

[ अ ]स्ति ( for [ ए ]व ). $\tilde{N}_1$ $D_{4.13}$ [ अ ]पि; $\tilde{N}_2$ $B_{2-4}$ $D_{1-3}$ च; $B_1$ तु ( for [ अ ]स्ति ). $Ś_1$ $D_8$ न चैव लज्जसे सीतां ; $Ś_2$ नापि लज्जयसे सीतां; $D_{12}$ नाभिलज्ज ** सीतां. —$^{d}$ ) Ś Ñ V B $D_{2.3.5.6.8-10.12}$ T $G_3$ चौरवद् ; $D_{13}$ चौर्येण ( for चोरवद् ). Ś $D_{8.12}$ त्वं प्रकर्षयन् ; $B_1$ $D_7$ $G_1$ चापकर्षतः ( for व्यपकर्षतः ). $D_1$ चौरत्वादपकर्षतः; $D_4$ चौरकर्मप्रकर्षतः.

18 $G_2$ om. up to स्या in $18^{b}$ ( cf. v.l. 16 ). —$^{b}$ ) V $B_3$( marg. also as in text ) [ अ ]पहृता ; $B_2$ संहृता ; $D_{4.13}$ कर्षिता ( for धर्षिता ). V बलात्त्वया ( by transp. ) ( for त्वया बलात् ). $B_4$ सा वै पाप हृता बलात्. —$^{c}$ ) Ś $B_1$ $D_{1.2.8.12}$ त्वं ; $D_3$ तं ( for तु ). $\tilde{N}_1$ $D_{13}$ तु हतं; $D_4$ निहितं; $M_2$ सखरं ( for तु खरं ). $\tilde{N}_2$ V( $V_2$ lacuna except पश्येस् ) $B_{2-4}$ खरं तं( $V_1$ त्वं; $V_3$ $B_3$ त्वद्- )भ्रातरं पश्येस्. —$^{d}$ ) $M_5$ तथा ( for तदा ). Ś $B_4$ $D_{3.8.9.12}$ हतं; $\tilde{N}_1$ $D_4$ खरं ; $D_{13}$ चिरं ( for हतः ). —For $18^{cd}$, $T_{2.3}$ subst. :

3016* पौरुषं सकलं स्यात्ते जनाः संकीर्तयन्ति च ।

19 $^{ab}$ ) $\tilde{N}_2$ V $B_{2-4}$ त्वं ( for [ अ ]सि ). $\tilde{N}_1$ $D_4$ दुष्टात्मा; $\tilde{N}_2$ $V_1$ $B_{2-4}$ दुर्बुद्धे; $V_{2.3}$ दुर्बुद्धिश् ; $D_1$ दुरात्मंश् ; $D_{7.9-11}$ मंदात्मंश् ( for दुष्टात्मंश् ). $G_2$ दिष्ट्यासि चक्षुर्विषयमागतोस्यद्य दुर्मते ( unmetric ). —After $19^{ab}$, $M_5$ ins. :

3017* चक्षुर्विषयमागम्य न जीवन्प्रतियास्यसि ।

—After 19, $\tilde{N}_2$ $V_{1.2}$ $B_{2-4}$ ins. :

3018* पश्यतां सर्वयोधानां प्रसह्य रणमूर्धनि ।

[ $B_3$ प्रसज्य ( for प्रसह्य ). $V_2$ -कर्मणि ( for -मूर्धनि ). ]

20 $V_3$ om. 20. —$^{a}$ ) $D_5$ $T_1$ $G_3$ मत्सायकैश् ( for ते मच्छरैश् ). $B_{1.2}$ $D_5$ भिन्नं; $D_{13}$ तीक्ष्णैः; $G_2$ भिन्नः ( for छिन्नं ). $T_3$ अद्य मच्छरसंछिन्नं. —$^{c}$ ) $B_1$ क्रव्यादश्चोप-; $D_{13}$ °दोप्यप- ( for क्रव्यादा व्यप- ). $D_1$ क्रव्या ** दकर्षंतु ( sic ). —$^{d}$ ) Ś $D_{8.12}$ भूमि- ( for रण- ). Ñ V B $D_{4.13}$ -पांसु ( $\tilde{N}_1$ $B_{1.4}$ $D_{4.13}$ °शु )भिः; $D_{1-3.6.9}$ -पांशुषु ( for -पांसुषु ).

21 $^{a}$ ) $T_{2.3}$ $M_5$ निकृत्य ( for निपत्य ). $Ś_1$ $D_8$ ते क्रुद्धाः ; $Ś_2$ Ñ V $B_{1.2}$ $D_{1.2.12.13}$ ते गृध्राः( by transp. ); $B_4$ च गृध्राः ; $D_3$ गृध्राश्च ( for गृध्रास्ते ). $B_3$ नित्यं शिरसि ते गृध्राः ; $D_4$ निपतन्नुरसि गृध्राः. —$^{b}$ ) $D_{10}$ ( in marg. ) शरैः ( for क्षितौ ). $\tilde{N}_1$ $D_{4.13}$ सुप्तस्य ( for क्षिप्तस्य ). $B_4$ रावणं ; $D_7$ $G_{1.2}$ सायकैः; $M_{1.2}$ राक्षस ( for रावण ). —$^{c}$ ) Ś $D_{1-3.12}$ गात्राद्; $\tilde{N}_1$ $D_{13}$ गात्रे; $\tilde{N}_2$ V $B_{2.3}$( marg. also as in Ś ) $M_2$ हृष्टा; $B_1$ $D_4$ गात्रं( sic ); $B_4$ हत्वा ; $D_8$ ज्ञात्वा ; $T_2$ $G_3$ हर्षाद् ; Cm.g.t as in text ( for तर्षाद् ). —$^{d}$ ) $M_3$ Cg शर-; Cm.k.t as in text ( for बाण- ). $B_4$ -[ उ ]क्षितं ; $G_1$ $M_{2.5}$ -[ उ ]द्धृतं ; Cm.g.k.t as in text ( for -[ उ ]त्थितम् ). Ś $\tilde{N}_1$ $B_1$ $D_{1-4.8.9.12.13}$ बाणशल्यांतरे स्थितं ( Ś $D_{4.8.12.13}$ °ताः ).

22 $^{b}$ ) $B_3$ $D_{6.13}$ च ( for ते ). Ś $B_1$ $D_{1-3.8.12}$ स्वपतस्तव ; $M_2$ स्वपतः क्षितौ ( for पतितस्य ते ). —$^{c}$ ) $D_{5.7.10.11}$ T $G_1$ M [ आं ]त्राणि. $Ś_1$ Ñ $V_{1.3}$ $B_{3.4}$ $D_{1-4.8.13}$ विहगा ; $Ś_2$ $D_{12}$ कवयो ( for पतगा ). $V_2$ $B_1$ उत्कर्षंतु च विहगा. —$^{d}$ ) Ñ V $B_{2-4}$ $D_{4.13}$ गरुत्मानिव पन्नगान् . —After 22, $D_7$ $G_{1.2}$ ins. :

3019* दृष्टोऽसि महतः कालाद्दिष्ट्या दृष्टिपथं गतः ।
अद्य क्रोधं विमोक्ष्यामि सीताहरणसंभवम् ।

23 $^{ab}$ ) $\tilde{N}_2$ V $B_{2-4}$ इत्युक्त्वा ( for इत्येवं ). Ś $D_{4.7.8}$ $T_{1.3}$ $G_1$ $M_3$ सं-; $B_3$ तु ( for स ). $\tilde{N}_2$ V $B_{2-4}$ तदा ( for वदन् ). $D_{12}$ धीरो ( for वीरो ). $D_{13}$ इत्युक्त्वा वचनं वीरो ( for $^{a}$ ). $\tilde{N}_2$ V $B_{2.4}$ transp. वीरो and रामः. $D_{13}$ -विसूदनः ( for -निबर्हणः ). —$V_3$ om. $23^{cd}$. —$^{c}$ ) Ś $D_8$ संयुगस्थं ; Ñ $V_2$ $D_{4.13}$ चमूमध्ये ; $V_1$ $B_{1-3}$ $D_{1-3.12}$ $M_2$ समूहस्थं ( for समीपस्थं ). —$^{d}$ ) $D_{1.8.12.13}$ अवाकिरन्. —After 23, Ś Ñ $V_{1.2}$ B $D_{1-4.8.12.13}$ ins. :

3020* तस्य क्रुद्धस्य समरे रामस्याक्लिष्टकर्मणः ।

[ $\tilde{N}_2$ $V_{1.2}$ $B_{3.4}$ transp. तस्य and क्रुद्धस्य. $B_1$ रामस्य ( for समरे ). $B_2$ क्रुद्धस्य समरे तस्य ( for the prior half ). $B_1$ वीरस्य ( for रामस्य ). ]

24 $D_{13}$ om. $24-26^{b}$. $D_1$ om. 24. —$^{b}$ ) $B_4$ $D_6$ $T_{2.3}$ $G_{1.2}$ हर्षं ( for हर्षश् ). $D_5$ शरवर्षश् ( for बलं हर्षश् ). $B_3$ बलवीर्यवतो युधि. —After $24^{ab}$, Ñ V $B_{2.3}$ ins. :

3021* वित्रेसुः सर्वभूतानि कालस्येव दिधक्षतः ।

[ $V_3$ -गात्राणि ( for -भूतानि ). ]

—$^{c}$ ) $V_{1.3}$ राघवस्योग्रवीर्यस्य. —$^{d}$ ) Ś $D_8$ च वध-; Ñ $V_{1.3}$ $B_{2-4}$ $D_4$ विजय- ( for निधन- ). $D_{12}$ शत्रु *** कांक्षिणः.

G. 6. 88. 30
B. 6. 103. 25
L. 6. 85. 31

प्रादुर्बभूवुरस्त्राणि सर्वाणि विदितात्मनः ।
प्रहर्षाच्च महातेजाः शीघ्रहस्ततरोऽभवत् ॥ २५
शुभान्येतानि चिह्नानि विज्ञायात्मगतानि सः ।
भूय एवार्दयद्रामो रावणं राक्षसान्तकृत् ॥ २६
हरीणां चाश्मनिकरैः शरवर्षैश्च राघवात् ।
हन्यमानो दशग्रीवो विघूर्णहृदयोऽभवत् ॥ २७
यदा च शस्त्रं नारेभे न व्यकर्षच्छरासनम् ।
नास्य प्रत्यकरोद्वीर्यं विक्लवेनान्तरात्मना ॥ २८
क्षिप्ताश्चापि शरास्तेन शस्त्राणि विविधानि च ।
न रणार्थाय वर्तन्ते मृत्युकालेऽभिवर्ततः ॥ २९
सूतस्तु रथनेतास्य तदवस्थं निरीक्ष्य तम् ।
शनैर्युद्धादसंभ्रान्तो रथं तस्यापवाहयत् ॥ ३०

इति श्रीरामायणे युद्धकाण्डे द्विनवतितमः सर्गः ॥ ९२ ॥

---

25 $D_{13}$ om. 25 (cf. v.l. 24).—$^{a}$) $B_1$ चास्त्राणि (for अस्त्राणि).—$^{b}$) $V_3$ विविधात्मनः (sic) (for विदिता°).—$^{c}$) Ś Ñ V B $D_{2.3.8.12}$ प्रहरंश्च; $D_1$ प्रहरन्स; $D_4$ प्रहारे च; $D_{7.9}$ $G_{1.2}$ प्रकर्षाच्च; Ck.t as in text (for प्रहर्षाच्च). $M_2$ महाबाहुः (for °तेजाः).—$^{d}$) Ś $D_{8.12}$ शीघ्रं; Ñ V $B_{2-4}$ $D_4$ लघु- (for शीघ्र-). Ś $D_{8.12}$ हृष्टतरो; $D_{2.4.5}$ $M_1$ -हस्तस्ततो; $D_6$ °करो (for -हस्ततरो). $D_5$ [ऽ]ब्रवीत् (for ऽभवत्). $B_1$ शीघ्रहस्तो महानभूत्.—After 25, Ñ V $B_{2-4}$ $D_4$ ins.:

3022* दृढप्रहारता चैव दूरपातस्तथैव च ।

[$D_4$ दृढप्रहाररतश्चैव (hypm.); G (ed.) सुदृढप्रहारश्चैव (for the prior half). $Ñ_1$ $V_2$ दूरपातित्वमेव च (for the post. half).]

26 $D_{13}$ om. 26$^{ab}$ (cf. v.l. 24). $V_3$ damaged from $^{a}$ up to त्म in $^{b}$.—$^{a}$) $B_3$ तानि (for [ए]तानि). $M_5$ शुभान्येव निमित्तानि.—$^{b}$) $Ś_1$ $D_{8.12}$ -हितानि; $Ś_2$ -हिताय; $B_3$ -महांति; $D_4$ -शतानि (for -गतानि). Ś $Ñ_2$ $B_1$ $D_{2.8.11.12}$ च (for सः). $B_3$(marg. also) विज्ञायात्मनि गतानि सः (hypm.).—$D_5$ om. 26$^{c}$–27.—$^{c}$) Ś $Ñ_1$ $V_2$ $D_{8.12}$ [अ]द्रवद्; $B_1$ [आ]ह्वयद्; $D_1$ [अ]भ्ययाद्; $D_4$ [अ]द्रहीद् (corrupt); $D_6$ T $G_2$ $M_5$ [अ]र्दयन् (for [अ]र्दयद्). $D_9$ भूय एवार्द्रहृदयो; $D_{13}$ °वाह्वयामास.—$^{d}$) Ś $D_{1-3.8.12}$ -[अं]तकः; $Ñ_2$ V B -[अ]धिपं (for -[अ]न्तकृत्). $Ñ_1$ $D_{4.13}$ राक्षसं सुमहाबलं($D_{13}$ °लः); $M_1$ रावणं निशितैः शरैः.

27 $D_5$ om. 27 (cf. v.l. 26).—$^{ab}$) $D_{1-3}$ हरिभिः (for हरीणां). $D_{1-3}$ सोश्म-; $D_6$ $T_{2.3}$ $G_1$ अश्म- (for चाश्म-). $M_2$ शस्त्रैश्च बहुभिर्घोरैः (for $^{a}$). $D_7$ $G_3$ -वर्षाच्च; $D_{13}$ -वर्षेण (for -वर्षैश्च). $D_{1-3}$ शरै रामेण चा($D_1$ वा)हवे; $M_1$ राघवस्य च सायकैः (for $^{b}$). Ś $D_{8.12}$ जवनैः पत्रिभिस्तीक्ष्णैः शरै राघवनोदितैः; $Ñ_2$ V B $D_4$ रामेण शरवर्षैश्च वानरैश्चाश्मवृष्टिभिः. ❀ Cm.g.t : राघवात् राघवस्य. Cg adds : विभक्तिव्यत्यय आर्षः; Ct adds राघवोन्मुक्तादिति वा. ❀—$^{c}$) Ś Ñ V B $D_{1-4.8.12.13}$ वध्यमानो.—$V_3$ damaged from $^{d}$ up to स्य in 28$^{c}$.—$^{d}$) $Ñ_1$ संघूर्ण-; $Ñ_2$ $V_{1.2}$ $B_{2-4}$ ($B_3$ *sup. lin.* also as in text) विभ्रांत-; $D_3$ निघूर्ण-; $D_4$ संभ्रांत-; $G_2$ विकीर्ण-; Cm.g.t as in text (for विघूर्ण-). $D_{13}$ विवर्णवदनोभवत्.

28 $V_3$ damaged up to $^{c}$ (cf. v.l. 27).—$^{a}$) $D_6$ तु (for च). $D_{6.9}$ $G_3$ $M_3$ नालेभे; Cr.m.g.k.t as in text (for नारेभे). Ś $Ñ_2$ $V_1$ B $D_{1-4.8.12}$ य($B_3$ त)थावत्स्रा($Ś_1$ $D_{2.8.12}$ °च्चा; $Ś_2$ °च्छ; $D_4$ °द)स्त्रमारेभे; $Ñ_1$ $V_2$ अथान्यदस्त्रमारेभे; $D_{13}$ ततो युधि समारेभे; $M_2$ यथा यथास्त्रमारेभे.—$^{b}$) Ś $D_{8.12}$ (with hiatus) अभ्यकर्षञ्; $Ñ_1$ $D_{13}$ विचकर्ष; $D_1$ व्यपकर्षन्; $D_{4.6.9-11}$ न($D_4$ स) चकर्ष; $M_2$ स विकर्षञ्; Cm.g as in text (for न व्यकर्षच्). $D_{12}$ समासनं (for शरासनम्).—$^{c}$) $D_{12}$ नासि (for नास्य). $B_1$ $D_3$ वीर्यैं (for वीर्यं).—$^{d}$) $D_6$ विच्छिन्नेन (for विक्लवेन).

29 $^{a}$) Ś $B_{1.2}$ $D_{1-3.8.12}$ ह्यपि; $Ñ_2$ $V_2$ $B_4$ अपि; $V_3$ $D_{9-11}$ चाशु (for चापि). $B_3$ विक्षिप्ता अपि ते बाणाः.—$^{c}$) $V_2$ $B_{1.3}$ $D_{1-3.5-7.9-11}$ $G_3$ Ck.t मरणार्थाय; $T_2$ रणार्थाय च; Cr.g as in text (for न रणार्थाय). $V_2$ $B_1$ $D_{2.3}$ कल्पंते (for वर्तन्ते). Ś $D_{8.12}$ मरणार्थमकल्पंत; $Ñ_1$ विजये नात्रकल्पंते; $Ñ_2$ $V_{1.3}$ $B_2$ नाकल्पंत रणार्थाय; $B_4$ नाकल्पत रणाच्चापि; $D_4$ विजयो नाभवत्तस्य; $D_{13}$ विजयाय न कल्पंते; $T_3$ न रणार्थेभिवर्तंते; $G_1$ न रणायाभि°; $G_2$ न रणार्थाः प्रव°; $M_2$ न रणाय प्रव°. ❀ Cv : रावणार्थाय रावणप्रयोजनाय छेदनभेदनार्थमिति यावत्; Cm: रावणार्थाय रावणस्यार्थाय निवृत्तये पराजयाय. ❀—$^{d}$) $T_3$ मृत्युं; Cm.g.k.t as in text (for मृत्यु-). Ś Ñ V B $D_{1-4.8.12}$ मृत्युकालाभि($Ś_1$ °ति)वर्तिनः($V_3$ damaged from भि up to प in 30$^{d}$); $D_{7.10.11.13}$ $G_2$ $M_2$ Ct °लोभ्य($D_{11.13}$ °भि)वर्तत($D_{13}$ °ते); $G_1$ °लेभिवर्तता; Cm.g मृत्युकालेऽभिवर्ततः (as in text).

30 $V_3$ damaged up to प in 30$^{d}$ (cf. v.l. 29).—$^{a}$) $D_{13}$ ततस् (for सूतस्). $B_3$ स (for तु). Ś $D_{8.12}$ व्यथितस्तेन; $B_1$ $D_{1-4}$ व्यथितस्तस्य; $B_3$(marg. also as in $B_1$) रथनेता च (for रथनेतास्य).—$D_5$ reads 30$^{b}$

# ९३

स तु मोहात्सुसंक्रुद्धः कृतान्तबलचोदितः ।
क्रोधसंरक्तनयनो रावणः सूतमब्रवीत् ॥ १
हीनवीर्यमिवाशक्तं पौरुषेण विवर्जितम् ।
भीरुं लघुमिवासत्त्वं विहीनमिव तेजसा ॥ २
विमुक्तमिव मायाभिरस्त्रैरिव बहिष्कृतम् ।
मामवज्ञाय दुर्बुद्धे स्वया बुद्ध्या विचेष्टसे ॥ ३

G. 6. 89. 0
B. 6. 104. 3
L. 6. 86. 3

*inf. lin.* in marg. —[b]) Ś Ñ $V_2$ B $D_{1-4.8.12.13}$ निश (D$_{2.3}$ °शा)म्य तं; $M_3$ Cg समीक्ष्य तं (for निरीक्ष्य तम्). —[c]) $Ñ_1$ $B_3$ $D_{4.7.13}$ शरैर् (for शनैर्). $Ñ_2$ $B_3$ स($Ñ_2$ सु)संभ्रांतो; $D_4$ च संभ्रांतो; $D_6$ $T_{2.3}$ अपक्रांतो; $D_{13}$ असंभ्रांतम्; Cg as in text (for असंभ्रान्तो). —[d]) $D_{13}$ अश्वांश्चापि (for रथं तस्य). ❀ Cg : अपवाहयत् अपावाहयत्. ❀ —For 30[cd], Ś $V_1$ $B_1$ $D_{1-3.8.9.12}$ $M_2$ subst.; while $B_3$ (in marg.) ins. after 30[ab]; whereas $D_7$ K (ed.) cont. after 3025* :

3023* तस्माद्रणादपोवाह रावणं लोकरावणम् ।

[ $M_2$ transp. तस्माद् and रणाद्. Ś $D_{8.12}$ अपावहद् (for अपोवाह). $D_{7.9}$ हतपौरुषं (for लोकरावणम्). ]

—Thereafter, Ś $V_1$ $B_1$ $D_{1-3.7-9.12}$ K (ed.) cont., while Ñ $V_{2.3}$ $B_{2-4}$ $D_{4.10.11.13}$ ins. after 30 :

3024* रथं तु तस्याथ जवेन सारथि-
निवार्य भीमं जलदस्वनं तदा ।
जगाम शीघ्रं समरान्महीपतिं
निरस्तवीर्यं पतितं समीक्ष्य ।

[ (l. 1) $B_2$ $D_{7.9-11}$ च; $D_1$ स (for तु). $D_4$ प्र-; $D_{11.13}$ om. (for [अ]थ). $Ñ_1$ ततस्य (for तस्याथ). —(l. 2) Ś $V_1$ $B_{1.4}$ $D_{2.3.8}$ निव($B_4$ °र्व)र्त्य; $D_1$ विवृत्य; $D_{12}$ निशम्य (for निवार्य). Ś $D_{8.12}$ तथा (for तदा). $Ñ_1$ $D_{4.13}$ निवर्तयित्वा जलदोपमं महत्($Ñ_1$ °पसस्वनं); $Ñ_2$ $V_{2.3}$ $B_{2.3}$ निवर्त्य ($B_2$ °वृत्य) तस्माज्जलवाह($B_2$ °दोघ)निः($Ñ_2$ $V_{2.3}$ नि)स्वनं ($B_3$ °नः). —(l. 3) $D_7$ भ्रमात्स (for जगाम). $D_{7.9-11}$ भीत्या (for शीघ्रं). $Ś_2$ $D_{1.11}$ स महान्; $B_1$ सहसा (for समरान्). Ś $D_{8.12}$ महात्मा; $Ñ_1$ $D_{4.13}$ अपाक्रमत्; $Ñ_2$ V $B_{2-4}$ ससंभ्रमः($B_3$ °मं); $B_1$ $D_{1-3}$ महामतिः (for महीपतिं). —(l. 4) Ś $B_1$ $D_{1-3.8.12}$ पराक्रमाधोमुखमध्यवस्य तं(Ś $D_8$ °मव्य [$D_8$ °मत्य]वस्थं; $D_2$ °मीक्ष्य तं स्थितं; $D_{12}$ °मव्यवस्य तं); Ñ V $B_{2-4}$ $D_4$ परिश्रमाधोमुखरावणे($D_4$ °णो)क्षितः($Ñ_1$ $V_2$ $B_3$ °मीक्ष्य रावणं; $V_3$ रा ∗∗∗∗ [damaged]; $B_4$ °रावणस्थितः); $D_{13}$ अधोमुखं वीक्ष्य च रावणं ततः. ]

—After 30, $D_7$K (ed., within brackets along with 3023* and 3024*) ins. :

3025* रामबाणविभिन्नाङ्गो रावणो राक्षसेश्वरः।
निरस्तविक्रमः संख्ये रणे श्रान्तः पपात सः।
सूतस्तु व्यथितं बाणैः स्यन्दनस्थं निरीक्ष्य तम्।

Colophon. —*Kāṇḍa name* : Ś $M_5$ om.; Ñ $B_{1.3.4}$ $D_{2.4.13}$ लंकाकांडे. —After Kāṇḍa name, $D_2$ ins. युद्धपर्वणि. —*Sarga name* : $Ś_1$ रथाक्षेपः; $Ś_2$ $D_{8.12}$ द्वैरथेनाक्षेपः; Ñ $V_{1.3}$ $B_4$ रथपर्यावर्तनं; $V_2$ रथाव∗∗∗ (illeg.); $B_1$ द्वैरथयुद्धं; $B_2$ रथप्रत्यावर्तनं; $B_3$ रावणस्य रणनिर्याणं; $D_{1-3}$ रावणाक्षेपः; $D_{4.13}$ रावणमो($D_4$ °णसंमो)हनं. —*Sarga no.* (figures, words or both) : $Ś_1$ $Ñ_1$ $V_3$ $B_{2.4}$ $D_{2.4.8.12.13}$ om.; $Ś_2$ 85; $Ñ_2$ $D_3$ 91; $V_1$ $D_9$ 87; $V_2$ illeg.; $B_{1.3}$ 84; $D_1$ 86; $D_{5-7}$ $T_1$ G $M_{3.5}$ 105; $D_{10.11}$ 104; $T_2$ 113; $T_3$ 117; $M_{1.2}$ 106; B (ed.) 103; G (ed.) 88. —After colophon, G $M_{1.2.5}$ conclude with श्रीरामाय नमः.

## 93

$Ś_1$ begins with रावण उवाच; $D_{12}$ with ॐ.

1 $Ś_1$ om. 1. —[a]) $D_5$ om. स तु मोहा. $Ś_2$ $Ñ_2$ $V_{1.2}$ B $D_{1-3.6.8.12.13}$ -संरब्धः; $Ñ_1$ $D_4$ -संनद्धः (for -संक्रुद्धः). —[b]) $Ś_2$ $D_{1-3.8.12}$ -नोदितः; $Ñ_2$ V $B_{2-4}$ -मोहितः; $B_1$ -दर्पितः; $D_{13}$ -देशितः (for -चोदितः). —$D_8$ om. 1[cd]. —[c]) $B_1$ $D_{2.3}$ क्रोधात् (for क्रोध-). $M_2$ -रक्तांत- (for -संरक्त-). $Ñ_2$ V $B_{2-4}$ क्रोधेन महताविष्टो. —[d]) $D_{13}$ त्विदम् (for सूतम्).

2 [a]) $Ñ_1$ $D_{4.13}$ गतसत्त्वम्; $M_2$ वीर्यहीनम् (by transp.); Cm.g.t as in text (for हीनवीर्यम्). $D_{4.13}$ इवावीर्यं; $M_5$ क्रियाशक्तं (for इवाशक्तं). —$D_5$ om. 2[cd]. —[c]) Ś $Ñ_2$ $V_2$ $B_1$ $D_{8.12}$ भीतं; $V_3$ $D_1$ $T_{2.3}$ $G_3$ भीमं (for भीरुं). $T_1$ damaged for मिवा. $Ś_1$ $B_2$ $D_{1.8.12}$ [अ]शक्तं; $Ś_2$ $M_5$ [आ]सक्तं; $B_3$ [अ]त्यर्थं (for [अ]सत्त्वं). —After 2[c], $G_3$ wrongly repeats 2[bc]. —[d]) $B_4$ स्वेन (for इव). $M_2$ मायया; Cm.g as in text (for तेजसा).

3 G (ed.) om. 3. —[a]) $B_{1.4}$ $D_2$ वियुक्तम् (for विमुक्तम्). $M_2$ विद्याभिर् (for मायाभिर्). —[b]) $B_4$ वह्नेर् (for अस्त्रैर्). $D_4$ अश्वैरवशो स्थितं. —[c]) $B_3$ अविज्ञाय (for अवज्ञाय). —[d]) Ś $Ñ_1$ $V_1$ $B_1$ $D_{1-4.8.12.13}$ स्व($D_4$ स्वं)बुद्ध्या किं; $Ñ_2$ $V_{2.3}$ $B_{2-4}$ स्वयं बुद्ध्या; $D_8$ त्वया बुद्ध्या (for स्वया बुद्ध्या). $Ñ_1$ $D_{13}$ विचेष्टितं; $B_2$ निविष्टसे (sic); $M_2$ किं विचेष्टसे (hypm.) (for विचेष्टसे).

G. 6. 89. 3
B. 6. 104. 4
L. 6. 86. 4

किमर्थं मामवज्ञाय मच्छन्दमनवेक्ष्य च ।
त्वया शत्रुसमक्षं मे रथोऽयमपवाहितः ॥ ४

त्वयाद्य हि ममानार्य चिरकालसमार्जितम् ।
यशो वीर्यं च तेजश्च प्रत्ययश्च विनाशितः ॥ ५

शत्रोः प्रख्यातवीर्यस्य रञ्जनीयस्य विक्रमैः ।
पश्यतो युद्धलुब्धोऽहं कृतः कापुरुषस्त्वया ॥ ६

यस्त्वं रथमिमं मोहान्न चोद्वहसि दुर्मते ।
सत्योऽयं प्रतितर्को मे परेण त्वमुपस्कृतः ॥ ७

न हीदं विद्यते कर्म सुहृदो हितकाङ्क्षिणः ।
रिपूणां सदृशं चैतन्न त्वयैतत्स्वनुष्ठितम् ॥ ८

निवर्तय रथं शीघ्रं यावन्नापैति मे रिपुः ।
यदि वाप्युषितोऽसि त्वं स्मर्यन्ते यदि वा गुणाः ॥ ९

---

4 b) Ś D8.12 स्वच्छंदम् ; B1.3 मच्छक्तिम् ; D2 मद्वीर्यम् ; D13 मत्तस्त्वम् ( for मच्छन्दम् ). —c) D6 T2.3 M3 शत्रोः ( for शत्रु- ). D5 T1 G3 -समक्षात् ( for -समक्षं ). Ś Ñ1 B1 D1.2.4.8.12.13 त्वयाद्य( Ñ1 D4.13 °या च ) शत्रुमध्यान्मे ; Ñ2 V B2-4 भवता शत्रुमध्यान्मे ; D8 अद्य त्वयारिमध्यान्मे. —d) Ś2 उपवाहितः ( sic ) ; D11 यमवाहीतः ( sic ) ; M2 अपवाह्यते ( for अपवाहितः ).

5 a) Ñ2 V2.3 B3.4 ह्यद्य ( by transp. ) ; G3 हि तु ( for [अ]द्य हि ). B3 श्लाघ्यं; D12 [अ]नाथं ( for [अ]नार्य ). —b) Ś Ñ2 V1.2 B D1.8.12 -समर्जि( D8 °र्चि )तं; D2 -समन्वितं ( for -समार्जितम् ). V3 D4.9-11.13 चिरकालमुपा( D4 °मवा )र्जितं. —V3 om. 5c-6. —c) D2 दर्पश्च ( for तेजश्च ). —d) G3 प्रख्यातिश्च ; Cv.m.g.k.t as in text ( for प्रत्ययश्च ). Ś1 D1.2.8 निपातितः ; Ś2 D12 निपातितं; B1 विमानितः ; D8 विपादितः ( for विनाशितः ). Ñ1 V2 D13 किमर्थमिह नाशितं; D4 किमिह नाशितं त्वया.

6 V3 om. 6 ( cf. v.l. 5 ). ☞ V1 missing from 6 up to 6.94.18c. —a) Ś V2 B1 D1-3.8.12 विख्यात- ( for प्रख्यात- ). —b) Ñ1 D4.13 राजपुत्रस्य; G ( ed. ) वंचनीयस्य ( for रञ्जनीयस्य ). —c) D2 -दृप्तोहं; D4.13 -लुब्धस्य ( for -लुब्धोऽहं ). —d) T2.3 कुपुरुषस् ; Cm.t as in text ( for कापुरुषस् ).

7 Ñ2 repeats 7ab after 7. —a) Ś1 Ñ2 ( second time ) B1 D1-3.8.12 कस्माद् ; Ś2 तस्माद् ; V2.3 B4 D5.10.11.13 Ct यत्त्वं ; G2 त्वयं ( sic ) ; Cg.k as in text ( for यस्त्वं ). Ś1 रामम् ( sic ) ; V2.3 B2.3 D9-11 कथम् ( for रथम् ). D5 इदं ( for इमं ). G1 मम रथं ; Ck.t as in text ( for रथमिमं ). Ś D8.12 बुद्ध्या ; Ñ2 ( second time ) V2.3 B1-3 D1-3 M2 युद्धात् ; B4 युद्धे ; Ck.t as in text ( for मोहात् ). —b) Ś1 नयस्व तत्र ; Ś2 Ñ2 ( second time ) V2.3 B1.2 D1-3.8.12 नयस्यन्यत्र( B2 °न्येन ); B3 अपनीय सु- ; B4 ( with hiatus ) इदं कर्षसि ; D5.10.11 G1 M1 न चे( D5 वो )द्वहसि ; M2 नयस्यंतेन ; Ck.t as in text ( for न चोद्वहसि ). Ñ1.2 ( first time ) D4.13 अपवाहितवानसि. —c) D9 प्रतिपन्नो ; T1 G3 परितर्को; Cg.t as in text ( for प्रतितर्को ). Ñ V3 B2-4 D4.13 सु( V3 B3 अ )-व्यक्तोयं प्रतर्को मे ; M2 सुव्यक्तं यत्प्रतर्को मे. —d) B2 ( m. also as in text ) उपस्थितः ; D11 पुरस्कृतः ; Cv.r.g.k.t as in text ( for उपस्कृतः ). —For 7cd, Ś B1 D1-3.8.12 subst. ; while Ñ1 ins. after 7 ; Ñ2 ins. after second occurrence of 7ab :

3026* परेणोपकृतो व्यक्तं तेन वध्योऽसि मे मतः ।

[ Ś1 D8 [अ]पकृतो; Ś2 Ñ1 D12 [अ]पहृतो( Ñ1 °तं ); Ñ2 [उ]पकृतं; B1 D2 [उ]पस्कृतो( B1 °तं ) ( for [उ]पकृतो ). Ś1 व्यर्थं; Ś2 व्यक्तस् ( for व्यक्तं ). ]

8 a) D5-7.9-11 Ct न हि तद्; T1 G3 न हितं; M3 न ह्येतद् ( for न हीदं ). D3 दृश्यते ( for विद्यते ). —b) Ñ2 B3 सुहृदं ( for सुहृदो ). Ś B1 D1-3.12 श्रेय( Ś2 moth eaten ) इच्छतः ; Ñ1 D4.13 T2.3 M2 हि( D13 कृ )तकारिणः; Ñ2 V2.3 B2-4 शुभकांक्षि( B4 °कारि )णः; D8 श्रेयमश्नुतः ( sic ); M1 [ऽ]मितकांक्षिणः; Cm as in text ( for हितकाङ्क्षिणः ). —c) Ś D8 यच्च; Ñ V2.3 B2.4 M3 ह्येतद्; B1 ह्यत्र; B3 ख्यातं; D1 त्वद्य; D2.3 ह्यद्य; D5 T1 G3 M5 चैव; D7.9-11 त्वेतद् ; D13 ह्येव; Cm as in text ( for चैतन् ). D4 विरूपाणां हि सदृशं. —d) M5 यत् ( for न ). G2 अनुष्ठितं; Cm.g.k as in text ( for स्वनुष्ठितम् ). Ś Ñ1 B1 D1-3.7-13 यत्त्वयैतद्( Ś B1 D8.12 त[ B1 य ]त्त्वयेदम )नुष्ठितं ; Ñ2 V2 B2-4 G1 M2 यत्त्वया( B4 त्वया मे; G1 त्वयैतत् ) समनुष्ठितं ; V3 यत्त्वया समुपस्थितं ; D4 ह्येतद्यत्त्वयैवमनुष्ठितं ( hypm. ).

9 b) Ś2 D12 नायाति ; Ñ1 D1.4-6.9.13 T G M1.3.5 नोपैति ; Ñ2 V2.3 B4 D2 नाभ्येति ; B2.3 नात्येति ( for नापैति ). Ñ1 D4 नो ( for मे ). D5 पितुः ( for रिपुः ). —Ś D8.12 om. 9cd. —cd) D5-7.10.11 T1 G3 M3.5 Cr.m.g.t वाप्युषितो; G1 नाध्युषितो ( for वाप्युषितो ). D5.6 T1.2 M3.5 वासि; T3 वास्ते; G1 वास्सी ( sic ); G3 वापि ; Cr as in text ( for ऽसि त्वं ). Ñ1 B1 D1.3.13 G2 न व्यथि( B1 D3 व्युत्थि )तो वासि( D1 °द्यासि ; D13 °*स्मि ); Ñ2 V2.3 B2-4 न व्यथि( V2.3 B4 व्युत्थि )तः स्यास्त्वं; D2 नाभ्युत्थितश्चासि ; D4 न व्युत्थितं चास्मि ; M1 ह्युपस्कृतो नासि; M2 न ह्युद्धृतं वाक्यं ( for वाप्युषितोऽसि त्वं ). Ñ1 D13 नो; T1 G1.3 Ck.t मे ; Cr.m as in text ( for वा ). Ñ2 D4.7.10.11 T3 G2 M1.2.5 स्मर्यते( D4 °से ) यदि मे( D4 नो; D7 G2 M5 वा ) गुणः( M2 सौहृदं ) ( for d ). D9 यदि न व्यथते बुद्धिस्तव स्वस्ताधमाद्य वै.

# ९७

G. 6. 92. 36
B. 6. 108. 1
L. 6. 90. 1

अथ संस्मारयामास राघवं मातलिस्तदा ।
अजानन्निव किं वीर त्वमेनमनुवर्तसे ॥ १
विसृजास्मै वधाय त्वमस्त्रं पैतामहं प्रभो ।
विनाशकालः कथितो यः सुरैः सोऽद्य वर्तते ॥ २
ततः संस्मारितो रामस्तेन वाक्येन मातलेः ।
जग्राह स शरं दीप्तं निश्वसन्तमिवोरगम् ॥ ३
यमस्मै प्रथमं प्रादादगस्त्यो भगवानृषिः ।
ब्रह्मदत्तं महद्बाणममोघं युधि वीर्यवान् ॥ ४
ब्रह्मणा निर्मितं पूर्वमिन्द्रार्थममितौजसा ।
दत्तं सुरपतेः पूर्वं त्रिलोकजयकाङ्क्षिणः ॥ ५

## 97

Ś1 missing for Sarga 97 (cf. v.l. 6.93. 13). Ñ1 V1.3 B2–4 D3.4.9 cont. the previous Sarga. D12 begins with ॐ. —Before 1, V2 B1 ins.:

3075* ततो युद्धपरिश्रान्तं समरे चिन्तया स्थितः ।
रावणस्याग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ।

**1** T1 damaged from $1^a$ up to प्र in $2^b$. V3 damaged from मास in $^a$ up to व in $^d$. —$^b$) T3 तथा; M1 रणे (for तदा). Ś2 D1.2.8–13 मातली (D8 तल्लीला) राघवं तदा; V2 B1 मातली रघुनंदनं. —$^c$) B4 न जानन्निव. Ś2 D12.13 त्वं (D13 मां) वीर; D8 वीर त्वं (for किं वीर). —$^d$) Ś2 D8.12 किमेवम्; Ñ1 V1 B1.4 D1.4.7.13 M2 त्वमेवम्; D2 किमेनम् (for त्वमेनम्). Ś2 Ñ1 B1 D1.3.8.12.13 अभि-; D2 अति- (for अनु-). —After 1, Ñ V1.3 B2–4 D4.13 M2 ins.:

3076* अद्य जन्म कृतार्थं ते भविष्यति महाबल ।
राक्षसेन्द्रं दुरात्मानं हत्वैनं रावणं रणे ।
अद्य वीर सुयुद्धं ते दृष्ट्वा दिव्येन चक्षुषा ।
वृतो देवर्षिभिः श्रीमान्सुप्रीतोऽस्तु पितामहः । 
अद्य देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । [5]
निर्भया विचरिष्यन्ति त्वत्कृतेन नरोत्तम ।

[ (l. 1) Ñ2 यथार्थं; V1.3 B4 यथावत् (for कृतार्थं). Ñ1 D4.13 M2 नृपात्मज (for महाबल). —(l. 2) M2 हत्वेमं. Ñ1 D4.13 M2 राम रावणं (for रावणं रणे). —(l. 3) V1 वीर्यं प्रबुद्धं; D13 वीर सुयुद्धे (for वीर सुयुद्धं). B2 दिव्यादिव्येन (for दृष्ट्वा दिव्येन). —V3 damaged from दिव्येन up to the prior half of l. 4. —(l. 4) B4 ततो (for वृतो). Ñ1 V3 B4 D4 तु; V1 B2 D13 च (for ऽस्तु). —(l. 5) D4 देवताश्च (for अद्य देवाः). —(l. 6) Ñ1 D4.13 M2 त्वत्कृते मनुजाधिप (for the post. half). ];

while D3 ins.:

3077* कालपक्वो गतश्रीक एष तिष्ठति रावणः ।
पातयास्य शिरः क्षिप्रं पक्वं तालफलं यथा ।

**2** T1 damaged up to प्र in $2^b$ (cf. v.l. 1). —$^a$) Ñ1 D4.7.9 G1 M1.2 [अ]स्य; B1 D2 [अ]स्मिन्; Cm.t as in text (for [अ]स्मै). Ś2 D8.12 वधायेदं; B2 वधार्थाय (for वधाय त्वम्). V3 विसृ******म् (damaged). —$^b$) Ñ1 B2 शस्त्रं (for अस्त्रं). Ś2 Ñ2 V B1 D2.3.8.12.13 विभो; D1 महत् (for प्रभो). —$^c$) B1 -हेतुः; D7 marg. (for -कालः). Ś2 B3 D1.3.8.12 प्रथितो (for कथितो). G1 विनाशः कथितो राम. —$^d$) Ś2 D8.12 अभि-; B1 D1–3.6 T2.3 G1 M5 सोस्य; G2 सोति- (for सोऽद्य). —For $2^{cd}$, Ñ V1.3 B2.4 D4.13 subst.; while B3 ins. (within brackets) after 2:

3078* विनाशो निर्मितो ह्यस्य स्वयमेव स्वयंभुवा ।
[ Ñ1 D4.13 पूर्वम् (for स्वयम्). ]

—Thereafter all the above MSS. cont.; while M2 ins. after 2:

3079* उत्तमाङ्गं न चैतस्य छेत्तव्यं राघव त्वया ।
नैष मूर्ध्नि प्रभो वध्यो वध्य एव हि मर्मसु ।

[ (l. 1) B2 द्वैगुण्यं (sic); B3 (*sup. lin.* also; orig. as above) नोदरं (for छेत्तव्यं). —(l. 2) B3 M2 नैव. M2 शीर्षे (for मूर्ध्नि). V1.3 हतो (for प्रभो). Ñ2 V3 M2 एष (for एव). B3 स्व- (for हि). Ñ1 D4.13 वधो नैवास्य (D4 °स्तु) शीर्षे तु मर्मवध्यो निशाचरः. ]

**3** $^a$) Ś2 D8.12 स्मारितस्तेन रामोसौ. —$^b$) Ñ2 V1 सारथेः (for मातलेः). —$^c$) Ñ2 तीव्रं (for दीप्तं). B3 शरसुदीप्तं (for स शरं दीप्तं). —$^d$) T1 damaged from सन्त up to न्द्रार्थं in $5^b$. Ś2 Ñ2 V B D1.6–9.12.13 निःश्वसंतम्. D4 महोरगं.

**4** T1 damaged for 4 (cf. v.l. 3). —$^a$) Ñ2 V1.3 B3 (before corr.; after corr. *sup. lin.* also as in text).4 यदस्मै; D9–11 यं तस्मै (for यमस्मै). —$^c$) D4 ब्रह्मदंडं. Ś2 Ñ1 V2 B1 D1–4.6.8.12.13 T2.3 M2.3.5 महाबाणं; Ñ2 V3 B2–4 स तं बाणं; V1 परं बाणं (for महद्बाणम्). —$^d$) D5 आदाय (for अमोघं). Ś2 D8.12 जग्राह विधिवद्धु; Ñ1 V1.3 B2.3 (orig.; *sup. lin.* also as in V2).4 जग्राह परवीरहा; V2 B1 D1–3.13 जग्राह युधि तद्वधे; T3 अमोघं शत्रुघातिनं.

**5** T1 damaged up to न्द्रार्थं in $5^b$ (cf. v.l. 3). —$^a$) Ñ1 D4 निर्मितं ब्रह्मणा (by transp.). D11 तत्र (with hiatus) (for पूर्वम्). —Ñ1 D4 om. (hapl.) $5^{bc}$. —$^b$) D1.12 T3 अमितौजसः (D1.13 °सं). Ñ2 V B2–4 इंद्रस्यार्थेमि-

यस्य वाजेषु पवनः फले पावकभास्करौ ।
शरीरमाकाशमयं गौरवे मेरुमन्दरौ ॥ ६
जाज्वल्यमानं वपुषा सुपुङ्खं हेमभूषितम् ।
तेजसा सर्वभूतानां कृतं भास्करवर्चसम् ॥ ७
सधूममिव कालाग्निं दीप्तमाशीविषं यथा ।
रथनागाश्ववृन्दानां भेदनं क्षिप्रकारिणम् ॥ ८
द्वाराणां परिघाणां च गिरीणामपि भेदनम् ।
नानारुधिरसिक्ताङ्गं मेदोदिग्धं सुदारुणम् ॥ ९
वज्रसारं महानादं नानासमितिदारुणम् ।
सर्ववित्रासनं भीमं श्वसन्तमिव पन्नगम् ॥ १०
कङ्कगृध्रबलानां च गोमायुगणरक्षसाम् ।
नित्यं भक्षप्रदं युद्धे यमरूपं भयावहम् ॥ ११

G. 6. 92. 50
B. 6. 108. 11
L. 6. 90. 12

तौजसः( V3 B3.4 °सा ) ; B1 इंद्रायासिततेजसे. —$^{d}$ ) Ś2 Ñ1 B1 D3.4.6.8 त्रैलोक्य-( D4 °क्ये ); B2 त्रिलोके (for त्रिलोक- ). Ñ1 D4.6 -जयकांक्षिणा; D2 -वधकांक्षिण: ; D7 °हेतवे ( for -जयकाङ्क्षिणः ). D13 त्रिलोकं जयकांक्षिणैः( sic ).

**6** $^{a}$ ) Ñ1 V2 D4 पुंखे तु; D13 वेगेन (for वाजेषु ). Ñ2 V1.3 B2–4 पवनो यस्य( Ñ2 V1.3 °त्र ) पुंखे तु. —$^{b}$ ) B2 मूले ; T2 पार्श्वे; Cg as in text ( for फले ). V1 D7.13 भास्करपावकौ( by transp. ). —$^{c}$ ) B4 आकाशसमं ( for °मयं ). Ñ1 ( m. also as in text ) D4 शरीरे चा( Ñ1 °रम )ग्निर्भगवान्. —T1 damaged from $6^{d}$ up to दीप्तमाशी in $8^{b}$. —$^{d}$ ) D12 T2.3 G3 गौरवं. D6 -मंदरं. —After 6, Ś2 Ñ1 V2 B1 D1–4.8.12.13 ins. ; while Ñ2 V1.3 B2.4 ins. after $7^{ab}$; whereas B3 ins. for the first time in marg. after 6, repeating it after $7^{ab}$ :

3080* पर्वस्वपि च विन्यस्ता लोकपाला महौजसः ।
धनदो वरुणश्चैव पाशहस्तस्तथान्तकः ।

[ ( l. 1 ) Ñ2 V1.3 B2.3( second time ) प्रतिपर्व च; B4 प्रति पर्वणि ( for पर्वस्वपि च ). Ñ1( marg. also as above ) संभवंति भवाभवौ; Ñ2 भगवंतो जयावहाः ; V3 ये भवंति तवाभवाः; B2.3( second time ).4 ये भवंति भयावहाः( B2 °नकाः ) ( for the post. half ). —( l. 2 ) Ś2 D8 दानवो( sic ); D12 वासवो ( for धनदो ). Ñ V1.3 B2.3 ( second time ).4 D1.2.4.13 वज्री ( for चैव ). B3( first time ) शब्दभेदी ( for पाशहस्तस् ). Ñ2 V1 B4 कृतांतकः ( for तथान्तकः ). ]

**7** T1 damaged for 7 ( cf. v.l. 6 ). —$^{a}$ ) D1 जज्वालमानं च( hypm. ) ( for जाज्वल्यमानं ). —$^{b}$ ) D4.13 भुवि( D13 हेम- ) भूषणं ( for हेमभूषितम् ). Ñ1 सुपुंखसुविभूषणं. —After $7^{ab}$, Ñ2 V1.3 B2.4 ins., B3 repeats 3080*. —$^{d}$ ) B2 भास्वर- ( for भास्कर- ). Ś2 B3 D12.13 -तेजसा ; V2 B1.4 D7 -वर्चसा( B4 °सां ) ( for -वर्चसम् ). D8 भास्करस्य च तेजसा.

**8** T1 damaged up to दीप्तमाशी in $8^{b}$ ( cf. v.l. 6 ). —$^{b}$ ) Ś2 V2 B1 D1–3.8.12.13 दीप्यमानं रविं यथा; Ñ2 V1.3 B2–4 M2 लेलिहानमिवोरगं; D7.9–11 G1.2 दीप्तमाशीविषोपमं. —Ś2 D8.12 om. $8^{c}$–$9^{b}$. —$^{c}$ ) Ñ2 V1 B2.3( orig. ; *sup. lin.* also as in text ).4 D6.7.9–11 नर- ; D5 T1 M पर-; G3 वर- ( for रथ- ). Ñ1 D4 परनाराच- ; V3 नृनागरथ- ( for रथनागाश्व- ). Ñ2 -वृक्षाणां ( for -वृन्दानां ). —$^{d}$ ) D4.13 -कारणं ( for -कारिणम् ).

**9** Ś2 D8.12 G ( ed. ) om. $9^{ab}$ (for all except G[ ed. ], cf. v.l. 8 ). Ñ1 D4 om. 9–$11^{b}$. —$^{a}$ ) Ñ2 रावणं; V1.3 D3 दारणं ; B2–4 दारुणं; G3 वीराणां; M5 शराणां; L ( ed. ) वारणं; Cr.m.g.t as in text ( for द्वाराणां ). D6 पर्वतानां; Cr as in text ( for परिघाणां ). D1 om. च ( subm. ). V2 B1 परिघाणां सहस्राणां. —$^{b}$ ) Ñ2 illeg. ; V1.2 B1.3 D1–3.13 चैव; V3 B2 D5.7.9.10 G1.2 M1.3.5 चापि ; B4 असि- ; D6 अधि- ; D11 चासि- ( for अपि ). —After $9^{ab}$, M3 ins. :

3081* शोषणं सागराणां च कम्पनं पृथिवीतले ।

—V3 damaged for $9^{c}$. —$^{c}$ ) Ñ2 V1.2 B2–4 D2.6.7.9–11.13 T2.3 M1 -दिग्धांगं ( for -सिक्ताङ्गं ). —$^{d}$ ) T1 damaged from दिग्धं up to गोमायुग in $11^{b}$. Ñ2 V1.3 B2–4 मेदःसिक्तं ( for मेदोदिग्धं ). D9 मेदोदिग्धांगं दारुणं ( unmetric ).

**10** Ñ1 D4 om. ; T1 damaged for 10 ( for both, cf. v.l. 9 ). Ś2 Ñ2 V1.3 B2–4 D8.9.12.13 om. ( hapl. ) $10^{ab}$. G2 reads $10^{ab}$ after 11. —$^{a}$ ) V2 B1 चक्रनाभं ; D1–3 वज्रनाभं ( for वज्रसारं ). —$^{b}$ ) D5 G2 M1 Cg.t -दारणं ; Ck as in text ( for -दारुणम् ). V3 B1 नानाशनिविदारणं. —M5 om. $10^{cd}$. —$^{d}$ ) V3 B1 सपक्षम् ( for श्वसन्तम् ). G ( ed. ) लेलिहानमिवोरगं. —After 10, Ś2 D1–3.8.12.13 ins. :

3082* दुराधर्षं दुर्विषहं सर्वदुष्टविनाशनम् ।
आशीविषसमस्पर्शं वेगसम्पन्नमर्चितम् ।

[ ( l. 1 ) Ś2 D1.8.12 दुरापा( D1 °धा )रं ( for दुराधर्षं ). D1 -विघातनं ( for -विनाशनम् ). —( l. 2 ) Ś2 D8.12 ऊर्जितं ( for अर्चितम् ). D8 वेगसंपत्समन्वितं ( for the post. half ). ]

**11** Ñ1 D4 om. $11^{ab}$; T1 damaged up to गोमायुग in $11^{b}$ ( for both, cf. v.l. 9 ). —$^{a}$ ) Ś2 V2 B1 D1–3.8.12.13 काक- ( for कङ्क- ). Ś2 D8.12 -विहंगानां; Ñ2 V1.3 B2–4 D6 T2.3 -बलाकानां; V2 B1 D1.9–11 -बकानां च; D2.3 -वटानां च; Cg as in text ( for -बलानां च ). —$^{b}$ ) Ś2 B1 D6.12 T2.3 -मृग- ; B3( *sup. lin.* also; orig. as in text ) D1–3.8 -वृक- ; D13 -वृष- ( for -गण- ). —$^{c}$ ) V3 B3.4

G. 6. 92. 0
B. 6. 108. 12
L. 6. 90. 13

नन्दनं वानरेन्द्राणां रक्षसामवसादनम् ।
वाजितं विविधैर्वाजैश्चारुचित्रैर्गरुत्मतः ॥ १२
तमुत्तमेषुं लोकानामिक्ष्वाकुभयनाशनम् ।
द्विषतां कीर्तिहरणं प्रहर्षकरमात्मनः ॥ १३
अभिमन्त्र्य ततो रामस्तं महेषुं महाबलः ।
वेदप्रोक्तेन विधिना संदधे कार्मुके बली ॥ १४
स रावणाय संक्रुद्धो भृशमायम्य कार्मुकम् ।
चिक्षेप परमायत्तस्तं शरं मर्मघातिनम् ॥ १५
स वज्र इव दुर्धर्षो वज्रबाहुविसर्जितः ।
कृतान्त इव चावार्यो न्यपतद्रावणोरसि ॥ १६

D1.6.9-12 नित्य- (for नित्यं). Ñ1 D4 भयप्रदं; B1 D6.8 भक्ष्यप्रदं (for भक्षप्रदं). —$^{d}$) Ś2 Ñ2 V1 B2.3 D6 यमरूप-; T2 महद्रूपं; Cg as in text (for यमरूपं). —V3 damaged from यावहम् up to वसा in 12$^{b}$. M2 दुरासदं; Cg as in text (for भयावहम्).—After 11, G2 reads 10$^{ab}$.

**12** V3 damaged up to वसा in 12$^{b}$ (cf. v.l. 11). G (ed.) om. 12.—$^{a}$) B3 (before corr. as in text; after corr. *sec. m.*) नंदंतं; D1.13 नर्दनं; D3 नंदतां; T1**नं (damaged) (for नन्दनं). D1 मानवेंद्राणां.—$^{b}$) B3 G1 यम(B3 चाव)सादनं; M1 शोकवर्धनं.—Ś2 D8.12 om. (hapl.?) 12$^{c}$–13$^{b}$. V2 B1 T2 om. 12$^{cd}$.—$^{c}$) V3 B3.4 D2.4 राजितं; D5 T1 नादितं; M2 योजितं; Cg as in text (for वाजितं). Ñ2 V1 B2-4 D2 पक्षैश् (for वाजैश्).—$^{d}$) T1 damaged from चित्रैर् up to रा in 14$^{a}$. B2 D13 -चित्रं; D6 -पत्रैर् (for -चित्रैर्). Ñ1 D4 हेमचित्रं दुरासदं. —After 12, M2 ins.:

3083* अनूपमेयं लोकेषु बाणं कुभयनाशनम्।

**13** Ś2 Ñ1 D4.8.12 om. 13$^{ab}$ (for Ś2 D8.12, cf. v.l. 12). T1 damaged for 13 (cf. v.l. 12). G1 om. 13–14. M2 transp. $^{ab}$ and $^{cd}$.—$^{b}$) V3(m. also as in text) इक्ष्वाकुकुलनंदनं; M2 इक्ष्वाकूणां यशस्करं.—$^{c}$) B2 प्रीतिज(after corr. m. °ह)ननं; D3 प्रीतिहरणं; M2 कीर्तिहंतारं (for कीर्तिहरणं).—V3 damaged for 13$^{d}$–14$^{b}$. —$^{d}$) Ś2 D6.8.9.12 T2 प्रकर्षकरम्.

**14** T1 damaged up to रा in 14$^{a}$ (cf. v.l. 12). G1 om. 14; V3 damaged for 14$^{ab}$ (for both, cf. v.l. 13).—$^{a}$) T2 तदा (for ततो).—$^{b}$) D7 स्वं (for तं). Ś2 V2 B1 D1-3.8.12.13 महाभुजः; T3 G3 M1 °बलं (for °बलः).—$^{c}$) G2 देव-; Ct as in text (for वेद-). Ñ1 D4 मंत्रेण (for विधिना).—$^{d}$) Ñ1 D4 कार्मुकोत्तमे.—After 14, Ñ V1.3 B2-4 D4.5.7.9-11 T G2.3 M ins.; while G1 ins. before 15:

3084* तस्मिन्संधीयमाने तु राघवेण शरोत्तमे।
सर्वभूतानि वित्रेसुश्चचाल च वसुंधरा।

[(l. 1) B2.4 D4 संधायमाने. D4 च (for तु). D4 शरोत्तमं. —(l. 2) D9-11 सं(D9 om. [subm.])त्रेसुश् (for वित्रेसुश्). Ñ V1.3 B2-4 D4 वित्रेसुः सर्वभूतानि; M1 damaged (for the prior half). V3 B3 प्र(B3 सं)चचाल.—T1 damaged from वसुंधरा up to इव in 16$^{a}$; V3 damaged from सुंधरा up to 15$^{b}$].

**15** T1 damaged for 15; V3 damaged for 15$^{ab}$ (for both, cf. v.l. 14). Before 15, G1 ins. 3084*. —$^{a}$) D5 G3 राघवोयं; M5 राघवोति-; Cg as in text (for रावणाय). D9 क्रुद्धो (subm.).—$^{b}$) Ñ1 D4 दृढम् (for भृशम्).—$^{c}$) Ñ B3 D4 परमामर्षी; V1.3 B2 M2 परमायस्तस्.—$^{d}$) D4 मर्मघातकं; M1 °भेदिनं (for °घातिनम्). B2 शरं मर्मविघातिनं; D7.9-11 शरं मर्मविदारणं.—For 15, Ś2 V2 B1 D1-3.8.12.13 subst.; B3 ins. l. 2 only after 15:

3085* स रावणाय तं वेगाच्चिक्षेप शरमुत्तमम्।
महावेगं महाघोषं गिरीणामपि दारणम्।

[(l. 1) Ś2 D8.12 वेगेन (for तं वेगाच्).—V2 B1 om. l. 2.—(l. 2) B3 D13 -घोरं (for -घोषं). Ś2 B3 D3 दारुणं.] —Thereafter all the above MSS. cont.; while Ñ V1.3 B2.4 D4 ins. after 15:

3086* स शक्रधनुषो मुक्तो हन्तुं रामेण रावणम्।
धूमपूर्वं प्रजज्वाल प्राप्य वायुपथं तदा।

[(l. 1) Ñ2 V1.3 B2-4 शत्रु- (for शक्र-). Ñ2 V1.3 B2-4 D1.3 -धनुषा. G (ed.) युक्तो (for मुक्तो). V2 B1 स सायको धनुर्मुक्तो (for the prior half). Ñ2 V1.3 B2.3(marg. also as above).4 हंतुं शत्रुं महात्मना (for the post. half). Ñ1 D4 शक्रस्य धनुषा युक्तस्तेन युक्तो महात्मना.—After l. 1, Ñ2 V1.3 B2-4 ins.:

3086(A)* संधितः परमास्त्रेण नियोज्य विसृतः शरः।

[Ñ2 V1 B4 संहितः; B2 सज्जितः (for संधितः).—V3 damaged from विसृतः up to the prior half of l. 2. V1 निशितः; G (ed.) निसृतः.]

—(l. 2) Ś2 D8.12 धूमपर्व (for धूमपूर्वं). Ñ1 D4 ज्वालामाली सधूमस्तु (for the prior half).—Ś2 D12 om. from the post. half up to 16$^{a}$. B3 तारापथं. Ñ1 V2 B1 D2.4.8.13 महद्; D1.3 महान् (for तदा).]

—Thereafter D13 further cont. 3088* and 3089*.

**16** T1 damaged up to इव in 16$^{a}$ (cf. v.l. 14). Ś2 D8.12 om. 16$^{a}$ (cf. v.l. 15).—$^{b}$) Ś2 V2 B1 D1-3.8.12 वज्रपाणि-; Ñ2 V1.3 B3 D5-7.10.11 T1 G M1.3.5 Cg.t वज्रिबाहु-; D13 रामबाहु-; Ck as in text (for वज्रबाहु-). M1 -विनिःसृतः.—$^{c}$) V3 चामर्षी; B2 दुर्धर्षो; D6 दुर्वार्यो; T2.3 चापूर्यो (for चावार्यो). Ś2

स विसृष्टो महावेगः शरीरान्तकरः शरः ।
बिभेद हृदयं तस्य रावणस्य दुरात्मनः ॥ १७
रुधिराक्तः स वेगेन जीवितान्तकरः शरः ।
रावणस्य हरन्प्राणान्विवेश धरणीतलम् ॥ १८
स शरो रावणं हत्वा रुधिरार्द्रकृतच्छविः ।
कृतकर्मा निभृतवत्स्वतूणीं पुनराविशत् ॥ १९

तस्य हस्ताद्धतस्याशु कार्मुकं तत्ससायकम् ।
निपपात सह प्राणैर्भ्रश्यमानस्य जीवितात् ॥ २०
गतासुर्भीमवेगस्तु नैर्ऋतेन्द्रो महाद्युतिः ।
पपात स्यन्दनाद्भूमौ वृत्रो वज्रहतो यथा ॥ २१
तं दृष्ट्वा पतितं भूमौ हतशेषा निशाचराः ।
हतनाथा भयत्रस्ताः सर्वतः संप्रदुद्रुवुः ॥ २२

G. 6. 92. 63
B. 6. 108. 23
L. 6. 90. 23

V2 B1 D8.12 कृतांतक इवावार्यो ; Ñ1 D4.13 अनिवार्यः कृतांतेन. —[d]) D6.13 निपतद्. Ñ2 V2 B1.4 D1.3.8.12 राक्षसोरसि (V2 B1 D3 °परि) (for रावणोरसि).

17 G (ed.) om. 17[ab]. —[a]) V3 damaged ; B4 वै सृष्टो; D4 विशिष्टो; D9 विकृष्टो; D13 निमग्नो (for विसृष्टो). Ś2 B1 D1–3.8.12 स निमग्नो महावीरः. —[b]) D3 marg.; D13 शत्रुक्षय- (for शरीरान्त-). D9–11 परः (for शरः). Ñ1 D4 शत्रुपक्षक्षयः शरः. —Ñ2 V1.3 om. (hapl.) 17[c] – 18[b]. —[c]) T2 चिच्छेद (for बिभेद). Ś2 B2–4 D1.2.8.12.13 तूर्णं; D3 पूर्णं; G (ed.) चैव (for तस्य). V2 B1 विवेश हृदये तूर्णं. —M1 damaged from 17[d] up to रुधिरा in 18[a]. —[d]) T1 damaged from त्मनः up to कृत in 19[b]. D1–3 महास्वनः (for दुरात्मनः).

18 T1 damaged for 18 ; Ñ2 V1.3 om. 18[ab] ; M1 damaged up to रुधिरा in 18[a] (for all, cf. v.l. 17). —[a]) Ś2 D8.12 रुधिरांगः ; B2.3 D2.4 रुधिरार्द्रः. D2 प्रवेगेन ; G2 सवेगो (subm.) (for स वेगेन). D13 रुधिराक्तस्य वेगेन. —[b]) Ś2 V2 B1.3 (marg. also; orig. as in text) D1.3.8.12.13 रावणांतकरः ; D2.7.9–11 M2 शरीरांतकरः. —[c]) B2–4 [अ]हरत् (for हरन्). D13 हृतप्राणो. —[d]) Ś2 D8.12.13 धरणीतले. Ñ2 V1.3 B2–4 भित्त्वा चैव क्षितिं गतः.

19 T1 damaged up to कृत in 19[b] (cf. v.l. 17). —[a]) V2 B1 समरे; D13 रणे तु (for स शरो). Ñ V1.3 B2–4 D4 भित्त्वा. —[b]) Ś2 V2 D1.2.8.12 लोहितार्द्री-(V2 °र्द्र-); B2 D13 G2 M3 रुधिरार्द्री-(D13 °क्त-) (for रुधिरार्द्र-). B1 लोहिताकृतविच्छविः (sic). —[cd]) V2 B1 निवृत्ताशु; D1 निवृत्तस्तु (for निभृतवत्). D13 कृतकर्मणि स्ववव्रते (hypm.) (for [c]). Ś2 स मूलं; V2 B1 D1.9 स तूणं ; D2.3.8.13 स्वतूणं ; D6.10.11 स तूर्णीं ; D12 स सर्गं (for स्वतूर्णीं ). D5.6 T1.3 G2 M3.5 पुनरागतः (D5 T1 M3 °मत्) (for पुनराविशत्). D4 समुद्रतोयमुपस्पृश्य तूणं पुनराविशत्. —For 19[cd], Ñ V1.3 B2–4 subst. ; while D3 ins. after 19[ab] :

3087* समुद्रं समुपस्पृश्य स तूणं पुनरागतः ।

[ Ñ1 V3 B2.4 D3 समुद्रे. Ñ2 समनुस्पृश्य. Ñ1 V3 B2.3 स्व- (for स). Ñ पुनराविशत् ; V3 B2.4 समुपा(B2.4 पुनरा)-

गमत् (for पुनरागतः). D3 शुचिर्भूत्वा समाहितः (for the post. half).]

20 [a]) M2 चैव ; Cg as in text (for हस्ताद्). B1–3 धु (B2.3 ध्र)तं चाशु; D1 हतस्यास्य; G1.2 च्युतं स्वा (G2 चा)-शु (for हतस्याशु). Ñ1 D4.13 रावणस्य ततो हस्तात् (D13 कराचाशु); G (ed.) तस्य हस्तोद्धृतं चाशु. —[b]) V2 B1 तच्च; V3 धृत-; D9–11 चापि (for तत्स-). Ñ1 D4.13 सशरासनं (for तत्ससायकम्). —B1 om. 20[c]–21. —[c]) Ś2 Ñ2 V B2–4 D1–3.8.12 प्राभ्रश्यत (for निपपात). V2 D1 समं (D1 महा-) प्राणैर्. —[d]) B2.3 D10.11 M1 भ्रश्यमानश्च (sic); B4 D9 भ्रम (D9 भ्राम्य) माणस्य; Cg as in text (for भ्रश्यमानस्य). Ś2 D8.12 जीवितं (for जीवितात्).

21 B1 om. 21 (cf. v.l. 20). M1 damaged for 21[a]. —[a]) D1.3 सः ; D2 च (for तु). Ñ1 D4.13 स गतासुर्गतश्रीको ; Ñ2 V B2–4 गतासु (B4 °यु)र्गतवेगोसौ. —[b]) M2 महाबलः (for °द्युतिः). Ś2 Ñ V B2–4 D1–4.8.12.13 राक्षसेंद्रो गत (Ś2 D2.8.12 हत; D1 महा) द्युतिः. —D13 om. 21[cd]. —[c]) Ś2 V2 B3 D1–3.8.12 सहसा (for स्यन्दनाद्). T1 पपा*****मौ (damaged). —[d]) Ś2 D8.12 पुरा वृत्रो (for वृत्रो वज्र-). —T1 damaged from हतो up to निशा in 22[b]. —After 21, Ñ V B2–4 D4 ins. ; B1 ins. before 22; while D13 further cont. after 3086* :

3088* दशनल्वानुविस्तीर्णो रथोऽप्यस्य व्यशीर्यत ।
रावणस्य शरीरं तु पञ्चनल्वानुविस्तृतम् ।

[ (l. 1) Ñ1 -नल्वसु- ; V1.2 D4 -नल्वस्तु ; B1 -रुक्षस्तु ; B2.3 -नल्वः सु- (for -नल्वानु-). V3 दशनल्वांतसुस्तीर्णो ; D13 दशनल्वाणमास्तीर्य (sic) (for the prior half). B2 व्यदीर्यत; B4 विदीर्यत (for व्यशीर्यत). Ñ1 D13 रथोस्य निपपात ह; V2 B1 D4 रथोस्य (D4 °श्वस्तु) व्यवदीर्यत (for the post. half). —(l. 2) V2 D4 दश- (for पञ्च-). Ñ2 V1.2 B2 D4 -नल्व (B2 D4 °ल्वं)सु- (for -नल्वानु-). Ñ1 -विस्तरं (for -विस्तृतम्). B1 (orig.; marg. also as in B2) दशलक्षं तु विस्तृतं; D13 विशत्वं * विकीर्य च (for the post. half).]

—Thereafter D13 further cont. :

3089* पतमानो नगेन्द्राभः प्राकारमभिमर्दयन् ।

22 T1 damaged up to निशा in 22[b] (cf. v.l. 21). Before 22, B1 ins. 3088*. B2 repeats 21[d] in

G. 6. 92. 0
B. 6. 108. 24
L. 6. 90. 24

नर्दन्तश्चाभिपेतुस्तान्वानरा द्रुमयोधिनः ।
दशग्रीववधं दृष्ट्वा विजयं राघवस्य च ॥ २३
अर्दिता वानरैर्हृष्टैर्लङ्कामभ्यपतन्भयात् ।
हताश्रयत्वात्करुणैर्बाष्पप्रस्रवणैर्मुखैः ॥ २४
ततो विनेदुः संहृष्टा वानरा जितकाशिनः ।
वदन्तो राघवजयं रावणस्य च तं वधम् ॥ २५
अथान्तरिक्षे व्यनदत्सौम्यस्त्रिदशदुन्दुभिः ।
दिव्यगन्धवहस्तत्र मारुतः सुसुखो ववौ ॥ २६
निपपातान्तरिक्षाच्च पुष्पवृष्टिस्तदा भुवि ।
किरन्ती राघवरथं दुरवापा मनोहरा ॥ २७
राघवस्तवसंयुक्ता गगने च विशुश्रुवे ।
साधु साध्विति वागग्र्या देवतानां महात्मनाम् ॥ २८

place of $22^{b}$ wrongly.—$^{b}$) V3 damaged for निशाचराः.—$^{c}$) M3 -त्रस्ता: (for -त्रस्ताः).—$^{d}$) Ñ1 D4 वि- (for सं-). M5 सर्वे लंकां (for सर्वतः सं-). Ś2 V2 B1 D1–3.8.12.13 दुद्रुवुः सर्वतो दिशं (V2 B1 D1.12 °शः).—For $22^{cd}$, Ñ2 V1.3 B2–4 subst.:

3090* व्यद्रवन्त दिशः सर्वा वानरैरर्दिता रणे ।

[V3 रावणैर् (sic); B3 तैः शरैर् (for वानरैर्).]

—Then B2 cont.; while Ñ2 V3 B3.4 ins. after $23^{ab}$:

3091* हतेश्वरा रजोध्वस्ता हतभूयिष्ठवाहनाः ।

23 G (ed.) om. 23.—$^{a}$) Ś2 D8.12 T3 नं(D8 T3 न)दंतश्; D10.11 सर्वतश् (for नर्दन्तश्). V3 [अ]ति-; B1 D2.8 M3 [अ]पि; D13 [अ]धि- (for [अ]भि-).—After चाभि-, G2 reads erroneously $25^{bc}$ for the first time, repeating it in its proper place. Ś2 D1.3.7.8.12 G1.2 च; V B D2.13 ते; Ck.t as in text (for तान्). Ñ1 D4 नर्दमाना महाभागा.—$^{b}$) Ñ2 V1.2 B2 D5.10 M वानरान् (sic). Ś2 D8.12 द्रुत-; Ñ1 नग- (for द्रुम-).—After $23^{ab}$, Ñ2 V3 B3.4 ins. 3091*.—V3 mostly damaged for $23^{cd}$.—$^{c}$) D1–3.13 -वधाद्दृष्टा (for -वधं दृष्ट्वा). Ñ2 V1 B2–4 दशग्रीवं हतं दृष्ट्वा.—$^{d}$) Ś2 Ñ1 V2 B1 D1–4.8.12.13 राघवस्य जयैषिणः (Ñ1 D4 जयं तथा); B (ed.) वानरा जितकाशिनः.—After 23, Ñ1 D4.13 ins.:

3092* नादान्बहुविधांश्चक्रुर्ननृतुः सहवारणाः ।
अहो महत्कृतं कर्म राघवेण महात्मना ।

[(l. 1) Ñ1 D13 जज्वलुश्च सवारणाः (for the post. half).—(l. 2) Ñ1 D13 कर्म कृतं (by transp.). Ñ1 भर्तुरानृण्यतां गताः (sic); D13 भर्तुरन्येनमागतान् (sic) (for the post. half).]

24 $^{a}$) Ś2 Ñ2 V1.3 B3.4 D2.3.8.12.13 तेर्दिता; V2 B1 ते हता; D1 तैरर्दिता (hypm.) (for अर्दिता).—M1 damaged from हृष्टैर् up to पत in $24^{b}$. B4 दीसैर्; D9–11 श्रणा (for हृष्टैर्). Ñ1 D4 राक्षसा हरिभिस्त्रस्ता.—$^{b}$) Ś2 V2 B1 D1–3.8.12.13 अभिययुर्; Ñ1 अतिपतन्; D4 हित्वा ययुर् (for अभ्यपतन्).—$^{c}$) D5 T1 G3 M3.5 गत-; Ct as in text (for हत-). Ś2 B1 D1–3.8.12.13 करुणं; M3 कारुण्यैर् (for करुणैर्). Ñ1 D4 हते रथैः (D4 हतनाथाः) प्रविविशुर्; G1.2 गताश्रया रात्रिचरा.—$^{d}$) Ñ1 D4 -पर्याकुलैर्; D13 -प्रसरणैर् (for -प्रस्रवणैर्).

25 T1 damaged from तो in $25^{a}$ up to वानरा in $25^{b}$.—$^{a}$) T2 सहसा (for संहृष्टा). Ñ1 D4 नर्दित्वा सुचिरं दृष्ट्वा.—V3 damaged from जितकाशिनः in $25^{b}$ up to $25^{d}$.—$^{c}$) V2 B1 नर्दंतो; D2 नंदंतो. Ñ1 B3.4 D4 रामविजयं (for राघवजयं).—$^{d}$) D4 om. (subm.); G1 हि (for च). Ñ1 V2 B1 D4–7.9–11 T1.2 G M3.5 तद्; D2 ते (for तं). Ś2 Ñ2 V1 B2–4 D8.12 वधं तथा (for च तं वधम्).

26 $^{a}$) Ñ1 B1.4 D4.6 [अं]तरीक्षे. B4 [ऽ]भ्यहनद्; M2 व्यनदन् (for व्यनदत्).—$^{b}$) Ñ1 D4 सौम्यं; Ñ2 V1.3 B2–4 भृशं; T2 M3 सौम्य- (for सौम्यस्). V2 B1 तदा वै सौम्य-; D7 G1 घोषवान्देव- (for सौम्यस्त्रिदश-). M2 देवदुंदुभयो भृशं.—After $26^{ab}$, Ñ V1.3 B2–4 D4 ins.:

3093* निहते राक्षसे तस्मिन्रावणे लोककण्टके ।
हा हेति सुमहान्नाद आकाशे समजायत ।

[(l. 2) Ñ2 B3 जयेति (for हा हेति). B3 D4 सुमहानाद (D4 °दम्). V1 अहहेति महानाद (for the prior half).—V3 damaged from काशे up to सुसुखो in $26^{d}$.]

—$^{c}$) Ś2 Ñ V1.2 B D1–4.8.12.13 चैव (for तत्र).—$^{d}$) D4.7 M1 च सुखो (D4 °खं); D5 G3 M5 सुसुखं; D12 M3 ससुखो (for सुसुखो). D6 T3 सुखमाववौ.

27 $^{a}$) V2 B1 D4 [अं]तरीक्षाच्. Ñ2 V1.3 B2–4 ततोंतरीक्षात्पतिता.—$^{b}$) Ñ1 D5.13 तथा भुवि; M2 समंततः.—M1 mostly damaged for $27^{c}$.—$^{c}$) D13 क्रीडंती (for किरन्ती).—V2 om. $27^{d}$.—$^{d}$) Ñ1 D6.10.11 T2.3 G3 M1.5 दुरावापा (D6 T2.3 °पं); Ck.t as in text (for दुरवापा). Ñ1 D4 [अ]ल्पचेतनैः; B1 D1.3 [अ]ल्पतेजसा (D3 °सां); D5 T1 G3 M3.5 मनोरमा (for मनोहरा). Ś2 D2.8.12.13 L (ed.) दुरापा चा (L [ed.] या)ल्पचेतसां; Ñ2 V1.3 B2–4 दिव्यैः पुष्पैः सुगंधिभिः.

28 T1 damaged from $28^{a}$ up to वि in $28^{b}$.—$^{a}$) Ś2 राघवे. Ś2 V2 B1 D1–3.8.12.13 -स्तुति- (for -स्तव-).—V3 damaged from -युक्ता up to l. 2 of 3094*.—$^{b}$) Ś2 V2 B1 D1–3.8.12.13 च विचुक्रुशुः; Ñ1 B2 D4 भुवि

आविवेश महान्हर्षो देवानां चारणैः सह ।
रावणे निहते रौद्रे सर्वलोकभयंकरे ॥ २९

ततः सकामं सुग्रीवमङ्गदं च महाबलम् ।
चकार राघवः प्रीतो हत्वा राक्षसपुंगवम् ॥ ३०

G. 6. 92.73
B. 6. 108. 31
L. 6. 90. 0

( $B_{2}$ च वि- )शुश्रुवुः ; Ñ$_{2}$ $V_{1}$ $B_{3.4}$ $D_{5}$ $G_{3}$ $M_{5}$ चापि शुश्रुवुः ( $B_{3}$ $D_{5}$ $G_{3}$ $M_{5}$ °वे ) ; $D_{9}$ $M_{3}$ चात्रि( $M_{3}$ [ ऽ ]पि च )शुश्रुवे ( for च विशुश्रुवे ). —$^{cd}$ ) Ś$_{2}$ $D_{8.12}$ निष्ठानां; Ñ$_{2}$ $V_{1}$ $B_{2.4}$ वाचश्च; $V_{2}$ $B_{1}$ $D_{1-3.13}$ हृष्टानां; $B_{3}$ वागास्या; $D_{11}$ वागग्रा ( for वागग्र्या ). $M_{3}$ दैवतानां. Ś$_{2}$ $D_{1-3.8.12.13}$ शुभा ( $D_{1}$ तदा )गिरः ; $G_{1}$ भयापहा ( for महात्मनाम् ). $V_{2}$ $B_{1}$ देवानां शोभना गिरः ( for $^{d}$ ). Ñ$_{1}$ $D_{4}$ अंतरीक्षे तदा वाचः साधु साध्विति जल्पतां. —After 28, Ñ $V_{1.3}$ $B_{2-4}$ $D_{4.13}$ ins. ; while $M_{2}$ ins. after the first occurrence of 29 :

3094* नारदस्तुम्बुरुर्गार्ग्यः सुदामाथ हाहा हूहूः ।
गन्धर्वराजा एते च राघवस्याग्रतो जगुः ।
उर्वशी मेनका रम्भा पञ्चचूडा तिलोत्तमा ।
उपानृत्यन्त काकुत्स्थं प्रहृष्टा रक्षसो वधात् ।

[ $V_{3}$ damaged for l. 1-2. —( l. 1 ) Ñ $V_{1}$ $B_{4}$ तुंबरुर्. $D_{13}$ चापि ; $M_{2}$ गोपः ( for गार्ग्यः ). —The post. half unmetric. $D_{4}$ मुदमाप्य( sic ) ( for सुदामाथ ). $B_{2.3}$ $D_{4}$ हहा. $B_{2}$ हुहुः ( for हूहूः ). Ñ$_{1}$ $D_{13}$ सुदामः( $D_{13}$ °नः ) सूर्यमालविः( $D_{13}$ °वः ) ; $V_{1}$ हाहा हूहूस्तथैव च ; $M_{2}$ सुदामा सूर्यलोचनः ( for the post. half ). —( l. 2 ) $V_{1}$ हि ( for च ). Ñ $D_{4.13}$ $M_{2}$ एते गंधर्वराजानो ( for the prior half ). —( l. 3 ) $D_{4.13}$ पंचचूला. —( l. 4 ) $D_{4}$ $M_{2}$ G( ed. ) उपनृत्यंति ( G [ed.] °स्तु ) ( for उपानृत्यन्त ). $D_{13}$ प्रम्लोचाप्सरसां चैव ( for the prior half ). Ñ$_{1}$ $D_{13}$ दृष्ट्वा रक्षःपतिं हतं; $D_{4}$ दृष्ट्वा रक्षो निपातितं ( for the post. half ). ]

**29** $M_{2}$ reads 29 twice( var. ) —$^{a}$ ) Ś$_{2}$ Ñ$_{2}$ $V_{2}$ $B_{1.2.4}$ $D_{3.4.6.8.12}$ $T_{2.3}$ $M_{3}$ महा- ; $D_{1}$ तदा ( for महान् ). —$^{b}$ ) Ś$_{2}$ Ñ V B $D_{1-4.8.12.13}$ सह चारणैः( by transp. ). $M_{2}$( first time ) देवताः सह चारणैः ( sic ) ; $M_{2}$( second time ) वानराणां महात्मनां. —$D_{9}$ reads 29$^{cd}$ and l. 1 of 3095* wrongly after colophon. —$^{c}$ ) Ś$_{2}$ Ñ$_{2}$ V B $D_{1-4.8.12.13}$ घोरे ; $M_{2}$( second time ) तस्मिन् ( for रौद्रे ). —$^{d}$ ) Ś$_{2}$ Ñ V B $D_{1-4.7.8.12.13}$ $G_{1.2}$ $M_{1}$ -भयावहे ( for -भयंकरे ). —After 29, Ś$_{2}$ $V_{2}$ $B_{1}$ $D_{1-4.8.12.13}$ ins. ; while Ñ$_{1}$ $V_{1.3}$ $B_{4}$ ins. after 30 ; Ñ$_{2}$ $B_{2}$ ins. after the first occurrence of 30 ; $B_{3}$ ins. after 30$^{ab}$ ; $D_{9}$ ins. l. 1 after 29$^{cd}$ and l. 2-10 after 29$^{ab}$ :

3095* प्रशशंसुश्च तान्सर्वान्कुलगोत्रायुधानि तु ।
ऋक्षवानरगोपुच्छान्राक्षसं च विभीषणम् ।
भवतां बाहुवीर्येण विक्रमेण बलेन च ।
हतो राक्षसराजोऽयं रावणो लोकरावणः ।
अत्यद्भुतमिदं कर्म भवतां कीर्तिवर्धनम् । [ 5 ]
कथयिष्यन्ति पुरुषा यावद्भूमिर्धरिष्यति ।
एतदन्यच्च विविधं युक्तमर्थमनुत्तमम् ।
पुनः पुनरुवाचैतान्रामः संहर्षयन्गिरा ।
स च तैः पृथिवीपालः पूज्यमानः समन्ततः ।
सुहृद्भिः शुशुभे धीमान्देवैरिव मरुत्पतिः । [ 10 ]

[ ( l. 1 ) $B_{3}$ $D_{2-4.9.13}$ प्रशशंस च. Ś$_{2}$ $D_{8.12}$ सन्विवाः ; $D_{3}$ तान्घोरान् ; $D_{4}$ तान्रामः ( for तान्सर्वान् ). $D_{2.3}$ -[ अ ]पदानतः ; $D_{9}$ -[ अ ]मिधानतः ( for -[ आ ]युधानि तु ). Ś$_{2}$ $D_{8.12}$ कुल ( $D_{8}$ °लं )गोत्रोपचारतः ; $B_{3}$ $D_{13}$ कुलगोत्रात्प्र( $D_{13}$ °धर्मप्र )धानतः; $D_{1}$ कुलगोत्रांश्च मानतः ; $D_{4}$ कुलगोत्राणि बांधवान् ( for the post. half ). —For l. 1, Ñ $V_{1.3}$ $B_{2.4}$ subst. and read after l. 2; while $B_{3}$ ins. after l. 2 :

3095(A)* उवाचेदं तदा सर्वान्रामः सुमधुरं वचः ।

[ $B_{3}$ ततः ( for तदा ). $B_{2}$ श्रीमान् ( for सर्वान् ). $B_{3}$ राघवो ( for रामः सु- ). ]

—( l. 2 ) Ñ $V_{1.3}$ $B_{2.3}$( orig.; m. also as above ).$_{4}$ लक्ष्मणं स- ; $D_{8}$ वानरं च ( for राक्षसं च ). —( l. 3 ) Ś$_{2}$ Ñ$_{2}$ $V_{1}$ $D_{8}$ बहु- ( for बाहु- ). —( l. 6 ) Ś$_{2}$ $D_{12}$ भूतानि ; Ñ$_{1}$ मनुजा ( for पुरुषा ). —( l. 7 ) $B_{2}$ तत्तद् ( for एतद् ). Ś$_{2}$ $D_{1-4.8.9.12.13}$ चान्यच् ( for अन्यच् ). $V_{2}$ $B_{1}$ एवं चान्यं ( for एतदन्यच् ). $V_{3}$ उक्तमन्यम् ( for युक्तमर्थम् ). Ś$_{2}$ $D_{1-3.8.9.12.13}$ यु( $D_{13}$ उ )क्तमर्थव( $D_{1}$ °वि )दुत्तमं ( $D_{2}$ °रं ) ; $V_{2}$ $B_{1}$ यत्तदर्थवदुत्तमं; $B_{3}$ G ( ed. ) युक्तरूप( G [ ed. ]°मर्थ्य )मनुष्ठितं; $D_{4}$ यद्यत्तदनुवर्धतां ( for the post. half ). —( l. 8 ) Ś$_{2}$ $D_{8.12}$ [ ए ]नं; Ñ$_{1}$ $V_{2}$ [ ए ]नान् ; Ñ$_{2}$ $V_{1}$ $B_{4}$ [ ए ]तद् ; $B_{3}$ $D_{2}$ [ इ ]दं ( for [ ए ]तान् ). $B_{3}$ संहर्षया ; $D_{3}$ प्रहर्षयन्. Ñ$_{1}$ $B_{4}$ $D_{8}$ इव; $B_{1}$ गिरं ( for गिरा ). —After l. 8, Ñ V B $D_{4}$ ins. :

3095(B)* एवमुक्ताश्च ते तेन हृष्टा राघवमब्रुवन् ।
तवैव तेजसा दग्धः पापोऽयं सपुरःसरः ।
अस्माकमल्पवीर्याणां शक्तिः का रघुनन्दन ।
कर्तुमेतद्रणे कर्म यत्त्वया सुमहत्कृतम् ।

[ ( l. 1 ) $B_{3}$ तेनैव ( for ते तेन ). —( l. 2 ) $V_{2}$ $B_{1}$ $D_{4}$ भवतां ( for तवैव ). —$V_{3}$ illeg. from तेजसा up to स. —$V_{3}$ om. from l. 4 up to l. 10. $V_{2}$ $B_{1}$ $D_{4}$ om. l. 4. ]

—( l. 9 ) Ñ $V_{1}$ $B_{2-4}$ एवं ( for स च ). $V_{1}$ पुरुषव्याघ्रः ( for पृथिवीपालः ). Ś$_{2}$ $D_{12}$ शस्यमानः ; $D_{8}$ त्रास्यमानः( sic ). —( l. 10 ) Ñ$_{1}$ $B_{4}$ महद्भिः ( for सुहृद्भिः ). Ñ $V_{1}$ $B_{2-4}$ श्रीमान् ( for धीमान् ). $D_{13}$ स सुहृद्भिश्च शुशुभे ( for the prior half ). Ñ $V_{1}$ $B_{2-4}$ शतक्रतुः ( for मरुत्पतिः ). ]

—After 29 ( first occurrence ), $M_{2}$ ins. 3094*.

**30** $D_{9}$ om. 30. Ñ$_{2}$ $B_{2}$ read 30 twice ( var. ). —$^{a}$ ) Ś$_{2}$ Ñ$_{2}$( second time ) $B_{1.2}$( both times ) $D_{1-4.6-8.12.13}$ $T_{2.3}$ $G_{1}$ स रामः; $G_{3}$ सकामान् ; Ct as in text

G. 6. 92. 81
B. 6. 108. 32
L. 6. 90. 37

ततः प्रजग्मुः प्रशमं मरुद्गणा
दिशः प्रसेदुर्विमलं नभोऽभवत् ।
मही चकम्पे न च मारुता ववुः
स्थिरप्रभश्चाप्यभवद्दिवाकरः ॥ ३१

ततस्तु सुग्रीवविभीषणादयः
सुहृद्विशेषाः सहलक्ष्मणास्तदा ।
समेत्य हृष्टा विजयेन राघवं
रणेऽभिरामं विधिनाभ्यपूजयन् ॥ ३२

स तु निहतरिपुः स्थिरप्रतिज्ञः
स्वजनबलाभिवृतो रणे रराज ।
रघुकुलनृपनन्दनो महौजा-
स्त्रिदशगणैरभिसंवृतो यथेन्द्रः ॥ ३३

इति श्रीरामायणे युद्धकाण्डे सप्तनवतितमः सर्गः ॥ ९७ ॥

---

(for सकामं). —$^{b}$) $\tilde{N}_2$(first time) $V_{1.3}$ $B_3$(orig.).$_4$ सुहृदस्तथा; $\tilde{N}_2$ $B_2$(both second time) $D_{10.11}$ $T_{2.3}$ $G_{1.2}$ च विभीषणं; $B_2$(first time).$_3$ (*sup. lin.* also) कुमुदं तथा (for च महाबलम्). —After $30^{ab}$, $B_3$ ins. 3095*. —$B_3$ reads $30^{cd}$ twice(var.). —$^{c}$) $T_{2.3}$ प्रीतान्, $G_1$ प्रीतं; $M_1$ संतो(sic); $M_5$ प्रीतिं (for प्रीतो). $\acute{S}_2$ $\tilde{N}_2$(second time) $V_2$ $B_{1.2}$(second time).$_3$(first time) $D_{1-4.8.12.13}$ सस्वजे लक्ष्मणं प्रीतो($D_{3.4}$ प्रीत्या); $\tilde{N}_2$ (first time) $V_1$ $B_2$ (first time).$_3$(second time).$_4$ प्रीत्या परमया युक्तो; $V_3$ प्रीतया परमं युक्तो (metri causa); $D_6$ चकार परमप्रीतान्. —$T_1$ damaged from गवम् in $30^{d}$ up to विम in $31^{b}$. —$^{d}$) $D_{13}$ राक्षसमाहवे. —After 30, $\tilde{N}$ $V_{1.3}$ $B_{2.4}$ ($\dot{N}_2$ $B_2$ after the first occurrence) ins. 3095*.

31 $T_1$ damaged up to विम in $31^{b}$ (cf. v.l. 30). —$^{a}$) $\acute{S}_2$ $\tilde{N}$ V B $D_{1-4.8.12.13}$ ततो जगाम प्रशमं च($B_2$ $D_4$ स; $D_{1.3}$ om.) मारुतो. —$B_3$ reads $31^{cd}$ twice (first time in marg.). —$^{c}$) $D_5$ $T_1$ $M_2$ न न; $D_{6.7.10.11}$ $T_2$ $G_{1.2}$ $M_{3.5}$ न हि; $G_3$ [ऽ]थ न (for न च). $D_{5-7.9-11}$ $T_1$ $G_{2.3}$ $M_{1.3}$ Cr मारुतो ववौ; Cv as in text (for मारुता ववुः). $\acute{S}_2$ $D_{8.12}$ च तदा शुभावहा; $V_2$ $B_{1.3}$ (first time) $D_4$ च($D_4$ न) तदाभयावहा($B_1$ $D_4$ °हे; $B_3$ °हं); $D_{1-3.13}$ न तदा भ($D_2$ च तदाभ)यावहं (for न च मारुता ववुः). $\tilde{N}$ $V_{1.3}$ $B_{2.3}$(second time).$_4$ स्थिता महेंद्रप्र($B_4$ °द्रेण [sic])मुखाश्च देवताः($\tilde{N}_1$ देवाः). ❀ Cv : हि शब्दः पादपूरणे. ❀ —$^{d}$) $D_{9.11}$ $M_{2.5}$ स्थित-; Ct as in text (for स्थिर-). $B_2$ चाभ्यभवद्. $\acute{S}_2$ $V_2$ $B_{1.3}$(first time) $D_{1-4.8.12.13}$ L (ed.) सुख($\acute{S}_2$ $D_{8.12}$ L [ed.] शुभ)प्रद($D_{2-4.13}$ L [ed.]°भ)श्चैव तताप भास्करः; $\tilde{N}_1$ स्थिरप्रतापश्च तताप भास्करः.

32 $^{a}$) $D_2$ च (for तु). $\acute{S}_2$ $D_{8.12}$ -विभीषणौ च; $D_{7.9-11}$ -विभीषणांगदाः (for -विभीषणादयः). —$^{b}$) $\acute{S}_2$ $D_{8.12}$ -गणास्ते; $B_3$ $D_{7.9-11}$ -विशिष्टाः (for -विशेषाः). $\tilde{N}_1$ $B_3$ $T_3$ -लक्ष्मणास्तथा; $V_2$ $B_1$ लक्ष्मणेन. $D_4$ सुहृद्विशेषः स च लक्ष्मणस्तदा. —$^{c}$) $V_3$ damaged after विज up to रणे in $32^{d}$. $\acute{S}_2$ $V_2$ $B_1$ $D_{1-4.8.12.13}$ विजयाय (for विजयेन). —$^{d}$) $V_1$ $B_2$ $D_{1-3}$ [ऽ]भ्यनंदन् (for ऽभिरामं). $M_5$ रणाभिरामं. $G_1$ विविधा (for विधिना). $T_1$ $G_{1.3}$ $M_3$ ह्य($T_1$ $G_3$ [अ]प्य)पूजयन्. $\acute{S}_2$ $D_{8.12}$ रणेभ्यनंदन्विजयादपूजयन्; $\tilde{N}$ $V_{2.3}$ $B_{1.3.4}$ $D_{4.13}$ रणेभ्यनं($D_4$ °षु नं)दन्विधिवत्प्र($\tilde{N}_2$ $B_3$ $D_{13}$ °वद्य; $V_3$ °वच्च; $D_4$ °वत्सु)पूजयन्.

33 $^{a}$) $B_4$ च (for तु). $D_4$ $M_2$ स्थित-; $D_7$ $G_{1.2}$ कृत- (for स्थिर-). —$^{b}$) $T_1$ damaged from न up to महौ in $33^{c}$. $\tilde{N}_1$ -जनानुवृतो; $B_2$ -बंधुवृतो; $D_4$ -जनावृतो (for -बलाभिवृतो). $\acute{S}_2$ $\tilde{N}_1$ $D_{12}$ रणे विराजन्; $\tilde{N}_2$ $V_3$ $B_{2-4}$ विराजमानः; $V_{1.2}$ $B_1$ $D_{2.3}$ रणे व्यराजत($D_2$ °यत् [sic]); $D_{1.8.13}$ L (ed.) रणे व्य(L [ed.] °णेभ्य)राजत्; $D_4$ रणे व्यजायत्(sic); $D_{10.11}$ $T_2$ रणे बभूव. G (ed.) स्वबलाभिवृतो रणे व्यराजत. —$^{c}$) $V_{1.3}$ -नृपकुल-(by transp.); $B_3$ -कुलबहु-. $\tilde{N}_1$ दशरथकुल-; $M_5$ रघुवरकुल- (for रघुकुलनृप-). $D_1$ -मंडनो (for -नन्दनो). $B_3$ [ऽ]मितौजास्; $B_4$ महात्मा (for महौजास्). —$V_3$ damaged for $33^{d}$. —$^{d}$) $V_1$ $B_4$ इव (for अभि-). $B_{2.4}$ $D_{10.11}$ महेंद्रः (for यथेन्द्रः). $\acute{S}_2$ $V_2$ $B_1$ $D_{1-4.8.12.13}$ इव पूजितो महें($B_1$ नरें)द्रः (for अभिसंवृतो यथेन्द्रः). —After 33, $\acute{S}_2$ $V_2$ $B_{1.3}$ $D_{1-3.8.12.13}$ ins. :

3096* इति समरजयाय कोसलेन्द्रो
विजयमवाप्य स तैश्च पूज्यमानः ।
रणशिरसि जनेन्द्र इन्द्रकर्मा
व्यपहृतशल्य इवास वीतशोकः ।

# ९८

रावणं निहतं श्रुत्वा राघवेण महात्मना ।
अन्तःपुराद्विनिष्पेतू राक्षस्यः शोककर्शिताः ॥ १
वार्यमाणाः सुबहुशो वेष्टन्त्यः क्षितिपांसुषु ।
विमुक्तकेश्यो दुःखार्ता गावो वत्सहता यथा ॥ २
उत्तरेण विनिष्क्रम्य द्वारेण सह राक्षसैः ।
प्रविश्यायोधनं घोरं विचिन्वन्त्यो हतं पतिम् ॥ ३
आर्यपुत्रेति वादिन्यो हा नाथेति च सर्वशः ।
परिपेतुः कबन्धाङ्कां महीं शोणितकर्दमाम् ॥ ४

G. 6. 94. 5
B. 6. 110. 4
L. 6. 91 4

[ (l. 1) $Ś_2$ $D_{8.12}$ परविजयाय; $B_3$ समरविजयाय. —(l. 2) $V_2$ $B_{1.3}$ $D_3$ अवाप (for अवाप्य). $B_1$ $D_3$ प्रपूज्यमानः (for त्र पूज्यमानः). —(l. 3) $D_2$ नरेंद्र (for जनेन्द्र). $D_{1.3}$ ** कर्मा (hapl. om.); $D_{13}$ ** कर्मणा (hapl. om.) (for इन्द्रकर्मा). —(l. 4) $B_{1.3}$ $D_1$ व्यवहृत-; $D_{12}$ व्यपकृत-; $D_{13}$ व्यपहत- (for व्यपहृत-). $V_2$ $B_1$ [अ]ति-; $B_3$ [अ]भि-; $D_3$ [अ]भवद् (for [आ]स). ]

—Thereafter $B_3$ cont. l. 1–26 of App. I (No. 67). —After 33, $Ñ_1$ ins. (marg.):

3097* वाल्मीकेर्वदनामलेन्दुगलितं हृद्यं परं पावनं
पुण्यं वागमृतं पिबन्त्यनुदिनं यच्छ्रोत्रवर्ति-
न्न( °वृत्त्या न ? °वृत्तं न ? )रः ।
विष्णोः सच्चरितं चराचरगुरो रामायणं सादरा-
स्तेषां श्रीर्भवने वसत्यविचला नश्यन्ति
चानै( चैवे ? )तयः ।

Colophon. —*Kāṇḍa name*: Ñ $B_{1.3.4}$ $D_{4.13}$ लंकाकांडे. —After Kāṇḍa name, $D_{2.13}$ ins. युद्धपर्वणि. —*Sarga name*: $Ś_2$ Ñ V B $D_{1-4.8.12.13}$ $G_{2.3}$ रावणवधः; $D_{10}$ दशग्रीववधः; $M_1$ अमायां रावणवधः. —*Sarga no.* (figures, words or both): $Ñ_1$ V $B_{2.4}$ $D_{2.4.8.12.13}$ om.; $Ñ_2$ illeg.; $Ś_2$ $D_1$ 91; $B_1$ 89; $B_3$ 88; $D_3$ 95; $D_{5-7}$ $T_1$ G $M_{3.5}$ 111; $D_9$ 93; $D_{10.11}$ 110; $T_2$ 119; $T_3$ 122; $M_{1.2}$ 112; B (ed.) 108; G (ed.) 92; L (ed.) 90. —After colophon, $D_2$ concludes with राम। समाप्तं युद्धपर्व।; G $M_{1.2.5}$ with श्रीरामाय नमः. —After colophon, $D_9$ reads $29^{cd}$ and l. 1 of 3095* wrongly. —After Sarga 97, Ñ $V_{1.3}$ $B_{2.4}$ $D_{4.13}$ G(ed.) ins. a passage relegated to App. I (No. 67); while $V_2$ $B_{1.3}$ $D_{5-7.9-11}$ S ins. l. 27–94 of the same passage.

## 98

$Ś_1$ missing for Sarga 98 (cf. v.l. 6.93.13). $D_{12}$ begins the Sarga with ॐ.

1 $T_1$ damaged up to राघवेण म in $^{b}$. —$^{a}$) $V_{2.3}$ $B_3$ $D_{5-7.12}$ $T_3$ $G_3$ ($B_3$ *sup. lin.* also, $D_7$ marg. also as in text) दृष्ट्वा (for श्रुत्वा). —$^{b}$) $M_1$ रामेणाक्लिष्टकर्मणा. —$^{c}$) $Ś_2$ $D_{8.12}$ $M_3$ विनिष्क्रम्य (for °ष्पेतू). —$^{d}$) $Ś_2$ $V_3$ $B_4$ $D_{4.6-8.10.12}$ -कर्षिताः; $B_1$ $D_{2.3}$ -मूर्छिताः (for -कर्शिताः). $D_1$ क्रोधमूर्छिताः.

2 $^{a}$) $D_4$ विलप्यमाना बहुशः; $D_7$ $G_1$ वार्यमाणा वर्षहरैश्च ($G_1$ °वरैर); $G_2$ $M_1$ Ck निवार्यमाणा बहुशो. —$^{b}$) Ñ $D_{5.7.9.11}$ चेष्टंत्यः; $D_4$(m.) शोचत्यः; $D_{13}$ वेपंत्यः (for वेष्टन्त्यः). —$T_1$ damaged from क्षिति up to $4^{a}$. $D_{4-6.10.11}$ $G_2$ $M_1$ Ck.t रण- (for क्षिति-). —For $2^{ab}$, $Ś_2$ V B $D_{1-3.8.12}$ subst.:

3098* बहुशश्चेष्टमानाश्च प्रदिग्धाः क्षितिपांसुभिः ।

[ $V_3$ damaged from माना up to गावो in $2^{d}$. $Ś_2$ $D_{8.12}$ वाष्पमाणाश्च; $D_{1.3}$ वेष्टमानाश्च; $D_2$ वेप° (for चेष्टमानाश्च). $B_1$ प्रदिश्य; $B_{2.4}$ संरब्धाः; $B_3$ संदिग्धाः; G (ed.) संबद्धाः (for प्रदिग्धाः). $D_1$ रण- (for क्षिति-). $V_2$ $B_{1.2.4}$ -पांसुषु (for -पांसुभिः). ]

—$G_3$ illeg. from $2^{c}$ up to हता in $2^{d}$. —$^{c}$) $Ś_2$ Ñ $V_2$ $D_{3.4.8.12}$ $T_3$ $M_{1.5}$ -केशा (for -केश्यो). $D_{10.11.13}$ शोकार्ता (for दुःखार्ता). $D_7$ $G_1$ त्यक्तकेश्यः सुदुःखार्ता; $D_9$ विमुक्ताः शोकदुःखार्ता. —$^{d}$) $D_{5.6}$ $T_3$ $G_{2.3}$ M इव (for यथा). $Ś_2$ $B_1$ $D_{1-3.8.12.13}$ $G_1$ हतवृषा इव; Ñ V $B_{2-4}$ $D_4$ नष्टर्षभा इव; $D_7$ वत्साहता इव. —After 2, Ñ $V_{1.3}$ $B_{2-4}$ ins.:

3099* उरः शिरांसि निघ्नन्त्यो बाहुभिः कनकोज्वलैः ।
[ $B_3$ कनकोज्ज्वलाः. ]

3 $T_1$ damaged for 3 (cf. v.l. 2). $V_2$ om. $3-5^{b}$. —$^{a}$) $Ñ_1$ $D_4$ विनिर्गत्य; $B_1$ विनिश्चाल्य; $D_1$ °ष्क्रत्य; $D_{2.3.8.12}$ °ष्पत्य; $D_{13}$ च निर्गत्य (for विनिष्क्रम्य). —$^{b}$) $Ñ_1$ $B_3$ $D_{4.13}$ हतभर्तृकाः; $B_2$ मह चारणैः; $M_2$ हतबांधवाः (for सह राक्षसैः). —$V_3$ damaged from योधनं in $3^{c}$ up to $3^{d}$. —$^{c}$) $Ñ_1$ $D_{4.13}$ भीमं; $G_1$ वीरं (for घोरं). $Ś_2$ $D_{8.12}$ प्रविश्यास्य महाघोरं. —$^{d}$) $Ñ_1$ $B_4$ विचिन्वंति; $B_1$ $D_3$ व्यचिन्वत; $B_2$ $D_{5.8}$ विचिन्वत्यो; $D_1$ विचत्वंत(sic); $D_4$ विचिंत्य नि-; $D_{13}$ शोचंत्यस्तं (for विचिन्वन्त्यो). $D_3$ reads हतं in marg. $B_2$ $M_2$ पतिं हतं (by transp.); $T_2$ $G_1$ हतं प्रति(sic) (for हतं पतिम्).

4 $T_1$ damaged up to $4^{a}$ (cf. v.l. 2). $V_2$ om. 4 (cf v.l. 3). —$^{a}$) $Ś_2$ Ñ $V_{1.3}$ $B_{1.3.4}$ $D_{2-5.8.12.13}$ $M_2$ हार्यपुत्र; $T_2$ राजपुत्रि; $T_3$ $M_3$ राजपुत्र; $G_1$ आर्य आर्य (for आर्यपुत्र). $M_2$ वाशंत्यो (for वादिन्यो). —$^{b}$) $D_{11}$ om. च (subm.). $D_1$ $T_{1.3}$ च सर्वतः; $D_{13}$ विचुक्रुशुः;

G. 6. 94. 6
B. 6. 110. 5
L. 6. 91. 5

ता बाष्पपरिपूर्णाक्ष्यो भर्तृशोकपराजिताः ।
करेण्व इव नर्दन्त्यो विनेदुर्हतयूथपाः ॥ ५
ददृशुस्ता महाकायं महावीर्यं महाद्युतिम् ।
रावणं निहतं भूमौ नीलाञ्जनचयोपमम् ॥ ६
ताः पतिं सहसा दृष्ट्वा शयानं रणपांसुषु ।
निपेतुस्तस्य गात्रेषु छिन्ना वनलता इव ॥ ७
बहुमानात्परिष्वज्य काचिदेनं रुरोद ह ।
चरणौ काचिदालिङ्ग्य काचित्कण्ठेऽवलम्ब्य च ॥ ८
उद्धृत्य च भुजौ काचिद्भूमौ स्म परिवर्तते ।
हतस्य वदनं दृष्ट्वा काचिन्मोहमुपागमत् ॥ ९
काचिदङ्के शिरः कृत्वा रुरोद मुखमीक्षती ।
स्नापयन्ती मुखं बाष्पैस्तुषारैरिव पङ्कजम् ॥ १०
एवमार्ताः पतिं दृष्ट्वा रावणं निहतं भुवि ।
चुक्रुशुर्बहुधा शोकाद्भूयस्ताः पर्यदेवयन् ॥ ११

M1 सहस्रशः (for च सर्वशः). D4 हा नाशस्तव सर्वशः. —$^{c}$) B4 परिनेतुः (sic); D13 काश्रित्पेतुः (for परिपेतुः). Ñ1 कबंधाढ्यां; B4 कबंधाख्यां. —$^{d}$) V1.3 B2-4 क्षितिं (for महीं). —After 4, Ñ2 V1.3 B2-4 ins.:

3100* गृध्रगोमायुसंकीर्णां कङ्कवायसनादिताम् ।

[ V3 damaged from नादिताम् up to पूर्णा in 5$^{a}$.]

5 V2 om. 5$^{ab}$ (cf. v.l. 3). V3 damaged up to पूर्णा in 5$^{a}$ (cf. v.l. 3100*). —$^{a}$) B3 ताम्रास्याः (for ता बाष्प-). Ś2 B1 D1-3.8.12 -प(D2 -वा)रिरुद्धाक्ष्यो ; D4 °पूर्णाक्षा (for -परिपूर्णाक्ष्यो). —T1 damaged from शोक in 5$^{b}$ up to पतिं in 7$^{a}$. —$^{b}$) B4 D4 G1 M5 भर्तुः; D12 भ्रातृ- (for भर्तृ-). —M2 om. from परा up to स्त in 7$^{c}$. Ś2 D1-3.8.12 -समाहताः; Ñ B3.4 D4.13 -परायणाः; L (ed.) -समाहिताः (for -पराजिताः). B1 गावो हतवृषा इव (cf. 2$^{d}$ var.). —$^{c}$) V2.3 B4 D7.9-11 T2.3 G2 M1 करिण्य (for करेण्व). Ś2 V1 B1-3 D1-3.8.12.13 करेणव इव त्रस्ता (B3 °वार्द्दंत्यो); Ñ D4 करेणुरिव क्रंदंत्यो(Ñ2 नर्दंत्यो). —$^{d}$) Ś2 Ñ V1 B D1-4.6.8.12.13 T2.3 G2 M1 न रेजुर्; V2.3 D10.11 करेण्वो; D5 G3 विरेजुर्; D9 करेणुं; G1 बभूवुर् (for विनेदुर्). G2 हरि- (for हत-). V1 -जीविताः (for -यूथपाः).

6 T1 damaged; M2 om. 6 (for both, cf. v.l. 5). —$^{ab}$) V2 B D1-3.5.7-9.12.13 G1 M3.5 तं; D6 T2.3 ते (for ता). Ś2 B1 D1-3.8.12 वीर्यवंतं (for महावीर्यं). Ñ D4.5.13 G M3 transp. महाकायं and महावीर्यं. Ś2 D3.8.12 महाबलं (for °द्युतिम्). V B2-4 विकीर्णमिव पर्वतं (for $^{b}$). —V3 om. 6$^{cd}$. —$^{c}$) T2 damaged for तं भूमौ. Ñ1 V1.2 B2-4 D4 M1 पतितं (for निहतं).

7 T1 damaged up to पतिं in 7$^{a}$; M2 om. up to स्त in 7$^{c}$ (for both, cf. v.l. 5). —$^{a}$) V3 तारंतं (sic); D13 पतिं ताः (by transp.) (for ताः पतिं). B3 D6.13 T2.3 पतितं; D5.7 G1.3 निहतं; T1 *हतं (for सहसा). —$^{b}$) Ś2 D8.12 -पांसुभिः (for -पांसुषु). D9 शर-पांसुषु. —$^{c}$) M2 शास्त्रेषु (sic) (for गात्रेषु). —$^{d}$) Ñ V B2-4 D4 शस्त्रछिन्ना(D4 °न्न-); D6 T2.3 छिन्ना बाल- (for छिन्ना वन-). D12 -तला (meta.) (for -लता).

8 $^{a}$) B1 परिष्वक्ता (for °ष्वज्य). —$^{b}$) Ñ1 एवं; D13 दीनं (for एनं). D4 M5 च; G2.3 हा (for ह). —$^{cd}$) V2.3 B2.3 D3 चरणं; M5 चरणे (for चरणौ). D9 om. (hapl.) दालिंग्य काचि. Ñ D1.4.7.10.11.13 T3 G2 M1 आलंब्य (for आलिङ्ग्य). G1 काचिच्चरणमालंब्य (for °). —T1 damaged from चि in 8$^{d}$ up to मी in 10$^{b}$. D1 reads 8$^{d}$ in marg. B3 कंठं (for कण्ठे). V3 ह (for च). Ś2 D6.8.12.13 विलंब्य च; Ñ B3 D4 प्रलंब्य च; B1 विषसजे; B4 D3 ललंब च; D1.2.7 ब्यालंब्य च (for ऽवलम्ब्य च).

9 T1 damaged for 9 (cf. v.l. 8). —$^{a}$) Ñ1 उत्क्षी-यंत (sic); Ñ2 V B1.2.4 D4.7.10.11 M5 उत्क्षिप्य च; B3 आक्षिप्य च; D1-3 उत्सृज्य च(D3 तु); D9 उल्लिप्य च; G1 उद्यम्य च (for उद्धृत्य च). —$^{b}$) Ś2 Ñ1 D8.12 वि-; Ñ2 D10.11 Ck.t सु-; V B2-4 त्रै; B1 तु; D2 G सं- (for स्म). V B2-4 पर्यवर्तत (for परिवर्तते). D4 भूमावुपरि वर्तते; D13 भूमौ परिविवर्तते. —$^{d}$) D6 स्नेहम् (for मोहम्). D13 transp. काचिन् and मोहम्. Ś2 Ñ V B D4.8.9.12.13 M5 उपागता (for °गमत्).

10 T1 damaged up to मी in 10$^{b}$ (cf. v.l. 8). V3 om. 10. —$^{a}$) D13 अंगे (for अङ्के). B3 मुखं (for शिरः). —$^{b}$) D6 T2.3 पतिम्; L (ed.) भृशम् (for मुखम्). Ś2 B1 D1-3.8.12.13 भृशदुःखिता (for मुखमीक्षती). Ñ V1.3 B2.3 D4 पश्यंती प्रारुद(Ñ2 V2 °द्रव)न्मुखं. ❀ Cg: ईक्षती ईक्षमाणा. ❀ —B4 om. 10$^{b}$ – 11$^{c}$. —$^{c}$) Ś2 B1.3 D1.3 स्नपयंती; D12 सूचयंती (for स्नापयन्ती). Ś2 D8.12 काचित्; D1 *ष्पैस्; D2 चास्रैस्; D3 वास्रैस् (for बाष्पैस्).

11 B4 om. 11$^{abc}$ (cf. v.l. 10). —$^{a}$) Ś2 D8.12 सर्वास्ताः पतितं दृष्ट्वा. —$^{b}$) D6 T2.3 M1 पतितं (for निहतं). Ś2 V B1-3 D1-3.8.12 रणे (for भुवि). —$^{c}$) Ñ2 V B2.3 क्रोशंत्यो (for चुक्रुशुर्). Ś2 B1 D1-3.8.12 चक्रुर्व(Ś2 D8.12 कृत्वा ब)हुविधं शोकं. —$^{d}$) Ñ V1.3 B2.3 D4.13 भूयिष्ठं; B4 रुदंत्यः; G (ed.) भूयश्च (for भूयस्ताः). Ñ1 D6 पर्यवारयन् (for पर्यदेवयन्). —After 11, M2 ins.:

3101* सहस्रशः स्त्रियस्तत्र कुमार्यः सुवराननाः ।

—Then M2 cont.; while Ñ2 V B2 ins. after 11:

येन वित्रासितः शक्रो येन वित्रासितो यमः ।
येन वैश्रवणो राजा पुष्पकेण वियोजितः ॥ १२
गन्धर्वाणामृषीणां च सुराणां च महात्मनाम् ।
भयं येन महद्दत्तं सोऽयं शेते रणे हतः ॥ १३
असुरेभ्यः सुरेभ्यो वा पन्नगेभ्योऽपि वा तथा ।
न भयं यो विजानाति तस्येदं मानुषाद्भयम् ॥ १४
अवध्यो देवतानां यस्तथा दानवरक्षसाम् ।
हतः सोऽयं रणे शेते मानुषेण पदातिना ॥ १५
यो न शक्यः सुरैर्हन्तुं न यक्षैर्नासुरैस्तथा ।
सोऽयं कश्चिदिवासत्त्वो मृत्युं मर्त्येन लम्भितः ॥ १६
एवं वदन्त्यो बहुधा रुरुदुस्तस्य ताः स्त्रियः ।
भूय एव च दुःखार्ता विलेपुश्च पुनः पुनः ॥ १७

G. 6. 94. 18
B. 6. 110. 17
L. 6. 91. 17

3102* शिरांसि दश भर्तुस्ताः परिवार्य समन्ततः ।
उत्सङ्गेषु ततः कृत्वा रुदन्त्यः पर्यदेवयन् ।

[ (l. 1) V2 illeg. for the prior half. M2 परिगृह्य ( for °वार्य ). —V3 damaged from म up to प in l. 2. ]

12 $^{a}$) Ś2 Ñ V2 B3.4 D1–4.8.12.13 विद्रावितः (for वित्रासितः). —T1 damaged from 12$^{b}$ up to भयं in 13$^{c}$. —$^{b}$) Ś2 Ñ V2.3 B D1–4.8.12.13 विद्रावितो (for वित्रासितो). —$^{c}$) Ñ2 V B3.4 भ्राता; B2 धाता (for राजा).

13 T1 damaged up to भयं in 13$^{c}$ (cf. v.l. 12). V3 damaged from मृ in 13$^{a}$ up to 13$^{b}$.—$^{ab}$) Ñ1 नराणां च; B2 च दैत्यानां; G1 सुराणां च (for ऋषीणां च). D4 देवानामसुराणाम् (for ऋषीणां च सुराणां). Ś2 Ñ B1 D1–4.8.12.13 अपि चाहवे; V1.2 B2–4 अपि चासकृत् (for च महात्मनाम्). D7 G1 सुराणां( G1 ऋषीणां ) भावितात्मनां (for $^{b}$).—Ś2 D8 read 13$^{cd}$ after 14$^{ab}$ (transp.) and repeat after 3104*; Ñ1 B1 D1–4.12.13 repeat 13$^{cd}$ after 3104*.—$^{c}$) Ñ1 D4( both second time) .7.9–11.13( second time) रणे (for महद्). D12 (first time) भयं यो नाभिजानाति. —$^{d}$) D6 T2.3 हतो भुवि; M1 हतो रणे (by transp.) (for रणे हतः). —After 13, Ñ2 V (V2 illeg.) B2–4 ins.:

3103* यो न शक्यो रणे जेतुं सयक्षोरगराक्षसैः ।

[ Ñ2 V1 सरक्षोरग- (for सयक्षोरग-). ]

14 Ś2 D8 transp. 14$^{ab}$ and 14$^{cd}$. —$^{a}$) V3 damaged from सुरेभ्यो up to दं in 14$^{d}$. Ñ1 D4.13 च (for वा). —$^{b}$) Ś2 D8.12 चाहवे; D7 G1 वा पुनः (for वा तथा). —After 14$^{ab}$, Ś2 D8 read 13$^{cd}$ for the first time. —$^{c}$) Ś2 B1.3.4 D1–3.8 भयं यो नाभि-; Ñ2 V1.2 B2 D7.9–12 G2 भयं यो न वि- (by transp.); G1 M5 न भयं योभि-( M5 न ) (for न भयं यो वि- ). —$^{d}$) M5 मानुषं (for मानुषाद्).

15 $^{a}$) V3 मानुषाणां; D1 दानवानां (for देवतानां). Ñ V B2–4 D2–4.13 च (for यस्). —$^{b}$) B3 मानव-; D6 वानर- (for दानव-). —T1 damaged from 15$^{c}$ up to मृ in 16$^{d}$. —$^{c}$) Ñ V B2–4 D4 सोयमद्य( V2 °मुप-) हतः शेते. —$^{d}$) D12 मनुष्येण (for मानुषेण). V B2–4 [अ]ल्पतेजसा (for पदातिना). —After 15, Ś2 B1 D1–3.8.12 ins.; while Ñ1 D4.13 ins. after 16:

3104* सर्वदेवासुराणां च यक्षाणामपि चासकृत् ।

[ Ñ1 तु (for first च). Ś2 D8.12 सर्वदा च( Ś2 °दाथ ) सुराणां हि; D4 सर्वदेवगणानां तु (for the prior half). D13 वा (for second च). D8 [अ]सहन् (for [अ]सकृत्). ]

—Thereafter Ś2 Ñ1 B1 D1–4.8.12.13 repeat 13$^{cd}$.

16 T1 damaged up to मृ in 16$^{d}$ (cf. v.l. 15). V2 om. from 16 up to l. 1 of 3105*. —$^{a}$) D10.11 शक्यं (for शक्यः). D8 ये न शक्ताः (for यो न शक्यः). D9 नरैर् (for सुरैर्). G (ed.) जेतुं (for हन्तुं). —$^{b}$) D2 असुरैस्; D10 वासुरैस् (for नासुरैस्). Ś2 D8.12 न शक्यश्चासुरैस्. B1 अपि (for तथा). —$^{c}$) Ñ1 B3 D4 इवाशक्तो; B4 °सक्तो; D13 सदा युक्तो (for इवासत्त्वो). —$^{d}$) D4 लोभेन (for मर्त्येन). B1 मृत्युनाहं न (sic). B4 D13 लंघितः; D8.12 T2 लंबितः (for लम्भितः). —After 16, Ñ1 D4.13 ins. 3104*, followed by 13$^{cd}$ (r.).

17 V3 om. up to l. 1 of 3105* (cf. v.l. 16). D1.3 repeat 17 after 21. —$^{a}$) Ś2 D1–3( D1.3 first time).12 ब्रुवंत्यो; D4.13 रुदंत्यो (for वदन्त्यो). B1 D1–3 (D1.3 first time) बहुशो; D9–11 रुरुदुस् (for बहुधा). —$^{b}$) Ñ1 D4.13 वदंत्यस् (for रुरुदुस्). D1( both times).3 (second time) तत्र (for तस्य). B1 योषितः (for ताः स्त्रियः). D9–11 तस्य ता दुःखिताः स्त्रियः. —D13 reads 17$^{cd}$ after 19$^{ab}$. —$^{c}$) Ś2 T3 हि; D1.3 ( both second time) सु-; D12 [अ]ति- (for च). Ñ1 D4 भूय एवं( Ñ1 °व ) तु शोचंत्यो. —$^{d}$) Ś2 D8.12 ताः (for च). Ñ1 D1.3( both second time).4 करुणं बहु( D3 तदा ); B1 D1–3 ( D1.3 both first time).13 तास्त( B1 च त )स्ततः ( D3 °स्त्रियः ); M1 विविधं तदा (for च पुनः पुनः). —For 17, Ñ2 (illeg. l. 1) V ( V3 om. l. 1) B2–4 subst.:

3105* एवं रुदन्त्यो नार्यस्ता रावणं करुणं बहु ।
पुनरेव पतिं दीनाः सुरलोकस्थमब्रुवन् ।

[ (l. 2) V3 damaged from the post. half up to हि in 18$^{b}$. V2 B2.3 पर- (for सुर-). ]

G. 6. 94. 19
B. 6. 110. 18
L. 6. 91. 18

अशृण्वता तु सुहृदां सततं हितवादिनाम् ।
एताः समभिदानीं ते वयमात्मा च पातिताः ॥ १८
ब्रुवाणोऽपि हितं वाक्यमिष्टो भ्राता विभीषणः ।
धृष्टं परुषितो मोहात्त्वयात्मवधकाङ्क्षिणा ॥ १९
यदि निर्यातिता ते स्यात्सीता रामाय मैथिली ।
न नः स्याद्व्यसनं घोरमिदं मूलहरं महत् ॥ २०
वृत्तकामो भवेद्भ्राता रामो मित्रकुलं भवेत् ।
वयं चाविधवाः सर्वाः सकामा न च शत्रवः ॥ २१
त्वया पुनर्नृशंसेन सीतां संरुन्धता बलात् ।
राक्षसा वयमात्मा च त्रयं तुल्यं निपातितम् ॥ २२
न कामकारः कामं वा तव राक्षसपुंगव ।
दैवं चेष्टयते सर्वं हतं दैवेन हन्यते ॥ २३

18 V3 damaged up to हि in $18^{b}$ (cf. v.l. 3105*). —$^{a}$) D8.12 T2 अशृण्वतां (sic); M2 अशृण्वतस् (for अशृण्वता). Ñ V1.2 B D1.3.13 M2 ते; G2 M3 च (for तु). —T1 damaged from हि in $18^{b}$ up to हि in $19^{a}$. —$^{b}$) Ś2 वचनं (for सततं). Ñ1 सत्यवादिनां. M2 संततं प्रियवादिनां. —B1 om. $18^{cd}$. D13 repeats $18^{cd}$ consecutively. —$^{c}$) D7 एतैः; M5 एतत् (for एताः). D13 (second time) त्वां (for ते). Ś2 B2 D1–3.8.12.13 (first time) ऐश्वर्यं (D2 एताः स)मदमत्तेन. —$^{d}$) Ś2 B2 D6 T2.3 Ck घातिताः; D1–3.12 घातितः; D7.10.11 Ct पातितः; D8 वर्तिताः; M5 नाशिताः; Cm.g as in text (for पातिताः). D13 (first time) भवतात्मावघातितः; D13 (second time) संग्रामात्संनिपातिताः.—For $18^{cd}$, Ñ V B3.4 D4 subst.; while B2 D5–7.9–11 T2.3 G M ins. after $18^{ab}$:

3106* मरणायाहृता सीता घातिताश्च निशाचराः ।

[B4 रावणेन; D9 मारणाय (for मरणाय). Ñ V1.2 B2–4 D4 G1.2 हृता (for [आ]हृता). V3 reads सीता in marg. B4 पातिताश् (for घातिताश्). D9–11 राक्षसाश्च निपातिताः (for the post. half).]

19 T1 damaged up to हि in $19^{a}$ (cf. v.l. 18). B1 reads 19–22 in marg. —$^{a}$) Ñ V2 D4 हि; B2 च; D5 वि- (for ऽपि). B3 प्रब्रुवाणो; D13 विब्रुवाणो (for ब्रुवाणोऽपि). B4 ब्रुवाणो निहितं वाक्यम्. —$^{b}$) Ś2 D1–3.8.12 स्निग्धो; B1 स्निग्धं; B2 हृष्टो (for इष्टो). —After $19^{ab}$, D13 reads $17^{cd}$. —$^{cd}$) Ś2 D2.8.12 दृढं; Ñ1 D4 धृष्टः; Ñ2 V B2.3 नित्यं; D6 हृष्टः; D7.10.11 G3 M5 Ct दृष्टं; T2.3 दृष्टः; Cm as in text (for धृष्टं). B1 D5.13 परुषितं (for °षितो). —V3 damaged from मोहात् up to रामाय in $20^{b}$. D13 वाक्यं (for मोहात्). B1 दुरात्मन्; B2 त्वया तु; B3 त्वयास्य; D4 त्वया से (for त्वयात्म-). Ś2 B1 D1–3.8.12.13 -कांक्षया; D6 -कारिणा (for -काङ्क्षिणा). B4 नित्यं परुषितोत्साहो मुक्तया लब्धकांक्षिणां (sic).

20 B1 reads 20 in marg. (cf. v.l. 19). V3 damaged up to रामाय in $^{b}$ (cf. v.l. 19). —$^{a}$) B2 प्रस्थापिता; D7 निर्यापिता (for निर्यातिता). Ś2 D8.12 चेत्स्यात्; Ñ1 D4 तेभूत्; Ñ2 V1.2 B2–4 सीता (for ते स्यात्). —$^{b}$) D6 T2.3 रामस्य (for रामाय). Ñ2 V1.2 B2–4 भवेद्रामस्य मैथिली. —$^{c}$) Ś2 D1.8.12.13 न तु; Ñ D4 न हि; V1.2 B2–4 नैवं; V3 नैव; B1 D10 ननु; D9 तव; M2 न च; Ck.t as in text (for न नः). —$^{d}$) T1 damaged from हरं up to पु in $22^{a}$. D4 -हितं; M3 -हतं; Cg as in text (for -हरं). Ś2 B1 D1.2.8.12.13 हि नः; V B2–4 तव (for महत्).

21 B1 reads 21 in marg. (cf. v.l. 19). T1 damaged for 21 (cf. v.l. 20). —$^{a}$) Ś2 भूति-; Ñ V B D1–4.9.13 M2 कृत-; D8.12 भूमि-; T2 वृत्ति-; Cv.m.g.t as in text (for वृत्त-). Ś2 D3.8.12 [ऽ]भवद् (for भवेद्). —$^{b}$) B2 मैत्र (for मित्र-). M1 -बलं; Cm.g.t as in text (for -कुलं). Ś2 D8.12 मित्रा(D8 °त्र)कुलोभवत्. —After $21^{ab}$, D5 reads श्रीरामो जयते. —$^{c}$) Ś2 D9 वा (for च). Ś2 D1–3.8.12.13 स्याम (for सर्वाः). Ñ1 वयं न स्याम विधवा; B1 वयं वै विधवाः स्यामः; D4 वयं त्वविधवा जाताः. —V3 damaged for $21^{d}$. —$^{d}$) D5 सकाशाश् (sic) (for सकामा). Ś2 D8.12 चैव; B2.3 जित-; D4 सुर- (for न च). Ñ1 न सकामाश्च (by transp.). —After 21, D1.3 repeat 17.

22 B1 reads 22 in marg. (cf. v.l. 19). T1 damaged up to पु in $^{a}$ (cf. v.l. 20). V3 om. 22. —$^{a}$) D5 मृत्युर् (sic) (for पुनर्). —$^{b}$) B2 निर्मातिता (sic); B4 संगृह्यता; D2–4.8.12.13 M2 संरुधता; D5–7.9 संरुध्यता (for संरुन्धता). D4 रणात् (for बलात्). —$^{c}$) D4 रक्षसां (for राक्षसा). G1 बलम् (for वयम्). —$^{d}$) Ñ1 D4 G1 त्वया (for त्रयं). Ñ1 D4 निपातिताः; D9 निवर्तितं (for निपातितम्). Ś2 B1 D1–3.8.12.13 त्रय एव(B1 °वं) निपातिताः; Ñ2 V1.2 B2–4 युगपद्विनिपातिताः.

23 $^{a}$) M2.5 कामकारं; Cv as in text (for °कारः). Ñ V1.3 B2–4 कामो; M1 ह्यथ; Cg.t as in text (for कामं). Ś2 D8.12 कामकारोस्ति यन्निस्यं; V2 B1 D1–3.13 कामं न कामकारोस्ति. —$^{b}$) V3 -सत्तम (for -पुंगव). —$^{c}$) G1 दैवतं चेष्टते सर्वं. —T1 damaged from न हन्यते in $23^{d}$ up to 24. —$^{d}$) Ś2 B1–3 D2.8.9.12.13 ततो; Ñ2 V1.2 B4 D1.3.4 हतो; G (ed.) कृतं (for हतं). M1.2 देवेन (for दैवेन).

G. 6. 95. 58
B. 6. 111. 101
L. 6. 92. 54

त्वत्सकाशान्महाबाहो संस्कारं विधिपूर्वकम् ।
क्षिप्रमर्हति धर्मज्ञ त्वं यशोभाग्भविष्यसि ॥ ४०
राघवस्य वचः श्रुत्वा त्वरमाणो विभीषणः ।
संस्कारेणानुरूपेण योजयामास रावणम् ॥ ४१
स ददौ पावकं तस्य विधियुक्तं विभीषणः ।
ताः स्त्रियोऽनुनयामास सान्त्वमुक्त्वा पुनः पुनः ॥ ४२

40 V3 om. 40 (cf. v.l. 3132*). B1 D1-3 om. 40 (cf. v.l. 36). —ᵃ) G (ed.) -प्रसादान् (for -सकाशान्). M1 महाबाहुः; M3 दशग्रीवः (for महाबाहो). —ᵇ) Ñ V1.2 B2-4 D4.13 सत्कारं; D9 संस्कार्यो (for संस्कारं). Ś2 D8.12 रावणोर्हति; Ñ1 D4.13 प्राप्नु (D13 कर्तु) महति (for विधिपूर्वकम्). —After 40ᵃᵇ, Ś2 Ñ1 D4.8.12.13 ins.; B3 ins. after 40:

3141* ज्ञातिरेष महाबाहो दीर्घनिद्रां प्रवेशितः ।
पश्चिमा सत्क्रिया चास्य क्रियतां सुविशेषतः ।
एतद्दत्तमहं मन्ये यशो वाच्यं भविष्यति ।
असौ हि शूरो निहतो महाबलो
रणे मया दानवदर्पहा च । [5]
एतस्य यत्प्रेतगतस्य कृत्यं
कुरुष्व लङ्केश्वर मत्प्रसादात् ।

[(l. 1) D8.12 ज्ञातिरेषां (for ज्ञातिरेष). D4.13 महाबाहुर् (for °बाहो). D4 उपोषितः; D8.12 प्रवेशिता (for प्रवेशितः). —(l. 2) D4 यत्त्वया (for पश्चिमा). D13 पश्चिमां सत्क्रियामस्य (sic) (for the prior half). Ñ1 B3 D4 अविशंकितैः (B3 D4 °ता); D13 सविशेषतः (for सुविशेषतः). —(l. 3) Ñ1 D13 युक्तम्; D4 उक्तम् (for दत्तम्). Ñ1 B3 यशोयुक्तं; D4 यथोक्ते तु; D13 यशो बाढं (for यशो वाच्यं). —(l. 4) Ñ1 B3 D4 एषो (B3 त्रयो) हिताग्निश्च महातपाश्च; D13 असौ हिता स्निग्धमहानुभावा (sic). —(l. 5) Ñ1 D4 वेदांतगः कर्मसु चाग्रशूरः; B3 वेदांतकर्मण्यपि चाग्रशूरः; D13 ***कर्मसु तासु शूराः (sic). —(l. 7) D4 **तु (for कुरुष्व).]

—Thereafter, D13 cont. 3147* (owing to om.).

—Ñ1 D4.13 om. 40ᶜ-44. Ś2 om. 40ᶜᵈ. —ᶜ) M3 प्राप्नुम् (for क्षिप्रम्). D9 एव हि (for अर्हति). G (ed.) एष त्वर्हति. D7.10.11 G1.2 धर्मेण (for धर्मज्ञ). —ᵈ) D6 T2.3 यशोवान्; Ct as in text (for °भाग्). Ñ2 V1.2 B2-4 त्वं यशः (B4 यशसा) प्रथयिष्यसि; D9 त्वं यशो धारयिष्यसि.

41 Ñ1 V3 D4.13 om. 41 (for V3, cf. v.l. 3132* and for the rest, cf. v.l. 40). —ᵃ) B3 रामस्य वचनं श्रुत्वा. ❀ Cv: संस्कृताका(संस्का?)रेणानुरूपेण योजयामास रावणमित्यत्र सर्गान्तः क्वापि कोशेषु "ततः प्रविश्य लङ्कां तु राक्षसेन्द्रो विभीषणः। रावणस्याग्निहोत्रं स ********" तत्स्वरूपसर्गविशेषश्चास्ति । तस्याप्राचुर्यान्नाख्यातम् । रावणसंस्कारेण शुक्लपक्षप्रथमा गता. ❀ —For 41ᶜᵈ, D9-11 subst.:

3142* संस्कारयितुमारेभे भ्रातरं रावणं हतम् ।

—After 41, M2 reads colophon and then ins.; while D5-7 T G M1.3.5 K (ed., l. 1-19 within brackets) (D5.6 T G3 M1.3 only l. 20-33; G1.2 only l. 1-2 and l. 20-33; M5 l. 21-33) ins. a passage relegated to App. I (No. 69) after 41.

—For 41, Ś2 B1 D1-3.8.12 subst.; while Ñ2 V1.2 B2-4 subst. only l. 2 for 41ᶜᵈ:

3143* इत्युक्तो रामवचनाद्विधिदिष्टेन कर्मणा ।
प्रेतकार्याणि सर्वाणि ज्ञातीनां समकारयत् ।

[(l. 2) Ñ2 illeg. for the prior half. Ś2 B1 D1-3.8.12 सर्वेषां (for सर्वाणि). B3 जातीनां. V2 transp. सर्वाणि and ज्ञातीनां. Ñ2 V2 B4 समरोचयत्; B2.3 समचोदयत् (for समकारयत्). V1 ज्ञातीनां प्रेतकार्याणि सर्वाणि समदेशयत्.]

—Thereafter, Ś2 Ñ2 V1(only l. 1-3).2 B1.2.4(Ñ2 B2.4 only l. 1-2) D1-3.8.12 cont.:

3144* विभीषणस्तु विन्ध्यादीन्वृद्धामात्यान्बहुश्रुतान् ।
आज्ञापयामास तदा राजा सत्क्रियतामिति ।
भ्रातृदाराश्च ताः सर्वाः सान्त्वयामास कालवित् ।
चक्रे स सलिलं भ्रातुर्ज्ञातीनां चानुपूर्वशः ।
रामवाक्येन विधिवत्सर्वशास्त्रोपबृंहितः । [5]

[(l. 1) B2 चिंतात्मा; D1 तान्वृद्धान्; D3 [अ]विंध्यादीन् (for विन्ध्यादीन्). D1 अमात्यान्तु- (for वृद्धामात्यान्). —(l. 3) Ś2 D1.8.12 भ्रातृदारां(Ś2 °तृ ** [moth-eaten])श्च तान्सर्वान् (for the prior half). V1.2 B1 सांत्वयित्वा स (for सान्त्वयामास). —(l. 4) D3 च (for स). —(l. 5) G (ed.) -बृंहितं (for -बृंहितः).]

—After 3142*, D9 reads an addl. colophon. [*Sarga no.*: 96.] —Then D9 cont.; while D10.11 cont. after 3142* a long passage relegated to App. I (No. 69).

42 V3 om. 42 (cf. v.l. 3132*). Ñ1 D4.13 om. 42 (cf. v.l. 40). Ś2 Ñ2 V1.2 B D1-3.8.9.12 M2 om. 42ᵃᵇ. —ᵃ) D5.6 T G3 M1.3.5 ददौ च (for स ददौ). ❀ Cg: स्नात्वेत्यादि गम्यतामितीतिपर्यन्तं किंचिदधिकं श्लोकद्वयं एकान्वयम्. ❀ —After 42ᵃᵇ, D5-7.10.11(D10.11 only l. 1-2) T G M1.3.5 ins.:

3145* स्नात्वा चैवार्द्रवस्त्रेण तिलान्दूर्वाभिमिश्रितान् ।
उदकेन च संमिश्रान्प्रदाय विधिपूर्वकम् ।
प्रदाय चोदकं तस्मै मूर्ध्ना चैनं नमस्य च ।

[(l. 1) D7 -वस्त्रैः स (for -वस्त्रेण). D7.10.11 M1 दर्भवि-; G1 दर्भाभि- (for दूर्वाभि-). —T1 damaged from श्रि up to सं in l. 2. —(l. 2) D6.7 G2 प्रादाय; Cm.g.t as above (for प्रदाय). —(l. 3) D6 प्रादाय (for प्रदाय). M1 तु (for second च).]

प्रविष्टासु च सर्वासु राक्षसीषु विभीषणः ।
रामपार्श्वमुपागम्य तदातिष्ठद्विनीतवत् ॥ ४३

रामोऽपि सह सैन्येन ससुग्रीवः सलक्ष्मणः ।
हर्षं लेभे रिपुं हत्वा यथा वृत्रं शतक्रतुः ॥ ४४

G. 6. 95. 64
B. 6. 111. 123
L. 6. 92. 62

इति श्रीरामायणे युद्धकाण्डे नवनवतितमः सर्गः ॥ ९९ ॥

—c) D5 ततः (hypm.) (for ताः). B4 लालयामास; M1 दीनवदनाः; Cg as in text (for ऽनुनयामास). Ś2 V1.2 B1 D1–3.8.12 स्त्रियः (V1 लंकां) प्रवेशयामास. —d) Ś2 Ñ2 V1.2 B D1–3.8–12 G1 M1.2 सांत्वयित्वा; Cg as in text (for सान्त्वमुक्त्वा). M1 विभीषणः; Cg as in text (for पुनः पुनः). —After 42, D5–7.10.11 S ins.:

3146* गम्यतामिति ताः सर्वा विविशुर्नगरं तदा ।

[M1 चोवाच (for ताः सर्वा). D7.10.11 G1.2 ततः; G3 M3 तथा (for तदा). M1 ततस्तां प्राविशन्पुरीं (for the post. half). ❀ Ck: गम्यतामिति चोवाचेति—रावणपत्नीरिति शेषः । विभीषण इत्यस्यानन्तरं श्लोकद्वयं क्वचिदस्ति । क्वचिन्नास्ति. ❀ ]

43 V3 om. 43 (cf. v.l. 3132*). Ñ1 D4.13 om. 43 (cf. v.l. 40). —a) D1–3 तु (for च). D9–11 पुरीं स्त्रीषु (for च सर्वासु). —b) D6 राक्षसीभिर्; D9–11 राक्षसेंद्रो (for राक्षसीषु). —T1 damaged from र्श्व in 43c up to मो in 44a. —c) B3 उपागत्य; G1 उपागच्छद्; Cg as in text (for उपागम्य). —d) Ś2 Ñ2 V1.2 B D2.3.8–12 समतिष्ठद्; M2 तथातिष्ठद् (for तदातिष्ठद्). B2.4 M3 विभीषणः; M1 कृतांजलिः (for विनीतवत्). G1 विनीतवदुपस्थितः.

44 V3 om. 44 (cf. v.l. 3132*). Ñ1 D4.13 om. 44 (cf. v.l. 40). T1 damaged up to मो (cf. v.l. 43). —b) D2 G1 M3 सुग्रीवः सहलक्ष्मणः. —c) V1 B2.4 भेजे (for लेभे). —d) Ś2 B1 D1–3.8–12 वृत्रं वज्रधरो यथा. —After 44, Ś2 Ñ2 V1.2 B D1–3.8–12 ins.; while D13 cont. after 3141* (owing to om.):

3147* ततः स मुक्त्वा सशरं शरासनं
महेन्द्रदत्तं कवचं च तन्महत् ।
विमुच्य रोषं रिपुनिग्रहे तदा
शशीव सौम्यत्वमुपागतोऽरिहा ।

[(l. 1) B1 D3.9–11 विमुक्त्वा (for स मुक्त्वा). Ñ2 महद्धनुर् (for शरासनं). —(l. 2) Ñ2 V1.2 B2–4 D13 च कांचनं; B1 D3 महार्हं; D9 तथा महत्; D10–13 स (D12 om.) तन्महत् (for च तन्महत्). —(l. 3) B4 D1.13 -विग्रहे; D9–11 -निग्रहात् (for -निग्रहे). Ś2 D12 वृतः; B1 स्थितः; D1–3 धृतं; D8 कृतं; D9–11 ततो (for तदा). —(l. 4) B2.4 D1 शरीर-; D9–11 रामः स (for शशीव). Ś3 B1 D1.2.8.12 पुनः (for ऽरिहा). Ñ2 V1.2 B2.4 D13 असावुपागमत्; D3 उपागमत्पुनः; G (ed.) उपागमच्छनैः (for उपागतोऽरिहा). B3 शरीरसामर्थ्यमुपागमत्वलैः.]

—Thereafter, Ś2 D1.8.12 M2 (after 44) read an addl. colophon. [*Sarga name*: Ś2 M2 रावणसंस्कारः; D1 आभ्युदयिके रावणसत्कारः; D8.12 रावणसत्कारः. —*Sarga no.* (figures, words, or both): D8.12 om.; Ś2 D1 94; M2 116. —After colophon, M2 concludes with श्रीरामाय नमः.]

Colophon: V3 om. colophon (cf. v.l. 3132*). Ś2 D1.8.12 read colophon after 29; M2 reads colophon after 41. —*Kāṇḍa name*: Ñ B D2.4.13 लंकाकांडे. —*Sarga name*: Ś2 Ñ V1.2 B D4.8.12.13 M2 मंदोदरीविलापः; D1 आभ्युदयिके मंदोदरीविलापः; D2 आभ्युदयिके रावणसत्क्रिया; D3 अंतःपुरविलापः; L (ed.) मंदोदरीविलापरावणसत्कारः. —*Sarga no.* (figures, words or both): Ñ1 V2 B2.4 D2.4.8.12.13 om.; Ś2 D1 93; V1 94; B1 92; B3 91; D3.9 97; D5–7 T1 G M3.5 114; D10.11 113; T2 122; T3 125; M1.2 115; B (ed.) 111; G (ed.) 95; L (ed.) 92. —After colophon, D2 concludes with रामः; G1 M1.2.5 conclude with श्रीरामाय नमः. —After Sarga 99, Ñ V1.2 B2–4 D4.13 G (ed.) ins. a long passage relegated to App. I (No. 70).

# १००

G. 6. 97. 1
B. 6. 112. 1
L. 6. 93. 1

ते रावणवधं दृष्ट्वा देवगन्धर्वदानवाः ।
जग्मुस्तैस्तैर्विमानैः स्वैः कथयन्तः शुभाः कथाः ॥ १
रावणस्य वधं घोरं राघवस्य पराक्रमम् ।
सुयुद्धं वानराणां च सुग्रीवस्य च मन्त्रितम् ॥ २
अनुरागं च वीर्यं च सौमित्रेर्लक्ष्मणस्य च ।
कथयन्तो महाभागा जग्मुर्हृष्टा यथागतम् ॥ ३
राघवस्तु रथं दिव्यमिन्द्रदत्तं शिखिप्रभम् ।
अनुज्ञाय महाभागो मातलिं प्रत्यपूजयत् ॥ ४
राघवेणाभ्यनुज्ञातो मातलिः शक्रसारथिः ।
दिव्यं तं रथमास्थाय दिवमेवारुरोह सः ॥ ५

## 100

Ś1 missing Sarga 100 (cf. v.l. 6.93.13). Ś2 D12 begin with ॐ.

1 a) Ś2 Ñ B1.4 D1–4.8.9.12.13 तं (for ते). Ś2 B1 D1–3.8.9 राक्षस- (for रावण-). V2 B1 श्रुत्वा (for दृष्ट्वा). G (ed.) तद्राक्षसवधाद्दृष्टा.—b) D6 -राक्षसाः (for -दानवाः).—c) Ś2 Ñ V B1–3 D1–5.8–12 T1 G3 M1.3 स्वैः स्वैर् (V3 damaged from स्वैर् up to राघव in 2b) (for तैस्तैर्). B4 प्रजग्मुः स्वैर् (for जग्मुस्तैस्तैर्). Ś2 Ñ2 V1.2 B1.3.4 D2.5.7–11.13 M3 ते; Ñ1 D4 M1 च; B2 तु; D1.3.12 T1 G3 तैः; Cm as in text (for स्वैः). M2 जग्मुः स्वानि विमानानि.—d) Ś2 Ñ V1.2 B1.3 D1.4.8.12 कथाः शुभाः (by transp.); D13 कथां शुभां (for शुभाः कथाः).

2 V3 damaged up to राघव in b (cf. v.l. 1).—a) D6 T2.3 M1 बलं (for वधं). D7 दृष्ट्वा (for घोरं).—b) Ś2 D8 रावणस्य; Ñ V1.2 B1.4 D1–4.9.12 M2 रामस्य च (for राघवस्य). G1 जयं तथा; M1 च विक्रमं (for पराक्रमम्).—Ś2 D8 read 2cd before 4.—c) B1 यद्युद्धं; D8 उपद्रवं (hypm.) (for सुयुद्धं). B4 वानरेंद्राणां (for वानराणां च).—d) Ś2 D4.7.8.12 च मित्रतां; V2 च संनिभं; B2 सुमंत्रितं; D1 M2 च मंत्रिणः; D3 च मंत्रणं; T2.3 च मंत्रितां; Cg.k.t as in text (for च मन्त्रितम्).

3 a) Ñ1 D13 वैदेह्याः; B3 reads in marg.; M2 om. (hapl.?) (for वीर्यं च).—b) V3 D7.10.11 G1.2 Ct मारुतेर्; Cg as in text (for सौमित्रेर्). M2 om. च (subm.). Ś2 B1 D1–3.8.12 लक्ष्मणस्य च धीमतः.—After 3ab, V2 B3 (m.) D9–11 K (ed., within brackets) ins.; while Ś2 B1 D1–4.8.12 subst. for 3cd:

3148* पतिव्रतात्वं सीताया हनूमति पराक्रमम् ।

[D1 पतिवृत्ति च; D4 पतिव्रतं च; D12 पातिव्रत्यत्वं (for पतिव्रतात्वं). D1.4 हनूमतश्च (hypm.) (for हनूमति).]

—V3 damaged from 3d up to अनु in 4c.—d) B3 ययुर् (for जग्मुर्).

4 V3 damaged up to अनु in c (cf. v.l. 3). Before 4, Ś2 D8 read 2cd.—a) D7 G1.2 [ऽ]पि; D13 स (for तु). D4 दिव्यरथम् (for रथं दिव्यम्).—b) D2 इंद्रवत्तं. Ś2 D1–3.8.12 शिवप्रदं; Ñ V1.2 B2–4 D4.13 रविप्रभं; B1 D7 G1.2 शशिप्रभं; Cg as in text (for शिखिप्रभम्).—c) Ñ2 V B3 D1.4.7.9–11 G1.2 Ct अनु (V3 **) ज्ञाप्य; Cm as in text (for अनुज्ञाय). B1.4 D1–4.7.9–11 G1.2 महाबाहुर्; B3 महाप्राज्ञो; M1 महातेजा. Ś2 D8.12 आज्ञापयामास तदा.—d) Ś2 D8.12 शक्र (D12 च स) सारथिं; M2 चेदमब्रवीत्; Cg as in text (for प्रत्यपूजयत्).—After 4, Ñ V B2–4 D4 M2 G (ed., l. 2–3 only) ins.:

3149* प्रणामो वासवे कार्यो मातले भद्रमस्तु ते ।
दर्शिता महती शक्तिः कृतं मे प्रियमुत्तमम् ।
गच्छेदानीमनुज्ञातो मया त्वं त्रिदशालयम् ।
वधमावेदयस्वेमं शत्रोस्त्रिदिववासिनाम् ।

[V3 om. l. 1.—(l. 1) V1.2 प्रणामं (for प्रणामो). V1.2 B3 वाच्यो (for कार्यो).—(l. 2) M2 बुद्धिः (for शक्तिः).—V3 om. l. 3.—(l. 3) Ñ1 B2 D4 M2 त्रिदिवालयं (for त्रिदशालयम्).—(l. 4) B4 M2 [ए]वं (for [इ]मं). V3 damaged from the post. half of l. 4 up to सार in 5b. Ñ2 V1.2 B2.3 D4 त्रिदश (B2 D4 °दिव) वासिनां (B2.3 °नः).]

5 V3 damaged up to सार in b (cf. v.l. 3149*). Ś2 D8.12 om. 5.—a) Ñ V1.2 B2–4 D4 इति राम- (for राघवेण).—c) Ñ स्व-; B1 D4 च; D13 स; G (ed.) तु (for तं). L (ed.) transp. रथम् and आस्थाय. M2 दिव्यं रथं समास्थाय.—d) B4 त्रिदिवम्; G1.2 दिव्यमेव (for दिवमेव). B3 च; M5 ह (for सः). Ñ1 D13 [अ]भ्य (D13 °न्व) रोहत; D1–3.6.9–11 T2.3 [उ]त्पपात ह; D4 [अ]भ्यरोहयत् (for [आ]रुरोह सः). B1 त्रिदिवं चोत्पपात ह.—After 5, B3 (m.) ins.:

3150* मातलिर्दिवमारूढो देवैः सह सदोगतः ।
देवराजं प्रणम्याथ प्राञ्जलिः प्रणतः स्थितः ।
तमुवाच ततः शक्रः कृतं साह्यं त्वयानघ ।
राघवस्य च प्रीत्यर्थं रावणस्य वधाय च ।
तमुवाच ततः सूतो हृष्टं देवं शतक्रतुम् । [5]
अद्य मे सफलं जन्म रामसाहाय्यकारणात् ।
सुशिक्षिता रथशिक्षा सफला बलकर्मणि ।

तस्मिंस्तु दिवमारूढे सुरसारथिसत्तमे ।
राघवः परमप्रीतः सुग्रीवं परिषस्वजे ॥ ६
परिष्वज्य च सुग्रीवं लक्ष्मणेनाभिवादितः ।
पूज्यमानो हरिश्रेष्ठैराजगाम बलालयम् ॥ ७
अब्रवीच्च तदा रामः समीपपरिवर्तिनम् ।
सौमित्रिं सत्त्वसम्पन्नं लक्ष्मणं दीप्ततेजसम् ॥ ८
विभीषणमिमं सौम्य लङ्कायामभिषेचय ।
अनुरक्तं च भक्तं च मम चैवोपकारिणम् ॥ ९
एष मे परमः कामो यदिमं रावणानुजम् ।
लङ्कायां सौम्य पश्येयमभिषिक्तं विभीषणम् ॥ १०
एवमुक्तस्तु सौमित्री राघवेण महात्मना ।
तथेत्युक्त्वा तु संहृष्टः सौवर्णं घटमाददे ॥ ११

G. 6. 97. 14
B. 6. 112. 12
L. 6. 93. 11

---

नादानं नाभिसंधानं मोक्षं चैव विकर्षणम् ।
बाणानां न प्रपश्यामि राघवस्य महात्मनः ।
बाणानां पतनं चैव रावणस्य रथोपरि ।      [ 10 ]
राघवस्य प्रपश्यामि रणे शतसहस्रधा ।
न भूतो नो वर्तमानो न भविष्यति चापरः ।
राघवादर्हते वीरो वराणां रथिनां वरः ।
येन देवाः सगन्धर्वाः सासुरोरगराक्षसाः ।
सकिंनरनराः सर्वे द्रावितास्तु रणाद्दिशः ।      [ 15 ]
रामेणैव रणे भिन्नं हृदयं तस्य रक्षसः ।
महदेकेन बाणेन रम्भस्तम्भ इवानघ ।
एतच्छ्रुत्वा वचस्तस्य मातलेः स शतक्रतुः ।
देवैः सह नमश्चक्रे रामे चैव सलक्ष्मणे ।

6 $^{a}$) Ś2 दिव्यम् ; B1 वियद् ; B2.3 रथम् ( for दिवम् ). —$^{b}$) B2 -सारथिनां वरे; T2 -सारथिसत्तरं ( for °सत्तमे ). Ś2 B1 D1–3.8.12 सारथौ( D1–3 सरथे ) जयतां वरः ; Ñ D4.13 रथे भास्करवर्चसि( D13 °संनिभे ); V B3.4 D9–11 सरथे( B3 तरसा ; B4 सारथौ ) रथिनां वरे( D9–11 °रः ). —After $6^{ab}$, G ( ed. ) ins. 3151* and om. $6^{c}$–$7^{b}$. —$^{c}$) B3 प्रणयः; B4 परमं ; D1.4 परमः ( for परम- ). —$^{d}$) V3 ***** षस्वजे ( damaged ).

7 G ( ed. ) om. $7^{ab}$ ( cf. v.l. 6 ). —$^{a}$) D1 परिपूज्य. D13 स ( for च ). —$^{b}$) B1 [ अ ]भिपूजितः ; D1 °वंदितः ; D7 °चोदितः ; M3.5 Cg प्रचोदितः ; Ck.t as in text ( for [ अ ]भिवादितः ). —After $7^{ab}$, Ñ2 V1.3 B2–4 D4 ins. ; while V2 ins. after 7 ; G ( ed. ) ins. after $6^{ab}$ ( owing to om. ) :

3151* संभाष्य चैव तान्सर्वान्हरियूथपसत्तमान् ।
राघवः परमप्रीतो हरीन्द्रमिदमब्रवीत् ।
दिष्ट्या तव प्रसादेन प्राप्तं हि मनसेप्सितम् ।
प्रतिज्ञाया गतः पारं हत्वा वै देवकण्टकम् ।
शेषमद्यापरं मन्ये मनस्तुष्टिकरं परम् ।      [ 5 ]

[ ( l. 1 ) Ñ2 V हरीन् ( for हरि- ). V3 B3 -यूथपान् ( for -सत्तमान् ). —( l. 3 ) B2 मे ( for हि ). V3 om. l. 4–5. —( l. 4 ) B2 तं ( for वै ). —( l. 5 ) B3 अन्यत्परं ; D4 यच्चापरं ( for अद्यापरं ). B3 मम ( for मनस् ). ]

—D4 om. $7^{c}$–$10^{b}$. Before $7^{cd}$, Ñ2 V1.3 B2–4 read $10^{cd}$ for the first time, all ( except V3 ) repeating it in its proper place. —$^{c}$) V1.3 B2–4 वृतस्ततो ( for पूज्यमानो ). Ś2 V2 B1 D1–3.9–12 हरिगणैर् ; D8 हरिवनैर्. —$^{d}$) D9 स जगाम ; Cr.m as in text ( for आजगाम ). Ś2 V1 B1 D3.8.12 G1 M1.5 स्वमालयं ; Ñ B4 सहानुगः( B4 °जः ); V3 B2.3 महानुजः( B2 °गैः ); D1.2 [ अ ]चलालयं ; D13 महाभुजः ; G3 बलाबलं ; Cr.m.g.t as in text ( for बलालयम् ).

8 D4.12 om. 8 ( for D4, cf. v.l. 7 ). Before 8, V2 reads $10^{cd}$ for the first time repeating it in its proper place. —$^{a}$) B2 स; D13 G1 तु ( for च ). Ś2 B1 D1–3.8–11 अथोवाच स काकुत्स्थः. —$^{b}$) Ś2 सेनायाः परि-; B2 समीपे परि- ; B3.4 समीपां( B4 °प )तर- ( for समीप परि- ). D8 सी * याः परिवर्तते( sic ). —$^{c}$) Ñ2 D5 T1 M3 Cg सत्यसम्पन्नं ; V3 D9–11.13 मित्रसंपन्नं; M3 °संपन्नो ( for सत्त्वसंपन्नं ). —$^{d}$) Ś2 B1 D1–3.8–11 शुभलक्षणं ( for दीप्ततेजसम् ).

9 D4 om. 9 ( cf. v.l. 7 ). —$^{a}$) V3 अतः ( for इमं ). D8 सोम्य ( for सौम्य ). —$^{b}$) B4 अभिषिंच ह ( for अभिषेचय ). —$^{c}$) D5.13 om. ( hapl. ); D12 भीतं च ( for भक्तं च ). —$^{d}$) Ś2 B1 D1–3.8–12 तथा पूर्व- ; B3 शक्तं चैव; D13 ममैवम् ( for मम चैव ). M1 [ उ ]पकारक ; Cg as in text ( for °कारिणम् ).

10 V3 D4 om. $10^{ab}$ ( for D4, cf. v.l. 7 ). —$^{a}$) B3 वै; D7 G1.2 नः ( for मे ). —$^{b}$) Ś2 Ñ V1.2 B D1–3.8.12.13 यदहं ( B4 °यं ); D7 T2.3 M1.3 यदीमं ; M2 यथेमं ( for यदिमं ). B4 ( m. also as in text ) राक्षसानुजं; D13 राघवानुजं ( sic ) ( for रावणानुजम् ). —Ñ2 V B2–4 read $10^{cd}$ for first time before $7^{cd}$ ( V2 before 8 ), all ( except V3 ) repeating it here. —$^{c}$) Ñ2 V B2–4 D4 ( all except V3 D4, first time ) यत्तु ( for सौम्य ). B4 ( second time ) अभिपश्यैनम् .

11 V3 om. $11^{ab}$. B3 reads 11–$12^{b}$ in marg. —$^{a}$) Ñ1 D4 स ( for तु ). D13 स एवमुक्तः ( for एवमुक्तस्तु ). —Ś2 D8.12 om. ( hapl. ) from सौमित्री in $11^{a}$ up to तेन in $12^{a}$. —$^{b}$) M2 ससुग्रीवः सहांगदः. —M2 om. $11^{c}$–12. —$^{c}$) B1.2.4 D4 च; B3 D3.6.7.10.11 सु- ; T2.3 M1 [ अ ]थ; L ( ed. ) स ( for तु ). Ñ V1.3 D13 तथेत्युवाच ; V2 तथा तूवाच ( for तथेत्युक्त्वा तु ). B2 सौमित्रिः ( for संहृष्टः ). —After $11^{c}$, D3 ins. :

G. 6. 97. 52
B. 6. 112. 15
L. 6. 93. 12

घटेन तेन सौमित्रिरभ्यषिञ्चद्विभीषणम् ।
लङ्कायां रक्षसां मध्ये राजानं रामशासनात् ॥ १२
अभ्यषिञ्चत्स धर्मात्मा शुद्धात्मानं विभीषणम् ।
तस्यामात्या जहृषिरे भक्ता ये चास्य राक्षसाः ॥ १३
दृष्ट्वाभिषिक्तं लङ्कायां राक्षसेन्द्रं विभीषणम् ।
राघवः परमां प्रीतिं जगाम सहलक्ष्मणः ॥ १४
स तद्राज्यं महत्प्राप्य रामदत्तं विभीषणः ।
प्रकृतीः सान्त्वयित्वा च ततो राममुपागमत् ॥ १५

---

3152* सौमित्रिः सविभीषणः ।
लङ्कां प्राप्य सभामध्ये.

—$^{d}$) Ñ V B2.4 D4.13 चा( B2 क्षा; D13 सा )नयद्धटं. ❀ Cv : 'एवमुक्तस्तु सौमित्रिः ससुग्रीवः सहांगदः' इत्यादयोऽन्ये नव श्लोकाः सन्ति उपरि चान्तरान्तरा केषुचित् । ते च प्राचुर्यान्नाद्रियन्ते । ❀ —After 11, D5–7.9–11 T G M1.3.5 ins. :

3153* तं घटं वानरेन्द्राणां हस्ते दत्त्वा मनोजवान् ।
आदिदेश महासत्त्वान्समुद्रसलिलानये ।
अतिशीघ्रं ततो गत्वा वानरास्ते महाबलाः ।
आगतास्तज्जलं गृह्य समुद्राद्वानरोत्तमाः ।
ततस्त्वेकं घटं गृह्य संस्थाप्य परमासने । [5]

[ (l. 1) D5 T1 G3 तान्घटान्; Ct as above ( for तं घटं ). G2 om. ( hapl. ) after तं घटं up to घटं in l. 5. D7 महाजवान् ( for मनो° ). ❀ Cr : घटं हस्त इति जातावेकवचनम् ।; so also Cm.g.t. ❀ D9 तं घटं तु गृहीत्वा तु वानरेंद्रान्मनोजवान्. —(l. 2) D6.9–11 Ct न्यादिदेश. D9–11 महासत्त्वः ( for °सत्त्वान् ). D7 समुद्रात् ( for समुद्र- ). D9–11 -सलिलं तदा ( for -सलिलानये ). —M5 om. l. 3-5. —(l. 3) D6 T2.3 M3 Cg इति ( for अति- ). M1 ततः शीघ्रतरं गत्वा ( for the prior half ). D9–11 मनोजवाः ( for महाबलाः ). —(l. 4) D5.6 T2.3 ते; D9–11 M1 तु ( for तज् ). M1 वातरंहसः ( for वानरोत्तमाः ). —(l. 5) D6 तेभ्यो; T3 G1 ते तं; G3 सैकं ( for त्वेकं ). ]

12 Ś2 D8.12 om. up to तेन in $12^{a}$; M2 om. 12; B3 reads $12^{ab}$ in marg. ( for all, cf. v.l. 11 ). V3 om. 12-17. D4 repeats $12^{ab}$ after 12. —$^{a}$) B1.3 D1–3 शुभेन ( for घटेन ). D4 ( both times ) चैव; M5 [ ए ]केन ( for तेन ). —$^{d}$) Ś2 D12 लंकायां ( for राजानं ). —After 12, Ñ V1.2 B2–4 D5–7.9–11.13 T G M1.3.5 ins. :

3154* विधिना मन्त्रदृष्टेन सुहृद्गणसमावृतम् ।

[ V1 B3.4 D13 शास्त्र- ( for मन्त्र- ). D6 T2.3 -युक्तेन ; Cg.k.t as above ( for -दृष्टेन ). V2 B2–4 D13 -समन्वितः ( D13 °तं ); D9–11 T2.3 M5 -समावृतः; G3 -समाहृतं ( for -समावृतम् ). Ñ V1 प्रहर्षेण समन्वितः ( for the post. half ). ]

13 V3 om. 13 ( cf. v.l. 12 ). K ( ed. ) reads $13^{ab}$ twice ( second time within brackets ). —$^{ab}$) B2 लंकायां ( for धर्मात्मा ). Ś2 D2.3.8.12 अभिषिच्यमाने तु तदा ( hypm. ); B1 D1 तदाभिषिच्यमाने तु ( for $^{a}$ ). Ñ V1.2 B2–4 D13 धर्मात्मानं; D4 धर्माधारं ( for शुद्धात्मानं ). Ś2 B1 D2.3.8.12 सर्वे वानरराक्षसाः ; D1 सर्वे राक्षसवानराः ( for $^{b}$ ). D9–11 K( ed., second time ) अभ्यषिंचंस्तदा सर्वे राक्षसा वानरास्तथा( K [ ed. ]°दा ). —For $13^{ab}$, M2 subst. :

3155* वानरैः सहितः सर्वैरभिषेकं चकार ह ।

—Thereafter M2 cont. :

3156* दिव्यमङ्गलवादित्रैर्ब्रह्मघोषैश्च सुस्वनैः ।
कलशैर्जलपूर्णैश्च तीर्थोदकसमन्वितैः ।
सौवर्णै राजतैश्चैव तथा मणिमयैरपि ।
क्षीरवृक्षैस्तथा मृद्भिर्दूर्वयागरुसर्षपैः ।
गन्धोदकविमिश्रेण पञ्चगव्येन चैव ह । [5]
तप्तजाम्बूनदमये सर्वरत्नविभूषिते ।
पीठे विभीषणं स्थाप्य समसिञ्चज्जलैः शुभैः ।
सलिलेन सहस्राक्षमृषयो वासवं यथा ।
ततः शङ्खा मृदङ्गाश्च भेर्यश्च पणवानकाः ।
स्तुतिशब्दाः सुमधुरा गीतशब्दास्तथैव च । [10]
विभीषणस्याभिषेको हृष्टः प्रमुदितो बभौ ।
शुक्लाम्बरधरो भूत्वा सर्वरत्नविभूषितः ।
मकुटेन विचित्रेण सर्वरत्नमयेन च ।
अनुलिप्तः सुगन्धेन श्वेतेन च विभीषणः ।
चन्दनेनाथ दिव्येन माल्यैश्च विविधैस्तथा । [15]
चामराभिश्च शुक्लाभिः छत्रेण च विराजता ।

—After $13^{ab}$, Ś2 B1 D1–3.8–12 K ( ed., within brackets ) ins. :

3157* प्रहर्षमतुलं गत्वा तुष्टुवू राममेव हि ।

[ D1 च ( for हि ). ]

—D4 om. $13^{c}$–14. —$^{c}$) Ś2 Ñ V1.2 B D1–3.8.12.13 तस्य मित्राणि हृष्टानि ( Ś2 B1 D1–3.8.12 तुतुषुर् ). —G2 om. $13^{d}$–$16^{c}$. —$^{d}$) Ñ V1.2 B2–4 D13 सर्वे च; D3 ये चैव; D8 ये चापि; T2 ये चान्य-; Ct as in text ( for ये चास्य ).

14 V3 D4 G2 om. 14 ( for V3, cf. v.l. 12 ; for the rest 13 ). Ś2 Ñ V1.2 B D1–3.5.7.8.12.13 T1 G1.3 M om.; K ( ed. ) reads within brackets $14^{cd}$. —$^{c}$) D6 T2.3 परम- ( for परमां ). —$^{d}$) D6 T2.3 आजगाम सलक्ष्मणः.

15 V3 G2 om. 15 ( cf. v.l. 12 and 13 respy. ). D10.11 om. $15^{ab}$. —$^{a}$) B1 तद्राज्यं सु- ( for स तद्राज्यं ). —$^{c}$) M5 प्रकृतिं ( for प्रकृतीः ). B1 M1 तु ; D1.3 स ( for च ). Ñ V1.2 B2–4 D7 G1 ताः ( D7 G1 स ) सांत्वयित्वा प्रकृतीस्( G1 °तिं ); D4 ततः शांतयित्वा प्रकृतीस् ( hypm. ); D9–11.13 सांत्व( D13 शांत )यित्वा प्रकृतयस्( D13 °तीस्

अक्षतान्मोदकाँल्लाजान्दिव्याः सुमनसस्तथा ।
आजह्रुरथ संहृष्टाः पौरास्तस्मै निशाचराः ॥ १६
स तान्गृहीत्वा दुर्धर्षो राघवाय न्यवेदयत् ।
मङ्गल्यं मङ्गलं सर्वं लक्ष्मणाय च वीर्यवान् ॥ १७
कृतकार्यं समृद्धार्थं दृष्ट्वा रामो विभीषणम् ।
प्रतिजग्राह तत्सर्वं तस्यैव प्रियकाम्यया ॥ १८
ततः शैलोपमं वीरं प्राञ्जलिं पार्श्वतः स्थितम् ।
अब्रवीद्राघवो वाक्यं हनूमन्तं प्लवंगमम् ॥ १९
अनुमान्य महाराजमिमं सौम्य विभीषणम् ।
प्रविश्य रावणगृहं विनयेनोपसृत्य च ॥ २०

G. 6. 97. 23
B. 6. 112. 23
L. 6. 93. 20

[ subm. ] ). —$^d$ ) M2 रामपार्श्वम् ( for ततो रामम् ). B1 D13 उपागतः. ❀ Ct : प्रकृतयः प्रकृतीः स्वपुरराष्ट्रप्रजाः. ❀

16 V3 om. 16; G2 om. 16$^{abc}$ ( cf. v.l. 12 and 13 respy. ). —$^a$ ) Ñ V2 D4 दिव्यान् ( for लाजान् ). Ś2 B1 D1–3.8–12 दध्यक्षतान्मो ( B1 °तमो )दकांश्च. —$^b$ ) Ś2 B1 D1.3.4.8–11 लाजाः ; Ñ V2 D2.12 लाजान् ; B4 विव्याध ( sic ); D6.7 T2.3 G1 M5 दिव्यान् ( for दिव्याः ). D2.6.7.12.13 T2 G3 M3 तदा ( for तथा ). —$^c$ ) Ñ V1.2 B2–4 D4.13 ते तदा हृष्टा ( B2 तत्र [ m. ]; D4 दृष्ट्वा ) ( for अथ संहृष्टाः ). —$^d$ ) D6 T2 घोरास् ; Ck.t as in text ( for पौरास् ). B1 तत्र; D1–3.8.12 तस्य; D9 तस्मिन् ( for तस्मै ). Ñ V1.2 B2–4 D4.13 रामार्थे ( Ñ1 D4 र्थं ) रजनीचराः. —After 16, M2 ins. :

3158* मणिमुक्ताप्रवालानि रत्नानि विविधानि च ।
वस्त्राणि चैव दिव्यानि वाहनानि तथैव च ।
शस्त्राणि चैव सौम्यानि कवचानि च वाससः ।

17 V3 om. 17 ( cf. v.l. 12 ). —$^a$ ) Ś2 B1 D1–3.8.9.12 तद्गृहीत्वा तु ( D2.3.9 °थ ) ; B1 तान्गृहीत्वा च ( for स तान्गृहीत्वा ). —After 17$^{ab}$, D13 ins. :

3159* यावच्चन्द्रश्च सूर्यश्च यावदुर्वी ससागरा ।
यावद्रामकथा लोके तावद्राज्यं विभीषणे ।

—$^c$ ) Ñ2 V1.2 D1–3.6.10.11 T2 मांगल्यं; Cm.g as in text ( for मङ्गल्यं ). B1 मंगलः ; B4 मंडनं; D4 मंडलं ( for मङ्गलं ). Ś2 D8.12 मंगलं सर्वमानीतं. —$^d$ ) G2 स ( for च ). G1 राघवाय स; Cg.t as in text ( for लक्ष्मणाय च ). —After 17, M2 ins. :

3160* सुग्रीवाय च रक्षेन्द्रो वानरेन्द्राय धीमते ।
ततः प्रह्वाञ्जलिपुटो रामपार्श्वस्थितोऽभवत् ।

18 D2 om. 18. —$^a$ ) M2 ततः ( for कृत- ). B1 स सिद्धार्थं ( for समृद्धार्थं ). —T1 mostly damaged for 18$^{cd}$. —$^d$ ) Ñ V1.2 B3.4 D4.13 हितकाम्यया; V3 B2 D10.11 M1 Ct प्रति°; D9 प्रीति°; Cg as in text ( for प्रिय° ). —After 18, D8 ins. :

3161* ततः प्रस्थापयन्वीरं विभीषणमुवाच ह ।
गच्छ राज्यं प्रशाधि त्वं प्रकृतीश्चानुरञ्जय ।
एवमुक्तो महाबाहुः प्रणम्य रिपुसूदनम् ।
भवत्प्रसादादित्युक्त्वा प्रययौ स विभीषणः ।
गते तस्मिन्महाबुद्धौ रामस्तं मारुतात्मजम् । [ 5 ];

while D5 T1 G1.3 M1 ins. :

3162* तत्प्रगृह्य परां प्रीतिं जगाम सहलक्ष्मणः ।

19 $^a$ ) Ś2 Ñ V1.2 B D1.3.4.8.12.13 महा- ; D2 मोहाच् ( for ततः ). —$^b$ ) Ś2 Ñ2 V1.2 B2–4 D7.8.12 G1.2 M3 पुरतः ; V3 प्रणति- ; D9–11 प्रणतं; D13 समुप- ( for पार्श्वतः ). —After 19$^{ab}$, M2 ins. :

3163* अब्रवीद्वानरं मध्ये सर्वसैन्यस्य पश्यतः ।
यन्मया तत्प्रतिज्ञातं लङ्कैश्वर्यं विभीषणे ।
कामं मया तत्सुग्रीव त्वत्प्रसादाच्च मे कृतम् ।
निर्भयो निर्विशङ्कस्तु समृद्ध्या धनदेन तु ।
दीर्घायुष्ये ध्रुवेणैव यावच्चन्द्रार्कतारकाः । [ 5 ]
लङ्काद्वीपस्य राजत्वं मया दत्तं विभीषणे ।
वीक्षदी तु भवेद्दत्तं ध्रुवं भ्रातर्यदाभवेत् । (corrupt)
एवं तत्समयं कृत्वा रावत्रः सुमहामनाः ।
उत्थाय च ततः शीघ्रं स्थापयित्वा विभीषणम् ।

—$^c$ ) D13 धैर्याद् ; G1 वीरं ( for वाक्यं ). Ñ V B2–4 D4 G ( ed. ) च वचो ( D4 ततो ) धर्म्यं ( G[ed.] °रामो ) ; M2 च हनूमंतं ( for राघवो वाक्यं ). Ś2 B1 D1–3.8–12 उवाचेदं वचो रामो. —$^d$ ) M2 वचो रामः ( for हनूमन्तं ). —After 19, Ś2 D2.8 read 22$^{ab}$ for the first time repeating it in its proper place; while M1 ins. 3164*.

20 D12 om. 20–21. V3 M1 om. 20$^{ab}$. —$^a$ ) Ñ D10.11 Ck.t अनुज्ञाप्य; Cr.g as in text ( for अनुमान्य ). M2 महाबाहो ( for °राजम् ). B1 हनुमन्वद राजानम् . —$^b$ ) B2–4 सौम्यं ( for सौम्य ). ❀ Cr : सौम्यं विभीषणमनुमान्य. ❀ —After 20$^{ab}$, D5–7 T G M3.5 B ( ed., within brackets ) ins. ; M1 ins. after 19 ( owing to om. ) ; K ( ed. ) cont. after 3165* :

3164* गच्छ सौम्य पुरीं लङ्कामनुज्ञाप्य यथाविधि ।
[ M1 Cr.g विभीषणं ( for यथाविधि ). ]

—T1 damaged for 20$^d$. —$^d$ ) T2.3 [ अ ]भिवाद्य; G3 [ अ ]भिनंद्य ( for [ उ ]पसृत्य ). D5–7 M1.3.5 Cm.g विजयेनाभिनंद्य ( M5 °गम्य ) च. —For 20$^{cd}$, Ś2 Ñ V B D1–4.8–11.13 M2 B ( ed., within brackets ) subst. ; while K ( ed., within brackets ) ins. after 20$^{ab}$ :

3165* प्रविश्य नगरीं लङ्कां कौशलं ब्रूहि मैथिलीम् ।
[ Ś2 Ñ1 V1.2 B2–4 D13 कुशलं; B1 D1–4 कौशल्यं ( for कौशलं ). Ñ2 लक्ष्मणं ( for मैथिलीम् ). ]

—After 20, K ( ed., within brackets ) ins. :

G. 6. 97. 24
B. 6. 112. 24
L. 6. 93. 21

वैदेह्या मां कुशलिनं ससुग्रीवं सलक्ष्मणम् ।
आचक्ष्व जयतां श्रेष्ठ रावणं च मया हतम् ॥ २१

प्रियमेतदुदाहृत्य मैथिल्यास्त्वं हरीश्वर ।
प्रतिगृह्य च संदेशमुपावर्तितुमर्हसि ॥ २२

इति श्रीरामायणे युद्धकाण्डे शततमः सर्गः ॥ १०० ॥

---

3166* प्रविश्य च पुरीं लङ्कामनुज्ञाप्य विभीषणम् ।
ततस्तेनाभ्यनुज्ञातो हनूमान्वृक्षवाटिकाम् ।
संप्रविश्य यथान्यायं सीताया विदितो हरिः ।

21 $D_{12}$ om. 21 (cf. v.l. 20). $V_2$ om. $21^{ab}$. —$^a$) $T_1$ damaged ; $G_2$ $M_3$ Cr.g वैदेह्यै; $M_5$ वैदेहीं (for वैदेह्या). $D_3$ om. मां (subm.). $D_{1.9-11}$ च ($D_1$ om. [subm.]) कुशलं; Cr.g as in text (for कुशलिनं). —$^b$) $Ś_2$ $V_3$ $B_{1.2.4}$ $D_{3.9-11.13}$ सुग्रीवं च (for ससुग्रीवं). $D_6$ विभीषणं (for सलक्ष्मणम्). $Ñ_1$ $D_2$ $M_2$ सुग्रीवं सहलक्ष्मणं; $T_{2.3}$ ससुग्रीवविभीषणं. —$V_3$ om. $21^{cd}$. —$^c$) Ñ $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ $M_2$ आख्याहि; Cr.g as in text (for आचक्ष्व). $Ś_2$ $B_1$ $D_{1-3.8-11}$ वदतां (for जयतां). $Ñ_1$ वीरं; $D_4$ $G_1$ श्रेष्ठं; $D_{13}$ वीर (for श्रेष्ठ). —$^d$) $Ś_2$ $D_{1-3.8-11}$ च हतं रणे; Ñ $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ निह($D_4$ °हि)तं मया; $M_2$ च हतं मया (by transp.) (for च मया हतम्).

22 $Ś_2$ $D_{2.8}$ read $22^{ab}$ for the first time after 19 repeating it here. —$^{ab}$) $D_{13}$ एवं (for एतद्). $Ś_2$ $D_{8.12}$ ($Ś_2$ $D_8$ first time) उपाख्यानं; $Ś_2$ $D_{1.2}$ (both times) $_{.8}$ ($Ś_2$ $D_8$ second time) उपाख्याहि; $Ñ_1$ $D_{4.13}$ समाख्याहि; $Ñ_2$ $V_{1.2}$ $B_{1-3}$ $D_{3.9-11}$ इहाख्याहि; $B_4$ इहाख्याय; T उपाहृत्य ($T_1$ *inf. lin.* also as in text) ; $M_2$ अनाहार्यं (sic) (for उदाहृत्य). ❀ Cv.r: प्रियमेतदुदा(Cr °पा)हृत्येति पाठः. ❀ $Ñ_1$ तु; $G_{1.2}$ तं (for त्वं). $Ś_2$ $B_1$ $D_{1.2.8-12}$ ($Ś_2$ $D_{2.8}$ both times) वैदेह्यास्त्वं ; $D_3$ वैदेह्यै त्वं (for मैथिल्यास्त्वं). $V_3$ प्रियमाख्याहि वैदेह्या * * त्वा हरिपुंगव. —$^c$) $V_1$ $D_{9-11.13}$ $G_1$ तु (for च).

Colophon. —*Kāṇḍa name* : $Ś_2$ Ñ $V_{1.2}$ $B_{1.3.4}$ $D_{2.4.13}$ लंकाकांडे. —After Kāṇḍa name, $V_1$ ins. आभ्युदयिके; $B_1$ ins. युद्धपर्वण्याभ्युदयिके; $D_1$ ins. आभ्युदयिके पर्वणि. —*Sarga name* : $Ś_2$ Ñ V B $D_{1-4.8.12.13}$ $M_3$ विभीषणाभिषेकः ; $G_2$ विभीषणपट्टाभिषेकः . —*Sarga no.* (figures, words or both) : $Ñ_1$ $V_{2.3}$ $B_{2.4}$ $D_{2.4.8.12.13}$ om. ; $Ś_2$ $D_1$ 95 ; $Ñ_2$ 101 ; $V_1$ 96 ; $B_1$ 73 ; $B_3$ 93; $D_{3.9}$ 98 ; $D_{5-7}$ $T_1$ G $M_{3.5}$ 115 ; $D_{10.11}$ 114 ; $T_2$ 123; $T_3$ 126 ; $M_1$ 116 ; $M_2$ 117. —After colophon, $D_2$ concludes with राम; G $M_{2.5}$ with श्रीरामाय नमः.

## १०१

इति प्रतिसमादिष्टो हनूमान्मारुतात्मजः ।
प्रविवेश पुरीं लङ्कां पूज्यमानो निशाचरैः ॥ १
प्रविश्य तु महातेजा रावणस्य निवेशनम् ।
ददर्श शशिना हीनां सातङ्कामिव रोहिणीम् ॥ २
निभृतः प्रणतः प्रह्वः सोऽभिगम्याभिवाद्य च ।
रामस्य वचनं सर्वमाख्यातुमुपचक्रमे ॥ ३
वैदेहि कुशली रामः ससुग्रीवः सलक्ष्मणः ।
कुशलं चाह सिद्धार्थो हतशत्रुररिंदमः ॥ ४
विभीषणसहायेन रामेण हरिभिः सह ।
निहतो रावणो देवि लक्ष्मणस्य नयेन च ॥ ५

G. 6. 98. 5
B. 6. 113. 8
L. 6. 94. 6

## 101

Ś1 missing Sarga 101 (cf. v.l. 6.93.13). D12 begins with ॐ.

1 $^{a}$) V3 damaged; B1 इति तेन; M1 इति ** (for इति प्रति-). —After 1$^{ab}$, M2 ins.:

3167* विभीषणं समाभाष्य दृष्ट्वा चैव महाबलः ।

—$^{c}$) D2 विवेश स (for प्रविवेश). —Ś2 D8.12 om. 1$^{d}$–2$^{a}$.

2 Ś2 D8.12 om. 2$^{a}$ (cf. v.l. 1). Ñ2 repeats 2$^{ab}$ in place of l. 2 of 3168*. —$^{a}$) Ñ (Ñ2 both times) V B D1–4.7.9–11.13 G1.2 M2.3.5 च; D6 T2.3 सु-; M1 स (for तु). Ñ2 (first time) B1.3 (marg. up to 3168*) D1–3.9–11 पुरीं लंकां; M1 महाप्राज्ञो (for महातेजा). —$^{b}$) Ś2 Ñ2 (first time) B1.3 D2.3.8.12 समेत्य च विभीषणं; Ñ (Ñ2 second time) V B2.4 D4.13 रावणाक्रीड (D4 °णोद्यान)मृद्धिमत्; D1 सामात्यः सविभीषणः; D9–11 अनुज्ञाप्य (D9 पूज्यमेत्य) विभीषणं; G (ed.) रावणालय-मृद्धिमत्. —After 2$^{ab}$, Ś2 Ñ2 B1.3 (m.) D1–3.8–12 ins.:

3168* प्रविवेशाभ्यनुज्ञातो हनूमान्वृक्षवाटिकाम् ।
स प्रविश्य यथान्यायं सीताया विदितो हरिः ।

[(l. 1) D9–11 ततस्तेन (for प्रविवेश). —Ñ2 om. l. 2 repeating 2$^{ab}$ in its place. —(l. 2) B1 प्रविश्य च; D9 संप्रविश्य (for स प्रविश्य). Ś2 B1 D3.9.11 सीतया (for सीताया).]

—$^{c}$) D7 ददृशे. Ñ V1.2 B D2.4.6.7.10.11 M1.3 Cm.g.k.t मृजया; V3 प्रजया; D1.3 त्रिजटा-; D9 पूजया; D13 M2 मृगया- (for शशिना). D3 -युक्तां (for हीनां). Ś2 D8.12 स ददर्श तदा सीतां. —$^{d}$) Ñ2 V B2–4 निष्प्रभाम्; M2 सग्रहाम्; Cg.k.t as in text (for सातङ्काम्). V3 damaged for रोहिणीम्. D10.11 transp. इव and रोहिणीम्. Ś2 B1 D1–3.8.9.12.13 रामपत्नीमनिंदितां; Ñ1 D4 मलिनां जनकात्मजां. —After 2, D5–7.10.11 S ins.:

3169* वृक्षमूले निरानन्दां राक्षसीभिः समावृताम् ।
[D7.10.11 G1 परीवृतां (for समावृताम्).]

3 V3 om. 3$^{ab}$. —$^{a}$) Ñ1 निवृतः; D13 विसृतः (for निभृतः). Ś2 D2.3.8.12 प्रयतः (for प्रणतः). D8 प्राह; D13 पुंसः (for प्रह्वः). B1 नियतः प्रयतः प्राज्ञः; B3 निभृतः प्रयतः प्रज्ञः; D4 निभृतां प्रयतस्तत्र. —$^{b}$) G1.3 [अ]भ्यवादयत्; Cr.g.t as in text (for [अ]भिवाद्य च). Ñ V1.2 B2–4 D4.13 सोभिवाद्य च मैथिलीं. —After 3$^{ab}$, D5–7.9–11 S ins.:

3170* दृष्ट्वा तमागतं देवी हनूमन्तं महाबलम् ।
तूष्णीमास्ते तदा दृष्ट्वा स्मृत्वा प्रमुदिताभवत् ।
सौम्यं दृष्ट्वा मुखं तस्या हनूमान्प्लवगोत्तमः ।

[(l. 1) D9–11 M1 समागतं; Cg as above (for तमागतं). —D6 reads in marg. from महा up to हनूमान् in l. 3. —M1 om. l. 2–3. —(l. 2) D5.6.11 M3 Cm.g आस्त; Cv.r as above (for आस्ते). D7 Cr.m.g ततो (for तदा). G1 रामं; M2 स्मृत्वा (for दृष्ट्वा). M2 देवी; Cr.m.g as above (for स्मृत्वा). D5 T1 G3 च मुदिता; Cg as above (for प्रमुदिता). D9–11 स्मृत्वा हृष्टाभवत्तदा (for the post. half). —(l. 3) G1 सोपि; Cg as above (for सौम्यं). D7.9–11 G1.2 M2 transp. दृष्ट्वा and तस्या. D7 G1.3 मारुतात्मजः (for प्लवगोत्तमः).]

—$^{c}$) D6.7 T2.3 G1 वचनात् (for वचनं). G2 सौम्यम् (for सर्वम्).

4 $^{a}$) G (ed.) मैथिलि (for वैदेहि). D4 कुशलं (for कुशली). —$^{b}$) D13 सुग्रीवश्च (for ससुग्रीवः). D5 T1 M3.5 सहसुग्रीवलक्ष्मणः; D8–11 सुग्रीवः सहलक्ष्मणः. —After 4$^{ab}$, Ñ D4–7.13 T G M3.5 ins.:

3171* विभीषणसहायश्च हरीणां सहितो बलैः ।

[D5.6 -सहायाश् (for -सहायश्). Ñ D4.13 हरिभिः (for हरीणां). D4.5(after corr.).13 वली (for बलैः).]

—D13 om. 4$^{c}$–7$^{b}$. Ñ1 D4 om. 4$^{c}$–5. —$^{c}$) Ś2 Ñ2 V B D1–3.5–12 T G1.3 M1.2.5 Ct त्वाह (for चाह). —$^{d}$) Ś2 B1 D1–3.8–12 अमित्रजित्; V1 illeg. (for अरिंदमः).

5 Ñ1 D4.13 om. 5 (cf. v.l. 4). V3 damaged for 5$^{ab}$. —$^{b}$) B4 ऋक्षैश्च (for रामेण). ☞ V3 missing from 5$^{c}$ up to 6.102.26. —$^{c}$) B4 संख्ये; M1 युद्धे (for देवि). —$^{d}$) Ñ2 V1.2 B2–4 लक्ष्मणेन (for लक्ष्मणस्य). Ñ2 [अ]नुजेन च; B2 मयापि च; B3 (m. also as in Ś2)

G. 6. 98.0
B. 6. 113.9
L. 6. 94.8

पृष्ट्वा च कुशलं रामो वीरस्त्वां रघुनन्दनः ।
अब्रवीत्परमप्रीतः कृतार्थेनान्तरात्मना ॥ ६
प्रियमाख्यामि ते देवि त्वां तु भूयः सभाजये ।
दिष्ट्या जीवसि धर्मज्ञे जयेन मम संयुगे ॥ ७
लब्धो नो विजयः सीते स्वस्था भव गतव्यथा ।
रावणः स हतः शत्रुर्लङ्का चेयं वशे स्थिता ॥ ८
मया ह्यलब्धनिद्रेण धृतेन तव निर्जये ।
प्रतिज्ञैषा विनिस्तीर्णा बद्ध्वा सेतुं महोदधौ ॥ ९
संभ्रमश्च न कर्तव्यो वर्तन्त्या रावणालये ।
विभीषणविधेयं हि लङ्कैश्वर्यमिदं कृतम् ॥ १०
तदाश्वसिहि विश्वस्ता स्वगृहे परिवर्तसे ।
अयं चाभ्येति संहृष्टस्त्वद्दर्शनसमुत्सुकः ॥ ११

---

मयैव हि (for नयेन च). Ś2 B1 D1-3.8-12 लक्ष्मणेन च वीर्यवान् (D8 धीमता).—After 5, D1 ins.:

3172* इन्द्रजित्कुम्भकर्णश्च ये चान्ये भीमविक्रमाः ।

**6** V1.2 B2.4 D10.11.13 om. 6 (for D13, cf. v.l. 4). Ś2 B1.3 D1-3.8.9.12 transp. 6 (B3 $6^{cd}$) and 7. Ñ2 repeats 6 after 7. D7 G1.2 M2 read 6 after the first occurrence of $7^{cd}$. B3 reads $6^{ab}$ after $7^{cd}$ (r.).—ab) Ś2 Ñ2 (second time) B1.3 D2.8.12 दिष्ट्या च; Ñ1 D3.4.6.7 T3 दृष्ट्वा च (T3 तु); D1 सिद्धार्थः; T2 पृष्ट्वा तु; G1.2 पृष्टश्च; L (ed.) दिष्ट्यात्र; Cm.k as in text (for पृष्ट्वा च). D1.4.9 कुशली (for कुशलं). Ś2 Ñ (Ñ2 first time) B1.3 D1-4.8.12 M1 transp. रामो and वीरस्.—After $6^{ab}$, B3 repeats $8^{cd}$.—d) Ś2 Ñ2 (second time) B1.3 D1-3.8.9.12 ससुग्रीवः सलक्ष्मणः.

**7** D13 om. $7^{ab}$ (cf. v.l. 4). Ś2 B1.3 D1-3.8.9.12 transp. 6 (B3 $6^{cd}$) and 7.—a) D1.4 आख्याहि (for आख्यामि). Ñ1 D4 देवि त्वां; Ñ2 illeg. (for ते देवि). Ś2 D8.12 प्रियमाख्याति ते वीरो.—b) Ñ D4.7 G1.2 M2 च (for तु). B1 D1.2.9-11 भूयश्च त्वां; D3 भूयस्त्वां तु (by transp.); Cr as in text (for त्वां तु भूयः). Ñ1 (m. also) समानये; D9 प्रसादये (for सभाजये). Ś2 D8.12 भूयस्त्वां (Ś2 °त्वा) च सभाजयेत् (D12 सदा भवेत्); V1.2 B2-4 राघवस्य महाजयं.—B3 repeats $7^{cd}$ after 8. D7 G1.2 M2 K (ed.) read $7^{cd}$ twice (K [ed.] second time within brackets).—c) D4 दृष्ट्वा; D12 पृष्ट्वा (sic) (for दिष्ट्या). Ñ D4.7 (second time).13 वर्धसि; B1 मोदसि; B3 (second time) D1-3.9 जयसि (for जीवसि). V1 B2-4 G1.2 M2 (B3 first time; G1.2 M2 second time) Cr धर्मज्ञे वर्धसे दिष्ट्या; V2 D10.11 Ck.t तव प्रभावाद्धर्मज्ञे.—d) Ś2 Ñ2 B1.3 (second time) D3.8.9.12 जयो (B1 °ये) रामस्य; V2 D10.11 Ct महात्रामेण; D1.2 जयाद्रामस्य; D7 (second time) मज्जयेन च; M1 प्रभावात्तव; Cm.g as in text (for जयेन मम). V1 B2-4 D7 G1.2 M2 (except V1 B2.4 all first time) जयोयं (D7 G1.2 °यो मे) प्रतिगृह्यतां.—After the first occurrence of $7^{cd}$, D7 G1.2 M2 read 6.—After 7, Ñ2 repeats 6.

**8** a) Ś2 B1 D1-3.8.9.12 प्राप्तो मे; Ñ1 V1 B2.4 D4.13 लब्धो मे; Ñ2 V2 B3 D7.10.11 G1.2 M1 Ct लब्धोयं; Cm.g as in text (for लब्धो नो). D13 जयः (subm.) (for विजयः). M2 देवि (for सीते).—b) V1 B सुस्था; G2 *स्था; Cr.m.g as in text (for स्वस्था). V1.2 B D9-11 -ज्वरा; Cr.m.g as in text (for -व्यथा). D4 नष्टा भवतु ते व्यथा.—B3 repeats $8^{cd}$ after $6^{ab}$.—c) Ś2 B1.3 (second time) D1-3.5.8-12 T1 G3 M2.3.5 च; Ñ V1.2 B2.3 (first time).4 D4 [ऽ]यं (for स). D7.13 G1.2 रावणो निहतः पापः (D13 शत्रुर्).—d) B1 येन; B3 (first time) D9-11 चैव; M1 मम (for चेयं). Ś2 B1.3 (second time) D1-3.8-12 वशीकृता; V1.2 B2.3 (first time).4 गतव्यथा; D6 T2.3 वशंगता (for वशे स्थिता). D7 G1.2 सामात्यः ससुतो मृधे; D13 लंका चैवावशेषिता.—After 8, B3 repeats $7^{cd}$ and then reads $6^{ab}$.

**9** a) Ñ1 तु; M5 [अ]पि (for हि). D13 मया तु लब्धमित्रेण.—b) Ś2 D2.8.12.13 वृतेन; Ñ V1 B2-4 धृता या; V2 B1 वृत्ते च; D4 भृता या; D9 द्रुतेन; M3 Cm.g दृढेन; Cr.t as in text (for धृतेन). Ś2 V2 B1 D1-3.8.9.12 रिपुनिग्रहे (for तव निर्जये).—D1 reads $9^{cd}$ twice.—c) D9 [ए]व (for [ए]षा). Ñ B3.4 D4 मया तीर्णा; V1 च सुतीर्णा; D5 सुविस्तीर्णा; T1 सुनि° (for विनिस्तीर्णा). Ś2 V2 B1 D1 (both times).2.3.8.12 प्रतिज्ञेयं समुत्तीर्णा; B2 D13 प्रतिज्ञा सा (B2 °ज्ञेयं) मया तीर्णा; D7 G1.2 प्रतिज्ञा पालिता देवि.—d) D5 लब्ध्वा (for बद्ध्वा). Ś2 B1 D1 (second time).2.3.8.12 तीर्णश्च वरुणालयः; Ñ V1.2 B2-4 D4.13 तरता भीममर्णवं; D1 (first time) स्वस्था भव गतव्यथा; M2 तरित्वा भीममर्णवं.

**10** a) D2 संशयश्; D13 संरंभश् (for संभ्रमश्). D7 transp. च and न. M3 गंतव्यो (for कर्तव्यो). G1.2 संदेहो न च कर्तव्यो.—b) Ś2 D5.9.12 T1 G3 वसंत्या; D8 वसंती (sic); M5 वर्तिन्या (for वर्तन्त्या). ❀ Cg.k.t: वर्तन्त्या वर्तमानया. ❀ Ś2 वरुणालये (sic); Ñ V1.2 B3.4 D4.7.12 G1.2 राक्षसालये (D4 °यने) (for रावणालये).—c) D1 om. हि (subm.). D2 -वशे हीदं (for -विधेयं हि).—d) Ś2 B1 D1-3.8.12 कृतं मया; B2 D9 मया कृतं (for इदं कृतम्).

**11** a) Ś2 तदा स्वपिहि; D13 तदा सुखं हि. Ś2 D8.12 विस्रब्धा; B1 D1-3.9 विश्रब्धं; B2 D13 भद्रं ते; D4 वैदेहि;

एवमुक्ता समुत्पत्य सीता शशिनिभानना ।
प्रहर्षेणावरुद्धा सा व्याजहार न किंचन ॥ १२

अब्रवीच्च हरिश्रेष्ठः सीतामप्रतिजल्पतीम् ।
किं त्वं चिन्तयसे देवि किं च मां नाभिभाषसे ॥ १३

एवमुक्ता हनुमता सीता धर्मे व्यवस्थिता ।
अब्रवीत्परमप्रीता हर्षगद्गदया गिरा ॥ १४

प्रियमेतदुपश्रुत्य भर्तुर्विजयसंश्रितम् ।
प्रहर्षवशमापन्ना निर्वाक्यास्मि क्षणान्तरम् ॥ १५

न हि पश्यामि सदृशं चिन्तयन्ती प्लवंगम ।
मत्प्रियाख्यानकस्येह तव प्रत्यभिनन्दनम् ॥ १६

न च पश्यामि तत्सौम्य पृथिव्यामपि वानर ।
सदृशं मत्प्रियाख्याने तव दातुं भवेत्समम् ॥ १७

G. 6. 98. 15
B. 6. 113. 19
L. 6. 94. 20

---

$D_{10.11}$ विस्रब्धं; $C_g$ as in text (for विश्वस्ता). —$^{b}$) $\tilde{N}_1$ स्वदेशे; $B_3$ (m. also as in text) स्ववृत्ते; $D_4$ विस्रब्धा; $D_{13}$ विश्रब्धा (for स्वगृहे). $G_3$ विनिवर्तसे. —$^{c}$) $G_1$ स्वयं; $C_{v.r.m.g}$ as in text (for अयं). $\acute{S}_2$ $B_1$ $D_{1-3.8.12}$ अहमप्यद्य; $\tilde{N}$ $V_{1.2}$ $B_{2-4}$ $D_4$ अहं चाभ्येमि; $D_9$ अहमद्य सु-; $D_{13}$ अहं चान्योपि; $T_2$ अयं चाभ्येहि; $M_1$ अहं चाभ्येति (sic) (for अयं चाभ्येति). ❀ Cr: "अयं चाभ्येति संहृष्टस्त्वद्दर्शनसमुत्सुकः। " इत्येतदनन्तरं रामसंदेशवाक्यम्।; Ct: 'अयं चाभ्येति संहृष्टः' इति पाठः. ❀ —$^{d}$) $D_9$ -कूतुहलः (for -समुत्सुकः). $D_{13}$ शश्वत्कुशलमुत्सुकः.

12 $^{a}$) $\tilde{N}_1$ $D_{4.13}$ समुचितं; $V_2$ समुत्थितं; $D_{5.9-11}$ तु सा देवी; $D_6$ $T_{2.3}$ तु सा सीता; $M_1$ हनुमता; $C_g$ as in text (for समुत्पत्य). —$^{b}$) $D_6$ $T_{2.3}$ देवी (for सीता). $\tilde{N}$ $V_{1.2}$ $B_{2.3}$(m. also as in text)$_{.4}$ $D_{4.13}$ भर्तुर्विजयसंहिता ($B_2$ °शंसिता; $B_3$ °संस्थिता; $D_{13}$ °संमितं). —$^{c}$) $T_2$ प्रहृष्टेन. $\acute{S}_2$ $B_1$ $D_{2.3.8}$ $M_1$ [अ]वरुद्धेव; $\tilde{N}_2$ $V_{1.2}$ $B_{3.4}$ [अ]भिसंरुद्धा; $D_1$ [ए]व रुद्धेव; $D_{4.9.12}$ $M_2$ °रुद्धेन; $D_{13}$ [अ]विशेषेण; $G_1$ [अ]भिवृद्धा सा; G (ed.) [अ]तिसंरुद्धा; $C_g$ as in text (for [अ]वरुद्धा सा). $\tilde{N}_1$ प्रजहर्षावरोधेन; $B_2$ हर्षेणापि च संरुद्धा. —$^{d}$) $D_4$ कश्चन (sic) (for किंचन). $\acute{S}_2$ $B_1$ $D_{1-3.8-12}$ व्याहर्तुं न शशाक ह.

13 $D_{13}$ om. (hapl.) 13–14$^{b}$. —$^{a}$) $M_2$ स (for च). $\acute{S}_2$ $B_1$ $D_{1-3.8-12}$ ततोब्रवीद्धरिवरः. —$^{b}$) $G_1$ $M_2$ -जल्पितां (for -जल्पतीम्). $D_4$ सीतामपि प्रजल्पितां; $T_{2.3}$ सीतामप्रविजल्पितः. —After 13$^{ab}$, $\acute{S}_2$ $B_{1.3}$ (m.) $D_{1-3.8.9.12}$ ins.:

3173* निवृत्तहर्षां सहसा हरिराकारसूचिताम्।
हर्षादेव समुत्थाय सहसा व्रीडिताननाम्।

[(l. 1) $D_9$ प्रवृद्ध- (for निवृत्त-). $D_3$ -हर्षात् (for -हर्षां). $D_2$ वाक्यम् (for हरिर्). $B_{1.3}$ $D_3$ -सूचितः (for -सूचिताम्). —(l. 2) $B_{1.3}$ $D_{3.9}$ देवीं (for एव).]

—Thereafter, $D_1$ cont.:

3174* कारुण्येन तु संयुक्तां सत्यार्जवपरायणाम्।
पतिव्रतां रामपत्नीं पतिधर्मपथि स्थिताम्।

—$^{c}$) $D_{4.5}$ $T_1$ $G_3$ $M_{3.5}$ नु (for त्वं). —$^{d}$) $D_4$ $T_1$ $G_1$ किंचिन्मां; $D_5$ किं **; $D_8$ $G_2$ किं त्वं($D_8$ च) मां; $M_3$ किं नु मां (for किं च मां). $B_4$ [अ]वभाषसे; $M_5$ प्रभाषसे (for [अ]भिभाषसे).

14 $D_{13}$ om. 14$^{ab}$ (cf. v.l. 13). —$^{a}$) $M_1$ तु सा सीता (for हनुमता). —$^{b}$) $M_5$ om. (hapl.?) सीता. $D_5$ $T_{1.2}$ $G_3$ धर्म- (for धर्मे). $\acute{S}_2$ $B_1$ $D_{1-3.8-12}$ सीता धर्मपथे स्थिता; $\tilde{N}$ $V_{1.2}$ $B_{2.4}$ $D_4$ सीता शशिनिभानना; $B_3$ (marg. also as in $B_1$) सीता परमहर्षिता; $M_1$ वायुपुत्रेण धीमता. —$^{c}$) $D_{6.7}$ परमप्रीत्या; $M_1$ वानरश्रेष्ठं (for परमप्रीता). —$^{d}$) $\acute{S}_2$ $D_{2.3.8-12}$ $M_5$ बाष्प-; $D_5$ सीता (for हर्ष-). $\tilde{N}$ $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ $M_{1.2}$ -गद्गदभाषिणी; $D_1$ -संदिग्धया गिरा.

15 $D_6$ reads in marg. 15–16$^{b}$. —$^{a}$) $D_9$ $T_{2.3}$ इति श्रुत्वा (for उपश्रुत्य). —$^{b}$) $D_5$ भर्तृ- (for भर्तुर्). $\tilde{N}$ $B_2$ -संमतं; $V_{1.2}$ $B_4$ $D_{13}$ -संमितं; $B_3$ -मंगलं; $D_4$ -संगतं (for -संश्रितम्). $\acute{S}_2$ $B_1$ $D_{1-3.8.9.12}$ भर्तुर्विजयमुत्तमं. —$^{c}$) $B_1$ $D_3$ प्रहर्षं च समापन्ना. —$^{d}$) $\acute{S}_2$ निर्विग्राह्यं; $B_1$ $D_{1-3.8.12.13}$ निर्वाक्याहं; $D_4$ निर्वाच्यास्मि (for निर्वाक्यास्मि). $\acute{S}_2$ $\tilde{N}$ $B_1$ $D_{1-4.8.12.13}$ त्वया कृता; $V_{1.2}$ $B_{3.4}$ क्षणात्कृता; $M_2$ क्षणे कृता; $C_{m.g.k.t}$ as in text (for क्षणान्तरम्).

16 $D_6$ reads in marg. 16$^{ab}$ (cf. v.l. 15). —$^{a}$) $V_2$ $B_1$ च (for हि). $T_2$ सदृशो; $C_{r.g.t}$ as in text (for सदृशं). $\tilde{N}$ $D_{4.13}$ सदृशं न च($\tilde{N}_2$ च न) पश्यामि. —After 16$^{ab}$, $D_{12}$ ins. 3176*. —$B_1$ $D_{12}$ om. 16$^{cd}$. —$^{c}$) $T_{2.3}$ त्वत्प्रिय-; $C_m$ as in text (for मत्प्रिय-). $\tilde{N}$ $V_{1.2}$ $B_{2.4}$ $D_{1.2.4}$ -[आ]ख्यायकस्य; $C_m$ as in text (for -[आ]ख्यानकस्य). $\acute{S}_2$ $D_1$ $M_5$ [ए]व (for [इ]ह). $D_{9-11}$ Ct आख्यानकस्य भवतो; $D_{13}$ प्रियमाख्यायकस्येह. —$^{d}$) $D_{9-11}$ दातुं; $C_m$ as in text (for तव). $D_3$ -नंदितं (for -नन्दनम्). —After 16, $\acute{S}_2$ $D_{1-3.8}$ read 3175*.

17 $^{a}$) $\tilde{N}$ $V_1$ $B_{2.4}$ तु; $D_4$ om. (subm.); $D_5$ $T_1$ $M_{2.5}$ Cr हि; $C_v$ as in text (for च). $B_4$ ते सौम्य; $D_{9-11}$ सदृशं (for तत्सौम्य). —$^{b}$) $\acute{S}_2$ $V_1$ $B_1$ $D_{1-3.8.12}$ अपि($V_1$ इह) किंचन; $\tilde{N}$ $V_2$ $B_{2.4}$ $D_{4.13}$ वानराधिप; $B_3$ $D_{9-11}$ तत्र किंचन (for अपि वानर). —$^{c}$) $B_1$ यादृशं. $\acute{S}_2$ $\tilde{N}_1$ $B_4$ $D_{2.3.8-13}$ यत्; $B_1$ त्वत्-; $B_2$ वा (for मत्-). —$^{d}$) $\acute{S}_2$ $V_1$ $B_1$ $D_{1-3.8-12}$ दत्त्वा (for दातुं). $\tilde{N}$ $V_2$ $B_{2-4}$ $D_4$ मम; $V_1$ illeg.; $D_{9-11}$ सुखम्; $C_{v.g}$ as in text (for समम्). $D_{13}$ तव दातुर्भवेन्मम; $M_2$ वै दातुमभवत्समं; G (ed.) सत्यमेतद्ब्रवीमि ते.

G. 6. 98. 16
B. 6. 113. 20
L. 6. 94. 19

हिरण्यं वा सुवर्णं वा रत्नानि विविधानि च ।
राज्यं वा त्रिषु लोकेषु नैतदर्हति भाषितुम् ॥ १८
एवमुक्तस्तु वैदेह्या प्रत्युवाच प्लवंगमः ।
प्रगृहीताञ्जलिर्वाक्यं सीतायाः प्रमुखे स्थितः ॥ १९
भर्तुः प्रियहिते युक्ते भर्तुर्विजयकाङ्क्षिणि ।
स्निग्धमेवंविधं वाक्यं त्वमेवार्हसि भाषितुम् ॥ २०
तवैतद्वचनं सौम्ये सारवत्स्निग्धमेव च ।
रत्नौघाद्विविधाच्चापि देवराज्याद्विशिष्यते ॥ २१
अर्थतश्च मया प्राप्ता देवराज्यादयो गुणाः ।
हतशत्रुं विजयिनं रामं पश्यामि यत्स्थितम् ॥ २२

---

18 B1 D12 om. 18.—a) M2 हिरण्यं रजतं वापि. —T1 damaged for b except च.—b) B2 वा (for च). —For $18^{ab}$, Ś2 D1–3.8 G (ed.) subst. and read (except G [ed.]) after 16:

3175* न हिरण्यं न वासांसि न रत्नानि प्लवंगम ।

—Thereafter all the above MSS. cont.; while D12 ins. after $16^{ab}$:

3176* अतोऽहं हर्षमापन्ना पुनर्दैन्यमुपागता ।

[ Ś2 D8.12 अहं ते; D3 अथाहं; G (ed.) ततोहं (for अतोऽहं). G (ed.) पुनर्मूकत्वमागता (for the post. half). ] —Ś2 D1–3.8 G (ed.) om. $18^{cd}$.—c) B4 D4 च (for वा).—d) D9–11 (with hiatus) एतन्नार्हति (D9 °र्हामि) (for नैतदर्हति). D5.10.11 G1.3 M1 Cv.t भाषितं; M2 तादृशं; Cm.g as in text (for भाषितुम्). Ñ V1.2 B2–4 D4.13 नै(Ñ2 V1.2 [with hiatus] ए; D4 *)तदर्हसि तान्यपि.

19 a) G1 च (for तु). —D5–7.9–11 S repeat $19^{cd}$ after 3181*.—c) Ś2 B1 D2.3.5–12 T G M2.3.5 (D5–7 T G M3.5 second time; D9–11 both times; M2 first time) हर्षात्; M1 (first time) प्रह्वः; M1 (second time) वीरो; M2 (second time) हृष्टः (for वाक्यं). Ñ V1.2 B2–4 D4 कृतांजलिपुटो हर्षात् (B2 भूत्वा); D1 प्रहर्षांजलिर्हर्षात् (subm.); D13 कृतांजलिश्चैवाब्रवीत्; M3 (first time) गृहीतप्रांजलिर्वाक्यं. —d) M1 (second time) हनुमान् (for सीतायाः). B1 संमुखे (for प्रमुखे).

20 a) D5 भर्तृ- (for भर्तुः). Ś2 D8.12 युक्ता; Ñ1 V1 B2–4 D4.13 रक्ते (for युक्ते).—b) Ś2 D12 -कांक्षिणी; Ñ2 V1.2 B2–4 -नंदिनि (for -काङ्क्षिणि).—cd) D9 वक्तुम् (for स्निग्धम्). B3 T2.3 एवं हितं; G (ed.) एव हि तद्; Cr.g.t as in text (for एवंविधं). B2 कार्यं; D7 मां हि (for वाक्यं). Ś2 B1 D1–3.8.12 भर्तुरेवंविधं योग्यं (for °). B2 (also as in text) वाक्यं वा (for त्वमेव). Ś2 B1 D1–3.8.12 [अ]निंदिते (for भाषितुम्). D13 स्निग्धां त्वमेवार्हत्विप वाक्यसि * * भाषितुं (corrupt). ❀ Ck: अत्र क्वचित् श्लोकद्वयं योजनाशक्त्या प्रक्षिप्तम्।; Ct: एतदुत्तरं 'तवैतद्वचनं देवि त्वत्तोऽर्हामि प्रियं महत्। रत्नौघाद्विविधाच्चापि देवराज्याद्विशिष्यते । अर्थतश्च मया प्राप्ता देवराज्यादयो गुणाः। हतशत्रुं विजयिनं रामं पश्यामि सुस्थिरम्।' इति श्लोकद्वयं प्रक्षिप्तमिति कतकः. ❀ —After 20, D11 ins. 3181*.

21 D11 om. 21–22.—a) Ś2 D8.12 न चैतद्; B1–3 D9 तदेतद्; D1 तथैव (for तवैतद्). Ś2 V1.2 B D1–3.8–10.12 M1.2 देवि; Ñ D7 G सौम्यं; D4 श्रुत्वा (for सौम्ये). —b) Ñ1 V1.2 B2–4 हितम्; D13 सारम् (for स्निग्धम्). Ñ2 सादरं हितम्; D4 शाश्वतं हितम् (for सारवत्स्निग्धम्). B3 वा; M2 om. (subm.) (for च). D9.10 त्वत्तोर्हामि (D9 °त्तो हि मे) प्रियं महत्. —After $21^{ab}$, M2 ins. 3178*.—d) T2 M1 देवि (for देव-). —For $21^{cd}$, Ś2 Ñ V1.2 B D1–4.8.12.13 M2 subst.:

3177* रत्नौघपरिदानेन देवराज्येन वा समम् ।

[ D4 रत्नार्घ-. V1 B D1 -वरदानेन; D2 M2 -धन°; D3 -धनधान्येन (for -परिदानेन). Ś2 D8.12 न रत्नै रत्न(D8 °हेम)-दानेन (for the prior half). V1 B2–4 वरदानेन (for देवराज्येन). Ś2 D2.8.12 चापरं; M2 वाधिकं (for वा समम्). D13 रत्नौघं विविधं चैव देवराज्यं च वासवं. ]

22 D11 om. 22 (cf. v.l. 21).—a) Ś2 D8 तथैते च; Ñ1 V2 D5 T G3 अर्थतस्तु (Ñ1 V2 °स्ते); D4 अथातश्च; D12 तथैवैते; D13 अक्षराश्च; M5 अर्थिताश्च (for अर्थतश्च). B1 प्राप्तं; B4 देवि (for प्राप्ता).—b) B2 D2.3 देवि; B3 om. (for देव-).—d) D9.10 T2 G1.2 पश्यसि; Cm.g as in text (for पश्यामि). Ś2 D8.12 यत्स्थितः; B3 [उ]पस्थितं; D5.6 T G1.2 M3.5 सुस्थितं; D7.9.10 सुस्थिरं; G3 संस्थितं; M2 यत्प्रियं (for यत्स्थितम्). M1 यत्पश्यामि रघूद्वहं. —After 22, Ñ V1.2 B2–4 D4 ins.; while M2 ins. after $21^{ab}$:

3178* माता ह्यसि नृणां देवि सर्वलोकेष्वरुन्धती ।

[ Ñ2 B2 सीता (sic) (for माता). B3 अहं तु त्वाभिजानामि वसिष्ठस्याप्यरुंधतीं. ]

—Thereafter all the above MSS. (except M2) cont.; while Ś2 B1 D1–3.8.12 ins. after 22:

3179* अहं त्वेकं वरं देवि त्वत्तोऽर्हामि प्रियं महत् ।
तन्मे प्रीता प्रयच्छ त्वं रामश्चाप्यनुमंस्यते ।

[ (l. 1) Ś2 V1 B1–3 D8 त्वे(B3 ए)क- (for त्वेकं). Ñ V1.2 B2.4 D4 याचे (for ऽर्हामि). V2 illeg. for प्रियं महत्. B1 हितं; B3 वरं (for महत्). —(l. 2) Ñ1 त्वं मे; Ñ2 तं मे; D8 ततो (for तन्मे). Ñ2 B2–4 D4 प्रीत्या; D2 शांता (for प्रीता). Ś2 D3.8.12 प्रयच्छस्व; B1 प्रयच्छाद्य (for प्रयच्छ त्वं). Ñ1 V2 [अ]नुमन्यतां; Ñ2 V1 B2.3 °मन्यते; B1

इमास्तु खलु राक्षस्यो यदि त्वमनुमन्यसे ।
हन्तुमिच्छाम्यहं सर्वा याभिस्त्वं तर्जिता पुरा ॥ २३
क्लिश्यन्तीं पतिदेवां त्वामशोकवनिकां गताम् ।
घोररूपसमाचाराः क्रूराः क्रूरतरेक्षणाः ॥ २४
राक्षस्यो दारुणकथा वरमेतं प्रयच्छ मे ।
इच्छामि विविधैर्घातैर्हन्तुमेताः सुदारुणाः ॥ २५
मुष्टिभिः पाणिभिश्चैव चरणैश्चैव शोभने ।
घोरैर्जानुप्रहारैश्च दशनानां च पातनैः ॥ २६

G. 6. 98. 24
B. 6. 113. 33
L. 6. 94. 31

°दिश्यतां; D8 °शंस्यते (for °मंस्यते). B4 राममेवानुमन्यतां; D4 रामश्चाभ्यनुवर्तते (for the post. half).]

—Thereafter Ś2 B1.3 D1–3.8.12 cont.; Ñ1 V1.2 B2.4 cont. only l. 1–2; Ñ2 ins. only l. 2 and D10.11 ins. only l. 1, 2 and 4 after 24; D9 ins. only l. 3–4 after 23:

3180* इह श्रुता मया देवि राक्षस्यो विकृताननाः ।
असकृत्परुषैर्वाक्यैर्वदन्त्यो रावणाज्ञया ।
तास्त्वां परुषवादिन्यो दारुणास्तर्जने रताः ।
विकृता विकृताचारा ममानुज्ञातुमर्हसि ।
शोकार्ता त्वं परिक्लिष्टा श्राविता परुषं वचः । [5]

[(l. 1) Ś2 इति (for इह). Ñ1 V1.2 B2–4 इमाः श्रुता मया पूर्वं (for the prior half). —Ś2 D8.12 om. (hapl.?) from the post. half up to 23c. —(l. 2) B3 सुमहत्- (for असकृत्). Ñ V1.2 B परुषं वाक्यं (for परुषैर्वाक्यैर्). —B3 reads in marg. l. 3–4. —(l. 3) B3 D2 त्वं (for त्वां). D9 तासां (for तास्त्वां). B1 -वाक्येन (for -वादिन्यो). D9 तथा (for रताः). —(l. 4) D1.9–11 -[आ]काराः (for -[आ]चारा). B1 विकृताविकृताचारा (for the prior half). B3 D2 माम् (for मम). D9–11 क्रूराः क्रूरकचेक्षणाः (for the post. half). —(l. 5) L (ed.) त्वां (for त्वं). L (ed.) श्रावितं (for श्राविता).]

—After 22, D5–7.9.10.11 (after 20 owing to om.) S ins.:

3181* तस्य तद्वचनं श्रुत्वा मैथिली जनकात्मजा ।
ततः शुभतरं वाक्यमुवाच पवनात्मजम् ।
अतिलक्षणसम्पन्नं माधुर्यगुणभूषितम् ।
बुद्ध्या ह्यष्टाङ्गया युक्तं त्वमेवार्हसि भाषितुम् ।
श्लाघनीयोऽनिलस्य त्वं पुत्रः परमधार्मिकः । [5]
बलं शौर्यं श्रुतं सत्त्वं विक्रमो दाक्ष्यमुत्तमम् ।
तेजः क्षमा धृतिः स्थैर्यं विनीतत्वं न संशयः ।
एते चान्ये च बहवो गुणास्त्वय्येव शोभनाः ।
अथोवाच पुनः सीतामसंभ्रान्तो विनीतवत् ।

[D11 om. l. 1–2. —(l. 2) M2 शुभकरं (for शुभतरं). —(l. 3) M1 एकं; Cr.m.g.t as above (for अति-). D11 Ct -भूषणं; M5 -भाषितं; Cm.g as above (for -भूषितम्). —(l. 5) D7.9–11 सुतः (for पुत्रः). —(l. 6) G1.2 वीर्यं; Cm.g.t as above (for शौर्यं). G1 सत्यं; G3 सर्वं; Cm.g.t as above (for सत्त्वं). M5 विक्रमं. D5 राज्यम् (for दाक्ष्यम्). D7 G1.2 विक्रमौदार्यम्; Cg as above (for विक्रमो दाक्ष्यम्). D5 T1 G3 एव च; M1 आर्जवं; Cg as above (for उत्तमम्). —(l. 7) T1 G2.3 M2 श्रुतिः; Cg as above (for धृतिः). M3 Cg धैर्यं (for स्थैर्यं). M1 पितुस्तुल्यं तवानघ (for the post. half). —D9 om. l. 8. —(l. 9) T1 damaged from नः up to संभ्रा.]

—Thereafter, D5–7.9–11 S repeat 19cd.

23 Ś2 D8.12 om. 23abc (cf. v.l. 3180*); Ñ1 V1.2 B2–4 om. 23–24; Ñ2 D4.13 om. 23–24b; B1 D1–3 om. 23ab. —a) ❀ Cm.g: राक्षस्यः राक्षसीः. ❀ —b) G3 त्वामव- (sic); Cg as in text (for त्वमनु-). —c) B1 D9–11 ताः (for [अ]हं). B1 D1–3 देवि; G1 सीता (sic) (for सर्वा). —d) D6 T2.3 भर्त्सिता; Cg as in text (for तर्जिता). Ś2 D8.12 भूयः पादतलैरिव (D12 °ह); B1 D1–3 सर्वाः पादतलासि (B1 D3 °दि) मिः; M3 याभिस्त्वं तर्ज्य रक्षिता. —After 23, D9 ins. only l. 3–4 of 3180*.

24 Ñ1 V1.2 B2–4 om. 24; Ñ2 D4.13 om. 24ab (for both, cf. v.l. 23). D9 om. 24. —a) G3 पश्यंतीं; Cr.m as in text (for क्लिश्यन्तीं). M3 पतिदैवां (for °देवां). Ś2 D1–3.8.12 क्लेशयंति य(D2.3 त)दा हि त्वाम्; B1 क्लेशयित्वा तथा हि त्वां; G1 पश्यंतीं पतिदैवं तम्. —b) Ś2 D1–3.8.12 -वनिका- (for -वनिकां). B1 ह्यशोकवनिकागताः. —c) Ś2 D1–3.8.12 घोरा घोर- (for घोररूप-). M5 -दुराचाराः (for -समाचाराः). Ñ2 D4.13 अथेमा राक्षसीर्घोराः (D13 °सीः सर्वाः). —After 24, Ñ2 ins. only l. 2, while D10.11 ins. only l. 1, 2 and 4 of 3180*.

25 Ś2 V1.2 B D1–3.8–12 transp. ab and cd. Ñ D4.13 read 25ab after 27ab. —a) T1 damaged up to त (see var.) in 25b. D7.13 M1 राक्षसीर्; Cg as in text (for राक्षस्यो). Ñ1 D4 मानुषाहारा; B1 D3 दारुणाचा (D3 °का)रा (for दारुणकथा). Ñ2 V1.2 B2–4 राक्षसीर्मानुषाहारा; G (ed.) घोराः क्रूरसमाचारा. —b) D9 वधम्; M3 परम्; Cg.k.t as in text (for वरम्). Ñ2 V1.2 B D4.5.7.9–11 T1 G Cr.g.k.t एत(T1 **)द् (for एतं). —D5–7 S transp. 25cd and 26ab. —c) Ś2 D2.12 वाक्यैर्; D6 T2.3 M3 घोरैर्; Cg as in text (for घातैर्). —d) B1 ताश्च (for एताः). Ñ2 कुरूपिणीः (for सुदारुणाः). —After 25cd, Ñ D4.13 read 27ab.

26 D5–7 S transp. 25cd and 26ab. —a) V1.2 B3.4 पार्ष्णिभिश् (for पाणिभिश्). G1 transp. मुष्टिभिः and पाणिभिश्. D6.7 T2.3 G1.2 M3.5 सर्वाश्; M2 पद्भिश् (for चैव). Ñ1 D4 पाणिघातैश्च; Ñ2 B1.2 D1–3.9–11

गच्छायोध्यामितो वीर विसर्जय च वानरान् ।
मैथिलीं सान्त्वयस्वैनामनुरक्तां तपस्विनीम् ॥ १५
भ्रातरं पश्य भरतं त्वच्छोकाद्व्रतचारिणम् ।
अभिषेचय चात्मानं पौरान्गत्वा प्रहर्षय ॥ १६
एवमुक्त्वा तमामन्त्र्य रामं सौमित्रिणा सह ।
विमानैः सूर्यसंकाशैर्हृष्टा जग्मुः सुरा दिवम् ॥ १७
अभिवाद्य च काकुत्स्थः सर्वांस्तांस्त्रिदशोत्तमान् ।
लक्ष्मणेन सह भ्रात्रा वासमाज्ञापयत्तदा ॥ १८
ततस्तु सा लक्ष्मणरामपालिता
महाचमूर्हृष्टजना यशस्विनी ।
श्रिया ज्वलन्ती विरराज सर्वतो
निशा प्रणीतेव हि शीतरश्मिना ॥ १९

इति श्रीरामायणे युद्धकाण्डे अष्टोत्तरशततमः सर्गः ॥ १०८ ॥

G. 6. 105. 0
B. 6. 120. 24
L. 6. 101. 34

---

$D_{12}$ [ उ ]पचक्रमे. $D_{9}$ निवेशायोपचक्रमुः ( for the post. half ). —$V_{2}$ om. l. 3. ]

**15** $V_{3}$ om. $15$–$16^{b}$. —$^{a}$) Ś $D_{8.12}$ गतो ( for गच्छ ). Ś $V_{1.2}$ $B_{2-4}$ $D_{8.13}$ $M_{3.5}$ राम; Ñ $D_{10.11.13}$ राजन् ( for वीर ). —$^{b}$) $D_{8}$ विसर्जयंश्च; $D_{13}$ विसृजस्व; $G_{1}$ त्वं विसृज्य ( for विसर्जय ). Ś $D_{12}$ तु ( for च ). $D_{13}$ बांधवान्. —$^{c}$) $B_{1}$ सांत्वयैनां; $B_{3}$ सांत्वयंश्च; $D_{2}$ $M_{5}$ सांत्वयित्वा; $D_{13}$ सांत्वयतु ( for सान्त्वयस्व ). Ś $D_{8.12}$ $T_{2.3}$ $G_{2}$ $M_{1.2}$ [ इ ]माम्; $B_{1}$ त्वम् ( for [ ए ]नाम् ). —$^{d}$) Ś $\tilde{N}_{2}$ $V_{1.2}$ B $D_{1-4.8-12}$ $M_{2}$ यशस्विनीं; $D_{13}$ मनस्विनीं ( for तपस्विनीम् ). —After 15, $D_{5.6}$ T $G_{1.3}$ M ins.; while $V_{2}$ $D_{7.10.11}$ $G_{2}$ ins. after $16^{ab}$:

3323* शत्रुघ्नं च महात्मानं मातृः सर्वाः परंतप ।

[ $V_{2}$ महाबाहो ( for महात्मानं ). $V_{2}$ तव भक्तं यशस्विनं ( for the post. half ). ]

—Thereafter $V_{2}$ cont. 3324*.

**16** $V_{3}$ om. $16^{ab}$ ( cf. v.l. 15 ). —$^{a}$) Ś Ñ $V_{1.2}$ $B_{2-4}$ $D_{7.8.10-13}$ भरतं पश्य ( by transp. ); $B_{1}$ $D_{1-4.9}$ भरतं प्राज्ञं ( for पश्य भरतं ). —$^{b}$) $G_{1}$ $M_{1.5}$ त्वच्छोक-; Cg as in text ( for त्वच्छोकाद् ). $D_{6}$ $T_{1.3}$ $M_{3}$ व्रतधारिणं. Ś $\tilde{N}_{1}$ $V_{1.2}$ $B_{2-4}$ $D_{8.12}$ त्व( $V_{1.2}$ $B_{2}$ स्व )च्छंद( Ś $\tilde{N}_{1}$ $V_{2}$ $D_{8.12}$ °दं; $B_{3}$ °दर्थं )व्रतकर्षि( $D_{8}$ °र्शि )तं; $\tilde{N}_{2}$ $B_{1}$ $D_{1-4.9}$ शत्रुघ्नं च यशस्विनं; $D_{13}$ सत्यव्रतसुधर्षितं. —After $16^{ab}$, Ś $B_{1}$ $D_{1-4.8.9.12}$ ins.; while $V_{2}$ cont. after 3323*:

3324* समेत्य पितृवद्बालं त्वं लालयितुमर्हसि ।
कृतकर्मा परिश्रान्तः सुखमाप्नोतु लक्ष्मणः ।

[ (l. 1) $V_{2}$ $B_{1}$ लालयितुं त्वम् ( by transp. ). Ś $D_{8.12}$ शत्रुघ्नं लाडय प्रभो ( for the post. half ). —Ś $D_{8.12}$ om. l. 2. —(l. 2) $V_{2}$ $B_{1}$ $D_{4}$ सत्वम् ( for सुखम् ). $D_{2}$ प्राप्नोति ( for आप्नोतु ). ]

—After $16^{ab}$, $V_{2}$ $D_{7.10.11}$ $G_{2}$ ins. 3323*. —$V_{2}$ reads $16^{cd}$ twice. —$^{cd}$) $D_{5.7}$ ( with hiatus ) आत्मानं ( for चात्मानं ). Ś $D_{8.12}$ पौरानपि; $\tilde{N}_{1}$ पुरीं गत्वा; $D_{5}$ राजन्गत्वा; $T_{2}$ दारान्गत्वा; $M_{1}$ गत्वा पौरान् ( by transp. ) ( for पौरान्गत्वा ). $\tilde{N}_{1}$ प्रहर्षयन् ( for प्रहर्षय ). $V_{2}$ ( first time ) $B_{1}$ $D_{1-4.9}$ समाप्तवनवासस्त्वमा( $D_{4}$ °स्तु आ [ with hiatus ] )त्मानमभिषेचय. —After 16, $M_{2}$ ins.:

3325* नन्दयस्व च कौसल्यां त्वच्छोककलुषीकृताम् ।

**17** $^{a}$) Ś Ñ V $B_{2-4}$ $D_{8.10-12}$ सहस्राक्षो; $M_{5}$ तु संमंत्र्य ( for तमामन्त्र्य ). ☞ $V_{2}$ missing from $17^{d}$ up to $6.110.9^{a}$. —$^{d}$) Ś Ñ $V_{1.3}$ B $D_{8.10-12}$ ययौ हृष्टः; $D_{1-3.9}$ जग्मुर्हृष्टाः ( by transp. ); $D_{4}$ $M_{2}$ ययुर्हृष्टाः ( for हृष्टा जग्मुः ). Ś $\tilde{N}_{2}$ $V_{1.3}$ $B_{2.4}$ $D_{8.10-12}$ सुरैः सह; $\tilde{N}_{1}$ $T_{2.3}$ सुरालयं; $B_{1.3}$ $D_{4}$ सुरेश्वरः( $D_{4}$ °राः ); $D_{6}$ स्वमालयं; $D_{9}$ सुराधिपाः; $M_{1}$ यथागतं ( for सुरा दिवम् ).

**18** $^{a}$) $D_{1.3.9.13}$ तु; $D_{2}$ स ( for च ). —$^{b}$) $V_{3}$ ततस् ( for सर्वांस् ). $B_{1}$ $D_{4}$ सुरसत्तमान्; $D_{5.6}$ $T_{1}$ $G_{3}$ $M_{5}$ त्रिदशेश्वरान्; $D_{7}$ $G_{2}$ त्रिदिवौकसः ( for त्रिदशोत्तमान् ). $G_{1}$ त्रिदशांस्तान्सुरोत्तमान्; $M_{1}$ सर्वांश्चापि सुरे** ( damaged ). —$^{d}$) $B_{3}$ सर्वम् ( for वासम् ). $B_{1}$ समंताल्यापयत्तदा ( corrupt ); $D_{4.13}$ स समाज्ञापयत्तदा.

**19** $^{a}$) $B_{1.3}$ $D_{1-4.9}$ $M_{1}$ राघव- ( for लक्ष्मण- ). $\tilde{N}_{1}$ $B_{1.3}$ $D_{1-4.9.13}$ $M_{1.2}$ -बाहु- ( for -राम- ). $B_{1}$ -पीडिता ( for -पालिता ). —$^{b}$) $B_{1}$ $D_{1-4.6.7.9}$ $T_{2.3}$ $M_{2}$ हृष्टमना; $D_{13}$ जांबवता; $G_{1}$ °जया ( for हृष्टजना ). $D_{4}$ यशस्विना; $D_{13}$ तरस्विना ( for यशस्विनी ). $\tilde{N}_{1}$ हृष्टतमा तरस्विनी. —$^{c}$) $D_{8}$ $M_{3}$ ज्वलंतीव रराज ( for ज्वलन्ती विरराज ). —$^{d}$) $Ś_{2}$ $D_{8}$ प्रणीतेन ( for °तेव ). $B_{1}$ $D_{1.4}$ निशेव जाता ( $D_{3}$ शुभ्रा ) सह; $D_{9}$ निशा यथा सा सह ( for निशा प्रणीतेव हि ). $\tilde{N}_{1}$ -रश्मिना शुभा.

Colophon: $V_{2}$ missing ( cf. v.l. 17 ). —*Kāṇḍa name*: Ñ $V_{1}$ $B_{1.3.4}$ $D_{4.13}$ लंकाकांडे. —After Kāṇḍa name, $V_{1}$ $D_{1.3}$ ins. आभ्युदयिके. —*Sarga name*: Ś $D_{8}$ अमृतवृष्ट्या वानरसंजीवनं; $\tilde{N}_{1}$ $M_{2}$ वानरसंजीवनं ( $\tilde{N}_{1}$ °नः ); $\tilde{N}_{2}$ $D_{13}$ वानरजीवनं( $D_{13}$ °नः ); $V_{1}$ $B_{1}$ $D_{4}$ मृतवानरजीवनं; $V_{3}$ $B_{2-4}$ अमृतवृष्टिः; $D_{1.3}$ मृतवानरोत्थापनं ( $D_{3}$ °नः ); $D_{2}$ वानरोत्थापनं; $D_{12}$ वृष्ट्या वानरसंजीवनं. —*Sarga no.* ( figures, words or both ): $Ś_{1}$ $\tilde{N}_{1}$ $V_{3}$ $B_{2.4}$ $D_{2.4.8.12.13}$ om.; $Ś_{2}$ $D_{1}$ 103; $\tilde{N}_{2}$ 109; $V_{1}$ 104; $B_{1}$ 81; $B_{3}$ 101; $D_{3.9}$ 106; $D_{5-7}$ $T_{1}$ G $M_{3.5}$ 123; $D_{10.11}$ 122; $T_{2}$ 131; $T_{3}$ 134; $M_{1}$ 124; $M_{2}$ 125. —After colophon, $D_{2}$ concludes with राम; G $M_{1.2.5}$ with श्रीरामाय नमः.

# १०९

G. 6. 106. 1
B. 6. 121. 1
L. 6. 102. 1

तां रात्रिमुषितं रामं सुखोत्थितमरिंदमम् ।
अब्रवीत्प्राञ्जलिर्वाक्यं जयं पृष्ट्वा विभीषणः ॥ १
स्नानानि चाङ्गरागाणि वस्त्राण्याभरणानि च ।
चन्दनानि च दिव्यानि माल्यानि विविधानि च ॥ २
अलंकारविदश्चेमा नार्यः पद्मनिभेक्षणाः ।
उपस्थितास्त्वां विधिवत्स्नापयिष्यन्ति राघव ॥ ३
एवमुक्तस्तु काकुत्स्थः प्रत्युवाच विभीषणम् ।
हरीन्सुग्रीवमुख्यांस्त्वं स्नानेनोपनिमन्त्रय ॥ ४

## 109

V2 missing for Sarga 109 (cf. v.l. 6.108.17). Ñ1 begins with जयोऽस्तु मे। भद्रमस्तु ते; D12 with ॐ; M1 with त्रयोदश्यां सीताशुद्धिर्ब्रह्मादिस्तुतिः.

1 $^{b}$) Ś Ñ2 V1.3 B2–4 D8.12 M2 सुखासीनम्; D6 T2.3 सुखप्रदम्; D7 G1 M5 सुखोषितम्; D10.11 M1 Ct सुखोदितम्; G2 सुखसुप्तम्; G3 सुखे स्थितम्; Cm as in text (for सुखोत्थितम्). Ñ1 D13 सुखेन मनुजोत्तमं; B1 D1–4.9 तथै(D1 °त्रै)व व्रतमास्थितं.—$^{c}$) B1 D1–3 काले (for वाक्यं).—$^{d}$) M1 सुखं (for जयं). B1 D1.2.4.13 T2 दृष्ट्वा (for पृष्ट्वा). Ś Ñ2 V1.3 B2–4 D8.12 वाक्यज्ञः (Ś B2 D8.12 ज्ञं) स(D12 च); M2 जयेत्युक्त्वा; Cm.t as in text (for जयं पृष्ट्वा).

2 V3 om.; Ñ2 illeg. for $2^{ab}$.—$^{a}$) B1 D4 शुभानि च; B4 D9 स्नानीयानि; G1 स्निग्धानि च; Cm.g.k.t as in text (for स्नानानि च). V1 B1–3 D1.3.9 G2 M1.2 [अं]-गरागांश्च; Cg as in text (for °रागाणि). G (ed.) transp. $2^{b}$ and $2^{d}$.—$^{b}$) Ś V1 B3 D8.12 माल्यानि; B1.2 D4 वासांसि (for वस्त्राणि). Ś V1 B2–4 D12 विविधानि (for [आ]भरणानि).—D8 om. (hapl.) $2^{cd}$.—$^{cd}$) D1–3.9 चंदनागु(D3.9 °ग)रु- (for चन्दनानि च). Ś Ñ2 V1.3 B2–4 D1–3.9.12 मुख्यानि; Ñ1 D13 सज्जानि (for दिव्यानि). Ś V1.3 B3.4 D12 वासांसि (for माल्यानि). D7.10.11 transp. दिव्यानि and माल्यानि.

3 $^{a}$) D4 प्रसाधन- (for अलंकार-). V1 B1.2 D1–4.9 -विधौ (for -विदश्). Ś D8.12 चेमे; V1 B1.2 D1–4.9 युक्तास्; D7.10.11 G2 M1 चैता (for चेमा). Ñ अंगरागं च संपूज्य(Ñ2 °गृह्य); D13 अंगरागरुचिं गृह्य.—$^{b}$) Ś D8.12 राम (for नार्यः). Ś V3 B2–4 D8.12 -दल- (for -निभ-). Ś D8.12 G1 -[ई]क्षण (for -[ई]क्षणाः). V1 B1 D1–4.9 तान्या(V1 समा)दाय वरस्त्रियः.—D9 om. $3^{cd}$. B3 reads $3^{cd}$ twice (second occurrence in marg).—$^{c}$) D1 च (for त्वां). Ś2 V1 B3(first time).4 D8.12 M2 विधिना; V3 om. B1.3(second time) D4 देवेशं; D1 ते देवीं; D2.3 देवीं च; Cg as in text (for विधिवत्).—$^{d}$) B1.3 (second time) D1–4 वैदेहीं लक्ष्मणं तथा(B1 °दा).
—After 3, Ś D8.12 ins.:

3326* स्ववृत्तकोविदां देवीं वैदेहीं लक्ष्मणं तथा।

—Thereafter all the above MSS. cont.; while B1.3 (after the second occurrence of $3^{cd}$, in marg.) D1–4.9 (after $3^{ab}$, owing to om.) T2.3 M3 ins. after 3:

3327* प्रतिगृह्णीष्व तत्सर्वं मदनुग्रहकाम्यया।
सुनिवेषं समुत्सृज्य राज्यर्द्धिरनुभूयताम्।

[(l. 1) B1.3 D4 मम (for मद्).—T2.3 M3 om. l. 2.—(l. 2) D9 परित्यज्य (for समुत्सृज्य). B1 D4 राजर्षिम्; B3 राजार्हम्; D1–3.9 राजर्द्धिर् (for राज्यर्द्धिर्). Ś D8.12 राज्यं द्विरनु(D12 °व [sic])भूय च(D8 °यते) (for the post. half).]
—After 3, M2 ins.:

3328* एते राक्षसराजस्य दासा दास्यश्च किंकराः।
कुशलोद्वर्तनस्नाने प्रसादं कुरु राघव।

[Note double saṃdi metri causa in l. 2]

4 $^{a}$) V3 इदम् (for एवम्). D4 श्रुत्वा (for उक्तस्).—After $4^{ab}$, D1–3.9 ins.; Ś D8.12 ins. l. 1 after $4^{ab}$, l. 2–5 and l. 6–7 after 4 and 6 respy.; while Ñ(Ñ1 marg.) ins. only l. 4–7 after $5^{ab}$; B1 D4 ins. only l. 4 (followed by 3332*) after $4^{ab}$; T2.3 ins. l. 1-2 after $4^{ab}$ and l. 4–7 after $4^{cd}$:

3329* धर्मज्ञो धर्मविद्वाक्यं न्यायज्ञो न्यायकोविदः।
उपपन्नमिदं राजंस्त्वयि कल्याणचेतसि।
सौहृदे वर्तमानस्य ग्राह्यं च वचनं तव।
समानव्रतचारी च भरतः कैकयीसुतः।
शत्रुघ्नसहितो विद्वान्समागमनलालसः। [5]
राज्यश्रियं परित्यज्य मुनिवेषधरः किल।
तपस्तप्यति मे भ्राता नन्दीग्रामकृतालयः।

[(l. 1) Ś D8.12 धर्मभृद् (for °विद्). Ś D8.12 न्यायतो न्यायकोविदं (for the post. half).—(l. 2) Ś D8.12 वाक्यं; D2 राज्यं (for राजंस्). Ś D8.12 तव (for त्वयि).—(l. 3) Ś D8.12 सौहार्दे (for सौहृदे). D9 सौम्य देवप्रभावस्य (for the prior half). D2 मम (for तव). Ś D8.12 ग्राह्यश्च प्रणयो मया (for the post. half).—(l. 4) D4 ममानुजो व्रताचारी (for the prior half). B1 D4 सत्यपुंगवः(D4 °विक्रमः) (for कैकयीसुतः).—(l. 5) Ś D8.9.12 श्रीमान्; T2.3 धीमान् (for विद्वान्). Ñ1 D1–3 ममागमन-.—(l. 7) Ñ तपति (for तप्यति). T2.3 नंदीग्रामे.]
—Thereafter Ś D8.12 cont. 3332*.

स तु ताम्यति धर्मात्मा मम हेतोः सुखोचितः ।
सुकुमारो महाबाहुः कुमारः सत्यसंश्रवः ॥ ५
तं विना कैकयीपुत्रं भरतं धर्मचारिणम् ।
न मे स्नानं बहुमतं वस्त्राण्याभरणानि च ॥ ६
इत एव पथा क्षिप्रं प्रतिगच्छाम तां पुरीम् ।
अयोध्यामायतो ह्येष पन्थाः परमदुर्गमः ॥ ७

एवमुक्तस्तु काकुत्स्थं प्रत्युवाच विभीषणः ।
अह्ना त्वां प्रापयिष्यामि तां पुरीं पार्थिवात्मज ॥ ८
पुष्पकं नाम भद्रं ते विमानं सूर्यसंनिभम् ।
मम भ्रातुः कुबेरस्य रावणेनाहृतं बलात् ॥ ९
तदिदं मेघसंकाशं विमानमिह तिष्ठति ।
तेन यास्यसि यानेन त्वमयोध्यां गतज्वरः ॥ १०

G. 6. 106. 10
B. 6. 121. 11
L. 6. 102. 15

—B1 om. $4^{c}$–5. D1–3.9 om. $4^{c}$–$5^{b}$. D13 G (ed.) om. $4^{cd}$. —$^{c}$) D5.6 T G -मिश्रांस्(G1 °त्रांस्); Cg as in text (for -मुख्यांस्). Ś D8.12 तु; D4 om. (subm.); G2 तान्; Cg as in text (for त्वं). —$^{d}$) M1 स्नानाय; Cg as in text (for स्नानेन). D5 T1 G M1.3.5 Cg [अ]भि- (for [उ]प-). D6 स्नानैर्निर्लिङ्गैर्निमंत्रय (corrupt); D6 T2.3 स्नापनेनानुमंत्रय. —For $4^{cd}$, M2 subst.:

3330* निमन्त्रयस्व स्वैरर्थैः सुग्रीवप्रमुखान्हरीन् ।

5 B1 om. 5; D1–3.9 T2.3 om. $5^{ab}$ (for all except T2.3, cf. v.l. 4). —$^{a}$) M2 यः सः; Cg as in text (for स तु). Ś Ñ B2–4 D8.12 स तपस्वी तपोयुक्तो; V1 तापसस्तपसा युक्तो; V3 राज्यं स्वकं परित्यक्त्वा; D13 यः सदा सौम्य धर्मात्मा. —$^{b}$) Ś D8.12 महातेजाः (for मम हेतोः). Ś Ñ V1.3 B2–4 D8.12 सुदुःखितः (for सुखोचितः). —After $5^{ab}$, Ñ(Ñ1 marg.) ins. only l. 4–7 of 3329*. —$^{d}$) Ś Ñ2 V1.3 B2–4 D1–3.8–12 T2.3 भरतः; Cg as in text (for कुमारः). Ś B4 D1–3.8.9.12 T2.3 -संगरः; Ñ2 V1.3 B2.3 D6–7.10.11 G1 M1.5 -संश्रयः; M2 -विक्रमः; Cg as in text (for -संश्रवः). —For 5, D4 subst.:

3331* यस्तपस्वी तपोयुक्तो मम हेतोः सुखी ततः ।
त्वं धर्मज्ञः सत्यवादी मम भक्तिपरायणः ।

—After 5, B3(in marg.) D1–3.9 T2.3 ins.; while Ś D8.12 cont. after 3329*; B1 D4 cont. after l. 4 of 3329*:

3332* शत्रुघ्नसहितो धीमान्स मां नूनं प्रतीक्षते ।

[D9 T2.3 विद्वान् (for धीमान्). D2 स मा; D12 मां स (by transp.) (for स मां) B3 transp. धीमान् and नूनं.]

6 $^{a}$) M2 भ्रातरं सौम्य (for कैकयीपुत्रं). —$^{b}$) Ś V1.3 B2–4 D8.12 धर्मज्ञं धर्मवत्सलं. —$^{c}$) B1 न मे बहुतरं(m. also °मं) चैव; D1–3.9 न मे बहुमतं(D2 °तरं; D9 °विधं) र (D1 य)त्नं. —$^{d}$) B1 रत्नानि (for वस्त्राणि). —After 6, Ś D8.12 ins. l. 6–7 of 3329* (followed by 3332*).

7 $^{a}$) M2 तथा कुरु (for इत एव). D6.7 G1 M1.2 यथा (for पथा). Ś Ñ V1.3 B D1–4.8.10–13 एतत्पश्य यथा(D1 मया; D13 सदा) क्षिप्रं(V3 damaged from क्षि up to तो in $7^{c}$; D1 शीघ्रं); D9 T2.3 एतत्तथ्यं मम वचः. —$^{b}$) D1–3.9 -गच्छेम; D7 T3 G1 M3 -गच्छामि (for गच्छाम). Ś Ñ V1 B2–4 D4.8.12.13 प्रतिगच्छाम्यहं पुरीं; M3 प्रतिगच्छामहे वयं. ※ Cv: इत एव यथा क्षिप्रं प्रतिगच्छाम तां पुरीमिति तथा न मे स्नानं बहुमतमिति पूर्वेणास्य पूरणम् । इत एव यथा क्षिप्रमिति साक्षात्पाठः ।; Cg: इत एवेति । अनेन पथा येनाहमागतः तेनेत्यर्थः । एष इति हस्तनिर्देशपूर्वकमुच्यते । अयोध्यामागतः प्राप्तः अयमयोध्यामार्गः तेन क्षिप्रं तां प्रतिगच्छामीत्यर्थः । Ck.t प्रतिगच्छामेति लोट्. ※ —$^{cd}$) Ñ2 D4.10.11 गच्छतो; V1 om.; D5–7 T1 M3.5 आगतो (for आयतो). Ś Ñ1 B2–4 D8.12 अयोध्या(Ś °ध्यां)ग(B2.3 °गा)मिको; D1.2.9.13 M2 अयोध्यायाम(D9 °यामि; D13 °यां ग; M2 °या इ)तो; G1 अयोध्यागमने. G2 अयोध्यामागमिष्येहं (for $^{c}$). G1 transp. ह्येष and पन्थाः. D4 -दुर्जयः (for -दुर्गमः). D13 पूर्णः परमसिद्धयः (for $^{d}$).

8 $^{a}$) D1.2 T2 स (for तु). Ñ V1.3 B2–4 D4.13 M2 रामेण (for काकुत्स्थं). —$^{c}$) Ś B2 D8.12 T2 अहं; Ñ B3 D4.13 अद्य (for अह्ना). T2 त्वा (for त्वां). —$^{d}$) B4 स्वां (for तां). Ś D8.12 पुरुषर्षभ (for पार्थिवात्मज).

9 V3 damaged from द्रं in $9^{a}$ up to $^{d}$. —$^{b}$) Ś Ñ2 B4 D4.8.12.13 -वर्चसं (for -संनिभम्). —$^{c}$) Ñ1 D4.13 हृतं (for मम). B1 D1–3.9 T2.3 पुरा वैश्रवणस्यासीद्. —$^{d}$) B1 D1.3.5.7.9 G1 M5 हृतं; Cg as in text (for [आ]हृतं). Ś Ñ V1 B2–4 D4.8.10–13 M2 रावणेन बलीयसा. —After 9, Ś Ñ2 V1.3 B2–4 D5–8.10–12 S ins.:

3333* हृतं निर्जित्य संग्रामे कामगं दिव्यमुत्तमम् ।
त्वदर्थं पालितं चैव तिष्ठत्यतुलविक्रम ।

[(l. 1) T3 मृत्युं (for हृतं). V3 शस्त्राणि (for संग्रामे). M3 अक्षयं (for उत्तमम्). —(l. 2) D5.7 T G M3.5 Cg त्वदर्थे. D5–7 T G2.3 M1.5 चेदं; G1 M2.3 (before corr. as above) चै(M2 त्वे)तत् (for चैव). Ś D6.8 T2.3 [अ]मित-; M2 [अ]मर- (for [अ]तुल-).]

10 $^{a}$) Ś B1 D2.8.12 सूर्य- (for मेघ-). V3 -सं ** (for -संकाशं). —$^{b}$) B1 D8 अव-; D2.9 अधि- (for इह). Ñ D4.13 नानारत्नसमुज्ज्वलं(D13 °विभूषितं). —V3 damaged from $10^{c}$ up to भ्रा in $11^{a}$. —$^{c}$) Ś Ñ2 V1 B D5.6.8.12 M1.2 येन (for तेन). Ś D8.12 प्राप्स्यसि; D4.13 यास्यामि (for यास्यसि). —$^{d}$) Ñ1 B2 D4.13 ताम् (for

G. 6. 106. 11
B. 6. 121. 12
L. 6. 102. 16

अहं ते यद्यनुग्राह्यो यदि स्मरसि मे गुणान् ।
वस तावदिह प्राज्ञ यद्यस्ति मयि सौहृदम् ॥ ११
लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया ।
अर्चितः सर्वकामैस्त्वं ततो राम गमिष्यसि ॥ १२
प्रीतियुक्तस्तु मे राम ससैन्यः ससुहृद्गणः ।
सत्क्रियां विहितां तावद्गृहाण त्वं मयोद्यताम् ॥ १३
प्रणयाद्बहुमानाच्च सौहृदेन च राघव ।
प्रसादयामि प्रेष्योऽहं न खल्वाज्ञापयामि ते ॥ १४
एवमुक्तस्ततो रामः प्रत्युवाच विभीषणम् ।
रक्षसां वानराणां च सर्वेषां चोपशृण्वताम् ॥ १५
पूजितोऽहं त्वया वीर साचिव्येन परंतप ।
सर्वात्मना च चेष्टाभिः सौहृदेनोत्तमेन च ॥ १६
न खल्वेतन्न कुर्यां ते वचनं राक्षसेश्वर ।
तं तु मे भ्रातरं द्रष्टुं भरतं त्वरते मनः ॥ १७
मां निवर्तयितुं योऽसौ चित्रकूटमुपागतः ।
शिरसा याचतो यस्य वचनं न कृतं मया ॥ १८

---

त्वम्). D5 T1 G3 -व्यथः; G1 -श्रमः (for -ज्वरः). B1 वोढुं त्वां चेदमर्हति; D1–3.9 वोढुं त्वां च (D9 त्वांच वोढुं) तदर्हति.

11 V3 damaged up to प्रा in $11^{a}$ (cf. v.l. 10). T2 reads $11^{ab}$ twice (lacuna for $11^{a}$ in second occurrance).—$^{a}$) B1 D1–3.9 transp. अहं and यदि. —$^{b}$) D4 वै (for मे). D1–3.9 T2 (second time) धारणी (D9 पालनी) योस्मि ते यदि. —$^{c}$) D1 न च (for वस). D1.3.9 प्राप्तो (for प्राज्ञ). M2 वसाद्य रजनीमेकां.—$^{d}$) Ś D1.12 T1 G3 मम (for मयि). Ñ1 D4.13 M3 transp. यद्यस्ति and मयि. D13 गौरवं (for सौहृदम्). B1 D1–3.9 मया त्व (D1.9 स) मभि (B1 °पि) पूजितः.

12 $^{b}$) Ś Ñ V1.3 B2–4 D4.8.10–13 M2 भार्य (M2 चान) या सह (V3 damaged from सह up to यु in $13^{a}$); D6.7 T2.3 G2 M5 सह (D7 G2 M5 चैव) सीतया (for चापि भार्यया). M1 भार्यया ** सीतया. —For $12^{ab}$, B1 D1–3.9 subst.:

3334* सदारो भ्रातृसहितः सहैभिर्हरियूथपैः।

—$^{c}$) D12 च; D13 तु (for त्वं). Ś D8 सह कामैश्च (for सर्वकामैस्त्वं).—$^{d}$) Ś D8.12 राजन् (for राम).

13 V3 damaged up to यु in $13^{a}$ (cf. v.l. 12). —$^{a}$) B4 D3.4 प्रति- (for प्रीति-). Ś Ñ V1.3 B D1.3.4. 7.8.10–13 G2 M1.3 Cr -युक्तस्य; Cv as in text (for -युक्तस्तु). G1 M1.5 वै; Cr.m.t as in text (for मे). B4 D6 T2.3 G2 वै (B4 G2 मे) राजन्; D7.10.11 विहितां; D13 धर्मज्ञ (for मे राम). D2 प्रीतिः रामस्य मे युक्तः (sic); D9 प्रीतियुक्तः समं राम; M2 प्रीतियुक्तेन राजेंद्र. —$^{b}$) Ñ1 V3 B4 D1–4.9.13 ससुहृज्जनः. B1 सहसैन्यः सुहृज्जनः.—$^{c}$) Ñ1 D4.13 विपुलां; Ñ2 illeg.; V1.3 B2–4 विधिवत्; D5.10.11 राम मे (D5 ते); Cr.m.g.t as in text (for विहितां). V1 तात; B4 प्राज्ञ; D6 T2.3 राम (for तावद्). Ś B1 D1–3. 8.9.12 सत्कारं विधिवत्त्वं च (B1 D1–3 °वत्तात; D9 °वत्सर्वं). —$^{d}$) Ś Ñ V1.3 B D1–4.8.9.12.13 प्रतिगृह्णीष्व राघव (B1 D1–3 चोद्यतं; B3 भारत [sic]; D9 कोविद).

14 V1 D4.8 om. $14^{ab}$. —$^{a}$) D9 प्रियाच्च (for प्रणयाद्). D1 च बहुमानात् (by transp.).—$^{b}$) Ś Ñ V3 B D2.3.10–12 सौहार्देन (for सौहृदेन). D9 सौहार्दाच्चापि. —V3 om. $14^{cd}$.—$^{c}$) D8 प्रणयामि (sic); G1 प्रसादयस्व; M2 प्रसादयिष्ये (for प्रसादयामि). B1 D1–3.9 M2 भृत्योः; D13 प्रेक्ष्यो (for प्रेष्यो).—$^{d}$) B2 हि (for ते).

15 $^{ab}$) V3 damaged from क्त up to च. Ñ1 D4.13 तु काकुत्स्थः (for ततो रामः).—B1 om. $15^{c}$–$17^{b}$. V3 om. $15^{cd}$.—$^{c}$) D13 ऋक्षाणां (for रक्षसां).—$^{d}$) Ś Ñ V1 B2–4 D1–4.8–13 G1 M1.5 एव; D6 T2.3 M2 उप- ; Cg as in text (for चोप-).

16 Ñ1 B1 D1–3.9.13 om. 16 (for B1, cf. v.l. 15). —$^{a}$) Ś Ñ2 V1.3 B2–4 D4.5.8.10–12 [ऽ]स्मि; M5 [ऽ]यं (for ऽहं). D4 यथा (for त्वया). D6 T G1.3 M सौम्य (for वीर).—$^{b}$) Ś D8.12 पांडित्येन; G1 साहाय्येन; Cg.t as in text (for साचिव्येन). Ś D8 पदेन हि; Ñ2 V1.3 B2–4 D4.7.10–12 परेण च (B2.4 D4.12 हि) (for परंतप). —V1.3 D12 om. $16^{cd}$.—$^{c}$) G2 M5 सर्वात्मनाभिश्. Ś D8 वसुभिः (for चेष्टाभिः).—$^{d}$) Ś Ñ2 B2–4 D4.8.10.11 सौहार्देन परेण च (B2 हि). ❀ Ct. सौहार्देनोत्तमेन च इति क्वचित्पाठः। . ❀

17 B1 om. $17^{ab}$ (cf. v.l. 15).—$^{a}$) D7 [इ]दं; G3 [इ]ह; M2 [अ]हं (for [ए]तन्). D5 T1 कार्यं (for कुर्यां). D9 सखे त्वेवं (for न खल्वेतन्). G (ed.) च (for ते).—$^{b}$) D1–3.9 नैरृताधिप; D5 T1 G3 राक्षसोत्तम. —B1 transp. $17^{cd}$ and $18^{ab}$.—$^{cd}$) Ś1 D8.12 उत्कं; B3.4 D3 किं तु (for तं तु). Ś2 सोत्कंठं (for तं तु मे). D2 transp. भ्रातरं and भरतं. Ś D8.12 त्वरितं (for त्वरते). M3 transp. भरतं and त्वरते.

18 B1 transp. $17^{cd}$ and $18^{ab}$. Ñ1 reads in marg. $18^{ab}$.—$^{a}$) Ś D2.8.12 निवारयितुं (for निवर्तयितुं). V3 वीरश्; B4 चासौ (for योऽसौ).—$^{c}$) Ś Ñ2 V1 B D1–3. 8.9.12 M2 याचमानस्य; D4 याचितस्तस्य; D5.7 T1 G2 याचितो यस्य.—$^{d}$) D1–3.9 मया कृतं (by transp.). Ś Ñ2 V1.3 B2–4 D8.10–12 न कृतं वचनं (B4 तद्वचो) मया; B1 वचनं मम यत्कृतं; M2 कृतं वचनं मया (subm.).

कौसल्यां च सुमित्रां च कैकेयीं च यशस्विनीम् ।
गुरूंश्च सुहृदश्चैव पौरांश्च तनयैः सह ॥ १९
उपस्थापय मे क्षिप्रं विमानं राक्षसेश्वर ।
कृतकार्यस्य मे वासः कथंस्विदिह संमतः ॥ २०
अनुजानीहि मां सौम्य पूजितोऽस्मि विभीषण ।
मन्युर्न खलु कर्तव्यस्त्वरितस्त्वानुमानये ॥ २१
ततः काञ्चनचित्राङ्गं वैदूर्यमणिवेदिकम् ।
कूटागारैः परिक्षिप्तं सर्वतो रजतप्रभम् ॥ २२
पाण्डुराभिः पताकाभिर्ध्वजैश्च समलंकृतम् ।
शोभितं काञ्चनैर्हर्म्यैर्हेमपद्मविभूषितम् ॥ २३

G. 6. 106. 23
B. 6. 121. 23
L. 6. 102. 46

19 $^{b}$) Ś2 Ñ1 B2 D4.13 च तपस्विनीं; B1 D1–3.9 चैव (D3 चापि) मातरं (for च यशस्विनीम्). —D13 lacuna for 19$^{c}$. —$^{c}$) Ś V1.3 B2–4 D8.12 दिदृक्षुः; Ñ2 B1 D10.11 गुरुं च; D3 गुरुं च; D4 गुरूनेवं; L (ed.) दिदृक्षुं (for गुरूंश्च). Ñ V1 B1–3 D10.11 सुहृदं (for सुहृदश्). M2 [अ]न्यान् (for [ए]व). —$^{d}$) Ś V1.3 B2–4 D8.12 गुरून्पौरांस्तथैव च; Ñ D4.10.11.13 पौराज्ञा( D4 °रजा; D13 गुरुं जा )नपदैः सह; B1 D1–3.9 द्रष्टुमिच्छ( D2 °मह )ति मे मनः; M2 द्रष्टुं मे त्वरते मनः.

20 Ñ2 D11 om. 20$^{ab}$. Ś Ñ1 V1.3 B D1–4.8–13 M2 transp. 20 and 21. —$^{a}$) D9 अवस्थापय. Ś V1 B2–4 D5.8.10.12 M1 शीघ्रं; B1 D1–3 तूर्णं; D9 पूर्वं (for क्षिप्रं). D4 transp. मे and क्षिप्रं. —$^{b}$) B1 D1–3.9 नैर्ऋता (D9 राक्षसा)धिप (for राक्षसेश्वर). —Ñ2 D11 read 20$^{cd}$ after 21. —$^{d}$) Ś Ñ V1.3 B2–4 D6–8.10–13 T2.3 M1 कथं( D8 न मे ) स्याद्; Cg as in text (for कथंस्विद्). D4 कथं स्यादिति. Ś D8.12 संगतः; D6 संमतं (for संमतः). B1 D1–3.9.13 कथं स्यादिति ( D13 विचित्त [sic]) मे मतिः. —After 20, Ś Ñ(only l. 11–14) B1.3(marg.) D1–3.8.9.12 ins. a passage relegated to App. I (No. 71). —After 20, Ñ (preceded by l. 11–14 of App. I [No. 71]). V1.3 B2.4 D4.10.11 M2 ins.; B3 ins. after App. I (No. 71); Ś D8.12 subst. only l. 2 for l. 35 of App. I (No. 71):

3335* एवमुक्तस्तु रामेण राक्षसेन्द्रो विभीषणः ।
विमानं सूर्यसंकाशमाजुहाव त्वरान्वितः ।

[ (l. 1) V3 illeg.; M2 राक्षसः सचिवस्तया (for the post. half). —V3 om. l. 2. —(l. 2) Ś Ñ1 B1 D8.12 आजहार; B3 आरुरोह (sic) (for आजुहाव). M2 आनयामास हि ततो विमानं सूर्यसंनिभं. ]

—Thereafter, D4 cont.:

3336* दिव्यमत्यद्भुताकारं मनःकामगमव्ययम् ।

21 Ś Ñ1 V1.3 B D1–4.8–13 M2 transp. 20 and 21. —$^{b}$) D1–3.9 M1 [ऽ]हं; Cg as in text (for ऽस्मि). M1 त्वया प्रभो (for विभीषण). —D6 om. 21$^{cd}$. V3 illeg. from क in 21$^{c}$ up to चा (see var.) in 21$^{d}$. —$^{c}$) Ś D8 मयि (for खलु). B1 D1–3.9 transp. न and खलु. —$^{d}$) Ś D4.8.12 सखित्वं; Ñ V1 B D10.11 सखे त्वां; D1–3.5.7.9 T1 G2.3 M2.3.5 Cg त्वरितं; M1 त्वरया (for त्वरितस्). Ś Ñ V1.3 B D1.2.4.8–13 G1 चा( V3 illeg. up to चा; G1 त्वा )नुमानये( D1.2.4.9 G1 °य ); D7 G2 यानमानय; T2 त्वां तु मानये (for त्वानुमानये). D13 त्वद्धातु * समाददे. —After 21, Ñ2 D11 read 20$^{cd}$. —After 21, D7 G3 M3 ins.:

3337* राघवस्य वचः श्रुत्वा राक्षसेन्द्रो विभीषणः ।
तं विमानं समादाय तूर्णं प्रतिनिवर्तत ।

[ ❀ Cg: राघवस्य वचः श्रुत्वेत्यादिश्लोकचतुष्टयमेकं वाक्यम् । प्रतिनिवर्तत प्रतिन्यवर्तत ।; Ct: राघवस्य वचः श्रुत्वा राक्षसेन्द्रो विभीषणः । तद्विमानं समादाय तूर्णं प्रतिनिवर्तते इति क्वचित्पाठः . ❀ ];

while T2 ins. a long passage relegated to App. I (No. 71) after 21.

22 V3 om. 22–26. —$^{a}$) Ś B1 D1–3.8.9.12 मणि-; G (ed.) दिव्यं (for ततः). —$^{b}$) Ś D7.8.10.12 G3 वैदूर्यमणि-; Ñ1 D4 वैदू( D4 °दु )र्यकृत-; B1 D1–3.9 तप्तकांचन-; D5.6 T G1.3 M वैडूर्यमय- (for वैदूर्यमणि-). —G (ed.) om. 22$^{cd}$. —$^{c}$) Ś D8.12 क्रीडा- (for कूट-). B1 D1–3.9 -[आ]गा( B1 -[आ]का )र- (for -[आ]गारैः). —$^{d}$) B1 D1–3.9 मधुरस्वरं ( B1 D1 °नं ); D13 वदनप्रियं (for रजतप्रभम्). Ś Ñ V1 B2–4 D4.8.12 तप्तकांचनभूषणं( Ś D8.12 °णैः; D4 °षितं ).

23 V3 om. 23 (cf. v.l. 22). —$^{a}$) D13 T1 G M पांडराभिः. —$^{b}$) Ś Ñ2 V1 B2–4 D8.12 M3 G (ed.) बहुमित्रै( G ed. °श्रै )तं; Ñ1 D4.13 विविधैस्तथा (for समलंकृतम्). B1 D1–3.9 समंतादवभासि( B1 °दुपशोभि )तं. —G1 om. 23$^{c}$. —$^{c}$) D6 शोभनं; D7.10.11 M1 Ct कांचनं( D7 °नैः ) (for शोभितं). G3 कांचनं (for काञ्चनैर्). Ś D8.12 हर्म्यवृंदैश्च; Ñ B4 हर्म्यकर्णै( B4 °षंडै )श्च; V1 B2.3 हेमकर्णै ( B3 °क्षै )श्च; D1 हर्म्यजालैश्च; M2 गंधमाल्यैश्च; G (ed.) हेमकक्ष्यैश्च; Ct as in text (for काञ्चनैर्हर्म्यैर्). D13 भाति कांचनहर्म्यैश्च. —G1 reads 23$^{d}$ and then repeats 24$^{c}$–25$^{b}$ after 6.110.9$^{c}$. —$^{d}$) Ś D8.12 -कुड्य-; B3 -घंटा-; D4 -पट्ट-; G1 M6 -रत्न-; Cg.t as in text (for -पद्म-). D7.10.11 G2 M1 -विभूषितैः. —For 23$^{cd}$, B1 D1–3.9 subst.; while Ś D8.12 ins. after 23:

3338* शोभितं जलजाकारैः पुण्डरीकैश्च काञ्चनैः ।

[ Ś D8.12 मंडितं (for शोभितं). D1.3.12 जलदाकारैः; D9 जल-

G. 6. 106. 0
B. 6. 121. 26
L. 6. 102. 47

प्रकीर्णं किङ्किणीजालैर्मुक्तामणिगवाक्षितम् ।
घण्टाजालैः परिक्षिप्तं सर्वतो मधुरस्वनम् ॥ २४
तन्मेरुशिखराकारं निर्मितं विश्वकर्मणा ।
बहुभिर्भूषितं हर्म्यैर्मुक्तारजतसंनिभैः ॥ २५
तलैः स्फटिकचित्राङ्गैर्वैदूर्यैश्च वरासनैः ।
महार्हास्तरणोपेतैरुपपन्नं महाधनैः ॥ २६
उपस्थितमनाधृष्यं तद्विमानं मनोजवम् ।
निवेदयित्वा रामाय तस्थौ तत्र विभीषणः ॥ २७

इति श्रीरामायणे युद्धकाण्डे नवोत्तरशततमः सर्गः ॥ १०९ ॥

धारैश्च (for जलजाकारैः). D3 जलधारैः समायुक्तः (for the prior half).]

24 V3 om. 24 (cf. v.l. 22). Ñ2 V1 B2–4 D4 om. $24^{ab}$.—$^{a}$) Ś B1 D1.3.8.9.12 रुचिरैः; Ñ1 D13 शोभितं (for प्रकीर्णं).—D13 om. (hapl.) $24^{b}$ – $25^{c}$.—$^{b}$) Ñ1 D3 -जाल-; B1 -माल्य- (for -मणि-). Ś B1 D1–3.7–12 G2 M5 -गवाक्षकं (B1 D1–3.9 °कैः); Ñ1 -विभूषितं; Cg.k.t as in text (for -गवाक्षितम्).—T1 mostly damaged for $24^{c}$. For sequence in G1, cf. v.l. 23.—$^{c}$) Ś D8.12 हेम-; Ñ1 D4 पट्ट-; M1 स्वर्ण-; Cg as in text (for घण्टा-). T2 -नादैः; M1 -घंटा-; Cg as in text (for -जालैः).—$^{d}$) M5 सुरव- (for मधुर-). B3 D6 T2.3 -स्वरं; Cg. as in text (for -स्वनम्).—For $24^{cd}$, B1 D1–3.9 subst.:

3339* घण्टाजालप्रणदितं प्रगीतमिव सर्वतः ।

[ B1 -नाद- (for -जाल-). D2 -प्रमुदितं. D9 अपि (for इव). ]

25 V3 om. 25 (cf. v.l. 22). D13 om. $25^{abc}$ (cf. v.l. 24). For sequence in G1, cf. v.l. 23. B1 D1–3.9 transp. $25^{ab}$ (including 3340*) and 26. G(ed.) transp. $25^{ab}$ (including 3340*) and $26^{ab}$.—$^{a}$) Ñ2 V1 B1.2 D4.5.7.10.11 T1 G (G1 both times) M1.2 तं; B3 एतन् (hypm.). D6 M3.5 यन् (for तन्). ❀ Cv: यन्मेरुशिखराकारमिति च।; Cr: यं मेरुशिखराकारमिति वा पाठः।; Cg: यन्मेर्वित्यादिश्लोकत्रयमेकान्वयम्. ❀—$^{b}$) D6 reads निर्मितं in marg.—$^{c}$) Ñ V1 B2–4 D4.10.11 बृहद्भिर्; G1 (first time) शोभितं (for बहुभिर्). B4 G2 भूषितैर्; G1(both times) कांचनैर्; M2 शोभितं (for भूषितं). Ś D8.12 चित्रैर्; Ñ1 D4 रत्नैर्; D5 T1 G3 M5 रम्यैर् (for हर्म्यैर्).—$^{d}$) Ś Ñ2 V1 B2.3 D8.10–12 -शोभितैः(Ś B3 D8.12 °तं); B4 M2 -भूषितैः; Cg as in text (for संनिभैः).—For $25^{cd}$, B1 D1–3.9 G (ed.) subst.:

3340* कामगं रुचिरं दिव्यं मनोऽभिप्रेतमव्ययम् ।

26 V3 om. 26 (cf. v.l. 22). B1 D1–3.9 transp. $25^{ab}$ (including 3340*) and 26. G (ed.) transp. $25^{ab}$ (including 3340*) and $26^{ab}$.—$^{a}$) Ś Ñ B4 D2.3.8.9.12 दंत-; V1 B1 D1.12 दांत-; B2.3 दंतैः; D4 रत्न-; D5.6 T2.3 G1.3 M5 ततः; M1 शुद्ध-; M2 दीप्तैः (for तलैः). B1 D1.3 T1 G1.2 M2.3 Cg स्फाटिक- (for स्फटिक-). D4 -चित्रांगं (for -चित्राङ्गैर्).—$^{b}$) Ś D8.12 वैडूर्यस्य (for वैदूर्यैश्च). D2–5.7.8.10 T G M1.3.5 वैडूर्यैश्च. B1 D4 वैडूर्यप्रवरासनं(B1 °नैः); M2 वैडूर्यैः कांचनैरपि.—Ñ V1 B2.4 D4.13 om.; B3 reads in marg. $26^{cd}$.—$^{c}$) Ś D2.3.8.12 -[आ]स्तरणोपेतम्; B1.3 D1 -[आ]भरणोपेतम्. D6 T2.3 वराहाभरणोपेतैर्.—$^{d}$) D3 उपपन्नैर्; G1 उपपन्ना(sic) (for उपपन्नं). G1 महासनैः; M2 वरासनैः; Cg as in text (for महाधनैः).

27 $^{a}$) D13 उपातस्थुतनाद्दक्षं (corrupt).—$^{b}$) B4 तं (for तद्). D4 मनोभवं; D6 T2.3 °हरं (for °जवम्).—T1 damaged $27^{c}$.—$^{c}$) Ś Ñ2 V1.3 B4 D8.12 ततो निवेद्य. D13 रामस्य (for रामाय). B3 ततो निवेदयामास.—$^{d}$) D6 T2.3 तत्र तस्थौ (by transp.). D4.13 तस्थौ तस्य समीपतः.—After 27, Ś Ñ V1.3 B D1–4.8–13 K (ed., within brackets) ins.:

3341* तत्पुष्पकं कामगमं विमान-
मुपस्थितं प्रेक्ष्य हि दिव्यरूपम् ।
रामः प्रहृष्टः सह लक्ष्मणेन
पुरा यथा वृत्रवधे महेन्द्रः ।

[ (l. 1) D1.3 ह्युपस्थितम् (for विमानम्). D4 कामगमव्ययं तद्.—(l. 2) B1 स; D9 च (for हि). Ñ1 D4.10.11.13 भूधरसंनिकाशं; B3 दिव्यमनोहरं च (for प्रेक्ष्य हि दिव्यरूपम्). D1.3 तदा तु संप्रेक्ष्य च दिव्यरूपं.—V3 illeg. for l. 3.—(l. 3) Ñ D4.10.11.13 दृष्ट्वा तदा विस्मय(D13 सत्वर)माजगाम.—(l. 4) Ś D8.12 शतक्रतुः; B2 स शक्रः (for महेन्द्रः). V1.3 B3.4 वृत्रवधेन शक्रः. Ñ D4.10.11.13 रामः (D4 om.) ससौमित्रिरुदारसत्त्वः. ]

Colophon.—*Kāṇḍa name*: Ñ V1 B1.3.4 D4.13 लंकाकांडे.—After Kāṇḍa name, V1 ins. आभ्युदयिके.—*Sarga name*: Ś1 Ñ2 B2–4 D4 पुष्पकोपस्थानं; Ś2 Ñ1 V1.3 D8.12.13 पुष्पकोपस्थापनं(Ñ1 °नः); B1 पुष्पकस्थापनं; D1 पुष्पकानयनं; D2.3 पुष्कोत्थापनं(D3 °नः).—*Sarga no.* (figures, words or both): Ś1 Ñ1 V3 B2.4 D2.4.8.12.13 om.; Ś2 D1 104; Ñ2 110; V1 105; B1 82; B3 102; D3.9 107; D5–7 T1 G M3.5 124; D10.11 123; T2 132; T3 135; M1 125; M2 126; B (ed.) 121; G (ed.) 106.—After colophon, D2 concludes with राम; G M1.5 with श्रीरामाय नमः; M2 with श्रीरामाय नमः शरणम्.

## ११०

उपस्थितं तु तं दृष्ट्वा पुष्पकं पुष्पभूषितम् ।
अविदूरे स्थितं रामं प्रत्युवाच विभीषणः ॥ १
स तु बद्धाञ्जलिः प्रह्वो विनीतो राक्षसेश्वरः ।
अब्रवीत्त्वरयोपेतः किं करोमीति राघवम् ॥ २
तमब्रवीन्महातेजा लक्ष्मणस्योपशृण्वतः ।
विमृश्य राघवो वाक्यमिदं स्नेहपुरस्कृतम् ॥ ३
कृतप्रयत्नकर्माणो विभीषण वनौकसः ।
रत्नैरर्थैश्च विविधैर्भूषणैश्चाभिपूजय ॥ ४
सहैभिरर्दिता लङ्का निर्जिता राक्षसेश्वर ।
हृष्टैः प्राणभयं त्यक्त्वा संग्रामेष्वनिवर्तिभिः ॥ ५

G. 6. 107. 4
B. 6. 111. 5
L. 6. 103. 5

## 110

V2 missing up to 9$^{a}$ (cf. v.l. 6.108.17). D12 begins with ॐ.

1 M2 om. 1–2.—$^{a}$) T2 पुरस्थितं. V3 B1.3 च तद् (B1 तं); T2.3 M1 तु तत्; Ct as in text (for तु तं). D6.10.11 T2.3 M1 Ck.t कृत्वा (for दृष्ट्वा). ❀ Cv: उपस्थितं तु तं कृत्वेति समीचीनः पाठः। दृष्ट्वेति पाठे दृशिरन्तर्भावितण्यर्थो वेदितव्यः। दर्शयित्वेत्यर्थः।; Cr: तं दृष्ट्वा तं दर्शयित्वा। तत्कृत्वेति पाठः।; Cm: तं दृष्ट्वा तद्दर्शयित्वा। तत्कृत्वेति वा पाठः।; so also Cg. ❀ —$^{b}$) Ñ1 V1.3 B3 D4.13 विमानं (for पुष्पकं). B1 D1–3.9 विमानं पुष्पकं ततः.—G (ed.) om. 1$^{c}$–2$^{b}$.—$^{c}$) V3 illeg. from रे up to त्यु in $^{d}$. G3 M1.3 अविदूरस्थितो. Ñ1 च तं रामः; B2.4 D4.12 स्थितं रामः; D5.6.10.11 T1 G1 M5 Cm.t स्थितो रामं (D6 °मः). Ś D8 नातिदूरे स्थितं रामः.—$^{d}$) Ñ2 D2.10.11 G2 M1 इत्युवाच. Ś Ñ1 B2.4 D4.6.8.12 विभीषणं.—After 1, Ś1 ins. 3348*; while Ś2 D8.12 ins.:

3342* कृतं साध्वित्युवाचैनं रामः सम्यग्विभीषणम्।

2 M2 om. 2; G (ed.) om. 2$^{ab}$ (for both, cf. v.l. 1). Ś1 om. 2–7.—$^{a}$) Ś2 Ñ V1.3 B D1–3.8–12 बद्धांजलिपुटो; D13 °लिः प्राज्ञो.—$^{b}$) Ñ1 B1 D1–4.9.13 राक्षसाधिपः.—$^{c}$) B1 D2.3 उवाच (for अब्रवीत्). D1.9 उवाच त्वरयोपेतं (D9 °या युक्तो); G (ed.) उवाच राक्षसश्रेष्ठः.

3 Ś1 om. 3 (cf. v.l. 2). V3 om. 3$^{ab}$. T1 damaged from वी in $^{a}$ up to स्यो in $^{b}$.—$^{a}$) B1 D1–3.9 तमुवाच; G1 अब्रवीत्तं (by transp.).—$^{b}$) D9 [ए]व पश्यतः.—$^{c}$) Ś2 D8.12 विस्पष्टं; B4 D1.4.13 विसृष्य (for विमृश्य).—V3 damaged from राघवो up to प्रयत्न in 4$^{a}$.—$^{d}$) B1 D1–3.9 -[उ]पबृंहि (D2 °गुंठि)तं; M3 -परिष्कृतं (for -पुरस्कृतम्). D13 इदमाहमुपास्थितं.

4 Ś1 om. 4 (cf. v.l. 2). V3 damaged up to प्रयत्न in $^{a}$ (cf. v.l. 3).—$^{a}$) Ś2 Ñ V1 B2–4 D4.8.12.13 G (ed.) इमे तु (G [ed.] च) कृतकर्माणो; B1 D1–3 कृतप्रत्यय (D1 °कृत; D2 °त्सुप)कर्माणो; D9 कृतकार्याश्च संग्रामे; G2 कृतज्ञाः कृतकर्माणो.—$^{b}$) Ś2 Ñ2 V1.3 B2–4 D8.10–13 सर्वे एव (for विभीषण).—After 4$^{ab}$, Ś2 D8.12 ins. 3345* (followed by 3346* and 3344*).—Before 4$^{cd}$, B3 reads (marg.) 5$^{cd}$.—$^{c}$) B4 G3 धनैश्च; Cm.g.t as in text (for अर्थैश्च). D7 G2 वस्त्रैश्च (for विविधैर्). M5 रत्नैश्च विविधैश्चापि.—$^{d}$) D6 T2.3 G1 M3.5 [अ]पि (for [अ]भि-). Ś2 Ñ2 V1.3 B2–4 D8.10–13 संपूज्यतां विभीषण; D7 G2 विविधैश्च प्र(G2 °श्चैव)पूजय; M2 पूज्यतां राक्षसेश्वर.—For 4$^{cd}$, Ñ1 D4.13 subst.:

3343* विराजयस्व विविधैः स्नानैश्चोपनिमन्त्रय।

[D4 अन्नैश्; D13 वनैश् (for स्नानैश्).];

while B1 D1–3.9 subst. for 4$^{cd}$; Ś2 D8.12 cont. after 3346*; B3 (m.) ins. after 4$^{ab}$:

3344* सर्वतः पूजनीया मे ऋक्षाश्च सुरवत्सदा।

[Ś2 D3.8.12 सर्वशः; D2 सर्वथा. Ś2 D8.12 तु (for मे). D1–3 रक्ष्याश्च सुतवत्; D9 रत्नैश्च गुरवः (for ऋक्षाश्च सुरवत्). Ś2 D8.12 ऋक्षवानरसंहताः (for the post. half).]

—Thereafter B3 (marg.) cont. only l. 1 3345*.

5 Ś1 om. 5 (cf. v.l. 2).—$^{a}$) Ś2 D8.12 [अ]मीभिर्जिता; Ñ V1.3 B2–4 D4.10.11 Ct [अ]मीभिस्त्वया; D5.6 T1 G1.2 M3.5 Cr.g [ए]भिरजिता; D7 M1 [ए]भिश्च त्वया; M2 [ए]भिर्हरिभिर् (for [ए]भिरर्दिता). D13 सा ममैभिस्त्वया लंका.—$^{b}$) Ñ1 D13 राक्षसाधिप; V3 राक्ष*** (illeg.). Ś2 D8 निर्जितो राक्षसेश्वरः; M3 समरे निर्जिता त्वया.—V3 om. 5$^{cd}$. B3 reads (marg.) 5$^{cd}$ before 4$^{cd}$.—$^{c}$) Ś2 Ñ1 V1 B2–4 D4.8.12.13 दूरे (for हृष्टैः).—$^{d}$) Ś2 B4 D4.8.12 [अ]नि (Ś2 D8 [अ]भि)वर्तिनः.—For 5, B1 D1–3.9 subst.; while Ś2 D8.12 ins. after 4$^{ab}$; B3 (marg.) cont. only l. 1 after 3344*:

3345* सहैभिर्मवता लङ्का जिता मम निवेदिता।
त्यक्त्वा प्राणान्परं शक्त्या तोषितोऽस्मि विभीषण।

[(l. 1) D1 गत्वा; D3.9 जित्वा (for जिता). B1.3 जिता सबलवाहना (for the post. half).—(l. 2) D3 सक्त्या (for शक्त्या).]

—Then Ś2 B1 D1–3.8.9.12 cont.; while Ñ1 (m.) cont. only l. 2–3 after 3347*; B3 ins. only l. 3–4 after 6:

G. 6. 107. 7
B. 6. 122. 7
L. 6. 103. 6

एवं संमानिताश्चेमे मानार्हा मानद त्वया ।
भविष्यन्ति कृतज्ञेन निर्वृता हरियूथपाः ॥ ६
त्यागिनं संग्रहीतारं सानुक्रोशं यशस्विनम् ।
यतस्त्वामवगच्छन्ति ततः संबोधयामि ते ॥ ७
एवमुक्तस्तु रामेण वानरांस्तान्विभीषणः ।
रत्नार्थैः संविभागेन सर्वानेवान्वपूजयत् ॥ ८

3346* रत्नैः समभिपूज्यन्तां मयि प्रत्यवराश्च ये ।
यो यदिच्छति यावच्च तत्तद्देयं विभीषण ।
एभिः संपूजितैर्वीरैः पूजितोऽहं त्वया ध्रुवम् ।
ममार्थे ये पराक्रान्ताश्चिरं वानरपुंगवाः ।

[ Ś$_2$ D$_{1.3}$ om. ( hapl. ) l. 1–2. —( l. 1 ) D$_{3.12}$ अपि; D$_9$ इति ( for मयि ). —( l. 2 ) D$_{12}$ यम् ( for यद् ). D$_3$ च ( for second तद् ). —( l. 3 ) Ñ$_1$ B$_{1.3}$ एतैः ( for एभिः ). B$_3$ मया ( for त्वया ). D$_9$ भृशं ( for ध्रुवम् ). —( l. 4 ) B$_{1.3}$ ममार्थे ये; D$_2$ ममार्थाय; D$_3$ समर्था ये; D$_9$ मदर्थे च. D$_1$ परिक्रांताश्च ( for पराक्रान्ताश्च ). ]

—Then Ś$_2$ D$_{8.12}$ cont. 3344*.

—After 5, Ñ D$_{4-7.10.11.13}$ S ins. :

3347* त इमे कृतकर्माणः पूज्यन्तां सर्ववानराः ।
धनरत्नप्रदानेन कर्मैषां सफलं कुरु ।

[ ( l. 1 ) D$_4$ इमे हि; D$_{13}$ इमे ते; T$_{2.3}$ तदिमे; M$_2$ इमे तु. D$_4$ G$_1$ सर्व- ( for कृत- ). D$_7$ G$_2$ M$_{1.2}$ साधु ( for सर्व- ). Ñ$_2$ D$_{10.11}$ सर्व एव वनौकसः ( for the post. half ). —( l. 2 ) Ñ D$_{4.10.11}$ -प्रदानैश्च. T$_1$ ****** नेन ( damaged ) ( for the prior half ). Ñ$_1$ D$_{4.13}$ कोषै( Ñ$_1$ °शै )श्च सफलान्कुरु ( for the post. half ). ]

6 Ś$_1$ B$_1$ D$_{1-3.9}$ om. 6. ( for Ś$_1$, cf. v.l. 2 ). —$^a$ ) Ś$_2$ D$_{8.12}$ सुसंमताश्चैव; Ñ$_1$ V$_3$ B$_3$ D$_{4.13}$ संभावि ( D$_{13}$ °पि )ताश्चैव; N$_2$ V$_1$ B$_{2.4}$ D$_{7.10.11}$ G$_2$ M$_{2.3}$ संमानिताश्चेते( V$_1$ B$_{2.4}$ M$_2$ °व ). —Ñ$_2$ illeg. for 6$^b$. —$^b$ ) Ś$_2$ V$_{1.3}$ B$_{2-4}$ D$_{8.12.13}$ M$_2$ मानितास् ( for मानद ). D$_{7.10.11}$ Ct नंद्यमाना यथा त्वया; G$_1$ मानदानादिभिस्त्वया. —$^c$ ) M$_2$ स्मरिष्यंति. D$_5$ T$_1$ G$_3$ M$_5$ हि निर्वृत्ता ; Ct as in text ( for कृतज्ञेन ). G$_1$ गमिष्यंत्यभिनिर्वृत्ताः . —$^d$ ) D$_5$ T$_1$ G$_3$ M$_5$ सर्वे वै; D$_{7.12.13}$ M$_1$ निवृत्ताः; G$_1$ सर्वे ते; Cg.t as in text ( for निर्वृता ). ❀ Cr.g निवृ( निर्वृ? )त्ताः ( Cg °र्वृत्ता इति पाठे ) निष्पन्नाः परिपूर्णा इति यावत्. ❀ —After 6, B$_3$ ins. only l. 3–4 of 3340*.

7 Ś$_1$ om. 7 ( cf. v.l. 2 ). —$^a$ ) G$_1$ त्यागिनः . B$_{1.4}$ D$_{2.3.6-9.12}$ T$_2$ M$_3$ संगृहीतारं. —$^b$ ) D$_{13}$ मम वाक्यं. Ñ D$_{4.10.11.13}$ जितेंद्रियं; B$_1$ D$_{2.3.9}$ मनस्विनं; D$_1$ ममार्जवं ( for यशस्विनम् ). —V$_3$ mostly damaged for 7$^{cd}$. —$^c$ ) M$_3$ सर्वे त्वाम्. Ś$_2$ Ñ$_2$ B$_2$ D$_{2.3.9.12.13}$ अवगच्छामि; Ñ$_1$ B$_4$ अधिगच्छामि; V$_1$ B$_{1.3}$ D$_{1.4.6}$ M$_2$ अभि( B$_1$ D$_1$ °नु ) गच्छामि ( for अवगच्छन्ति ). D$_{5.7.10.11}$ G$_2$ सर्वे( D$_5$ यतस् ) त्वामभिगच्छंति. —$^d$ ) T$_{2.3}$ संचोदयामि ( for संबोधयामि ). Ś$_2$ D$_{5-8.12}$ S [ अ ]हं ( for ते ). B$_1$ D$_{1-3.9.13}$ ततस्त्वां प्रब्रवीम्यहं. —After 7, Ñ B$_{1.3}$ D$_{1-3.9}$ ins. ; Ś$_1$ ins. after 1 ( owing to om. ) ; Ś$_2$ D$_{8.12}$ cont. after 3349* :

3348* धर्मार्थविदुषं वीरमपि दातारमूर्जितम् ।
योधा भजन्ति राजानमेतद्भूमिपतेर्व्रतम् ।

[ ( l. 1 ) D$_1$ -सहितं ( for -विदुषं ). Ñ$_1$ B$_3$ D$_9$ अभि-; D$_{2.3}$ अति- ( for अपि ). Ñ$_1$ आहवे; D$_{2.3.9}$ आर्जवं ( for ऊर्जितम् ). D$_1$ अभिधातारमार्जवं ( for the post. half ). Ś D$_{8.12}$ श्रुतं धर्मार्थविदुषमतिदातारमार्जवं. —Ñ om. l. 2. —( l. 2 ) D$_1$ व्रजंति ; D$_3$ भवंति ( for भजन्ति ). ]

—Then Ñ B$_3$ cont. ; while Ś$_2$ V$_{1.3}$ B$_{2.4}$ D$_{4-8.10-13}$ S ins. after 7 :

3349* हीनं रतिगुणैः सर्वैरभिहन्तारमाहवे ।
त्यजन्ति नृपतिं सैन्याः संविग्नास्तं नरेश्वरम् ।

[ Ñ$_1$ D$_{13}$ transp. l. 1 and l. 2. —( l. 1 ) D$_{13}$ हीने. Ś$_2$ D$_{8.12}$ क्लीब- ; Ñ$_1$ V$_{1.3}$ B$_{2-4}$ D$_4$ ह्य( V$_3$ * [ damaged ] )पि; T$_2$ गति- ; G$_2$ एभिर् ; Cv.g.t as above ( for रति- ). Ś$_2$ D$_{8.12}$ अरिहंतारं ; B$_2$ अपि दातारं ; D$_4$ अभिदत्ता तद् ( for अभिहन्तारम् ). D$_{13}$ ह्यवमंता च राक्षस ( for the post. half ). —( l. 2 ) D$_5$ T$_1$ G$_1$ M$_{2.5}$ त्यजंते. T$_2$ त्वां ( for तं ). D$_{10.11}$ Ct सेना त्यजति संविग्ना नृपतिं तं नरेश्वर( D$_{10}$ °रं ); G$_2$ M$_1$ त्यजते नृपतिं सेना संविग्ना तं नरेश्वर( M$_1$ °रं ). ❀ Cv : ' अन्तर्भावितण्यर्थोऽत्र हन्ति '; नृपतिं सैन्यपतिं युद्धे घातयित्वा पश्चात्प्रयोजनमकुर्वाणं स्वपतिं नरेश्वरं संविग्नाः सैन्यास्त्यजन्तीति । ; Cr : हीनमिति । नृपतिं स्वामिनम् । सर्वैरिति । गुणैः प्रीतिकरैः औदार्यादिगुणैर्हीनं, अभिहन्तारं हिंसनशीलम् । प्रसादं विना क्रोधैकनिरतमिति यावत् । नरेश्वरं सैन्याः संसदि आहवे त्यजन्तीति योजना । ; so also Cm.g. ❀ —For l. 2, Ś$_2$ Ñ V$_{1.3}$ B$_{2-4}$ D$_{4.8.12.13}$ subst. :

3349( A )* सेना त्यजति राजानमेतद्भूमिपतेः श्रुतम् ।

[ Ś$_2$ Ñ$_1$ V$_3$ B$_{3.4}$ D$_{4.8.12.13}$ भजति. V$_3$ इति ( for एतद् ). D$_8$ हि भूपतेर् ; D$_{13}$ भूतपते. Ś$_2$ D$_{8.12}$ व्रतं ; Ñ$_1$ ( m. also as above ) शुभं ( for श्रुतम् ). ]

8 Ñ$_1$ reads 8$^{cd}$ twice. —$^{cd}$ ) Ñ$_1$( second time ) D$_{4.13}$ रत्नानां ; D$_{7.11}$ G$_2$ M$_2$ रत्नार्थं- ; D$_{10}$ रत्नार्थं. Ś Ñ$_2$ V$_{1.3}$ B$_{2-4}$ D$_{8.12}$ धनरत्नप्रदानेन ; M$_1$ रत्नार्थसंप्रदानेन ( for $^c$ ). Ś Ñ( Ñ$_1$ second time ) V$_{1.3}$ B$_{2-4}$ D$_{4.8.10-13}$ M$_{1-3}$ अभ्यपूजयत्. D$_6$ T$_{2.3}$ सर्वानेतान्प्रपूजयत् ( for $^d$ ). Ñ$_1$( marg. first time ) B$_1$ D$_{1-3.9}$ ववर्ष रत्नवर्षेण वर्षेण मघ( B$_1$ भग )वानिव( D$_9$ मघवानिव तोयदैः ). —After 8, M$_2$ ins. :

ततस्तान्पूजितान्दृष्ट्वा रत्नैरर्थैश्च यूथपान् ।
आरुरोह ततो रामस्तद्विमानमनुत्तमम् ॥ ९
अङ्केनादाय वैदेहीं लज्जमानां यशस्विनीम् ।
लक्ष्मणेन सह भ्रात्रा विक्रान्तेन धनुष्मता ॥ १०
अब्रवीच्च विमानस्थः काकुत्स्थः सर्ववानरान् ।
सुग्रीवं च महावीर्यं राक्षसं च विभीषणम् ॥ ११

G. 6. 107. 11
B. 6. 122. 13
L. 6. 103. 22

3350* सुग्रीवमङ्गदं चैव हनूमन्तं तथैव च ।
नलं नीलं गवाक्षं च कुमुदं गन्धमादनम् ।
सुषेणं जाम्बवन्तं च वीरं शतबलिं तथा ।
केसरिं हरिलोमं च मैन्दं द्विविदमेव च ।
वानराणां सहस्राणि प्रयुतान्यर्बुदानि च । [5]
पूजयामास विधिवद्वस्त्रभूषणचन्दनैः ।
मुकुटैः कर्णवेष्टैश्च हारैश्च शशिसंनिभैः ।
कामितेन च हृद्येन भोजनेन प्लवंगमान् ।
भोज्यैर्लेह्यैश्च पेयैश्च मधुना विविधेन च ।
भोजयित्वा ततः कामं रामस्योपायनं हरत् । [10]
मणिमुक्ताप्रवालानि रत्नानि विविधानि च ।
कम्बलानि च मुख्यानि चन्दनान्यगरूणि च ।
वस्त्राणि चैव दिव्यानि सुवर्णस्य च राशयः ।
अलंकाराणि दिव्यानि पुरस्ताद्राघवस्य तु ।
उपनीय विनीतात्मा राघवं वाक्यमब्रवीत् । [15]
भृत्योऽस्मि तव काकुत्स्थ सभृत्यो दारबान्धवः ।
प्रसादं कुरु मे नाथ गृह्यतामेतदाहृतम् ।
वैदेह्या सीतया सार्धं लक्ष्मणेन च धीमता ।
प्रतिगृह्य ततो रामस्तस्य प्रियहितेप्सया ।

9 $^{a}$) Ś Ñ V1.3 B2–4 D4.8.12 वानरान्; D13 अखिलान् (for पूजितान्). —$^{b}$) Ś Ñ V B2–4 D8.12 M2 धनरत्नैश्च (B3 °त्नैः सु-) पूजितान् (M2 वानरान्); B1 D1–3.9 रामः संपूर्णमानसः; D4.13 धनै रत्नैश्च पूजितान्; D7 G2 रत्नैश्च हरियूथपान्; D10.11 M1 रत्नार्थैर्हरियूथपान्.—After 9$^{ab}$, Ś B1.3 (marg.) D1–3.8.9.12.13 (only l. 1–2) ins.:

3351* सान्त्वयित्वा यथान्यायमिदं वचनमब्रवीत् ।
परितुष्टोऽस्मि भद्रं ते कृतं साह्यं महन्मम ।
लब्धा सीता हतः शत्रुः कुलमस्युद्धृतं च मे ।
अशून्या मे दिशः सर्वा भवद्भिर्देवविक्रमैः ।
नास्त्यदेयं हि मे किंचिद्देवराज्यमपि ध्रुवम् । [5]
अनुजानामि वः सर्वान्यथेष्टं गम्यतामिति ।
तेनैव सेतुना तीर्त्वा मकरालयमव्ययम् ।
सुग्रीवस्तु मया सार्धं विमानेन गमिष्यति ।
सामात्यो युवराजश्च यथा मुख्याश्च वानराः ।
इत्युक्तास्ते महाकाया वानराः कामरूपिणः । [10]
प्रदक्षिणमवर्तन्त दृष्ट्वा रामं सलक्ष्मणम् ।
सुग्रीवमङ्गदं चैव राजानं च विभीषणम् ।
प्रणम्य च शिरोभिस्ते प्रययुर्हरियूथपाः ।
यथोत्साहं यथाप्रीति यथागतमरिंदमाः ।
केचिद्रवान्विमुञ्चन्तः सिंहनादांश्च पुष्कलान् । [15]

[(l. 1) D2.8.13 शांतयित्वा. —(l. 2) B1.3 D1.2.9.13 वः (for ते). B1 ते साहसं; D13 सख्यं महत् (for साह्यं महत्). —(l. 3) D3 लब्ध्वा सीतां. D9 लब्धा श्रीर्हतः शत्रुश्च (unmetric) (for the prior half). Ś1 D1–3 अभ्युद्धृतं; B1.3 अत्युच्छ्रितं. —(l. 4) B1 हि (for मे). D9 कृता मनोरथाः सर्वे (for the prior half). —(l. 5) D3 कश्चिद्. D9 किंचिन्मे (by transp.). —(l. 6) D8.12 नः; D9 तान् (for वः). —(l. 8) B3 च (for तु). Ś1 D2.8.12 [आ]गमिष्यति. —(l. 9) B3 अमात्यो. Ś D8.12 तु (for च). B3 तथा योग्यश्च; D9 तथा योधाश्च (for यथा मुख्याश्च). —(l. 11) D8 प्रवर्तंत. —(l. 12) B1.3 युवराजं; L (ed.) राजानं चैव (hypm.) (for राजानं च). —(l. 13) D1 ते (for च). D1–3 तान् (for ते). B1.3 प्रणम्य शिरसा सर्वान्; D9 प्रणम्य च ततः सर्वे (for the prior half). —(l. 15) B1 कक्षास्फोटान्; B3 D1.3 कंठरावान्; D8.12 केचिद्रावान्; D9 कपिनादान् (for केचिद्रवान्).]

—$^{c}$) Ś Ñ V B D1–4.8–13 M3 तदा रामस्; G3 महाबाहुर् (for ततो रामस्). —After 9$^{c}$, G1 reads 6.109.23$^{d}$ and then repeats 6.102.24$^{c}$–25$^{b}$ (followed by the prior half of 3339*). —$^{d}$) D5 T1 विमानं तद् (by transp.); G3 विमानं तम्. Ś Ñ V B2–4 D4.8.12.13 M3 मनोजवं (for अनुत्तमम्). B1 D1.2.9 विमानमभिपूजितं (D2.9 °ज्य च [D9 तं]); D3 विमानमभिपूजयन्. ❀ Cg : ततः पूजानन्तरम् । ततः पूजादर्शनादेव हेतोरिति ततः शब्दद्वययोजना. ❀

10 $^{a}$) D2 अंके च (for अङ्केन). Ś D8 [आ]रुह्य (sic) (for [आ]दाय). D4 तामादाय च वैदेहीं.—$^{b}$) Ñ V D4.10.11 मनस्विनीं. B1 D1–3.9–13 श्रियं नारायणो यथा. —For 10$^{cd}$, B1 D1–3.9 subst.; while B3 ins. l. 1 only after 10$^{ab}$:

3352* आरुरोह च तं राजा सुग्रीवः सह मन्त्रिभिः ।
लक्ष्मणश्च महाधन्वी युवराजोऽङ्गदस्तथा ।

[(l. 1) D3.9 अन्वा (D9 °था) रुरोह (for आरुरोह च). —(l. 2) D1.2 महाधन्वा. D9 तदा (for तथा).]

—Then B1 D1–3.9 cont.; B3 (marg.) ins. l. 2 only after 11$^{ab}$:

3353* सुग्रीवानुमता ये च विद्वांसो हरियूथपाः ।
ऋक्षराजो गवाक्षश्च सुषेणश्च हरीश्वरः ।

11 Ś D8.12 repeat 11–12$^{b}$ after 3357*. Ñ1 repeats 11$^{ab}$ (followed by 12$^{a}$ in m.) after 3357*. —$^{a}$) Ñ1 (first time).3 B3 D4.9–11.13 प (for च). Ñ1 (second time) ततोब्रवीद्. —$^{b}$) D7.10.11 G2 M3 पूजयन्; G (ed.) राघवः (for काकुत्स्थः). Ś Ñ1 B1 D1–3.9.12 (Ś Ñ1 D12 second time) राघवो राक्षसेश्वरं; T2.3 सर्वान्वा (T3

G. 6. 107. 12
B. 6. 122. 14
L. 6. 103. 23

मित्रकार्यं कृतमिदं भवद्भिर्वानरोत्तमाः ।
अनुज्ञाता मया सर्वे यथेष्टं प्रतिगच्छत ॥ १२
यत्तु कार्यं वयस्येन सुहृदा वा परंतप ।
कृतं सुग्रीव तत्सर्वं भवता धर्मभीरुणा ।
किष्किन्धां प्रतियाह्याशु स्वसैन्येनाभिसंवृतः ॥ १३
स्वराज्ये वस लङ्कायां मया दत्ते विभीषण ।
न त्वां धर्षयितुं शक्ताः सेन्द्रा अपि दिवौकसः ॥ १४
अयोध्यां प्रतियास्यामि राजधानीं पितुर्मम ।
अभ्यनुज्ञातुमिच्छामि सर्वानामन्त्रयामि वः ॥ १५
एवमुक्तास्तु रामेण वानरास्ते महाबलाः ।
ऊचुः प्राञ्जलयो रामं राक्षसश्च विभीषणः ।
अयोध्यां गन्तुमिच्छामः सर्वान्नयतु नो भवान् ॥ १६

°र्वा )नरपुंगवान्. —After 11$^{ab}$, B3 ( marg. ) ins. l. 2 of 3353*. —$^{cd}$ ) B4 महाबाहुं ( for °वीर्यं ). V3 D6.7.10.11 T2.3 G1 M3 काकुत्स्थः स- ; B2 राक्षसं स ; B4 राक्षसेशं ; M1 राक्षसेंद्रं ( for राक्षसं च ). Ñ1 महाबलं ; D7 -विभीषणः. —For 11$^{cd}$, Ś B1 D1–3.9.12 ( Ś D12 second time ) subst. :

3354* विभीषणममित्रघ्नमिदं वचनमर्थवत् ।

[ D1 अर्थवित् ; D2 अब्रवीत् ; D9 उत्तमं ( for अर्थवत् ). ]

—After 11, Ś Ñ V B2–4 D4.8.12 ( Ś D8.12 after first occurrence ).13 ins. :

3355* सर्वेषां वः प्रभावेन दुरात्मा रावणो हतः ।

[ B4 D4 च ( for वः ). V3 B3 D4.13 प्रभावेण ; B2 प्रसादेन ; D12 प्रभावाच्च. ]

**12** Ś D8.12 repeat 12$^{ab}$ (cf. v.l. 11). D4.13 om. 12$^{ab}$. Ñ1 reads 12$^{a}$ in marg. after 11$^{ab}$ (r.). —$^{a}$ ) Ś2 ( first time ) moth-eaten for मित्रकार्यं. Ś Ñ1 B1 D1–3.9.12 ( Ś D12 second time ) महद् ( for कृतम् ). G1 इदं सर्वं ( for कृतमिदं ). —After 12$^{a}$, Ñ1 ins. 3358* and 3356*. —Ñ1 om. 12$^{b}$. —$^{b}$ ) Ś Ñ2 V B3.4 D8 ( both times ) .10–12 वानरर्षभाः. Ś B1 D1–3.9.12 ( Ś D12 second time ) भवता पुष्कलं कृतं. —After 12$^{ab}$, Ś B1 D1–3.8.9.12 ( Ś D8.12 after second occurrence ) ins. ; Ñ1 ( m. ) cont. after 3358* :

3356* स्वपक्षं पृष्ठतः कृत्वा धर्ममालम्ब्य केवलम् ।

[ D9 प्रभवं त्यक्त्वा ( for पृष्ठतः कृत्वा ). D1 धैर्यम् ( for धर्मम् ). ]

—D1–3.9 om. 12$^{c}$ – 13. B1 om. 12$^{c}$ – 13$^{d}$. —$^{d}$ ) Ś V B2–4 D4.8.12 M2 गंतुमर्हथ ; M1 प्रतियास्यथ.

**13** D1–3.9 om. 13 ; B1 om. 13$^{a-d}$ ( for both, cf. v.l. 12 ). —$^{a}$ ) D4.13 कार्यं हि ( D13 च ) ( for तु कार्यं ). —$^{b}$ ) D13 यत् ( for वा ). Ś Ñ2 V B2–4 D8.10–12 M2 स्निग्धे ( B3 प्रिये ) न च हितेन च ( M2 °तैषिणा ). —G3 om. 13$^{c}$ – 15$^{b}$. —$^{cd}$ ) D12 हितं ( for कृतं ). D4 om. तत्सर्वं. Ś Ñ2 V B2–4 D8.12 धर्मचारिणा ; D10 [ अ ]धर्मभीरुणा. Ñ1 D4.13 कर्म तद्रम्यतां गृहं ( for $^{d}$ ). M2 सत्त्वविक्रम युद्धेन कृतं सुग्रीव तत्त्वया. ❀ Cg.t : अधर्मभीरुणेति छेदः. ❀ —D13 om. 13$^{ef}$. D6 reads 13$^{ef}$ after 14. —$^{e}$ ) G1 प्रतियासि ( sic ). —For 13$^{ef}$, Ś Ñ V B ( B1 reads after 15$^{ab}$ ) D4.8.12 subst. ; while M2 subst. for 13$^{ef}$ and reads after 14 :

3357* किष्किन्धां गच्छ सुग्रीव स्वराज्यमनुपालय ।

[ B1 रक्ष ; B2 याहि ( for गच्छ ). V3 B1 स्वं. Ñ1 B2.4 D4 -राज्यं प्रति- ; B1 राज्यं परि-. M2 राज्यं पालय वानर ( for the post. half ). ]

—After 3357*, Ś D8.12 repeat 11–12$^{b}$ ; Ñ1 repeats 11$^{ab}$ ( followed by 12$^{a}$ in m. ). —After 3357*, Ñ2 V B D4 cont. ; Ś D8.12 ins. after 14$^{ab}$ ( followed by 3359* ) ; Ñ1 ins. after 12$^{a}$ ( followed by 3356* ) ; M2 ins. after 13$^{cd}$ :

3358* विभीषण महाबाहो कृतं धर्मभृतां वर ।

[ Ś D12 कुल- ; V B3 क्षत्र- ; D8 कुरु ( for कृतं ). D4 कृतं कर्म सुदुष्करं ( for the post. half ). ]

**14** G3 om. 14 ( cf. v.l. 13 ). Ñ2 om. 14$^{ab}$. —$^{a}$ ) Ś B1 D1–3.8.9.12 लंकामावस ( D1 °विश्य ) भद्रं ते ; D13 तिष्ठ राज्ये च लंकायां. —$^{b}$ ) Ś B1 D1–3.8.9.12 दत्तां. B1 महानघ. —For 14$^{ab}$, Ñ1 V B2–4 D4 subst. ; while Ś D8.12 cont. after 3358* :

3359* स्वराज्यं ते मया दत्तं लङ्कायां राक्षसेश्वर ।

[ Ś D8 स्वं ( for स्व- ). Ñ1 ( m. also ) लंकामावस सुव्रत ( for the post. half ). ]

—After 14$^{ab}$, Ś D8.12 ins. 3358*. —V3 D13 om. 14$^{cd}$. —$^{c}$ ) Ś1 D2.8 G1 त्वा ; D12 तु ; Cm.t as in text ( for त्वां ). B1 न च त्वां धर्षयिष्यंति. —$^{d}$ ) D4.6 M1 चापि ( for अपि ). Ś Ñ V1.2 B2.4 D4.8.12 सुरा ( D4 om. [ hapl. ] ) सुराः ; B3 सुरेश्वराः ( for दिवौकसः ). —After 14, D6 reads 13$^{ef}$ ; while M2 reads 3357*.

**15** G3 om. 15$^{ab}$ ( cf. v.l. 13 ). Ś1 om. ( hapl. ) 15–16$^{d}$. —$^{a}$ ) Ś2 N2 B2–4 D8.12 अभि ( B4 °पि ) गच्छामि ; V1 D1 अपि यास्या ( V1 ** ) मि ; V2.3 अनुगच्छामि ; M2 अद्य यास्यामि. —$^{b}$ ) Ś2 Ñ2 V B2–4 D8.12 अहं पितुः ( for पितुर्मम ). —After 15$^{ab}$, B1 reads 3357*. —$^{c}$ ) B1 G2 अद्या ( G2 °भ्य ) नुज्ञातम्. —$^{d}$ ) B1 D1–3.5–7 S चामंत्रयामि ; D9 च मंत्रयामि ( for आमन्त्रयामि ). D4 च ( for वः ). D13 संपन्नान्मंत्रयामि वः.

**16** Ś1 om. 16$^{a-d}$ ( cf. v.l. 15 ). —$^{a}$ ) B1 D1–3.9 उक्तास्. —$^{b}$ ) D13 तु ( for ते ). Ś2 Ñ2 V B2–4 D8.10–12 हरींद्रा ( B2–4 °द्रो ) हरयस्तथा ( Ñ2 B2 °दा ) ; B1 D1–3.9

दृष्ट्वा त्वामभिषेकार्द्रं कौसल्यामभिवाद्य च ।
अचिरेणागमिष्यामः स्वान्गृहान्नृपतेः सुत ॥ १७
एवमुक्तस्तु धर्मात्मा वानरैः सविभीषणैः ।
अब्रवीद्राघवः श्रीमान्ससुग्रीवविभीषणान् ॥ १८

प्रियात्प्रियतरं लब्धं यदहं ससुहृज्जनः ।
सर्वैर्भवद्भिः सहितः प्रीतिं लप्स्ये पुरीं गतः ॥ १९
क्षिप्रमारोह सुग्रीव विमानं वानरैः सह ।
त्वमप्यारोह सामात्यो राक्षसेन्द्र विभीषण ॥ २०

G. 6. 107. 22
B. 6. 122. 23
L. 6. 103. 36

स राजा रावणानुजः ; D4 हरींद्रा वानरास्तदा; M2 सर्वे ते वानरर्षभाः ; G (ed.) हरींद्रो हरियूथपाः. —V3 om. $16^{c}$ – $19^{b}$. —$^{c}$) Ś2 Ñ2 V1.2 B2–4 D8.10–12 M2 सर्वे; D7 भूत्वा (for रामं). —$^{d}$) D8 राक्षसेश्वरो (hypm.). —$^{e}$) Ś D8.12 अभिगच्छामः ; Ñ1 D4.13 प्रतियास्यामः ; D5.6 G2 गंतुमिच्छामि. —$^{f}$) D6 T2.3 तस्मात् (for सर्वान्). B3 स्वगृहान्नृपसत्तम. —For $16^{e}$–$^{f}$, B1 D1–3.9 subst.:

3360* उवाच रामं प्रणतः प्रसृतं हेतुमद्वचः ।
अयोध्यां नगरीं गन्तुमिच्छामि सहितस्त्वया ।

[(l. 1) B1 तं वै (for रामं). —D9 om. from the post. half of l. 1 up to l. 1 of 3362*. D1 प्रश्रितं; D3 कोमलं (for प्रसृतं).—(l. 2) G (ed.) इच्छामः (for इच्छामि).] —After 16, Ś Ñ V1.2 B2–4 D4–8.10–13 T G M1–3 ins.; while M5 ins. after $17^{ab}$:

3361* उद्युक्ता विचरिष्यामो वनानि नगराणि च ।

[Ś V1.2 B2–4 D8.12 ऊर्जिता; Ñ D4.13 प्रविश्य; D7 T2.3 स्वयुक्ता; D10.11 मुद्युक्ता; G2 गत्वा तु; M1 उदिता; M2 तान्दृष्ट्वा; Cg as above (for उद्युक्ता). Ś Ñ V1.2 B2–4 D4.8.10–13 [उ]पवनानि (for नगराणि). ❀ Cv : मुद्युक्ताः मुदा युक्ताः ; Ct : मुद्युक्ता हर्षयुक्ताः. ❀]

17 V3 om. 17 (cf. v.l. 16). —$^{a}$) Ñ1 D4.13 अभिषिंचं(Ñ1 °च्यं)तं; V2 D11 अभिषेकार्हं. Ś Ñ2 V1 B2.4 D8.12 दृष्ट्वा तवाभिषेकं च(Ñ2 तु). —After $17^{ab}$, M5 ins. 3361*. —V2 illeg. for $17^{cd}$. —$^{c}$) Ś V1 B2.4 D8.12 न चिराद् ; Ñ1 D4.13 न चिरेण; Ñ2 D5.10.11 अचिराद्. T2.3 G1.2 M1 गमिष्यामः. —$^{d}$) D7 स्व- (for स्वान्). G2 ग्रामान् (for गृहान्). D6 T2.3 M2 नृपसत्तम (for °तेः सुत). Ś Ñ2 V1 B2.4 D8.10–12 स्वगृहान्नृप(Ś D8.12 °न्नृपु)सत्तम; Ñ1 D4 गृहान्नर(D4 °न्नो नृ)पतेः सुत ; D13 गृहान्गृहपतेस्ततः. —For 17, B1.3 (marg.) D1–3.9 subst.:

3362* तवाभिषेकमिच्छामि द्रष्टुं हृदयकाङ्क्षितम् ।
कौसल्यामभिवाद्याहं सुमित्रां कैकयीं तथा ।
पुनरेष्याम्यनुज्ञातो भवता यदि मन्यसे ।

[D9 om. l. 1 (cf. v.l. 16). —(l. 1) D1 तथा (for तव). B3 इच्छामो. —(l. 2) B3 [अं]बां (for [अ]हं). —After l. 2, all the above MSS. ins.; while Ś D8.12 ins. after $17^{ab}$:

3362(A)* दृष्ट्वा भरतशत्रुघ्नौ भविष्याम्यात्मनोऽनृणः ।
अयोध्यां नगरीं दृष्ट्वा रम्योद्यानवनान्तराम् ।

[(l. 1) Ś D8.12 सुमित्रां कैकयीं तथा ; B3 भविष्यामोथ सिद्धये (for the post. half). D9 शत्रुघ्नभरतौ दृष्ट्वा भविष्याम्यनृणो नृप.] —(l. 3) D9 एवाभि- (for एष्यामि). B3 पुनरेष्यामोनुज्ञाता (unmetric) (for the prior half).]

18 V3 om. 18 (cf. v.l. 16). —$^{a}$) D7.9 स (for तु). B4 ते रामो(sic) (for धर्मात्मा). —$^{b}$) D8 च (for स-). B1 D1–3.9 रामस्ते(D9 °क्षसे)न महात्मना. —For $18^{c}$–20, B1 D1–3.9 subst. 3363*. —$^{c}$) Ś Ñ V1.2 B2–4 D4.8.10–13 M2 G (ed.) अब्रवीद्वानराग्रामः (G [ed.] °रश्रेष्ठान्). —$^{d}$) D4 सुग्रीव स- (by transp.). D7 M5 सुग्रीवं स(M5 च)विभीषणं.

19 V3 om. $19^{ab}$ (cf. v.l. 16). For $18^{c}$–20, B1 D1–3.9 subst. 3363*. —$^{a}$) D13 T2 प्रियाः. G (ed.) प्रियतमं. —$^{b}$) G1 -गणः; Cv as in text (for -जनः). Ś Ñ V1.2 B2–4 D4.8.12 L (ed.) मया(L [ed.] अद्य) यदि (Ś D8.12 यथा ; B4 सह) गमिष्यथ; D13 मया यद्वै गमिष्यताः M2 मयैतद्यद्गमिष्यथ. —$^{d}$) B3 प्राप्स्ये. D13 प्रतिगच्छे पुरीं पितुः (sic).

20 $^{a}$) Ś Ñ1 B2.4 D4.8.12.13 M2 आरुह. D13 सर्वैस्त्वं (for सुग्रीव). —$^{b}$) Ś Ñ2 V1.2 B2–4 D8.10–12 सह वानरैः (by transp.); V3 सह मानवैः ; G (ed.) सह यूथपैः (for वानरैः सह). —$^{c}$) Ś Ñ1 B2.4 D4.8.12 अप्यारुह ; Ñ2 V B3 D5.6.10.11.13 T2.3 M1.2 अप्यारोह. B3 चासाद्य (for सामात्यो). —For $18^{c}$–20, B1 D1–3.9 subst.:

3363* बभूव प्रीतिमान्भूयस्तस्य भक्त्याभिजातया ।
उवाच चैनं काकुत्स्थः प्रियं मे राक्षसेश्वर ।
यत्त्वमेवं गतो विद्वन्कार्यनिश्चयतत्त्ववित् ।
क्षिप्रमारोहतु भवान्सामात्यः सपुरःसरः ।
पुरे प्रतिविधिं कृत्वा कर्तव्यमिति चेति च । [5]

[(l. 1) D1 प्रीतस्तु; D9 तत्र (for भूयस्). B1 जितस्तया (sic); D3 [अ]भिजायत (for [अ]भिजातया). —(l. 3) B1 तद् ; D3 यस् (for यत्). D1.2 विद्वान्. D1 कार्यं निश्चित्य (for °र्यनिश्चय-). —(l. 4) D9 सपुरोहितः (for सपुरःसरः). —(l. 5) B1 कुर्याः (sic) (for कृत्वा).]

—After 20, Ś D8.12 ins.:

3364* आरुरोह ततो राजा सुग्रीवः सह मन्त्रिभिः ।
अथाजग्मुस्तथा हृष्टाः सर्वे ते हरियूथपाः ।;

while Ñ1 (marg.) ins. 3365* after 20.

G. 6. 109. 59
B. 6. 125. 38
L. 6. 106. 44

निहत्य रावणं रामः प्रतिलभ्य च मैथिलीम् ।
उपयाति समृद्धार्थः सह मित्रैर्महाबलैः ॥ ३५
लक्ष्मणश्च महातेजा वैदेही च यशस्विनी ।
सीता समग्रा रामेण महेन्द्रेण शची यथा ॥ ३६
एवमुक्तो हनुमता भरतः कैकयीसुतः ।
पपात सहसा हृष्टो हर्षान्मोहं जगाम ह ॥ ३७
ततो मुहूर्तादुत्थाय प्रत्याश्वस्य च राघवः ।
हनूमन्तमुवाचेदं भरतः प्रियवादिनम् ॥ ३८
अशोकजैः प्रीतिमयैः कपिमालिङ्ग्य संभ्रमात् ।
सिषेच भरतः श्रीमान्विपुलैरश्रुबिन्दुभिः ॥ ३९
देवो वा मानुषो वा त्वमनुक्रोशादिहागतः ।
प्रियाख्यानस्य ते सौम्य ददामि ब्रुवतः प्रियम् ॥ ४०

as in text (for रामेण सह). $M_1$ राघवेण समेष्यसि. ❀ Cv: रामेण सह संगत इति वर्तमानसामीप्ये भविष्यति भूतनिर्देशः. ❀

35 $^{b}$) $B_1$ प्रतिपद्य; $D_1$ प्रतिनंद्य (for प्रतिलभ्य). $M_1$ प्राप्य चानुत्तमं यशः. —$V_3$ damaged for $35^{cd}$. —$^{c}$) $Ś_1$ $Ñ$ $V_2$ $B_{2-4}$ $D_{2-4.8.12.13}$ उपायातः; $Ś_2$ $V_1$ $B_1$ $D_6$ $T_{2.3}$ उपयातः; $D_1$ उपायतः; $G_2$ ***ति (lacuna) (for उपयाति). $B_1$ समिद्धार्थः; $D_1$ $G_3$ समृद्धार्थं; $D_3$ स सिद्धार्थः; Cg as in text (for समृद्धार्थः). —$^{d}$) $D_8$ -मित्रो (for मित्रैर्). $B_1$ $D_{1-4.9.13}$ महाबलः (for °बलैः).

36 $M_1$ om. $36^{ab}$. —$^{a}$) $D_{12}$ लक्ष्मणस्तु; $M_2$ लक्ष्मणेन (for लक्ष्मणश्च). —$^{b}$) $M_2$ मैथिल्या (for वैदेही). Ś $D_{8.12}$ तपस्विनी; $M_2$ महायशाः (for यशस्विनी). —$^{c}$) Ś $D_{1-4.6-9.12}$ $M_1$ समेता; Cg as in text (for समग्रा). —$^{d}$) $D_{11}$ lacuna for महेन्द्रेण. Ś $Ñ_1$ $V_1$ $B_1$ $D_{1-3.6.8.9}$ $T_{2.3}$ $M_{2.3}$ यथा शची (by transp.). —After 36, Ś Ñ V $B_{1.2.4}$ $D_{1-4.8.9.12.13}$ $M_2$ ($D_{1-3.9}$ $M_2$ l. 2–3 only) ins.; $B_3$ ins. after $36^{ab}$:

3475* नन्दिष्यसि महाबाहो सुवृष्टेनेव कर्षकः ।
क्षिप्रमुत्तिष्ठ भद्रं ते पश्य भ्रातरमागतम् ।
विजित्य लोकांस्त्रीन्विष्णुः सहस्राक्षमिवागतम् ।
एतत्तु दृश्यते दूराद्धर्मयुक्तं मनोजवम् ।
तरुणादित्यसंकाशं विमानं रामवाहनम् । [5]

[(l. 1) Ś $D_{8.12}$ नंदिष्यसे; $B_4$ नंदिष्यति; $D_{13}$ समाश्वस (for नन्दिष्यसि). —After the prior half of l. 1, $B_3$ ins.:

3475(A)* नन्दिग्रामे वसंश्चिरम् ।
रामदर्शनमात्रेण.

Ś $Ñ_1$ $D_{8.12}$ सुवर्षेण (for सुवृष्टेन). Ś $D_8$ कार्षिकः; $D_{12}$ कर्षिणः (for कर्षकः). —(l. 2) $V_3$ damaged from प्र up to र. $D_{1-4.9}$ स त्वम् (for क्षिप्रम्). —(l. 3) $D_{1-4.9}$ निर्जित्य (for विजित्य). $B_3$ $D_{1.2.9.13}$ विष्णुं सहस्राक्ष (for विष्णुः सहस्राक्षम्). $D_8$ इवाशनं (sic). —(l. 4) $D_{13}$ दूरं (for दूराद्). Ś धर्म्य-; $Ñ$ $V_{2.3}$ $B_{1-3}$ हंस-; $B_4$ त्वं सं- (sic); $D_1$ तेन (for धर्म-). $V_1$ युद्धं सक्तं (for धर्मयुक्तं).]

—Thereafter $D_{13}$ cont.:

3476* उपयातं महावीरं राक्षसैश्च समन्वितम् ।

—Then $D_{13}$ ins. an addl. colophon [लंकाकांडे, भरतक्रियाख्यापनं].

37 $^{a}$) $V_3$ damaged from मु up to कैक in $^{b}$. $D_6$ $T_{2.3}$ $G_1$ $M_5$ महातेजा (for हनुमता). $B_2$ एतच्छ्रुत्वा तु वचनं. —$^{b}$) $D_{13}$ कैकेयीनंदवर्धनः; $M_{1.3}$ भरतो भ्रातृवत्सलः. —$^{c}$) Ś Ñ V B $D_{8.12.13}$ $M_2$ उत्पपात तदा ($D_{13}$ $M_2$ °तो) (for पपात सहसा). $D_{1-4.9}$ उत्पपातासनात्तूर्णं; $G_1$ हृष्टः पपात सहसा. —$^{d}$) Ś Ñ $V_1$ B $D_{2.3.5.8.12}$ $G_3$ च; $D_1$ सः (for ह). $D_{7.10.11}$ $G_2$ $M_1$ उपागमत्; Cg as in text (for जगाम ह). $D_{13}$ सहसा मोहमभ्यगात्.

38 $^{a}$) $T_2$ तदा (for ततो). —$^{b}$) $D_{1.3.6}$ $T_{2.3}$ प्रत्याश्वास्य; $D_9$ प्रत्याश्वस्तश्; $D_{13}$ प्रत्यास्वस्थः(sic) (for प्रत्याश्वस्य). —$D_3$ reads from च up to $39^{c}$ in marg. $D_{13}$ स (for च). Ś Ñ V B $D_{4.8.12}$ भरतो भ्रातृवत्सलः. —$^{c}$) Ś Ñ V $B_{1.3.4}$ $D_{2.8.12.13}$ प्रत्युवाच हनूमंतं; $B_2$ $D_{1.3.4.9}$ उवाच तं($D_9$ च) हनूमंतं. —$^{d}$) $V_1$ प्रहृष्टः; $B_3$ मारुतिं (for भरतः). $D_1$ प्रियदर्शनं; $G_1$ $M_5$ कैकयीसुतः (for प्रियवादिनम्).

39 $D_3$ reads $39^{abc}$ in marg. (cf. v.l. 38). —$^{a}$) $B_1$ प्रेम-; $B_4$ प्रीत- (for प्रीति-). $D_{1-4}$ -करैः; $D_7$ -गंधैः (for -मयैः). $D_9$ शोकतप्तैः शुभैर्गात्रैस्; $D_{13}$ सुप्रीतः प्रीतमनसं. —$^{b}$) $D_6$ $T_{2.3}$ प्रियम्; Cg as in text (for कपिम्). $D_6$ $T_{2.3}$ मारुतिं (for संभ्रमात्). Ś Ñ V B $D_{8.12}$ प्रिय (Ś $B_4$ $D_{8.12}$ प्रीति; $B_3$ चिर)मावे($Ñ_2$ $V_1$ $B_1$ °सा)द्य संभ्रमैः; $D_{1-4}$ प्रियं प्राप्य ससंभ्रमं; $D_9$ तमालिंग्य सुसंभ्रमात्; G (ed.) प्रियावेदनसंभवैः. —$^{c}$) Ś $D_{8.12}$ सखेव; $B_1$ $D_4$ सिषिचे; $D_9$ निषिंचत्; $D_{13}$ सिषेवे (for सिषेच). $G_2$ परमः; Cg as in text (for भरतः). Ś Ñ V B $D_{1-4.8.9.13}$ कपि($B_1$ रघु)मुख्यस्य. —$^{d}$) Ś Ñ V B $D_{8.12}$ गात्रमेव; $D_{1-4.9}$ गात्रं चैव; $D_7$ विरलैर्; $G_2$ $M_{1.2}$ विमलैर्; Cg as in text (for विपुलैर्). $D_5$ साश्रु-; $T_1$ $G_{1.3}$ $M_{1.3.5}$ आनन्द- (for अश्रु-).

40 $M_1$ om. $40^{ab}$. —$^{a}$) $D_{12}$ तु; $D_{13}$ [अ]पि (for त्वम्). $D_{1-3.9}$ यदि वा यक्षो (for मानुषो वा त्वम्). —$^{b}$) $D_{1-3.9}$ ह्यनु- (for अनु-). $D_{13}$ त्वमनुक्रोशमागतः. —$^{c}$) $V_3$ किं चाहं त्वस्य; $D_{1-4.9.13}$ प्रियाख्यानाच्च($D_{13}$ °नं च) (for प्रियाख्यानस्य). $D_{1-4.9.13}$ वीर (for सौम्य). —$^{d}$) $B_1$ $M_2$ ददानि; $D_2$ वदामि; Cm.g.t as in text (for

गवां शतसहस्रं च ग्रामाणां च शतं परम् ।
सकुण्डलाः शुभाचारा भार्याः कन्याश्च षोडश ॥ ४१
हेमवर्णाः सुनासोरूः शशिसौम्याननाः स्त्रियः ।
सर्वाभरणसम्पन्नाः सम्पन्नाः कुलजातिभिः ॥ ४२

निशम्य रामागमनं नृपात्मजः
कपिप्रवीरस्य तदाद्भुतोपमम् ।
प्रहर्षितो रामदिदृक्षयाभव-
त्पुनश्च हर्षादिदमब्रवीद्वचः ॥ ४३

G. 6. 109. 0
B. 6. 125. 46
L. 6. 107. 105

इति श्रीरामायणे युद्धकाण्डे त्रयोदशाधिकशततमः सर्गः ॥ ११३ ॥

---

ददामि ). D13 स्वयं ( for प्रियम् ). S D1–4.8.9.12 वद किं (D4 °दत: ) प्रियं; B1 ब्रुवते वरं; B4 प्रियमुत्तमं ( for ब्रुवतः प्रियम् ). G1 किं ददामि तव प्रियं.

41 a) Ś Ñ V B D4.8.12 M1 -सहस्राणि; D3 -साहस्रं च ( for -सहस्रं च ). —b) Ñ1 ते ( for च ). Ś Ñ V B D4.8.12 शतानि च ( Ś वै ); D2.3.13 शतं वरं; M2 परः शतं; G ( ed.) शतानि ते ( for शतं परम् ). —c) B1 सत्कुलाः सु-; D1–4 सकुटुंबाः; G2 M3 सुकुंडलाः ( for सकुण्डलाः ). D1 सदाचाराः; D3 समाचाराः ( for शुभाचारा ). D13 सुप्रभाः कुंडलाचारा. —d) D1–3.9 पत्नीश्; D4 पत्न्यश्; M1 वराः; Cg as in text ( for भार्याः ). Ś D8 धन्याश्; D1–4 चैव ( for कन्याश् ). D12 कन्या भार्याश् ( by transp. ). V3 D4.7.10.11 तु ( for च ). —After 41, D1–3.9 ins. l. 2 only of 3477*.

42 D1–3 om. 42. M1 om. 42ab. —a) Ś Ñ V B D4.8.12 दासीशतपरीवाराः. —b) M2 श्रिया ( for स्त्रियः ). B1 शशिसौम्यनिभाननाः. —c) Ś Ñ V B D4.8.12.13 सर्वलक्षण-; D6 T3 वराभरण- ( for सर्वाभरण- ). B1 -संपूर्णाः. —d) D9 -शालिनीः ( for -जातिभिः ). D13 कुलजातिसमन्विताः. —After 42, Ś Ñ V B D4( l. 2 only ).8.12.13 ins.; while D1–3( D1–3 owing to om. ).9 ins. l. 2 only after 41 :

3477* सुवर्णस्य सहस्रे द्वे दासीनां च शतं तथा ।
हिरण्यकोशरत्नानि वस्त्राणि विविधानि च ।
यच्चान्यं मार्गसे सौम्य तच्च सर्वं ददामि ते ।

[ ( l. 1 ) D13 शतं धेनुर् ( for सहस्रे द्वे ). B2 शतानि च ( for शतं तथा ). D13 वर्णानां च शतं शतं ( for the post. half ). —Ñ V B D13 om. l. 2. —( l. 2 ) Ś D2.4.8.12 -कोट्यो; D1 -कोटी- ( for -कोश- ). D4 transp. रत्नानि and वस्त्राणि. —( l. 3 ) Ś D8.12 वा ( for first च ). Ś V3 D8.12 मन्यसे ( for मार्गसे ). B1 वीर ( for सौम्य ). Ñ2 B4 सौम्य ( for सर्वं ). Ś2 ददानि. ] ;

while D9 ins. after 42 :

3478* एवं त्वं *दृशः कोऽपि हरन्निरिवरं निशि ।
जगाद निखिलं वृत्तं मया स्वप्नवदूहितम् ।

43 D13 om. 43. —b) D5–7.10 कवि-; T2 कपेः; Cg as in text ( for कपि- ). G2.3 M2.3.5 Cg तद् ( for तदा ). —c) G3 -दिदृक्षयागात्; Cg as in text ( for -दिदृक्षयाभवत् ). —d) G1 च सः ( for वचः ). —For 43, Ś Ñ V B D1–4.8.12 subst. :

3479* निशम्य काम्यं वचनं हनूमतः
सुशोभनं शोकविनाशनं च ।
उवाच हृष्टो भरतः पृथुश्री-
र्द्रक्ष्ये चिरस्यागतमायतेक्षणम् ।

[ ( l. 1 ) Ś D8.12 रम्यं ( for काम्यं ). D4 स तस्मात्कपेस् ( for हनूमतः ). —( l. 2 ) Ñ1 B4 स ( for सु- ). D1–4 तदा सशोकापनुदं सुखावहं. —( l. 3 ) D1.2.4 तुष्टो ( for हृष्टो ). D1–4 कपिं प्रियं ( for पृथुश्रीर् ). —( l. 4 ) B1 द्रक्ष्ये चिराभ्यागतम्; D1–4 चिरस्य द्रक्ष्याम्यहम् ( for द्रक्ष्ये चिरस्यागतम् ). Ś D4.8.12 आयताक्षं ( for आयतेक्षणम् ). ]

Colophon : D13 om. ( cont. the Sarga ). Ñ1 reads colophon in marg. —*Kāṇḍa name* : Ñ V1 B D4 लंकाकांडे. —After Kāṇḍa name, V1 D1.2 ins. आभ्युदयिके. —*Sarga name* : Ś Ñ1 B1.2.4 D8.12 भरतविशोकी( B1.2.4 °क )करणं; V1 भरतविशोकं करणं; V2.3 भरतशोककर्षणं( V2 °करणं ); B3 भरतविशोकः ; D1 भरतानंदनः; D2 भरतहनूमंतसमागमः; D3 भरतानंदः; D4 भरतानंदजः; M2 भरतप्रियाख्यानं. —*Sarga no.* ( figures, words or both ): Ś1 Ñ1 V2.3 B2.4 D2.4.8.12 om.; Ś2 V1 D1 108 ; Ñ2 114 ; B1 85 ; B3 105 ; D3 110 ; D5–7 G M3.5 128 ; D9 111 ; D10.11 127; T1 damaged ; T2 136 ; T3 139; M1 129 ; M2 130. —After colophon, D3 concludes with रामः while G M1.2.5 conclude with श्रीरामाय नमः.

# ११४

G. 6. 110. 1
B. 6. 126. 1
L. 6. 110. 1

बहूनि नाम वर्षाणि गतस्य सुमहद्वनम् ।
शृणोम्यहं प्रीतिकरं मम नाथस्य कीर्तनम् ॥ १
कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ २
राघवस्य हरीणां च कथमासीत्समागमः ।
कस्मिन्देशे किमाश्रित्य तत्त्वमाख्याहि पृच्छतः ॥ ३

## 114

D13 continues the previous Sarga. D12 begins with ॐ.

**1** $^{b}$) D6 T2.3 च; Ck.t as in text (for सु-). —For $1^{ab}$, Ś Ñ V B D8.12.13 subst.:

3480* बहूनामपि वर्षाणामिदं श्रुतिरसायनम् ।

[B4 इव; D13 एव (for अपि). B1 सौम्य मयाश्रुतं (for श्रुतिरसायनम्). ]

—$^{c}$) V3 damaged for शृणोम्य. —T1 damaged from म्य up to first म in $1^{d}$. T2.3 प्रियतरं; Cm as in text (for प्रीतिकरं). —After $1^{c}$, Ñ2 V B ins.:

3481* यन्नाथस्याद्य दर्शनम् ।
अद्य श्रुतिप्रीतिकरं.

[(l. 1) V2 मम नाथस्र. —B2 om. from l. 2 up to $1^{d}$. —(l. 2) B3 मेद्य (for अद्य). ]

—$^{d}$) T2 damaged for मम नाथ. B3 D13 दर्शनं; M2 कीर्तितं; Cm.k.t as in text (for कीर्तनम्). —For 1, D1–4.9 subst.:

3482* यो बहूनि हि वर्षाणि सुखं हित्वा गतो वनम् ।
तस्याद्य प्रीतिजननं श्रुतं रामस्य कीर्तनम् ।

[(l. 1) D2 तु; D4.9 च (for हि). D9 [अ]द्य वर्तते (for गतो वनम्). —(l. 2) D4 श्रुत्वा चास्य तु कीर्तितं (for the post. half). ]

**2** = 5.32.6. —$^{a}$) Ñ V B D4.13 पौराणी (B3 °णां) (for कल्याणी). Ś V1 D2.6.8.12.13 तव; Ñ V2.3 B1.2.4 चैव; B3 चिर- (for बत). —$^{b}$) Ś B3 D8.12 लौकिका (for लौकिकी). D5.10.11 T1.3 G M2.5 Ct मां; Cm.k as in text (for मे). —$^{c}$) V2 B4 एवं (for एति). D4.13 आनंदोभ्येति जीवंतं. —V2 lacuna for $2^{d}$. —$^{d}$) Ś D8.12 नव- (for नरं). B4 -शतानि च (for -शतादपि). —After 2, B3 (marg.) ins.:

3483* सर्वावस्थागतस्यापि मरणाज्जीवितं सुखम् ।

—Thereafter B3 cont.; while Ś Ñ V1.2 B1.2.4 D1–4.8.9.12 ins. after 2:

3484* एवमुक्त्वा महाबाहुर्भरतः सुमहायशाः ।
अपृच्छत्तं हनूमन्तं महात्मानं प्लवंगमम् ।

[(l. 1) B4 D1–4.9 महातेजा (for °बाहुर्). Ś Ñ2 D8.12 च; V1.2 B4 D1–3.9 स (for सु-). —(l. 2) Ś D1–4.8.9.12 पप्रच्छ तं; B3 आपृच्छत. Ñ1 transp. हनुमन्तं and महात्मानं. D1–3.9 महात्मा नियतः स्वयं (D9 °तं कपिं) (for the post. half). ]

—After 2, G (ed.) ins.:

3485* एवमुक्त्वाथ भरतो हनुमन्तं महाबलम् ।
अपृच्छद्रामवृत्तान्तं समाचक्ष्व प्लवंगम ।

—Thereafter G (ed.) cont. 3486*.

**3** G (ed.) om. 3. V3 om. $3^{ab}$. —$^{a}$) D1–3.9 रामस्य च (for राघवस्य). —$^{b}$) Ś Ñ V1.2 B D4.8.12.13 वृत्तः (for आसीत्). —V3 damaged from स्मि in $3^{c}$ up to हि in $3^{d}$. —$^{c}$) G2 तस्मिन्. D4 त्वेकः (for देशे). Ś D8 किमावृत्य; Ñ1 V2 B D4.13 स (V2 B1.3.4 क) साश्रित्य; D6 T2.3 कृतं सख्यं; M1 समागत्य; Cg.k.t as in text (for किमाश्रित्य). —T1 damaged from हि in $3^{d}$ up to स्यां in $4^{b}$. —$^{d}$) Ś Ñ V1.2 B D1–4.8.9.12.13 तन्ममाचक्ष्व (for तत्त्वमाख्याहि). B2 पूजित; D1–3.9 तत्त्वतः; D13 शृण्वतः (for पृच्छतः). T2 तत्त्वमाख्यातुमिच्छतः. ❀ Cr.m: 'राघवस्य हरीणां च कथमासीत्समागमः' इत्यनेन देवो वा मानुषो वेति प्रश्नस्यानन्तरं वानरेन्द्रस्य सुग्रीवस्य सचिवोऽहमिति प्रतिवचनं हनुमता दत्तमित्यवगन्तव्यम्. ❀ —After 3, Ś Ñ V B D1–4.8.9.12 M2 ins.; while G (ed.) cont. after 3485* (owing to om.):

3486* यद्यपि श्रुतवानस्मि विग्रहं रावणं प्रति ।
चारेण सुप्रयुक्तेन कृतोद्योगो रणं प्रति ।
त्वयि मे प्रत्ययस्तात यस्त्वं रामादुपागतः ।

[(l. 1) Ś D2.3.8.9.12 यच्च सं-; D1 तच्च सं-; M2 नाद्यैव (for यद्यपि). Ś2 निग्रहं (for विग्रहं). —D9.12 om. (hapl.) l. 2. —(l. 2) D1–4 संप्रयुक्तेन; D8 सुप्रयत्नेन (for सुप्रयुक्तेन). B3 (marg. also; orig. as above).4 वानरेण प्रयुक्तेन (for the prior half). Ś Ñ2 B4 D1.8 कृतोद्योगं. B3 (orig.; marg. also as above) रिपुं; D2 [ऽ]स्मि तं (for रणं). B1 संयुगं रावणं प्रति (for the post. half). —V3 om. l. 3. —(l. 3) D9 समयः (for प्रत्ययस्). B1 तावद्; D1.2.4.9 सौम्य; D3 सौम्ये (for तात). —After the prior half, D9 wrongly reads from श्रित्य in $3^{c}$ up to $3^{d}$. Ś D8.12 कथं; Ñ3 illeg.; B4 त्वं च; D1 यत्त्वं (for यस्त्वं). ]

—Thereafter Ś D1–3.8.12 M2 cont.:

3487* कथं कृतार्थः स श्रीमान्राघवः पुनरागतः ।

स पृष्टो राजपुत्रेण बृस्यां समुपवेशितः ।
आचचक्षे ततः सर्वं रामस्य चरितं वने ॥ ४
यथा प्रव्रजितो रामो मातुर्दत्ते वरे तव ।
यथा च पुत्रशोकेन राजा दशरथो मृतः ॥ ५
यथा दूतैस्त्वमानीतस्तूर्णं राजगृहात्प्रभो ।
त्वयायोध्यां प्रविष्टेन यथा राज्यं न चेप्सितम् ॥ ६
चित्रकूटं गिरिं गत्वा राज्येनामित्रकर्शनः ।
निमन्त्रितस्त्वया भ्राता धर्ममाचरता सताम् ॥ ७
स्थितेन राज्ञो वचने यथा राज्यं विसर्जितम् ।
आर्यस्य पादुके गृह्य यथासि पुनरागतः ॥ ८
सर्वमेतन्महाबाहो यथावद्विदितं तव ।
त्वयि प्रतिप्रयाते तु यद्वृत्तं तन्निबोध मे ॥ ९
अपयाते त्वयि तदा समुद्भ्रान्तमृगद्विजम् ।
प्रविवेशाथ विजनं सुमहद्दण्डकावनम् ॥ १०

G. 6. 110. 12
B. 6. 126. 11
L. 6. 107. 14

[ D8 सुश्रीमान्; M2 शीघ्रं च (for स श्रीमान्). M2 पुरुषर्षभः (for पुनरागतः). ]

4 T1 damaged up to स्यां in $4^{b}$ (cf. v.l. 3). D4 om. $4^{ab}$. —$^{a}$) D9 आज्ञप्तो (for स पृष्टो). B3 एवमुक्तः स हनुमान्. —$^{b}$) B1 तुष्टया; B3 D6 बृष्यां; B4 बृष्यां; D7.12 G1 वृस्यां; D13 दिष्ट्या; T2.3 भूम्यां; Cm.g.t as in text (for बृस्यां). B1 D13 -सेवितः (for -वेशितः). Ñ1 बृक्षां सपपरोशितः (sic); D1.3.9 कपिर्वृश्यां (D9 °ष्यां)-समास्थि(D9 °श्रि)तः; D2 विसृज्य कपिकुंजरः. —D13 om. $4^{c}$ – 5. V3 damaged from $4^{c}$ up to म in महत् (see var.) in $4^{d}$. M2 reads $4^{cd}$ twice (var.). —$^{c}$) Ś Ñ V1.2 B2–4 D8.12 तदा सर्वं; D9 च तत्सर्वं; M2 (second time) तदा व्यग्रं. —$^{d}$) Ś Ñ V B1.2.4 D4.8.12 म(V3*)हत् (for वने). —After the first occurrence of $4^{cd}$, M2 ins.:

3488* दण्डकानां प्रवेशादि आश्रमाणां प्रकीर्तयत्।

[ Note hiatus between the two halves. ]

5 D13 om. 5 (cf. v.l. 4). D9 om. (hapl.) $5^{ab}$. D6 transp. 5 and 6. —$^{a}$) D1 अथ; D5 G3 यदा; Cg.k.t as in text (for यथा). Ś Ñ2 V B3.4 D10.11 G M1–3 Ck.t प्रव्राजितो; M5 प्रवासितो (for प्रव्रजितो). T1 ** ***तो रामो (damaged). —$^{b}$) B4 M3 दत्तो वरस्; D5 T1 M5 दत्तवरस्; D10.11 G2 Ck.t दत्तौ वरौ (for दत्ते वरे). D5 तदा (for तव). D1–4 M1 मात्रे द(M1 °तुर्द)त्तौ वरौ च तौ (D3.4 M1 ते). —$^{c}$) G3 यदा (for यथा). D8 om. च (subm.). —$^{d}$) Ś B4 D8 हतः; D9 G3 नृपः; G1 गतः (for मृतः).

6 D6 transp. 5 and 6. —$^{a}$) Ś2 moth-eaten; G3 [अ]मृतैस् (for दूतैस्). B2 समानीतस्. —$^{b}$) V2 अपि; D3.12 विभो (for प्रभो). —V3 mostly damaged for $6^{cd}$. —$^{c}$) D1–4.9 अयोध्यायां (for त्वयायोध्यां). —$^{d}$) Ñ V2 B1.3.4 D1.2 च न (by transp.); B2 तु न (for न च). Ś D8 च नो श्रितं; D3 च नेच्छितं; D4 च तो हितं (sic); D11 न चेक्षितं; D12 च नाश्रितं (for न चेप्सितम्). D13 यथा रामो वनं गतः.

7 D9 om. 7–$8^{b}$. —$^{a}$) B1–3 D1.2.4.5.7.8.10.11.13 G1.2 M1.5 चित्रकूट-. D3 ज्ञात्वा (for गत्वा). —$^{b}$) D13 बाह्येन (for राज्येन). Ś V2 B1 D4.8.13 -कर्षणः; Ñ V1.3 B2.4 D2.6 -कर्षण; D1 G1 M2.3.5 Cg -कर्शन; D12 -कर्षिणा; G2 -कर्शिना (for -कर्शनः). T2.3 राज्येनारिनिकर्शन; M1 यथा राज्येन राघव. —V3 om. $7^{c}$–$8^{b}$. —$^{d}$) Ś D6.8.12 T2.3 सता; B2 D2.4 यथा; D13 सदा (for सताम्). D1 धर्माचाररतो यथा; D3 धर्म्यमाचरितं त्वया.

8 V3 D9 om. $8^{ab}$ (cf. v.l. 7). —$^{a}$) Ś Ñ V1.2 B1–3 D8.12.13 वचने राज्ञो (by transp.); B4 वचनं राज्ञो; G (ed.) च वने राज्ञा (for राज्ञो वचने). D4 तस्थुषा राजवचने. —$^{b}$) D1.3 च नेप्सि(D3 °च्छि)तं; D2.4 न चेप्सितं; D6 T2.3 विवर्जितं; Ck.t as in text (for विसर्जितम्). Ś D8.12 न च ते वचनं कृतं; Ñ1 V1.2 B3 तेन ते न वचः कृतं; Ñ2 B1.2.4 D13 न ते(B1 च) तेन वचः कृतं. —$^{c}$) Ś Ñ V B D1–4.8.9.12 तत्पादुके त्वमादा(Ñ1 °ज्ञा)य; D13 आर्यपादौ त्वमादाय. —$^{d}$) Ś Ñ V B D1–4.8.9.12 च; D13 वै (for [अ]सि). B2 पुरम् (for पुनर्).

9 $^{a}$) D9 तत्त्वम् (for सर्वम्). —$^{b}$) D1 सर्वं च (for यथावद्). B1 मम (for तव). —$^{c}$) V3 damaged from प्रति up to तन्नि in $9^{d}$. D13 -निवृत्ते (for -प्रयाते). D1–3 त्वयि प्रयाते तु तदा; M2 निवृत्ते त्वयि यद्वृत्तं. —$^{d}$) Ś D8 यत्कृतं तन्; B1 यद्वृत्तांतं; D12 यद्वृत्तंस्तन्; M2 तत्तत्त्वेन (for यद्वृत्तं तन्). V3 मां (for मे). D4 निवेद मे (sic); G1 वदामि ते (for निबोध मे).

10 $^{a}$) B1 संप्रयाते. —$^{b}$) D1–4.9 समुद्विग्न-. D6 T2.3 -द्विपं (for -द्विजम्). Ś Ñ V B D8.12 राघवः सहलक्ष्मणः; D13 प्रस्थितः स वने प्रभुः. —After $10^{ab}$, Ś D1–12 S ins.:

3489* परिद्यूनमिवात्यर्थं तद्वनं समपद्यत ।
तद्धस्तिमृदितं घोरं सिंहव्याघ्रमृगायुतम् ।

[ (l. 1) D4 परित्यज्यैनम् (hypm.); D6 परिदूनम्; D9 °शून्यम्; M2 °न्यूनम्; Cr.m.g.k.t as above (for परिद्यूनम्). Ś D1–4.12 अरण्यं च(Ś तु; D12 तद्); D8 अरण्यं तत्तु (hypm.) (for इवात्यर्थं). D3 तत्सर्वं; D8 तद्वने; D13 यद्वनं (for तद्वनं). D4 प्रत्यपद्यत; D9 समवर्तत. —(l. 2) D1–4 ते हस्ति-; D9 ततस्ते (for तद्धस्ति-). Ś D1–4.8.9.12 -चरितं वीर (for -मृदितं घोरं). D7.10.11 G2 -[आ]कुलं (for -[आ]युतम्).]

G. 6. 110. 13
B. 6. 126. 12
L. 6. 107. 15

तेषां पुरस्ताद्बलवान्गच्छतां गहने वने ।
विनदन्सुमहानादं विराधः प्रत्यदृश्यत ॥ ११
तमुत्क्षिप्य महानादमूर्ध्वबाहुमधोमुखम् ।
निखाते प्रक्षिपन्ति स्म नदन्तमिव कुञ्जरम् ॥ १२
तत्कृत्वा दुष्करं कर्म भ्रातरौ रामलक्ष्मणौ ।
सायाह्ने शरभङ्गस्य रम्यमाश्रममीयतुः ॥ १३
शरभङ्गे दिवं प्राप्ते रामः सत्यपराक्रमः ।
अभिवाद्य मुनीन्सर्वाञ्जनस्थानमुपागमत् ॥ १४
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ।
हतानि वसता तत्र राघवेण महात्मना ॥ १५

—$D_{13}$ om. $10^{c}$–11. —$^{c}$) $M_2$ स वनं (for विजनं). —$^{d}$) $D_{5.10.11}$ स (for सु-). —For $10^{cd}$, Ś Ñ V B $D_{1-4.8.9.12}$ subst.:

3490* निर्जनं व्यालसम्पन्नं प्राविशद्गहनं वनम् ।

[$D_8$ निर्जितं. $B_4$ सत्त्व- (for व्याल-). $D_{1-4.9}$ -संकीर्णं (for -सम्पन्नं). $D_4$ विवेश (for प्राविशद्). Ñ V B दंडकं (for गहनं).]

**11** $D_{13}$ om. 11 (cf. v.l. 10). $V_3$ om. $11^{ab}$. —$^{a}$) $M_2$ बलिनां (for बलवान्). —$^{b}$) $D_6$ $T_{2.3}$ $G_2$ गहनं वनं. —$^{c}$) $D_5$ $G_{1.2}$ $M_3$ निनदन्; $G_3$ ननर्द (for विनदन्). Ś Ñ V $B_{1.3.4}$ $D_{8.12}$ राक्षसः सु($V_2$ °सैस्तु; $B_1$ °सः स; $D_8$ °सस्तु)महावीर्यो; $B_2$ $D_{1-4.9}$ नर्दमानो महानादान्($B_2$ °दं; $D_{4.9}$ °दैर्). —$D_4$ om. $11^{d}$–$12^{c}$. —$^{d}$) $B_{1.4}$ समदृश्यत; $D_{1.9}$ सम($D_9$ प्रत्य)पद्यत.

**12** $D_4$ om. $12^{abc}$ (cf. v.l. 11). —$^{ab}$) $D_6$ समुत्क्षिप्य. $T_2$ महाबाहुम्; $G_2$ महात्मानम् (for महानादम्). $M_2$ -पादम् (for -बाहुम्). $D_{13}$ विराधमवधीद्भीमं राक्षसं पिशिताशनं. —For $12^{ab}$, Ś Ñ V B $D_{1-3.8.9.12}$ subst.:

3491* तं निहत्य महाकायमूर्ध्वपादमवाङ्मुखम् ।

[$D_9$ निरीक्ष्य (for निहत्य). Ś $D_{8.12}$ -केशम्; $B_3$ -कायम्; L [ed.]-पाशम् (sic) (for -पादम्). $Ñ_1$ $V_2$ $B_{1.2}$ अधोमुखं; $B_4$ अवस्थितं (for अवाङ्मुखम्). $D_{1-3.9}$ ऊर्ध्वकेशं महाबलं (for the post. half).]

—$^{c}$) $D_{5.7}$ $T_1$ $G_3$ $M_1$ क्षिपतस्तौ (for प्रक्षिपन्ति). Ś Ñ V B $D_{8.12.13}$ अवटे प्राक्षिपद्रामो($D_{13}$ °पच्चैव); $D_{1-3}$ संप्राक्षिपेतामवटे; $D_6$ $T_{2.3}$ खाते प्राक्षिपतां तस्मिन्($T_3$ तं स्म); $D_9$ राघवः पातयामास. ❀ Cg: प्रक्षिपन्ति स्मेति बहुवचनेन सीतयाऽपि तत्र किंचित्साहाय्यं कृतमिति गम्यते ।; Ct: प्रक्षिपन्ति स्म प्रक्षिप्तवन्तावित्यर्थः. ❀ —$^{d}$) $D_{1-3}$ $G_3$ नर्दंतम्. $D_6$ अपि (sic) (for इव).

**13** $^{a}$) Ś $D_8$ तत्कृतं; $D_6$ तद्दृष्ट्वा (for तत्कृत्वा). $V_{1.3}$ $D_3$ दुःकरं; $D_8$ दुष्कृतं; $D_{13}$ दारुणं. —$^{b}$) $D_{12}$ भ्रातारौ (for भ्रातरौ). —After $13^{ab}$, $D_{12}$ reads 3498*. —$D_{12}$ om. (hapl.) from $13^{c}$ up to l. 1 of 3498*. —$^{d}$) $D_{1-3.9}$ आगतौ (for ईयतुः). Ś Ñ V B $D_8$ $M_2$ संप्राप्तौ ($M_2$ प्रयातौ) रम्यमाश्रमं; $D_4$ रम्याश्रममुपागतौ; $D_{13}$ रम्यं जग्मतुराश्रमं.

**14** $D_{12}$ om. 14 (cf. v.l. 13). —$^{a}$) Ś $V_{2.3}$ $B_3$ $D_{1-3.8.9}$ याते (for प्राप्ते). —$^{b}$) $B_1$ सत्यपरायणः. —$V_3$ om. $14^{cd}$. —$^{c}$) Ś Ñ $V_{1.2}$ $B_{1.2.4}$ $D_8$ तांस्तापसानर्च($D_8$ °न्वंच [sic])यित्वा; $B_3$ तापसानर्चयित्वा च; $D_{1-4.9}$ तापसांस्तु पु($D_4$ °स्तान्पु)रस्कृत्य; $D_{13}$ प्रणम्य तापसान्सर्वान्. —$^{d}$) Ś $B_1$ $D_{1.2.4.8.13}$ उपागतः($D_{2.4}$ °तं [sic]; $D_{13}$ °तान्). ❀ Cr: अभिवाद्य मुनीन् सर्वान् जनस्थानमुपागमदित्यनन्तरं "पश्चात् शूर्पणखा चैव रामपार्श्वमुपागता । ततो रामेण संदिष्टो लक्ष्मणः सहसोत्थितः । प्रगृह्य खड्गं चिच्छेद कर्णनासे" त्यनन्तरं चतुर्दश सहस्राणीत्येवं पाठक्रमः अर्थक्रमादवगन्तव्यम् । अन्यथा पाठे तु अविवक्षितक्रम इति द्रष्टव्यम्. ❀ —For $14^{cd}$, $M_2$ subst.:

3492* पञ्चवटीति विख्यातं ततः प्राप्तो महायशाः ।
अभिवाद्य मुनीन्सर्वान्रामः सत्यपराक्रमः ।

—Then $M_2$ cont.:

3493* वसतस्तु जनस्थाने तदा रामस्य धीमतः ।
रावणस्य स्वसा क्रूरा दृश्यन्ती ह्येतमागतम् ।

—Thereafter $M_2$ reads 3500* and 3501*.

—After 14, Ś Ñ $V_{1.2}$ B $D_{4.8}$ ins.; $V_3$ ins. after $14^{ab}$ (owing to om.):

3494* अगस्त्यमभिवाद्याथ परमर्षिमरिंदम ।
ततः पञ्चवटीं यातौ सीतया सह राघवौ ।

[(l. 1) Ś Ñ $V_1$ $B_{1.3}$ $D_4$ अरिंदमः($B_3$ °मौ) (for अरिंदम). $B_2$ महर्षिमरिमर्दनः (for the post. half). —(l. 2) $B_2$ प्राप्तौ; L (ed.) यातो (for यातौ). L (ed.) राघवः (for राघवौ).]

—Thereafter all the above MSS. read 3498*.

—After 14, $D_{2.9}$ read 3499*; while $D_7$ $T_{2.3}$ $M_3$ read 16–$17^{b}$.

**15** $^{b}$) Ś Ñ V B $D_{1-4.6-12}$ $T_{2.3}$ $G_2$ $M_{1.2}$ जनस्थाननिवासिनां; $D_5$ रक्षांसि भीमकर्मणा; $D_{13}$ जनस्थाने च रक्षसां. —After $15^{ab}$, $M_2$ ins.:

3495* रक्षसामवधीद्रामः शूरं च खरमग्रहम् ।

—$^{c}$) $D_{12}$ हत्वापि. Ś Ñ V B $D_{6.8.12}$ $T_{2.3}$ $M_1$ रक्षसां (for वसता). $D_4$ हताश्च राक्षसास्तत्र; $D_{13}$ तेन ते निहताः सर्वे; $M_2$ हता हि राक्षसा रौद्रा. —$^{d}$) $M_5$ पंचवट्यां (for राघवेण). Ś Ñ V B $D_{4.8.12}$ हतौ च खरदूषणौ($D_8$ °रूपिणौ). —For $15^{cd}$, $D_{1-3.9}$ subst.:

3496* राममासाद्य नष्टानि खरश्चैवाग्रतो हतः ।

ततः पश्चाच्छूर्पणखा रामपार्श्वमुपागता ।
ततो रामेण संदिष्टो लक्ष्मणः सहसोत्थितः ॥ १६

प्रगृह्य खड्गं चिच्छेद कर्णनासे महाबलः ।
ततस्तेनार्दिता बाला रावणं समुपागता ॥ १७

G. 6. 110. 21
B. 6. 126. 21
L. 6. 107. 24

[ D9 [ अ ]पि ( for [ ए ]व ). D2 खरश्च निहतोग्रतः ( for the post. half ). ]

—Thereafter all the above MSS. cont. 3504*.

—After 15, Ś D5–8.10–13 ( Ś D8.12 only l. 1–3; D13 only l. 1–3 and 6 ) S ins. :

3497* एकेन सह संगम्य रणे रामेण संयुगे ।
अह्नश्चतुर्थभागेन निःशेषा राक्षसाः कृताः ।
महाबला महावीर्यास्तपसो विघ्नकारिणः ।
निहता राघवेणाजौ दण्डकारण्यवासिनः ।
राक्षसाश्च विनिष्पिष्टाः खरश्च निहतो रणे । [5]
दूषणं चाग्रतो हत्वा त्रिशिरास्तदनन्तरम् ।

[ ( l. 1 ) G1 एतेन. D5 सहसा गम्य ( for सह संगम्य ). D6 T3 रामेणैव हि; T2 रामेण सह. Ś D8.13 राघव; D12 भारत; M3 Cg संगताः ; M5 सायुधाः ( for संयुगे ). D7.10.11 G2 M1 रामेण( G2 रावणे ) रणमूर्धनि ( for the post. half ). —( l. 2 ) G3 ( *inf. lin.* also as above ) निश्चेष्टा ( for निःशेषा ). Ś2 हताः ( for कृताः ). —( l. 3 ) M1 महावीर्या; M2 °काया; Cg as above ( for °बला ). G1 महेष्वासास् ; M1 महाकायास् ( for महावीर्यास् ). D12 महाबलस्त्वया क्रांतस् ( sic ) ( for the prior half ). Ś D8.12.13 तापसानां भयंकराः ( for the post. half ). M1 transp. the post. halves of l. 4 and l. 5. —( l. 5 ) M1 सहदूषणः ( for निहतो रणे ). —D5 T1 G1.3 M1.3 om. l. 6. —( l. 6 ) M2 निहतो दूषणश्चाग्रे; M5 दूषणश्च हतो मूर्धस् ( for the prior half ). D13 दूषणस्त्रिशिराश्चैव खरश्चैवाग्रतः स्थितः . ]

16 D13 om. 16–20. D1.3 om. 16–17. For 16–17$^b$, Ś Ñ V B D4.8.12 subst. 3498*; D2.9 subst. 3499* ; while M2 subst. 3500* . D7 T2.3 M3 read 16–17$^b$ after 14. —$^a$ ) M5 पूर्वाच् ( for पश्चाच् ). D7.10.11 G2 पश्चाच्छूर्पणखा नाम. ❀ Cv : ततः पश्चादित्यत्र क्रमो न विवक्षितः । ; Ck : ननु रक्षसां वधे किं कारणमित्यत्राह ततः पश्चादित्यादि । जनस्थानोपगमनानन्तरमित्यर्थः । ; so also Ct. ❀ —D5 om. ( hapl. ) 16$^c$–17.

17 D1.3.5.13 om. 17 ( cf. v.l. 16 ). For sequence in D7 T2.3 M3, cf. v.l. 16. —$^b$ ) D6 T2.3 M3 कर्णनासं; D7 G1.3 °नासौ; Ck.t as in text ( for °नासे ). ❀ Cg : कर्णनासमित्यत्र प्राण्यङ्गत्वादेकवद्भावः . ❀ —For 16 – 17$^b$, Ś Ñ V B D4.8 subst. and read after 3494* ; D12 subst. for 16–17$^b$ and reads after 13$^{ab}$ ( owing to omission ) :

3498* ततः शूर्पणखा नाम भ्रातरौ रामलक्ष्मणौ ।
आत्मप्रदानलोभेन न्यमन्त्रयत राक्षसी ।
सुस्मितं तावुभौ कृत्वा तां न्यपेधयतां तदा ।
कर्णनासापहारेण विकृता विकृतानना ।
खरं भ्रातरमासाद्य कथयामास राघवौ । [5]

[ D12 om. l. 1 ( cf. v.l. 13 ). —( l. 1 ) V1 अत्र; V2.3 B3.4 तत्र ( for ततः ). —( l. 2 ) D12 स्वात्मप्रसाद- ( for आत्मप्रदान- ). B1 D4 -लाभेन ( for -लोभेन ). V2.3 B D4 राघवौ ( for राक्षसी ). Ñ1 ( with hiatus ) आत्मदानप्रलोभेन आमंत्रयत राक्षसी. —V3 om. l. 3. —( l. 3 ) Ś D8 सुस्मितौ; Ñ1 V2 B1.2.4 D4 सस्मितं; D12 संमितौ ( for सुस्मितं ). V2 B4 गत्वा ( for कृत्वा ). Ś D8.12 तामधर्षयतां तदा; Ñ1 ( m. also as above ) तामबोधयतां तदा; B3 राघवौ चाप्यलोभयत् ; B4 लक्ष्मणं राघवं तदा ( for the post. half ). —( l. 4 ) Ñ2 V1 B2.4 -प्रहारेण ( for -[ अ ]पहारेण ). B2 राक्षसी ( for विकृता ). D12 विकृतात्मना ( for °तानना ). Ś D8 विकृतां विकृताननां ( for the post. half ). —For l. 4, B3 subst. :

3498( A )* कर्णनासं ततश्छित्त्वा चकार विकृताननाम् ।
निकृत्तकर्णनासौष्ठी ततः सा विकृतानना ।

—( l. 5 ) V3 पोथयामास ( for कथयामास ). ] ;

while D2.9 subst. for 16–17$^b$ and read after 14 :

3499* ततः शूर्पणखा नाम राक्षसी घोरदर्शना ।
कामरागाभिसंतप्ता लक्ष्मणेन विरूपिता ।

[ ( l. 2 ) D2 -बाणाभि- ( for -रागाभि- ). ]

—For 16–17$^b$, M2 subst. and reads after 3493* :

3500* सा तु शूर्पनखी नाम सीतां ब्यद्रावयद्वने ।
आच्छिनल्लक्ष्मणस्तस्याः कर्णनासौ ततोऽसिना ।

—Thereafter M2 cont. :

3501* सा छिन्नकर्णनासा वै खरं शरणमभ्ययात् ।
स च सैन्येन महता राममेवाभ्यधावत ।

—D2.9 om. 17$^{cd}$. —$^c$ ) M1 घोरा; Cr.m.g.t as in text ( for बाला ). M5 विरूपिता हता बाला. —$^d$ ) D6 T2.3 समपद्यत; M1 समुपागमत्; M5 भ्रातरं गता. —For 17$^{cd}$, Ś Ñ V B D4.8.12 M2 subst. :

3502* शूर्पणखा तदा गत्वा रावणं लोकरावणम् ।

[ Ñ2 V1.3 B1.2.4 D12 शूर्पणख्या. Ś D8 च सा; V2 ततो; D12 तया ( for तदा ). D4 transp. शूर्पणखा and तदा. M2 तत्र शूर्पणखा गत्वा ( for the prior half ). Ñ V B1.2.4 M2 रावणे लोकरावणे; D4 लंकायां रावणं प्रति ( for the post. half ). ]

—Thereafter Ś Ñ1 D4( l. 1 only ).8.12 cont. ; while Ñ2 V B M2 subst. for 18 :

G. 6. 110. 0
B. 6. 126. 22
L. 6. 107. 35

रावणानुचरो घोरो मारीचो नाम राक्षसः । लोभयामास वैदेहीं भूत्वा रत्नमयो मृगः ॥ १८

3503* वधस्तेषां समाख्यातः सीता चाप्रतिमा भुवि ।
श्रुत्वा तदप्रियं घोरं रक्षस्त्रैलोक्यरावणम् ।
मारीचमगमच्छीघ्रं मदनेन समाहतः ।
कथं सीतामहं रामात्प्राप्नुयां सुहृदां वर ।
त्वयि संभावना मेऽस्ति सर्वकार्येषु राक्षस । [ 5 ]
स त्वमद्यैव गच्छस्व मृगरूपी भवाग्रतः ।
सीतायाः काञ्चनो भूत्वा रूप्यबिन्दुचितश्चरन् ।
लोभिता सा त्वया व्यक्तं रामं वक्ष्यति भाविनी ।
अहोऽद्भुतमिदं रूपं मृगस्य भुवि दुर्लभम् ।
प्राप्नुयामपि चर्मास्य चित्ररूपं मनोरमम् । [ 10 ]
सीतायास्तु वचः श्रुत्वा रामस्त्वामभियास्यति ।
ततोऽपवाहिते रामे लक्ष्मणे चापवाहिते ।
सुखं सीतां हरिष्यामि एवं प्रतिकृतं भवेत् ।
बलज्ञश्चापि रामस्य मारीचस्तु तथाकरोत् ।

[ (l. 1) Ś1 वधं तेषां समाचक्षत्; D4 पुरस्तस्य समाख्यातं (for the prior half). —After l. 1, D4 further cont. 3504*. —(l. 2) V2 B1-3 तदा (for तद्). D12 अप्रियकरं. B2 -रावणः; B3 -दारुणं (for -रावणम्). M2 रावणो राक्षसाधिपः (for the post. half). —(l. 3) M2 अवदच्च (for अगमच्च). Ñ2 समाहतं; M2 स मोहितः (for समाहतः). V1.3 B3 (m. also as above) खरं श्रुत्वा समाहतं; G (ed.) राक्षसं भीमविक्रमं (for the post. half). —After l. 3, Ś1 reads l. 1, 2 and 9 of 3504*. —Ś1 om. l. 4–13. V3 damaged from l. 4 up to the prior half of l. 5. —(l. 4) V2 वरारोहां (for अहं रामात्). —(l. 5) V2 सर्वा (for मेऽस्ति). M2 त्वय्याशा परमा मेस्ति (for the prior half). V3 सर्वकालेषु; D12 सह-कार्येषु. —(l. 6) B1 (m. also; orig. as above).3 (*sup. lin.* also; orig. as above) मम (for भव). —(l. 7) V1 चाग्रतो भूत्वा; M2 कांचनमयो (for काञ्चनो भूत्वा). V1.3 रौप्य- (for रूप्य-). D8 -चिह्न- (for -बिन्दु-). Ś2 D8.12 M2 -चितश्चर; B1 -चितो भव (for -चितश्चरन्). Ñ1 (marg. also; orig. as above) रूपं दर्शयतो भवन् (sic) (for the post. half). —V3 om. l. 8. —(l. 8) Ñ2 V1 B4 लोभित्वा (sic). B1.2 च (for सा). B3 त्वया कामं; M2 त्वयि भृशं (for त्वया व्यक्तं). Ś2 D8.12 भामिनी; M2 मैथिली (for भाविनी). —(l. 9) V1 चित्रम् (for ऽद्भुतम्). V3 damaged for इदं रूपं. B3 [अ]पि च (for भुवि). —V3 mostly damaged for l. 10. —(l. 10) V2 B1 प्राप्नुयामिति; M2 प्रापये यदि. V2 B1.3 चित्र-रूप-. Ś2 D8.12 M2 मनोहरं (for मनोरमम्). —(l. 11) Ñ V1.3 B2.4 M2 तद् (for तु). Ś2 Ñ1 V3 B4 D8.12 M2 G (ed.) रामस्त्वाभिमवि(B4 °गमि; G [ed.] °द्रवि)ष्यति; V1 रामस्त्वां विद्रविष्यति (for the post. half). —(l. 12) B1 om. (hapl.) from the post. half up to the prior half of l. 1 of 3509*. M2 महाबले (for [अ]पवाहिते). —(l. 13) V3 अथ; B4 इत्थं (for सुखं). B4 एवं प्रतिसमादिशत् (for the post. half). —After l. 13, Ś2 D8.12 ins. l. 1, 2 and 9 of 3504*; whereas Ñ1 reads (marg.) l. 1–9 of 3504*. —V3 damaged for l. 14. —(l. 14) M2 कालज्ञश्च (for बलज्ञश्च). Ñ2 V1 B2.3 तत्; V2 स (for तु). Ś D8.12 तदा (for तथा). ]

—Thereafter Ś1 Ñ1 (marg.) read, Ś2 D8.12 cont. l. 10 of 3504*.

18 D13 om. 18 (cf. v.l. 16). —For 18, Ñ2 V B M2 subst. 3503*. —[a]) M5 -प्रेरितो (for -[अ]नुचरो). —[c]) T2 (also as in text) मोहयामास. —For 18, Ś1 subst. l. 1, 2, 9 and 10 only (reading l. 1, 2 and 9 after l. 3 of 3503* and l. 10 after 3503*); Ñ1 subst. (marg.) for 18 (reading l. 1–9 after l. 13 of 3503* and l. 10 after 3503*); Ś2 D8.12 ins. l. 1, 2 and 9 after l. 13 of 3503* and cont. l. 10 after 3503*; D1–3.9 cont. after 3496*; D4 further cont. after l. 1 of 3503*:

3504* ततो रावणमारीचौ विमानमिव तं रथम् ।
आरुह्यागच्छतां शीघ्रं रामाश्रमपदं महत् ।
आगम्य दण्डकारण्ये राघवस्याश्रमं महत् ।
ददर्श सहमारीचो रावणो राक्षसेश्वरः ।
अवतीर्य रथात्तस्मात्तप्तकाञ्चनभूषणात् । [5]
हस्ते गृहीत्वा मारीचं रावणो वाक्यमब्रवीत् ।
एतद्रामाश्रमपदं दृश्यते कदलीवृतम् ।
क्रियतां तत्सखे शीघ्रं यदर्थं वयमागताः ।
स रावणवचः श्रुत्वा मारीचो राक्षसेश्वरः ।
मृगो भूत्वाश्रमपदे रामस्य विचचार ह । [10]

[ (l. 2) D2 समारुह्यागतौ शीघ्रं (for the prior half). Ś D8.12 समारुह्य गतौ शीघ्रं यत्र रामः सलक्ष्मणः. —D4.9 om. (hapl.) l. 3. —(l. 3) Ñ1 D1.2 आगत्य; L (ed.) आसाद्य (for आगम्य). D1.2 दंडकारण्यं. —D1 repeats the post. half of l. 2 in place of the post. half of l. 3. —(l. 4) D4 स ददर्श (subm.) (for ददर्श सह-). —(l. 5) D9 अवरुह्य (for अवतीर्य). D1 -भूषणं (for -भूषणात्). —Ñ1 om. l. 7. —D4 reads l. 8 twice. —(l. 8) Ñ1 यत् (for तत्). L (ed.) सशीघ्रं (sic) (for सखे शीघ्रं). D3 reads यदर्थं in marg. D1 (with hiatus) इह आगताः; D4 (both times) च समागतं (second time °ताः). —(l. 9) Ś D8.12 रावणस्य (for स रावण-). D1.9 राक्षसोत्तमः. —(l. 10) D3 [आ]श्रम-पदं; D12 [आ]श्रमे चैव. Ś D8 रामस्य त्वाश्रमे रक्षो मृगरूपी (D8 °पो) चचार ह. ]

—For 18, Ś2 D1–4.8.9.12 subst.:

3505* रुक्मबिन्दुशतैश्चित्रः प्रवालमणिभूषितः ।
मुक्ताजालपरिच्छन्नः सर्वभूतमनोहरः ।
सवैदूर्यमयैः शृङ्गैश्चतुर्भिर्हेमभूषितैः ।
स रामं पर्णशालायामुपविष्टं महारथम् ।
मृगो जगाम सौवर्णः सर्वगात्राणि दर्शयन् । [5]

सा राममब्रवीद्दृष्ट्वा वैदेही गृह्यतामिति ।
अहो मनोहरः कान्त आश्रमे नो भविष्यति ॥ १९
ततो रामो धनुष्पाणिर्धावन्तमनुधावति ।
स तं जघान धावन्तं शरेणानतपर्वणा ॥ २०

अथ सौम्य दशग्रीवो मृगं याते तु राघवे ।
लक्ष्मणे चापि निष्क्रान्ते प्रविवेशाश्रमं तदा ।
जग्राह तरसा सीतां ग्रहः खे रोहिणीमिव ॥ २१

G. 6. 110. 34
B. 6. 126. 26
L. 6. 107. 49

[ (l. 1) D3 रूप्य- (for रुक्म-). Ś2 D8.12 चित्रैः; D4 युक्तः (for चित्रः). D9 रुक्ममिर्विदुभिर्व्याप्तः (for the prior half). Ś2 D8.12 -भूषितैः; D3 -भूषणः (for -भूषितः). —(l. 2) D9 मणि- (for मुक्ता-). D2.3 -प्रतिच्छन्नः. D1 -मनोरमः (for -मनोहरः). —(l. 3) Ś2 D2–4.8.9.12 सवैडूर्यमयैः. D9 हैम- (for हेम-). —(l. 4) D1.4.9 राघवं (for स रामं). D12 उपतिष्ठन् (for उपविष्टं). D2.4 महाबलं. ]

19 B1 D13 om. 19 (cf. v.l. 3503* and 16 respy.). V3 om. 19–21[d]. Ñ V1.2 B2–4 M2 om. 19–20. —[a]) D6 M3 Cm.g अथैनम्; T2.3 M1 रामं चैव (M1 त्वथ) (for सा रामम्). G M1.5 हृष्टा; M3 Cm.g रामं; Ct as in text (for दृष्ट्वा). D5 T1 अथ रामं ब्रवीद्दृष्ट्वा (metri causa). —[b]) D7 गम्यताम् (for गृह्यताम्). M3 अयं. ❀ Cv: गृह्यतामित्यत्रेतिशब्दो भविष्यतीति द्रष्टव्यः. ❀ —[c]) D10.11 Cm.t अयं (for अहो). D5 T1 G1 M1 मनोरमः; Ct as in text (for मनोहरः). —[d]) D5–7.10.11 T2 M1.3 Cm.t आश्रमो. —For 19, Ś D1–4.8.9.12 subst.:

3506* तं मृगं काञ्चनं दृष्ट्वा दिव्यं मृगमिवाम्बरे ।
उवाच राघवं सीता स्मितपूर्वाभिभाषिणी ।
इमं मणिविचित्राङ्गं पश्य हेममयं मृगम् ।
त्वगासनस्थां मां त्वस्य कुरु शीघ्रं महाभुज ।

[ (l. 1) D9 [अं]बरात् (for [अ]म्बरे). —(l. 3) D9 सौम्य (for मणि-). —D1–3 om. l. 4. —(l. 4) D9 त्वचा सनाथां. D4.9 अस्य (for त्वस्य). ]

20 Ñ V B D13 M2 om. 20 (for B1, cf. v.l. 3503*; for D13, cf. v.l. 16 and for the rest, cf. v.l. 19). —[b]) D7.10.11 M1 मृगं तम् (for धावन्तम्). K (ed.) उप- (for अनु-). ❀ Ct: अनुधावति अनुधावति स्म. ❀ —[d]) T1 G2.3 M1 नतपर्वणा. —For 20, Ś D1–4.8.9.12 subst.:

3507* स सीताया वचः श्रुत्वा रामः सत्यपराक्रमः ।
उवाच संहृष्टमनाः सौमित्रिमथ राघवः ।
पश्य लक्ष्मण वैदेह्या मृगत्वचि गता स्पृहा ।
अप्रमत्तेन ते भाव्यं राजपुत्र्यां नृपात्मज ।
यावत्पृषतमेकेन सायकेन निहन्म्यहम् । [5]
तेन मर्मणि निर्भिन्नः शरेणाप्रतिमेन सः ।

[ (l. 1) D9 सीताया वचनं श्रुत्वा (for the prior half). —(l. 2) D12 सौमित्रिमिमनाः (sic) (for संहृष्ट°). Ś2 D8 सौमित्रम् (for सौमित्रिम्). —(l. 5) D9 om. (hapl.) सायकेन. D4.12 वि(D12 हि)हन्मि. —(l. 6) D4 तेन रूपं च निर्भग्नं (for the prior half). ]

—Then all the above MSS. cont.:

3508* हा लक्ष्मणेति विक्रुश्य जहौ रूपं मृगस्य तत् ।
आर्तस्वरं तु तद्भर्तुर्विज्ञाय सदृशं वने ।
उवाच लक्ष्मणं सीता गच्छ जानीहि राघवम् ।
स सीतां प्रत्युवाचाथ केनाप्येतदुदाहृतम् ।
एवमुक्ता लक्ष्मणेन सीता शोकपरायणा । [5]
परिदेवमाना तं रूक्षां वाचमाश्रावयत्तदा ।
एवमुक्तस्तु सौमित्रिः सीतया परुषं वचः ।
पिधाय कर्णौ दुःखार्तो मैथिलीं पुनरब्रवीत् ।
यास्यामि यत्र काकुत्स्थः स्वस्ति तेऽस्तु वरानने ।
रक्षन्तु त्वां विशालाक्षि समग्रा वनदेवताः । [10]

[ (l. 1) D1.8 विक्रम्य (for विक्रुश्य). Ś D8.12 तु तस्य (for मृगस्य). —(l. 2) Ś2 D12 आर्तं (for आर्त-). D2–4 तु तं; D12 तदा (for तु तद्). D9 भर्तुश्च (for तद्भर्तुर्). —(l. 3) D4 याहीति (for जानीहि). —(l. 4) D9 हि तां and [इ]दं (for सीतां and [अ]थ respy.). —(l. 5) D1 उवाच मुक्तलक्ष्मणं (sic) (for the prior half). D1–4.9 भर्तृ- (for शोक-). —(l. 6) Prior half hypm. D3 तं (subm.); D8 तां रूक्षां; D12 तं रूक्षं; L (ed.) रूक्षां (for तं रूक्षां). Ś2 परिदेवमानां तां रूक्षां; D1.2.4.9 परिदेवयमाना तं (D1 °नं च; D9 °ना सा) (for the prior half). Ś2 वाचाम्; D1.3 रूक्षम्; D2 रूक्षाम्; (for वाचम्). D1 अश्रावयत्. D4.9 रूक्षं सं(D9 प्रा)श्रावयत्तदा (for the post. half). —(l. 7) Ś2 D4.8.9 सीतायाः (sic) (for सीतया). —(l. 8) D2.3.8.9 कर्णौ दुःखार्त्तौ; D4 कर्णं दुःखार्तो. —D12 reads l. 9 twice (var.) —(l. 9) D12 (first time) मैथिलीं पुनरब्रवीत् (for the post. half). —(l. 10) D8 ते (for त्वां). D9 समस्ता (for समग्रा). ]

21 V3 om. 21[a–d] (cf. v.l. 19). —[a]) G1 सौम्यो; M1 [आ]साद्य; M5 भिक्षुर् (for सौम्य). —D13 om. 21[b–d]. —[b]) D7.10.11 G2 मृगयां याति; G1 मृगघाते तु (sic); M1 वनं याते तु. —[c]) G3 [अ]पक्रांते; Cg as in text (for निष्क्रान्ते). —Ś2 Ñ V B D8.12 M2 read 21[ef] after 3514*. D13 reads 21[ef] after 22[b]. —[e]) B1 जहार (for जग्राह). D13 शीघ्रं (for सीतां). D8 T2.3 M1 जहार रावणः सीतां. —[f]) M3 खे ग्रहो (by transp.). Ñ1 D12 यथा (for इव). —For 21, Ś1 D1–4.9 subst.; Ś2 D8.12 subst. for 21[a–d]; while Ñ V1.2 B M2 subst. l. 1 and 7 only for 21[a–d]:

G. 6. 110. 33
B. 6. 126. 26
L. 6. 107. 57

त्रातुकामं ततो युद्धे हत्वा गृध्रं जटायुषम् । प्रगृह्य सीतां सहसा जगामाशु स रावणः ॥ २२

3509* अपनीते तदा रामे लक्ष्मणे च महाबले ।
एतदन्तरमासाद्य दशग्रीवः प्रतापवान् ।
परिव्राजकरूपेण वैदेहीं तामुपागमत् ।
तामाससादातिबलो भर्त्रा विरहितां वने ।
रोहिणीं शशिना हीनां दिवि घोर इव ग्रहः । [5]
स पापः साधुरूपेण तृणैः कूप इवावृतः ।
आदाय रावणः सीतामुत्पपात ततो नभः ।

[ B1 om. up to the prior half of l. 1 (cf. v.l. 3503*). D1–4.9 om. l. 1. —(l. 1) Ñ V1.2 B2–4 तथा (for तदा). M2 सह भ्रात्रा (for लक्ष्मणे च). —(l. 3) D1 om. (hapl.?) from ता up to ही in l. 5. D4.9 समुपागमत्. —D9 om. l. 4. —(l. 4) D3 भ्रातृभ्यां रहितां वने; D4 मैथिलीं राक्षसेश्वरः (for the post. half). —(l. 6) D1.2.4 -वेषेण; D9.12 -वेशेन (for -रूपेण). —(l. 7) B2 नभस्तदा (for ततो नभः). D1–4.9 अंकेनादाय (D1.4.9 अंकमारोप्य) वैदेहीं रथमारोपयत्तदा (D9 °लयसत्वरः [sic]); M2 सीतामादाय रक्षेंद्र उत्पपात विहायसं. ]
—Thereafter D1–4.9 cont.; whereas Ś2 D8.12 ins. after l. 5 of 3514*:

3510* ततः पर्वतसंकाशस्तीक्ष्णतुण्डः खगोत्तमः ।
वनस्पतिगतः श्रीमान्व्याजहार शुभां गिरम् ।
जटायुर्नाम नाम्नाहं पक्षिराजो महाबलः ।
इत्येवमुक्त्वा दुद्राव पतगेन्द्रो दशाननम् ।
स संप्रहारस्तुमुलस्तयोस्तस्मिन्महावने । [5]
बभूव वातोद्धतयोर्मेघयोर्गगने यथा ।

[ (l. 1) D4 दीर्घदंडः; D8 तीक्ष्णदंडः (for तीक्ष्णतुण्डः). —(l. 2) D2 वनमभ्यागतः (for वनस्पतिगतः). D4 आजहार शुभा गिरः (for the post. half). —(l. 3) D4 हि (for [अ]हं). —D4 om. l. 4. —(l. 4) D1 महाबलः (for दशाननम्). D3 राक्षसेंद्रं महाबलं (for the post. half). —(l. 5) D2 तदा (for तयोस्). Ś2 D8 महाहवे; D4 °बले (sic) (for °वने). —(l. 6) D9 वातोद्भूतयोर्. ]
—After 21, Ś2 D8.12 ins.; D1–4.9 cont. after 3515*:

3511* सा हेमवर्णा ललना नीलाङ्गेनाथ रक्षसा ।
ह्रियमाणा ह्यपश्यन्ती कंचिन्नाथं सुमध्यमा ।
ददर्श गिरिशृङ्गस्थान्पञ्च वानरपुंगवान् ।
तेषां मध्ये विशालाक्षी कौशेयं कनकप्रभम् ।
उत्तरीयं वरारोहा शुभान्याभरणानि च । [5]
विसृज्य सा विचुक्रोश रामं च प्रशशंस ह ।
नेत्राभ्यां वारि मुञ्चन्ती पश्यन्ती च वसुंधराम् ।

[ (l. 1) D12 हेमवर्ण-. D1–4.9 बलिना (for ललना). D4 भीमांगेन; D9 रावणेन (for नीलाङ्गेन). —(l. 2) D1–4.9.12 न पश्यंती (for ह्यपश्यन्ती). D1.3 क(D8 किं)चिन्नाथं; D4 किंचितार्थं. —After the prior half of l. 4, D1 reads erroneously the post. half of l. 1 and l. 2 of 3516*, repeating them in their proper place. —D1 om. from the post. half of l. 4 up to l. 5. —(l. 5) D4 सा नाना-; D9 वराणि (for शुभानि). —(l. 6) D1 विसृज्य. D4 च वि-; D9 चापि (for सा वि-). D1 सा (for ह). D9 राम रामेति दुःखिता (for the post. half). —(l. 7) D1.3.4 मुंचंती पश्यंती. D1 वसुधातलं (for च वसुंधराम्). ];
while Ñ V1.2 B1–3 ins.:

3512* ततस्तां नवहेमाभां स्थितां पर्वतमूर्धनि ।
[ B1.2 स्थित्वा (sic) (for स्थितां). ];
whereas B4 ins.:

3513* ततस्तां न च विद्वांसश्चाभिगच्छन्तु राघवम् । (sic)

22 Ś1 om. 22–25. D13 om. $22^a$. —$^a$) D5 T1 G3 तदा (for ततो). —After $22^b$, D13 reads $21^{ef}$. —D13 om. $22^{cd}$. —$^c$) D5.7.10.11 G2 transp. सीतां and सहसा. —$^d$) D7.10.11 G2 राक्षसः (for रावणः). —For 22, Ś2 Ñ V B D8.12 M2 subst.:

3514* रोरूयमाणामसकृद्राम रामेति वादिनीम् ।
लक्ष्मणेति च क्रोशन्तीं गृध्रराजो ददर्श ताम् ।
पितुस्ते स सखित्वं च पालयन्गृध्रराट् तदा ।
साहाय्यमकरोत्तस्या देव्याः स सुमहाबलः ।
अभयं च स दत्त्वास्यै युयुधे तेन रक्षसा । [5]
युद्धं च सुमहद्दत्त्वा परिश्रान्तो बभूव ह ।
उच्छ्वसन्तं समालक्ष्य रावणो लोकरावणः ।
त्वरमाणो दशग्रीवश्छित्त्वा पक्षौ जटायुषः ।
वृक्षगुल्मेषु धावन्तीमनाथां नाथमिच्छतीम् ।

[ (l. 1) Ś2 B2.3 D8.12 रोरुयमानाम्. B1 आर्येति हा रामेति च (for असकृद्राम रामेति). V भाषिणीं; M2 वाशतीं. —(l. 3) Ñ2 V2 तव; V1 ते तत्; V3 ते तु (for ते स). B1 स पितुस्ते (by transp.). —V3 damaged from सखित्वं up to l. 5. M2 वै (for च). V2 D8 ततः (for तदा). —(l. 4) Ś2 D8.12 सहायम्; Ñ V1 B2.3 (orig.; *sup. lin.* also as above) सानाथ्यम्; B4 सलोखीम् (sic) (for साहाय्यम्). B3 सीतायाः सु-; B4 देव्यास्तु स (for देव्याः स सु-). —(l. 5) Ś2 Ñ2 V2 D8 दत्त्वास्या; D12 कृत्वासौ; M2 दत्त्वा वै. M2 राक्षसेन ह (for तेन रक्षसा). —After l. 5, Ś2 D8.12 ins. 3510*. —(l. 6) Ś2 Ñ2 D8.12 तु (for च). Ś2 V2 B1.2 D8 M2 सुमहत्कृत्वा. —(l. 7) Ñ2 तदेवं तं; B4 M2 तदवस्थं (for उच्छ्वसन्तं). V2 B3.4 समालोक्य; V3 समासाद्य (for समालक्ष्य). Ñ1 उच्छ्वासमस्य चालक्ष्य (for the prior half). Ñ1 B1.2 -कंटकः (for -रावणः). M2 राक्षसो देवकंटकः (for the post. half). —(l. 8) V2 B3 हत्वा पक्षौ; D12 पक्षौ छित्त्वा (by transp.). Ñ2 B2.3 जटायुषः (sic) (for जटायुषः). V1.2 हत्वा गृध्रं जटायुषं (=$22^b$) (for the post. half). —After l. 8, Ś2 D8.12 ins. 3515*. —(l. 9) B2–4 वृक्षमूलेषु. V3

ततस्त्वद्भुतसंकाशाः स्थिताः पर्वतमूर्धनि ।
सीतां गृहीत्वा गच्छन्तं वानराः पर्वतोपमाः ।
ददृशुर्विस्मितास्तत्र रावणं राक्षसाधिपम् ॥ २३
प्रविवेश तदा लङ्कां रावणो लोकरावणः ॥ २४
तां सुवर्णपरिक्रान्ते शुभे महति वेश्मनि ।
प्रवेश्य मैथिलीं वाक्यैः सान्त्वयामास रावणः ॥ २५

G. 6. 110. 36
B. 6. 126. 31
L. 6. 107. 67

damaged from धाव up to च्छतीम्. V1 B2.3 ईक्षतां (sic); B1 (marg. also; orig. as above).4 ईक्षतीं (for इच्छतीम्). D12 अनाथामिव गच्छतीं (for the post. half).]

—Thereafter Ś2 Ñ V B D8.12 M2 read $21^{ef}$. —For 22, D1–4.9 subst.; while Ś2 D8.12 ins. after l. 8 of 3514*:

3515* स छिन्नपक्षः सहसा रावणेन दुरात्मना ।
निपपात तदा गृध्रो जटायुः क्षीणजीवितः ।
गृध्रराजं तु तं हत्वा दशग्रीवो महाबलः ।
जगामाकाशमादाय वैदेहीं राक्षसेश्वरः ।

[ (l. 1) D4 बलीयसा (for दुरात्मना). —(l. 2) D9 पक्षां (for गृध्रो). D2.4 गत- (for क्षीण-). —(l. 4) D4 आश्राय (for आदाय). D3 मैथिलीं; D4 रावणो (for वैदेहीं). D4.9 राक्षसाधिपः.] —Thereafter D1–4.9 cont. 3511*.

23 Ś1 om. 23 (cf. v.l. 22). V3 om. 23–25. Ñ V1.2 B om. 23. —$^a$) M1 पर्वत-; Cg as in text (for त्वद्भुत-). D13 ततस्तामेव संकाशां. —$^b$) D13 स्थितां. —D13 om. $23^{c-f}$. T2 M1 om. $23^{cd}$. —$^c$) D6 T3 तं यांतं (for गच्छन्तं). —$^e$) D7.10.11 G2 विस्मिताकारा; M1 विस्मितास्तं तु. —For 23, Ś2 D1–4.8.9.12 subst.:

3516* पिङ्गाक्षास्ते विशालाक्षा नेत्रैरनिमिषैरपि ।
विक्रोशन्तीं तदा सीतां ददृशुर्वानरर्षभाः ।

[ (l. 1) D1–4.9 विशालाक्षीं (for विशालाक्षा). —D1 reads erroneously the post. half of l. 1 and l. 2 after the prior half of l. 4 of 3511*, repeating them here. —(l. 2) D1 विक्रोशयंतीं (hypm.); D4 विक्रोशनूर्ति (hypm.) (for विक्रोशन्तीं). D9 तथा (for तदा).]

—Thereafter all the above MSS. cont.:

3517* स तु पम्पामतिक्रम्य लङ्कामभिमुखः पुरीम् ।
जगाम रुदतीं गृह्य मैथिलीं राक्षसेश्वरः ।
तां जहार सुसंहृष्टो रावणो मृत्युमात्मनः ।
वैदेह्यां ह्रियमाणायां चुक्षुभे वरुणालयः ।
अन्तरिक्षगता वाचः ससृजुर्दारुणास्ततः । [5]
एतदन्तो दशग्रीव इति सिद्धा महर्षयः ।
स तु सीतां विचेष्टन्तीमङ्केनादाय रावणः ।

[ (l. 1) D9 स सुपंथानमाक्रम्य (for the prior half). Ś2 D8.12 अभिमुखां (for °मुखः). D4 लंकापुरीमुखं पुरीं (sic) (for the post. half). —(l. 2) D9 मा रुदेति सुसंक्रुद्धो (for the prior half). D9 रुदंतीं (for मैथिलीं). —(l. 3) D12 संजहार. Ś2 D8 मैथिलीं (for रावणो). —D9 om. from l. 4 up to 24. —(l. 4) D4 वैदेहीं (sic) (for वैदेह्यां). —(l. 5) D1.4 अंतरीक्ष-. Ś2 D8 वात्ताः (for वाचः). Ś2 D8 तदा; L (ed.) तथा (for ततः). D4 दारुणस्वनाः. —(l. 6) D4 एतदुष्टो (sic) (for एतदन्तो). D4 देवाः (for इति). D1 सिद्धाश्च परमर्षयः (for the post. half).]

—After 23, D6.7.10.11 M3 K (ed. within brackets) ins.:

3518* ततः शीघ्रतरं गत्वा तद्विमानं मनोजवम् ।
आरुह्य सह वैदेह्या पुष्पकं स महाबलः ।

24 Ś1 V3 D9 om. 24 (for Ś1, cf. v.l. 22 and for V3 D9, cf. v.l. 23). —$^a$) Ś2 Ñ V1.2 B D1.2.8.12.13 प्रावेशयत्; M1 स विवेश. Ś2 D1–4.8.12.13 पुरीं; M3 ततो; Ct as in text (for तदा). —D4 om. (hapl.) from $24^b$ up to the prior half of 3519*. —$^b$) Ś2 Ñ V1.2 B1–3 D6.8.12 T2.3 M2.5 राक्षसाधिपः; D7.10.11 G2 M1 राक्षसेश्वरः; D13 गृह्य मैथिलीं (for लोकरावणः). D1–3 रूपिणं मृत्युमात्मनः. —After 24, D1–4 ins.; while D9 ins. before 25:

3519* सोऽभिगम्य पुरीं लङ्कां सुविभक्तमहापथाम् ।

25 Ś1 V3 om. 25 (cf. v.l. 22 and 23 respy.). Before 25, D4.9 ins. 3519*. Ś2 D8.12 repeat $25^{ab}$ after 25. L (ed.) transp. $25^{ab}$ and $25^{cd}$. —$^a$) M5 सुवप्र-; Cg.k.t as in text (for सुवर्ण-). Ś2 D8.12 (all first time) -परिक्षिप्तां; Ñ V1.2 B -परिक्षिप्ते; D6.10.11 T1 M1 -परिष्कारे; Cg as in text (for -परिक्रान्ते). D13 तां तु मार्गपरिश्रांतां. —$^b$) B1 स्थिते; B4 शुभ्रे (for शुभे). —B4 om. $25^{cd}$. —$^c$) Ñ1 B1.2 D5.7 T2.3 M3 प्रविश्य; D13 निवेश्य; M5 प्रलोभ्य (for प्रवेश्य). —$^d$) Ś2 Ñ V1.2 B1–3 D8.12 निष्फलं (for रावणः). —For $25^{cd}$, D1–4.9 subst.; while Ś2 D8.12 ins. after $25^{ab}$ (r.); L (ed.) ins. after $25^{ab}$:

3520* निदधौ रावणः सीतां मयो मायामिवासुरीम् ।

[ Ś2 D8.12 निदध्यौ; D3.4 निदधे (for निदधौ). D4 [आ]सुरः (for [आ]सुरीम्). D2 मयो मायापुरीं पुरा (for the post. half).]

—Thereafter Ś2 D1–4.8.9.12 cont. a passage relegated to App. I (No. 73). —After 25, Ñ V1.2 B1.2 D13 ins. only l. 28 of App. I (No. 73). —After 25, D5–7.10.11 S ins.:

3521* तृणवद्भाषितं तस्य तं च नैर्ऋतपुंगवम् ।
अचिन्तयन्ती वैदेही ह्यशोकवनिकां गता ।
न्यवर्तत ततो रामो मृगं हत्वा महावने ।

G. 6. 110. 37
B. 6. 126. 33
L. 6. 107. 81

निवर्तमानः काकुत्स्थो दृष्ट्वा गृध्रं प्रविव्यथे ॥ २६
गृध्रं हतं तदा दग्ध्वा रामः प्रियसखं पितुः ।
गोदावरीमनुचरन्वनोद्देशांश्च पुष्पितान् ।
आसेदतुर्महारण्ये कबन्धं नाम राक्षसम् ॥ २७
ततः कबन्धवचनाद्रामः सत्यपराक्रमः ।
ऋश्यमूकं गिरिं गत्वा सुग्रीवेण समागतः ॥ २८
तयोः समागमः पूर्वं प्रीत्या हार्दो व्यजायत ।
इतरेतरसंवादात्प्रगाढः प्रणयस्तयोः ॥ २९

[(l. 1) M5 तत्र (for तस्य). G1 भाषणं कृत्वा; Cg as above (for भाषितं तस्य). D6 T2.3 -सत्तमं; Cg as above (for -पुंगवम्). —(l. 2) D7 अचिंतयित्वा; G2 अचिंतयत; M1 विचिंतयंती; Cm.g.t as above (for अचिन्तयन्ती). T G1.3 M1.3 (with hiatus) अशोक- (for ह्यशोक-). —(l. 3) D5.7.10.11 G2 तदा (for ततो). D7.10.11 G2 तदा (for महा-). ❀ Cr : न्यवर्ततेति- अदृष्ट्वेति पदच्छेदः। वैदेहीमिति शेषः. ❀ ]

26 Before 26, Ś1 ins. only l. 2, 27–28 and V3 B4 ins. only l. 28 of a passage given in App. I (No. 73). —$^a$) V3 निवृत्यमानः (sic); M5 आवर्तमानः; Cg as in text (for निवर्तमानः). —Ñ2 illeg. for 26$^b$. —$^b$) D6 रामः (for गृध्रं). D7.10.11 G2 स विव्यथे (for प्रविव्यथे). Ś Ñ1 V B D8.12 विव्यथे (D8 °वृद्धे [sic]; D12 °वृथे [sic]) गृध्रराजतः (B1 °राट् मृतः). ❀ Cr: निवर्तमानः काकुत्स्थो दृष्ट्वा गृध्रं प्रविव्यथे।; Cg : निवर्तमान इति। अदृष्ट्वेति च्छेदः। सीतामिति शेषः। सीतां गृध्रं चादृष्ट्वा प्रविव्यथ इत्यन्वयः. ❀ —For 26, D1–4.9 subst.:

3522* तौ मार्गमाणौ काकुत्स्थौ हतं गृध्रमपश्यताम्।

[ D4 तामन्वेषयन्काकुत्स्थो (for the prior half). D2 हत- (for हतं). D4 अपश्यत. ]

27 B3 om. 27$^{ab}$. —$^a$) M3 ततो (for तदा). D6 M5 transp. हतं and तदा. D6.7.10.11 G3 M2.5 दृष्ट्वा; Cg as in in text (for दग्ध्वा). D13 तु संस्कृत्य (for तदा दग्ध्वा). T2 दृष्ट्वा गृध्रं हतं दग्ध्वा; G1 गृध्रं तथागतं दृष्ट्वा; M1 गृध्रं च निहतं दृष्ट्वा. —$^b$) M2 दग्ध्वा (for रामः). D7.10.11 प्रियतरं; T2 °करं; Cg as in text (for प्रियसखं). ❀ Cr : वृद्धं हतं ततो दृष्ट्वा रामः प्रियसखं पितुरिति पाठः. ❀ —For 27$^{ab}$, Ś Ñ V B1.2.4 D1–4.8.9.12 subst.:

3523* गृध्रराजं स सत्कृत्य पितुः प्रियसखं हतम्।

[ V3 damaged from ध्र up to प्रि. Ś D8.12 तु (for स). B1.2 संस्कृत्य (for सत्कृत्य). D1.3 तु तं दग्ध्वा; D2.4 हतं दृष्ट्वा D9 ततो गत्वा (for स सत्कृत्य). B1.2 महत्; D1–3.9 हि तं (for हतम्). D4 संपाणिति प्रियबांधवः (sic); D12 पितुः प्रियचिकीर्षया (for the post. half). ]

—After 27$^{ab}$, D5–7.10.11 S ins.:

3524* मार्गमाणस्तु वैदेहीं राघवः सहलक्ष्मणः।

—Ś1 B4 om. 27$^{c-f}$. D9 om. 27$^{cd}$. —$^{cd}$) Ś2 Ñ1 V B1–3 मंदाकिनीम् (for गोदावरीम्). B3 D6 T2.3 M2.3 Cg अन्वचरद् (for अनुचरन्). D1–4 मंदाकिनीं वि(D1 व्य)-चरतां; D12 मंदाकिनीवनचरन् (for °). Ś2 D8.12 द्रुमान्पश्यन्; B3 कुलोद्देशान्; T2 (*int. lin.* also) वनदेशांश्; Cg as in text (for वनोद्देशांश्). Ś2 V3 B3 D4.8.12 सुपुष्पितान्; D1 च शश्वतान् (for च पुष्पितान्). D13 मंदाकिन्यामवत * न्वने शाखासु पुष्पितान्. —After 27$^{cd}$, Ś1 Ñ V B1–3 D8.12 ins.:

3525* ततस्तौ सुमहावीरौ भ्रातरौ रामलक्ष्मणौ।

[ Ñ V1 B1–3 -वीर्यौ (for -वीरौ). —B1 om. from the post. half up to 27$^e$. ];

while M2 ins.:

3526* नदीर्वनानि चित्राणि पर्वतांश्च विचित्य सः।

—D13 om. 27$^{ef}$. —$^e$) M1.2 आससाद; Cg as in text (for आसेदतुर्). —$^f$) Ś2 B1 D2.4.12 रोमहर्षणं; Ñ1 V B2.3 D1.3.8 लोमहर्षणं; D9 तु दुरासदं; M2 घोरदर्शनं (for नाम राक्षसम्). —After 27, Ś2 Ñ V B1–3 D8.12 ins.:

3527* तं हत्वा चैव खड्गाभ्यां महाबलपराक्रमौ।

[ V2 बाहुभ्यां (for खड्गाभ्यां). ];

while M5 ins. after 27:

3528* कबन्धमेत्य तौ हत्वा निहतः सोऽभवत्सुरः।

28 D8 om. 28$^{ab}$. —$^a$) T1 * * ध- (for कबन्ध-). —$^c$) Ñ2 V3 D10.11.13 T2 G1 ऋश्य(D13 °क्ष)मूकं; D4 ऋक्षमूकं; D12 ऋषिमूकं (for ऋश्यमूकं). —$^d$) B4 समागमः; D13 च संगतः (for समागतः). —After 28, G2 ins. 3529*.

29 G2 om. 29$^{ab}$. V1(after 3532*).2 B3 repeat 29$^{ab}$ (var.) after 31. —$^a$) V3 B3(first time) D10.11 G3 M2 ततः; Cm.g.t as in text (for तयोः). D10 T2 M2 समागतः; M1 Cm समागमात्; Cg.t as in text (for समागमः). Ś D8.12 ततस्तं मनसा गत्वा; Ñ V1.2 B (V1.2 B3 second time) ततस्तेन समालोच्य(Ñ2 B1.2.4 °गम्य). D1–4.9 तयोः सह समागम्य(D1.3 °त्य). —$^b$) Ñ2 प्रीति- (for प्रीत्या). D1–3 हार्दम्; D5 T1 G1.3 हार्दाद्; D6 हार्दौ (sic); D9 हर्षम्; Cm.g.t as in text (for हार्दो). D1–3.9 अजायत; G1 विजायत (sic); Cm.g as in text (for व्यजायत). Ś B2 D4.8.12 सखित्वमकरोत्तदा (D4 °वजायत); Ñ1 V1.2 B1.3 (V1.2 B3 second time) सुग्रीवेण महात्मना; B4 प्रीतिरस्याभ्यजायत; D13 प्रीत्यर्हः सोऽभ्यजायत. —After 29$^{ab}$, D5–7.10.11 T G1.3 M2.3.5 ins.:

शैलाभ्रचयसंकाशं शैलशृङ्गमिवोन्नतम् ।
सुविभक्तमहाकक्ष्यं महाजनपरिग्रहम् ।
मतिमद्भिर्महामात्रैरनुरक्तैरधिष्ठितम् । [ 5 ]
राक्षसैश्चाप्तपर्याप्तैः सर्वतः परिरक्षितम् ।
मत्तमातंगनिश्वासैर्व्याकुलीकृतमारुतम् ।
शङ्खघोषमहाघोषं तूर्यनादानुनादितम् ।
प्रमदाजनसंबाधं प्रजल्पितमहापथम् ।
तप्तकाञ्चननिर्यूहं भूषणोत्तमभूषितम् । [ 10 ]
गन्धर्वाणामिवावासमालयं मरुतामिव ।
रत्नसंचयसंबाधं भवनं भोगिनामिव ।
तं महाभ्रमिवादित्यस्तेजोविस्तृतरश्मिवान् ।
अग्रजस्यालयं वीरः प्रविवेश महाद्युतिः ।
पुण्यान्पुण्याहघोषांश्च वेदविद्भिरुदाहृतान् ।
शुश्राव सुमहातेजा भ्रातुर्विजयसंश्रितान् । [ 15 ]
पूजितान्दधिपात्रैश्च सर्पिर्भिः सुमनोऽक्षतैः ।
मन्त्रवेदविदो विप्रान्ददर्श सुमहाबलः ।
स पूज्यमानो रक्षोभिर्दीप्यमानः स्वतेजसा ।
आसनस्थं महाबाहुर्ववन्दे धनदानुजम् ।
स राजदृष्टिसम्पन्नमासनं हेमभूषितम् । [ 20 ]
जगाम समुदाचारं प्रयुज्याचारकोविदः ।

---

(for भीमकर्मा ). —(l. 3) Ñ2 D6.10.11 M3 शैलाग्र-; M1.2 सिताभ्र- (for शैलाभ्र-). Ś1 Ñ1 V1.3 B4 D1–4.8.9.12 श्वेता (D1 ततो )भ्रवृंद( D2 °चय )संकाशं; B3 corrupt (for the prior half). Ñ2 D9 गिरि- (for शैल-). Ś1 Ñ B3.4 D1–4.8.9.12 इवोच्छ्रितं. —(l. 4) T2.3 G1 सुविभक्तं. Ñ V1.3 B3.4 D1–4.6.8–11 -महाकक्षं; M5 °सौधं (for °कक्ष्यं). Ś1 Ñ1 V1.3 B3.4 D1–4.8.9.12 महारथ- (for °जन-). —(l. 5) D5 T1 G3 नीतिमद्भिर्. Ñ2 V3 B3.4 D1–4.6.8.9.12 T3 महामात्यैर् (for °मात्रैर्). Ś1 Ñ V1.3 B3.4 D1–4.8.9.12 अभियुक्तैर् (for अनुरक्तैर्). Ñ1 B3.4 D1.2.8 अनुष्ठितं; V1 अधिष्ठितैः (for अधिष्ठितम्). —(l. 6) D10.11 T2 आप्त-; T3 चापि (for चाप्त-). Ś1 Ñ1 V1.3 B4 D1–4.8.12 रक्षोभिश्चाप्य( Ñ1 °प्त )पर्यंतैः ( B4 °तं ); Ñ2 D9 रक्षोभिश्चाप्युपायज्ञैः; B3 corrupt; G3 राक्षसैश्चाप्यपर्याप्तैः (for the prior half). Ś1 Ñ V1.3 B3.4 D1–4.8.9.12 परिवारितं. —(l. 7) Ś1 Ñ V1.3 B4 D6.10.12 G3 -निःश्वासैर्( G3 °स- ); D4 -संकाशैः (for -निश्वासैर्). Ś1 Ñ2 V1.3 B3.4 D1.2.4.8.9.12 सं( B3 आ )कुलीकृत-; D3 कुंडलीकृत-. D8 -मानसं (for -मारुतम्). —After l. 7, Ś1 Ñ V1.3 B3.4 D1–4.8.9.12 ins.:

1* परस्परकृतोत्साहैः प्रवराश्वैरलंकृतम् ।

[ Ñ V1 B3.4 D8.9 -कृतोत्साहं. D1 अत्युद्धतैर्महोत्साहैः (for the prior half). Ñ B3.4 D9 प्रबलाश्वैर् (for प्रवराश्वैर्).]

—Ś1 Ñ V1.3 B3.4 D1–4.8.9.12 om. l. 8. —(l. 8) M5 -महानादं (for °घोषं). D5 T1 G3 -संपात-; D7 T2.3 -संनाद-; D10.11 G1.2 -संबाध-; M1.2 -नादवि-; M5 -संघात- (for -नादानु-). —(l. 9) Ś1 Ñ V1.3 B3.4 D1–4.8.9.12 -शत- (for -जन-). G1 damaged from पथम् up to तप्त- in l. 10. Ś1 D12 प्रमदाहास्यमिश्रितं; Ñ V1.3 B3.4 D1–4.8.9 प्रवल्गि( Ñ1 °वासि; V1.3 °मर्दि; B3.4 °वंदि )तमिवौ( B3 D8 °महौ )जसा ( V3 °सं ) (for the post. half). —(l. 10) Ś1 D12 रक्तबिंदुसमायोगं; Ñ V1.3 B3.4 D1.3.4.8.9 रक्त( V1 D9 रत्न; V1 reads रणे and बले also )विद्रुमनिर्यूहं( Ñ2 V1.3 D9 °वैदू[ D9 °दू ]र्य-; B3.4 D4 °निर्योग-[ D4 °गं ]); D2 रत्नसंचयसंयोगं (for the prior half). M1.2 तोरण- (for भूषण-). Ś1 Ñ V1.3 B3.4 D1–4.8.9.12 -नि( Ś1 Ñ D1.9.12 -निः )स्वनं (for -भूषितम्). —(l. 11) G2 om. from मिवा up to second ण्या in l. 15. B3.4 [ आ ]सन्नम् (for [ आ ]वासम्). G3 अपि (for इव). —Ś1 D12 om. (hapl.) l. 12. —(l. 12) L (ed.) भुवनं (for भवनं). —(l. 13) Ś1 Ñ V1 B3.4 D1–4.9.12 इवादीप्तं( D3 °र्धं ); V3 महादीप्तं; G1 °दित्यं (for इवादित्यस्). D8 तं महाभूपितादीप्तं (for the prior half). D5.7 T2.3 -विसृत-; G1 -विवृत-; M1.2 -विस्तार- (for -विस्तृत-). T2.3 G3 M1–3 -रश्मिमान्. Ś1 Ñ V1.3 B3.4 D1–4.8.9.12 तेजोराशिमिवोज्ज्वलं( B3.4 °वाद्भुतं ) (for the post. half). —(l. 14) Ś1 वीक्ष्य; T3 M5 श्रीमान् (for वीरः). Ś1 D12 विभीषणः; B4 महायशाः (for महाद्युतिः). —(l. 15) D5 पूर्णान् (for पुण्यान्). Ś1 Ñ B3.4 D1–4.8.9.12 हृ( D1 पु )ष्ट( Ś1 D12 शृण्वन् )पुण्याहशब्दांश्च; V1.3 सुष्ठु( V1 पुष्ट- ) पुण्याशिषश्चैव; G2 **** सुत्रोषांश्च (for the prior half). D8 देववद्भिर् (for वेदविद्भिर्). Ś1 Ñ V1.3 B3.4 D2–4.8.9.12 उदीरितान्( V3 °ताः ). —(l. 16) D12 आश्राव. D3 G3 M1.2 स; D6 तु; G1 च (for सु-). Ś1 D12 धातुर् (for भ्रातुर्). D9 विनय- (for विजय-). Ś1 Ñ V1 B3.4 D1–4.8.9.12 -संहितान्; V3 -संहिताः; L (ed.) -संहितां (for -संश्रितान्). —(l. 17) V3 पूजिता. B4 अपि; D5.7 T1 तिल-; G1 घृत- (for दधि-). Ś1 D12 स- (for च). Ñ1 D1 M5 सुसर्पिः; V1.3 सलाजैः; B3.4 D2–4.8.9 ससर्पिः; G1 स्रग्गंधैः (for सर्पिर्भिः). V3 B4 D5–7 सुमनोक्षि( D6 °ग )तैः; B3 सुमनोक्षितान्. —(l. 18) Ś1 Ñ1 D12 तत्र वेद-; Ñ2 V1.3 B4 D1.2.4.8.9 तत्र मंत्र-; B3 D3 तंत्रमंत्र- (for मन्त्रवेद-). B3 मंत्रान् (for विप्रान्). Ś1 Ñ V1.3 B3.4 D1–4.8.9.12 सु( Ś1 Ñ V1.3 D9 स )महायशाः; D6.7.10.11 T2.3 M1.2 स महाबलः. —(l. 19) Ś1 D1–4.8.12 सं( D1 सु; D8 तं )सेव्यमानं; Ñ V1.3 B3.4 D9 संदीप्यमानं; D6 सुपूज्यमानो; G M1.2.5 संपूज्यमानं ( G1.3 M5 °नो ). D4 om. from क्षोभिर् up to सनं in the post. half of 2*. D10.11 G2 M1.2 दीप्यमानं (for दीप्यमानः). Ś1 Ñ1 V1.3 B3.4 D1–3.8.12 दीप्य( D2 भ्राज )मानमिवौजसा ( D8 °सं ); Ñ2 D9 दीप्ताग्निमिव तेजसा (for the post. half). —(l. 20) Ś1 Ñ V1.3 B3.4 D1–3.8.9.12 महाभागं; D8 T2.3 G1 °बाहुं (for महाबाहुर्). Ś1 Ñ V1.3 B3.4 D1–3.8.9.12 नैर्ऋतर्षभं (for धनदानुजम्). —(l. 21) M5 -द्रव्य- (for -दृष्टि-). G1 damaged for सम्पन्नं. G2 रत्न- (for हेम-). —For l. 21, Ś1 Ñ V1.3 B3.4 D1–4.8.9.12 subst.:

2* स राज्ञादिष्टमावेष्टुमासनं हैममाप्तवान् ।

[ Ś1 D1.12 राजादिष्टम्; Ñ V1 B3.4 राज्ञोद्दिष्टम् (for राज्ञा-

स रावणं महात्मानं विजने मन्त्रिसंनिधौ ।
उवाच हितमत्यर्थं वचनं हेतुनिश्चितम् ।
प्रसाद्य भ्रातरं ज्येष्ठं सान्त्वेनोपस्थितक्रमः । [ 25 ]
देशकालार्थसंवादी दृष्टलोकपरावरः ।
यदाप्रभृति वैदेही संप्राप्तेह परंतप ।
तदाप्रभृति दृश्यन्ते निमित्तान्यशुभानि नः ।
सस्फुलिङ्गः सधूमार्चिः सधूमकलुषोदयः ।
मन्त्रसंधुक्षितो वह्निर्न सम्यगभिवर्धते । [ 30 ]
अग्निष्ठेष्वग्निशालासु तथा ब्रह्मस्थलीषु च ।
सरीसृपाश्च दृश्यन्ते हर्म्येषु च पिपीलिकाः ।
गवां पयांसि स्कन्नानि विमदा वीरकुञ्जराः ।
दीनमश्वाः प्रहेषन्ते न च ग्रासाभिनन्दिनः ।
खरोष्ट्राश्वतरा राजन्भिन्नरोमाः स्रवन्ति नः । [ 35 ]
न स्वभावेऽवतिष्ठन्ते विधानैरपि चिन्तिताः ।
वायसाः संघशः क्रूरा व्याहरन्ति समन्ततः ।
समवेताश्च दृश्यन्ते विमानाग्रेषु संघशः ।
गृध्राश्च परिलीयन्ते पुरीमुपरि पीडिताः ।

दिष्टम् ). Ś1 एवेष्टम् ; Ñ1 V3 उत्तुंगम् ; Ñ2 D9 अतुलम ; B3 अक्लिष्टम् ( for आवेष्टम् ). ]

—(l. 22) B3 स प्रगृह्य च; B4 प्रगृह्याचार-; D2.6 प्रपू( D2 * * )ज्याचार-; G1 प्रयुज्याकार-; M1 प्रायुज्याचार- ( for प्रयुज्याचार- ). V1.3 -कोविदं. —For l. 23, Ś1 Ñ V1.3 B3.4 D1–4.8.9.12 subst. :

3* स राक्षसो महातेजा विनयात्स्वामिसंनिधौ ।

[ Ś1 D12 स हर्यक्षो; D3.4 शुभाक्षयं( D3 °रं ) ( for स राक्षसो ). Ñ1 V1.3 B3.4 D8 विनयं; Ñ2 D9 विचार्यं; D1 विनीतं; L (ed.) विधेयं ( for विनयात् ). ]

—(l. 24) Ś1 Ñ V1.3 B3.4 D1–4.8.9.12 वाक्यमायतिनिश्चितं ( V1 D1 °श्रयं ) ( for the post. half ). —(l. 25) Ś1 Ñ V1.3 B3.4 D1.2.4.8.9.12 आसाद्य. V3 D3.8 श्रेष्ठं ( for ज्येष्ठं ). Ś1 Ñ V3 B3.4 D1–4.8.9.12 साध्वसो( B3 सव्येनो )पक्रम( D3 °मे; D8.9 °मा )स्थितः( Ś1 V3 D1.3.4.12 °तं ); V1 सांत्वमेवाक्रमस्थितं ( for the post. half ). —V3 om. l. 26. —(l. 26) Ś1 D2–4.12 -[ अ ]भिसंपत्ति( D2–4 °त्तिर् ); Ñ1 V1 D8 -[ अ ]भिसंप्राप्तं( D8 °प्ते ); Ñ2 D9 -[ अ ]भिसंपातं; B3 -[ अ ]भिसंप्रीतिं; B4 -[ अ ]भिसंपाती; D1 -[ आ ]दिसंपादि; D10.11 G1 -[ अ ]र्थसंवादि ( for -[ अ ]र्थसंवादी ). D6 T2 -परापरः ( for -परावरः ). Ś1 D12 दृष्ट्वा चामितविक्रमः; Ñ V1 B3.4 D1–4.8.9 दृष्ट्वा( D1–4 °ष्टा )चार( D9 राम )पराक्रमः( Ñ V1 D8.9 °मं ) ( for the post. half ). —After l. 26, G2 repeats l. 23. —(l. 27) G1 damaged for यदा प्र. G2 [ इ ]यं; M3 [ इ ]मां ( for [ इ ]ह ). D5 T1 M3 पुरीं तव; G2 पुरं तव ( for परंतप ). V1.3 संप्राप त्वामरिंदम; G1 संप्राप्ता भवनं तव ( for the post. half ). —(l. 28) Ś1 Ñ2 V1 D2.4.8.9.12 M5 च; Ñ1 V3 D1 ह; B3 वः ( for नः ). —(l. 29) Ś1 Ñ2 V1.3 B3.4 D1–4.8.9.12 विस्फुलिंगः( Ś1 B3 D1–3.8.12 °ग- ) प्रशांता( B3.4 °सन्ना )र्चिः; Ñ1 D6 T3 G2 सविस्फुलिंगः शीता( D6 G2 °गधूमा; T3 सप्ता )र्चिः; T2 सविस्फुलिंगः सहसा ( for the prior half ). Ś1 Ñ1 B4 D1 सधूमः. Ñ1 च कृशोदयः; V1 -कलुषो महान्; V3 -कलुषो यथा; B3 -कवलोदयः ( for -कलुषोदयः ). —(l. 30) Ś1 D1.3.12 मंत्रतस्तर्पितो; Ñ V1.3 B3.4 D2.4.8.9 °व( Ñ2 °वि )-चर्पितो; T2 °संवर्धितो ( for मन्त्रसंधुक्षितो ). D7 G1.3 M1–3 [ ऽ ]प्यग्निर् ; G2 ह्यग्निर् ( for वह्निर् ). D10.11 मंत्रसंवहुतोप्यग्निर् ; M5 मंत्रैः समूहितो ह्यग्निर् ( for the prior half ). G2 M5 अनु- ( for अभि- ). Ś1 Ñ2 V3 B3 D1–4.8.9.12 -पद्यते; Ñ1 B4 -तप्यते; V1 T3 G2.3 M5 -वर्तते ( for -वर्धते ). —(l. 31) Ś1 D12 अग्निषु हि; Ñ2 B3.4 अनिष्टं हि; V1.3 D1–4.8 अनि( D3 °रि )ष्टा हि; D9 अनिष्टम् ( for अग्निष्ठेषु ). D6 T2.3 -[ अ ]गारेषु ( for -शालासु ). Ś1 Ñ V1.3 B4 D1–4.8.9.12 ब्रह्म( B4 चैवा )सनेषु; D6 महास्थलेषु ( for ब्रह्मस्थलीषु ). B3 तथा चैव यथा सुत (corrupt) ( for the post. half ). —(l. 32) D5.10.11 T1 G3 M3 सरीसृपाणि. Ś1 Ñ V1.3 B3.4 D1–4.8.9.12 वि( Ś1 D2.12 प्र ) सर्पंति( D9 °ते ) ( for च दृश्यन्ते ). V1.3 निमित्तान्यशुभानि ह( V1 च ) ( for the post. half ). —After l. 32, D1 ins. :

4* सागरे दृश्यते धूमो वह्नौ तोयं च दृश्यते ।
कौशिकोऽयोधयत्सिंहं महदन्यच्च दृश्यते ।

—After l. 32, D3 reads l. 37–38 repeating them in their proper place. —(l. 33) V1.3 भिन्नानि; B3.4 [ अ ]वर्णानि; D8 छिन्नानि ( for स्कन्नानि ). B4 समदाश् ( for विमदा ). Ś1 Ñ V1.3 B3.4 D1–4.8.9.12 चापि; D7 नर-; D10.11 T1.3 वर- ( for वीर- ). —B3 om. from कुञ्जराः up to भि in l. 34. —(l. 34) V1.3 B4 दीनाश्च ( for दीनम् ). Ś1 V3 D12 प्रहेषंति; T3 प्रहर्षंति ( for प्रहेषन्ते ). Ñ D2–4.6.10.11 नव- ( for न च ). D9.12 -नंदिताः ( for -नन्दिनः ). B4 न च प्राशाभिवंदिनः ( for the post. half ). —(l. 35) Ñ2 B3.4 D9 खरोष्ट्राश्च तथा राजन् ( for the prior half ). D7.8.10.11 G2 M5 च ( for नः ). Ś1 Ñ V1.3 B3.4 D1–4.9.12 भिन्न( B4 °न्ना )रोमा( V1.3 समंताद )श्रुवर्तिनः( Ś1 D12 °र्षिणः; B3 °र्तिताः ) ; G1 भिन्नरोमास्रवाननाः ( for the post. half ). —(l. 36) D10.11 T3 G2 -तिष्ठति ( for -तिष्ठन्ते ). Ś1 Ñ V1.3 B3.4 D1–4.8.9.12 स्व( D3 अ )भावे नानु( B4 नैव; D1 नाव; D3 नात्र )तिष्ठंति ( Ñ2 °ते ) ; D6.7 T2 G1 M5 न स्वभावेन( M5 °पि ) तिष्ठंति( G1 °ते ) ( for the prior half ). V3 वितानैर् ( for विधानैर् ). G1 अभि- ( for अपि ). Ś1 Ñ1 V1.3 D1.3.4.8.12 संयु( D1.4.8 °य )ताः ; Ñ2 D2.9 संस्कृताः ; B3.4 संगताः ( for चिन्तिताः ). —(l. 37) B3 च तथा; B4 D3( first time ).8 सहसा; D1 सर्वशः ( for संघशः ). V1.3 D1 व्याहरंतस्. Ñ V1.3 B3.4 D2.3( both times ).4.8.9 ततस्ततः ( for समन्ततः ). —(l. 38) B3 समावृताश् ( for समवेताश् ). Ś1 B3 D12 सांप्रतं; Ñ V1.3 B4 D1.2.3( both times ).4.8.9 संप्रति; D5 T1 G3 सर्वशः ; G1 सं * * ( for संघशः ). —(l. 39) Ś1 Ñ V1.3 B3.4 D1–4.8.9.12 सं( V3 स )पर्यटं( B3.4 °यं )ते च; D7 चैव प्रलीयंते.

उपपन्नाश्च संध्ये द्वे व्याहरन्त्यशिवं शिवाः । [ 40 ]
क्रव्यादानां मृगाणां च पुरीद्वारेषु संघशः ।
श्रूयन्ते विपुला घोषाः सविस्फूर्जितनिस्वनाः ।
तदेवं प्रस्तुते कार्ये प्रायश्चित्तमिदं क्षमम् ।
रोचते वीर वैदेही राघवाय प्रदीयताम् ।
इदं च यदि वा मोहाल्लोभाद्वा व्याहृतं मया । [ 45 ]
तत्रापि च महाराज न रोषं कर्तुमर्हसि ।
अयं हि दोषः सर्वस्य जनस्यास्योपलक्ष्यते ।
रक्षसां राक्षसीनां च पुरस्यान्तःपुरस्य च ।
श्रावणे चास्य मन्त्रस्य निवृत्ताः सर्वमन्त्रिणः ।
अवश्यं च मया वाच्यं यद्दृष्टमपि वा श्रुतम् । [ 50 ]
संप्रधार्य यथान्यायं तद्भवान्कर्तुमर्हति ।
इति स्म मन्त्रिणां मध्ये भ्राता भ्रातरमूचिवान् ।
रावणं रक्षसां श्रेष्ठं पथ्यमेतद्विभीषणः ।
हितं महार्थं मृदु हेतुसंहितं
व्यतीतकालायतिसंप्रतिक्षमम् ।
निशम्य तद्वाक्यमुपस्थितज्वरः [ 55 ]
प्रसङ्गवानुत्तरमेतदब्रवीत् ।
भयं न पश्यामि कुतश्चिदप्यहं
न राघवः प्राप्स्यति जातु मैथिलीम् ।
सुरैः सहेन्द्रैरपि संगतः कथं
ममाग्रतः स्थास्यति लक्ष्मणाग्रजः । [ 60 ]
इतीदमुक्त्वा सुरसैन्यनाशनो
महाबलः संयति चण्डविक्रमः ।
दशाननो भ्रातरमाप्तवादिनं
विसर्जयामास तदा विभीषणम् । [ 65 ]

Colophon

( for च परिलीयन्ते ). Ś1 Ñ V1 D1-3.7 M3 पिंडिताः ; D12 G1.3 M1.2.5 मंडिताः ( for पीडिताः ). V3 पुरे च परिमंडिताः ; B3 D8 पुरीषु परिवर्ति( D8 °पीडि )ताः ; T2 हर्म्येषु च निपीडिताः ( for the post. half ). —( l. 40 ) Ś1 Ñ V1.3 B3.4 D1.2.4.8.9 उपरक्ते; D3 अपरक्ते; D12 तपरक्ते ( for उपपन्नाश् ). D8 द्वे संध्ये ( by transp. ) ( for संध्ये द्वे ). T3 उपसन्नाश्च सर्पत्यो; M1.2 संगताश्चापि संध्ये द्वे ( for the prior half ). Ñ2 D9 [ अ ]शिवाः ( for [ अ ]शिवं ). B2 व्याहरंत्यशुभा गिरं ( for the post. half ). —( l. 41 ) L ( ed. ) शिवाक्रव्यान्- ( for क्रव्यादानां ). V1.3 क्रव्यादाश्च शृगालाश्च ( for the prior half ). V1 B4 D6.7.9 T2.3 M1.3 पुर- ( for पुरी- ). D7 G3 M5 सर्वशः ( for संघशः ). Ś1 Ñ V1.3 B3.4 D1-4.8.9.12 -द्वारि( D3.4 °रे ) समंततः ( for -द्वारेषु संघशः ). —( l. 42 ) B3 हूयंते ( for श्रूयन्ते ). G1.2 M5 शब्दाः ( for घोषाः ). Ś1 Ñ V1.3 B3.4 D1-4.8.9.12 परुषा वोराः( Ś1 D12 वाचः ) ( for विपुला घोषाः ). B3 सविस्फुरित-; D5.7 G1 M3 सविस्फूर्जथु- ( for सविस्फूर्जित- ). Ś1 Ñ V1.3 B3.4 D1-4.8.9.12 -गर्जिताः ; D6.7.10 -निःस्वनाः. —( l. 43 ) Ś1 D12 तदेव; V1 तदिदं ( for तदेवं ). Ś1 D12 [ उ ]पस्थिते; Ñ V1.3 B3.4 D1-4.8.9 प्रस्थिते ( for प्रस्तुते ). Ś1 Ñ2 V1.3 B3.4 D1-4.8.9.12 महत् ; Ñ1 मतं ( for क्षमम् ). —( l. 44 ) Ñ V1.3 B3.4 D1-4.8.9 रोचतां; D10.11 M1.3 रोचये ( for रोचते ). Ś1 D1.5.7.12 T1 G3 M3 यदि ( for वीर ). D4 om. ( hapl. ? ) प्रदीय. —( l. 45 ) Ś1 Ñ B3.4 D1-3.8.9.12 हि; V1.3 D4 M1.2 तु ( for च ). G1.2 M5 भयाद् ( for लोभाद् ). D5 T1.2 transp. मोहाल् and लोभाद्. Ś1 Ñ V1.3 B3.4 D1-4.8.9.12 स्नेहाद्वोदीरि( B4 °न्न कथि )तं मया ( for the post. half ). —( l. 46 ) Ś1 Ñ V1.3 B3.4 D1-4.8.9.12 श्रुत्वा( Ñ D9 तत्रा; B3.4 D2.4.8 अत्रा )पि( V1 D1 °त्वा तु ) खलु मे राजन् ( for the prior half ). Ñ2 D5-11 T1.2 G1.2 M3.5 दोषं; T3 द्वेषं ( for रोषं ). D8 अर्हति. —( l. 47 ) D4 तु; M3 च ( for हि ). D2 रोषः ; T2 damaged ( for दोषः ). B4 सर्वस्य; M1.2 पुरस्य ( for जनस्य ). Ś1 Ñ V1.3 B3.4 D1-4.8.9.12 [ उ ]पलक्षितः. —Ś1 Ñ V1.3 B3.4 D1-4.8.9.12 om. l. 48. —( l. 49 ) D10.11 प्रापणे ( for श्रावणे ). Ś1 Ñ V1.3 D1-4.8.9.12 प्रापणे( D8.9 °येण ) ह्यस्य कार्यस्य; B3.4 अपेक्षायास्य कार्यस्य; D6 T2.3 G1.2 M1.2.5 प्राप( T2 G1 श्रव; T3 श्राव )णे चा( D6 °ना )स्य वाक्यस्य ( for the prior half ). D1.3.8 T3 निर्वृ( D3 °मि )त्तास् ( for निवृत्ताः ). Ś1 Ñ2 D12 ते च; Ñ1 V3 B3.4 D2-4.8.9 M1.2 तव; D1 एव ( for सर्व- ). —( l. 50 ) Ñ V1.3 B3.4 D1-4.9.12 M5 तु; D6.8.3 हि ( for च ). D7.10.11 अथ ( for अपि ). Ś1 Ñ V1.3 B3.4 D1-4.8.9.12 दृष्टं वा यदि ( D4 om. [ hapl. ] ) वा श्रुतं ( for the post. half ). —( l. 51 ) D10.11 संविधाय; G1 * * * र्यं ( for संप्रधार्यं ). D1-3 T2.3 यथान्याय्यं. Ñ B3 T2.3 M5 अर्हसि; D5 अर्ह* ( for अर्हति ). —Ś1 Ñ V1.3 B3.4 D1-4.8.9.12 om. l. 52-53. —( l. 52 ) D10.11 स्व- ; G2 वै; M5 तं ( for स्म ). D6 ऊढवान् ; T2 G3 अब्रवीत् ( for ऊचिवान् ). —( l. 53 ) D5 T1 G2.3 M3.5 राक्षस- ( for रक्षसां ). —D7 om. l. 54-57. —( l. 54 ) D5.6 T G1 इदं ( for हितं ). Ś1 Ñ V1.3 B3 D1-4.8.9.12 स ( Ś1 D1.9.12 हि; Ñ1 च ) तस्मै; B4 हि वाक्यं; T3 महांतं ( for महार्थं ). Ś1 मति( for मृदु ). Ś1 Ñ V1.3 B3.4 D1-4.8.9.12 M5 -संयुतं; T3 -संहि* ( for -संहितं ). —( l. 55 ) Ś1 Ñ V1 B4 D1-4.8.12 व्यती( Ś1 D12 °पे )तदोष- ( for व्यतीतकाल- ). B4 D5 -क्षयं ( for -क्षमम् ). V3 व्यतीतदोषं खलु चायतिक्षमं; B3 व्यतीतदोषो यदि संप्रति क्षणं. —( l. 56 ) Ś1 Ñ V3 B3.4 D1-4.8.9.12 विलक्षयन्का( V3 B4 °क्षितं का )र्यम् ; V1 विलक्ष्य तत्कार्यम् ( for निशम्य तद्वाक्यम् ). V3 उपस्थितं; D1.5 उपस्थितो ( for उपस्थित- ). Ś1 Ñ1 D2.8.12 -क्षयं( D2.8 °यः ) ; Ñ2 B4 -ज्वरं; B3 -स्वरं; D4 -[ अं ]तकः ( for -ज्वरः ). —( l. 57 ) Ś1 Ñ V1.3 B3.4 D1-4.8.9.12 प्रसन्नवागुत्तर( V3 °स्बांधव )मुक्तवानिदं. —( l. 58 ) B3 प्रपश्यामि ( for न पश्यामि ). V1.3 कुतस्तवागतं; B4 G1 कदाचिद( G1 damaged )प्यहं ( for कुतश्चिदप्यहं ). —( l. 59 ) D1 G1 जानकीं ( for मैथिलीम् ). —( l. 60 ) Ś1 सुरेंद्रैर् ; V1.3 D1 महेंद्रैर् ( for सहेन्द्रैर् ). D2 संततः ; D9 संयतैः ; D10.11 संगरे ( for संगतः ). —Ś1 Ñ V1.3 B3.4 D1-4.8.9.12 om. l. 62-65. —( l. 62 ) D7.10.11 इत्येवम्. T3 -शासनो ( for -नाशनो ). —( l. 65 ) D7 T3 M5 गृहाद् ; D11 om. ( for तदा ).

स बभूव कृशो राजा मैथिलीकाममोहितः ।
असंमानाच्च सुहृदां पापः पापेन कर्मणा ।
अतीवकामसम्पन्नो वैदेहीमनुचिन्तयन् ।
अतीतसमये काले तस्मिन्वै युधि रावणः ।
अमात्यैश्च सुहृद्भिश्च प्राप्तकालममन्यत । [ 70 ]
स हेमजालविततं मणिविद्रुमभूषितम् ।
उपगम्य विनीताश्वमारुरोह महारथम् ।
तमास्थाय रथश्रेष्ठं महामेघसमस्वनम् ।
प्रययौ राक्षसश्रेष्ठो दशग्रीवः सभां प्रति ।
असिचर्मधरा योधाः सर्वायुधधरास्ततः । [ 75 ]
राक्षसा राक्षसेन्द्रस्य पुरस्तात्संप्रतस्थिरे ।
नानाविकृतवेषाश्च नानाभूषणभूषिताः ।
पार्श्वतः पृष्ठतश्चैनं परिवार्य ययुस्तदा ।
रथैश्चातिरथाः शीघ्रं मत्तैश्च वरवारणैः ।
अनूत्पेतुर्दशग्रीवमाक्रीडद्भिश्च वाजिभिः । [ 80 ]
गदापरिघहस्ताश्च शक्तितोमरपाणयः ।
परश्वधधराश्चान्ये तथान्ये शूलपाणयः ।
ततस्तूर्यसहस्राणां संजज्ञे निस्वनो महान् ।
तुमुलः शङ्खशब्दश्च सभां गच्छति रावणे ।
स नेमिघोषेण महान्सहसाभिविनादयन् । [ 85 ]
राजमार्गं श्रिया जुष्टं प्रतिपेदे महारथः ।
विमलं चातपत्राणं प्रगृहीतमशोभत ।
पाण्डुरं राक्षसेन्द्रस्य पूर्णस्ताराधिपो यथा ।
हेममञ्जरिगर्भे च शुद्धस्फटिकविग्रहे ।
चामरव्यजने तस्य रेजतुः सव्यदक्षिणे । [ 90 ]
ते कृताञ्जलयः सर्वे रथस्थं पृथिवीस्थिताः ।
राक्षसा राक्षसश्रेष्ठं शिरोभिस्तं ववन्दिरे ।
राक्षसैः स्तूयमानः सञ्जयाशीर्भिररिंदमः ।
आससाद महातेजाः सभां विरचितां शुभाम् ।
सुवर्णरजतास्तीर्णां विशुद्धस्फटिकान्तराम् । [ 95 ]
विराजमानां वपुषा रुक्मपट्टोत्तरच्छदाम् ।
तां पिशाचशतैः षड्भिरभिगुप्तां सदा सभाम् ।
प्रविवेश महातेजाः सुकृतां विश्वकर्मणा ।
तस्यां तु वैदूर्यमयं प्रियकाजिनसंवृतम् ।
महत्सोपाश्रयं भेजे रावणः परमासनम् । [ 100 ]
ततः शशासेश्वरवद्दूताँल्लघुपराक्रमान् ।
समानयत मे क्षिप्रमिहैतान्राक्षसानिति ।
कृत्यमस्ति महज्जातं समर्थमिह नो महत् ।
राक्षसास्तद्वचः श्रुत्वा लङ्कायां परिचक्रमुः ।
अनुगेहमवस्थाय विहारशयनेषु च । [ 105 ]

Colophon. —*Kāṇḍa name*: Ñ V1.3 B3.4 D1.4–9 सुंदरकाण्डे. —*Sarga name*: Ś1 D1.3.12 विभीषणवाक्यं; Ñ B3.4 D2.9 औत्पाति( B4 °त्पत्ति )कवर्णनं; V1.3 औत्पातिकदर्शनं ( V1 °कनिवेदनं ); D4 उत्पातिकः; D8 औत्पातिकः. —*Sarga no.* ( figures, words or both ) : Ñ1 B3 D1.3.4.8.12 om.; Ś1 77; Ñ2 D9 80; V1 75; V3 68; B4 82; D3 83; D5–7.10.11 T1.3 G M 10; T2 9; L ( ed. ) 76. —After colophon, D2 concludes with राम; G M1.2.5 with श्रीरामाय नमः.

—( l. 66 ) D7 ततो; G2 क्षरो ( for कृशो ). —( l. 67 ) D10.11 T2.3 असन्मानाच्. —D5.6 T G1.3 M2.3.5 om. ( hapl. ? ) l. 68. —( l. 68 ) G2 अतीतकाल- ( for अतीवकाम- ). —G2 om. ( hapl. ? ) l. 69. —( l. 69 ) D7 -कालसमये ( for -समये काले ). D6 T2.3 वैश्रवणानुजः; D7 अहनि रावणः ( for वै युधि रावणः ). —( l. 70 ) D7 G1.2 M3 मंत्रकालम्; M5 प्राप्तं मंत्रम् ( for प्राप्तकालम् ). —( l. 72 ) D7 M5 उपागम्य. —( l. 73 ) G1 damaged from थं up to second म. M5 -स्वस्वनं ( for -समस्वनम् ). —( l. 74 ) D6.7.10.11 T2 रक्षसां ( for राक्षस- ). —( l. 75 ) D5 T1 G3 तदा; D6 T2.3 M3 तथा ( for ततः ). —( l. 76 ) M3 पुरतः ( for पुरस्तात् ). —( l. 78 ) D6 [ प ]व ( for [ प ]नं ). T3 तथा; M3 ततः ( for तदा ). —( l. 79 ) D5 M5 [ अ ]तिरथान् ( M5 °थैश् ) ( for °रथाः ). M5 चैनं ( for शीघ्रं ). —( l. 80 ) M1.2 अनुजग्मुर् ( for अनूत्पेतुर् ). —M5 om. l. 81. D6 T3 G1.2 M2 read l. 81–82 after l. 84, while M1 reads l. 81 only. —D10.11 G2 om. ( hapl. ) l. 82. —( l. 82 ) T3 M1 -रथाश् ( for -धराश् ). D6 चैव ( for चान्ये ). —M5 om. l. 83–84. —( l. 83 ) D6.7 निःस्वनो. —( l. 84 ) D7 -शब्दैश्च ( for -शब्दश्च ). D6 T2.3 G3 तुमुलाः शंखशब्दाश्च ( for the prior half ). —( l. 85 ) G1 महीं ( for महान् ). M1.2 महता ( for सहसा ). D5–7.10.11 T3 -निनादयन्; M5 -व्यनादयन् ( for -विनादयन् ). —( l. 87 ) D10.11 [ आ ]तपत्रं च; M5 [ आ ]तपत्रौघं ( for [ आ ]तपत्राणं ). —( l. 88 ) T1 G M1–3 पांडरं; M5 विमलं ( for पाण्डुरं ). D6 reads in marg. राक्षसेन्द्रस्य पूर्णस्ता. —( l. 89 ) D5.6 T G3 M1.5 शुक्र-; G2 शुभ्र- ( for शुद्ध- ). —( l. 90 ) D5 G3 M3 चास्य ( for तस्य ). D5 T1 G M1.2.5 सव्यदक्षिणं. —( l. 91 ) G2 कृतांजलिपुटाः सर्वे ( for the prior half ). —( l. 92 ) D6 reads in marg. राक्षसा. —( l. 94 ) D6 G3 M3 सुविहितां; D10 विचरितां ( meta. ); M5 सुनिहितां ( for विरचितां ). D10.11 तदा ( for शुभाम् ). —( l. 95 ) D5 T1 M2 -रजतस्थूणां; D6 T2 -रज( T2 °त्रि )-तस्तंभां; D7 -रजताकीर्णां. —( l. 96 ) D6.10.11 T2.3 M2 विराजमानो. M5 रत्न- ( for रुक्म- ). —( l. 97 ) D6 शुभां सदा; D7 सभां तदा; D10.11 सदाप्रभां; T2 M1.2.5 सभां सदा ( by transp. ); M3 सदा शुभां ( for सदा सभाम् ). —( l. 99 ) D10.11 तस्याः. D6.10.11 T2.3 M1.2 स; D7 च; M5 om. ( subm. ) ( for तु ). D5.6.10.11 T G1.3 M वैडूर्यमयं. G2 तस्यां वैडूर्यरचितं ( for the prior half ). —( l. 100 ) G1 M1.2 सापाश्रयं ( for सोपाश्रयं ). —( l. 101 ) M5 राजेंद्रो ( for [ ई ]श्वरवद् ). —( l. 102 ) D5 T1 तान् ( for [ ए ]तान् ). —( l. 103 ) T2 कृतम् ( for कृत्यम् ). T2 मम; M5 अस्मिन् ( for अस्ति ). D10.11 जाने ( for जातं ). D6.7 T3 सामर्थ्यम् ( for समर्थम् ). D6.7 इति ( for इह ). D5 G2.3 M5 भवेत् ( for महत् ). D10.11 कर्तव्यमिति शत्रुभिः; T1 सम * * * * * * त् ( damaged ); T3 समर्थयति नो महान् ( for the post. half ). —( l. 104 ) D5.6 T1.3 वचनं ( for तद्वचः ). M5 उपचक्रमुः. —( l. 105 ) D5 अनु-

उद्यानेषु च रक्षांसि चोदयन्तो ह्यभीतवत् ।
ते रथान्रुचिरानेके दृप्तानेके पृथग्घयान् ।
नागानेकेऽधिरुरुहुर्जग्मुश्चैके पदातयः ।
सा पुरी परमाकीर्णा रथकुञ्जरवाजिभिः ।
संपतद्भिर्विरुरुचे गरुत्मद्भिरिवाम्बरम् । [ 110 ]
ते वाहनान्यवस्थाप्य यानानि विविधानि च ।
सभां पद्भिः प्रविविशुः सिंहा गिरिगुहामिव ।
राज्ञः पादौ गृहीत्वा तु राज्ञा ते प्रतिपूजिताः ।
पीठेष्वन्ये बृसीष्वन्ये भूमौ केचिदुपाविशन् ।
ते समेत्य सभायां वै राक्षसा राजशासनात् । [ 115 ]
यथार्हमुपतस्थुस्ते रावणं राक्षसाधिपम् ।
मन्त्रिणश्च यथामुख्या निश्चयार्थेषु पण्डिताः ।
अमात्याश्च गुणोपेताः सर्वज्ञा बुद्धिदर्शनाः ।
समेयुस्तत्र शतशः शूराश्च बहवस्तदा ।
सभायां हेमवर्णायां सर्वार्थस्य सुखाय वै । [ 120 ]
रम्यायां राक्षसेन्द्रस्य समेयुस्तत्र संघशः ।
ततो महात्मा विपुलं सुयुग्यं
वरं रथं हेमविचित्रिताङ्गम् ।
शुभं समास्थाय ययौ यशस्वी
विभीषणः संसदमग्रजस्य । [ 125 ]
स पूर्वजायावरजः शशंस
नामाथ पश्चाच्चरणौ ववन्दे ।
शुकः प्रहस्तश्च तथैव तेभ्यो
ददौ यथार्हं पृथगासनानि ।
सुवर्णनानामणिभूषणानां
सुवाससां संसदि राक्षसानाम् । [ 130 ]
तेषां परार्ध्यागरुचन्दनानां
स्रजश्च गन्धाः प्रववुः समन्तात् ।
न चुक्रुशुर्नानृतमाह कश्चि-
त्सभासदो नापि जजल्पुरुच्चैः ।
संसिद्धार्थाः सर्व एवोग्रवीर्या [ 135 ]
भर्तुः सर्वे ददृशुश्चाननं ते ।
स रावणः शस्त्रभृतां मनस्विनां
महाबलानां समितौ मनस्वी ।
तस्यां सभायां प्रभया चकाशे
मध्ये वसूनामिव वज्रहस्तः । [ 140 ]

Colophon

स तां परिषदं कृत्स्नां समीक्ष्य समितिंजयः ।
प्रचोदयामास तदा प्रहस्तं वाहिनीपतिम् ।
सेनापते यथा ते स्युः कृतविद्याश्चतुर्विधाः ।
योधान्नगररक्षायां तथा व्यादेष्टुमर्हसि । [ 145 ]
स प्रहस्तः प्रणीतात्मा चिकीर्षन्राजशासनम् ।
विनिक्षिप्य बलं सर्वं बहिरन्तश्च मन्दिरे ।

ङ्गम्. D5 T1 उपस्थाय ( for अवस्थाय ). —( l. 106 ) M3 चोदयंति. G2 M5 विभीतवत् ( for ह्यभीतवत् ). —( l. 107 ) M1.2 रथांस्तु ( for ते रथान् ). D5 ते रथान्नविरानेके; D10.11 ते रथांतचरा एके; G1 रथांतरचरा ह्येके ( for the prior half ). D7 दृष्टान् ( for दृप्तान् ). M1 अन्ये ( for एके ). D5.10.11 दृप्तान्हयान्; M1.2 हयोत्तमान् ( for पृथग्घयान् ). —( l. 108 ) D5 T1 G3 गजान् ( for नागान् ). D6 T2.3 G1 M3.5 अन्ये ( for first एके ). M5 [ ऽ ]पि ( for ऽधि- ). M5 चान्ये ( for चैके ). —( l. 110 ) T1 damaged for रुत्मद्भिरि. —( l. 111 ) D5.7.10.11 [ अ ]वस्थाय ( for [ अ ]वस्थाप्य ). —( l. 112 ) T3 सद्भिः ( for पद्भिः ). G1 विविविशुः . —( l. 113 ) D5 T1 गृहीत्वा ते; G1 नमस्कृत्वा ( for गृहीत्वा तु ). —( l. 116 ) D5 T1 तं ( for ते ). —( l. 117 ) D6.10.11 M5 निश्चितार्थेषु; D7 निश्चयार्थे तु. —( l. 118 ) T1 -दर्शिनः; T2 -दर्शनात्; M1.2 -निश्चये ( for -दर्शनाः ). —( l. 119 ) D10.11 समीयुस्. D6 T2.3 M1.2 बहवः; G1 सदृशः ( for शतशः ). D5–7.10.11 T3 M5 तथा ( for तदा ). T2 M1.2 शूराः शतसहस्रशः ( for the post. half ). —( l. 120 ) D6 T2 सर्वेषां च ( for सर्वार्थस्य ). D7 च ( for वै ). —D10.11 om. l. 121. —After l. 121, M3 K ( ed. within brackets ) ins. :

5* राक्षसा राक्षसश्रेष्ठं परिवार्योपतस्थिरे ।

—( l. 123 ) T1 damaged from रथं up to चि. D6.10.11 T2 रथं वरं ( by transp. ); T3 रथं परं ( for वरं रथं ). G2 -विचित्रितं शुभं ( for -विचित्रिताङ्गम् ). D7 M1.2.5 वराईजांबूनदचित्रि( D7 °हि )तांगं; G1 वराईमेकं सुविचित्रितांगं. —( l. 124 ) D7 G3 M1.2 रथं ( for शुभं ). G2 ततो ( for ययौ ). G1.2 यशस्विनो ( for यशस्वी ). —( l. 128 ) B ( ed. ? ) शुकः ( for शुकः ). D6.7 T3 शुकप्रहस्तौ च. —( l. 130 ) G1.2 -भूषितानां ( for -भूषणानां ). —( l. 132 ) D7 -[ अ ]गुरु- ( for -[ अ ]गरु- ). —( l. 133 ) D7.10.11 T2 G1.2 M1.2 स्रजां ( for स्रजश् ). D5 T1 G3 M3 च ववुः; M5 प्रययुः ( for प्रववुः ). —( l. 135 ) D5 T1 G3 M3 नैव; D6 T2 M1.2 नाति- ( for नापि ). —( l. 136 ) D7 [ अ ]ग्रवीर्याः; M1.2 [ उ ]ग्रवीरा ( for [ उ ]ग्रवीर्याः ). —( l. 137 ) D5 T1 G3 भर्तुः सर्वे तेभ्य( G3 ते ह्य )पश्यन्मुखानि. —After l. 137, D6 T2 ins. :

6* तेजोयुक्ताः पावकार्काभनेत्राः
सूर्योपान्ते मेघसंघा यथैव ।
[ ( l. 2 ) तथैव ( for यथैव ). ]

—( l. 138 ) D6 T3 G1 शा( G1 श )स्त्रविदां; G2 सर्वविदां ( for शस्त्रभृतां ). —( l. 139 ) T2.3 सहितो ( for समितौ ). —( l. 140 ) D5 om. भया च. —( l. 141 ) G2 M5 वज्रपाणिः.

Colophon. —*Sarga no.* ( figures, words or both ): D5–7.10.11 T1.3 G M 11; T2 10. —After colophon, G M conclude with श्रीरामाय नमः.

—( l. 143 ) D10.11 प्रबोधयामास. —( l. 144 ) T2.3 तथुः ( for ते स्युः ). D5 T1 कृतविद्यांश्चतुर्विधान् ( for the post. half ). —( l. 145 ) D6.7.10.11 T2 योधा ( for योधान् ). D6 अधिक-; M1.2 त्वं पुर-; M3 अधिक- ( for नगर- ). T3 G2 -रक्षायै; G3 M5 -रक्षार्थं ( for -रक्षायां ). T3 [ अ ]प्यादेष्टुम्; M1.2 ह्यादेष्टुम् ( for व्यादेष्टुम् ). —( l. 146 ) G3 प्रणीतार्थो ( for प्रणीतात्मा ). G2 M5 चिकीर्षू ( for चिकीर्षन् ). —( l. 147 )

ततो विनिक्षिप्य बलं तदा नगरगुप्तये।
प्रहस्तः प्रमुखे राज्ञो निषसाद जगाद च।
विहितं बहिरन्तश्च बलं बलवतस्तव। [ 150 ]
कुरुष्वाविमनाः क्षिप्रं यदभिप्रेतमस्ति ते।
प्रहस्तस्य वचः श्रुत्वा राजा राज्यहितैषिणः।
सुखेप्सुः सुहृदां मध्ये व्याजहार स रावणः।
प्रियाप्रिये सुखे दुःखे लाभालाभे हिताहिते।
धर्मकामार्थकृच्छ्रेषु यूयमर्हथ वेदितुम्। [ 155 ]
सर्वकृत्यानि युष्माभिः समारब्धानि सर्वदा।
मन्त्रकर्मनियुक्तानि न जातु विफलानि मे।
ससोमग्रहनक्षत्रैर्मरुद्भिरिव वासवः।
भवद्भिरहमत्यर्थं वृतः श्रियमवाप्नुयाम्।
अहं तु खलु सर्वान्वः समर्थयितुमुद्यतः। [ 160 ]
कुम्भकर्णस्य तु स्वप्नान्नेममर्थमचोदयम्।
अयं हि सुप्तः षण्मासान्कुम्भकर्णो महाबलः।
सर्वशस्त्रभृतां मुख्यः स इदानीमुपस्थितः।
इयं च दण्डकारण्याद्रामस्य महिषी प्रिया।
रक्षोभिश्चरितोद्देशादानीता जनकात्मजा। [ 165 ]
सा मे न शय्यामारोढुमिच्छत्यलसगामिनी।
त्रिषु लोकेषु चान्या मे न सीतासदृशी मता।
तनुमध्या पृथुश्रोणी शारदेन्दुनिभानना।
हेमबिम्बनिभा सौम्या मायेव मयनिर्मिता।
सुलोहिततलौ श्लक्ष्णौ चरणौ सुप्रतिष्ठितौ। [ 170 ]
दृष्ट्वा ताम्रनखौ तस्या दीप्यते मे शरीरजः।
हुताग्नेरर्चिसंकाशामेनां सौरीमिव प्रभाम्।
दृष्ट्वा सीतां विशालाक्षीं कामस्य वशमेयिवान्।
उन्नसं वदनं वल्गु विपुलं चारुलोचनम्।
पश्यंस्तदवशस्तस्याः कामस्य वशमेयिवान्। [ 175 ]
क्रोधहर्षसमानेन दुर्वर्णकरणेन च।
शोकसंतापनित्येन कामेन कलुषीकृतः।
सा तु संवत्सरं कालं मामयाचत भामिनी।
प्रतीक्षमाणा भर्तारं राममायतलोचना।
तन्मया चारुनेत्रायाः प्रतिज्ञातं वचः शुभम्। [ 180 ]
श्रान्तोऽहं सततं कामाद्यातो हय इवाध्वनि।
कथं सागरमक्षोभ्यमुत्तरन्ति वनौकसः।
बहुसत्त्वसमाकीर्णं तौ वा दशरथात्मजौ।
अथ वा कपिनैकेन कृतं नः कदनं महत्।
दुर्ज्ञेयाः कार्यगतयो ब्रूत यस्य यथामति। [ 185 ]
मानुषान्मे भयं नास्ति तथापि तु विमृश्यताम्।
तदा देवासुरे युद्धे युष्माभिः सहितोऽजयम्।
ते मे भवन्तश्च तथा सुग्रीवप्रमुखान्हरीन्।
परे पारे समुद्रस्य पुरस्कृत्य नृपात्मजौ।
सीतायाः पदवीं वीरौ संप्राप्तौ वरुणालयम्। [ 190 ]
अदेया च यथा सीता वध्यौ दशरथात्मजौ।
भवद्भिर्मन्त्र्यतां मन्त्रः सुनीतं चाभिधीयताम्।
न हि शक्तिं प्रपश्यामि जगत्यन्यस्य कस्यचित्।
सागरं वानरैस्तीर्त्वा निश्चयेन जयो मम।
तस्य कामपरीतस्य निशम्य परिदेवितम्। [ 195 ]
कुम्भकर्णः प्रचुक्रोध वचनं चेदमब्रवीत्।

---

D6 विनिक्षिप्तं; M1 निक्षिप्तवान्; M2 विनिक्षिप्तवान् ( hypm. ); M3 विनिक्षिपद् ( for विनिक्षिप्य ).—( l. 148 ) D5.7 T1 G3 M3 पृथङ्; D10.11 सर्वं ( for तदा ). T1 नागर- ( for नगर- ). —( l. 149 ) D5 G2.3 प्रमुखो ( for प्रमुखे ). M5 ह. —( l. 150 ) T2 M3 निहितं ( for विहितं ). G3 च मया सर्वं ( for बहिरन्तश्च ).—( l. 151 ) D6.7 T2.3 M1.2.5 कार्यं ( for क्षिप्रं ). D6 T3 M3.5 अस्तु ( for अस्ति ). —( l. 152 ) D5 T1 प्रहस्तवचनं; G2.3 स प्रहस्तवचः ( for प्रहस्तस्य वचः ). T2.3 M1.2 राज- ( for राज्य- ). D5 T1 M3 -हिते रतः; G1.3 -हितैषिणां. —( l. 154 ) D6 T3 M3 सुखं दुःखं. D5.6.10.11 T1.2 M3.5 लाभालाभौ ( for लाभालाभे ). —( l. 155 ) M5 धर्मकार्य-. —( l. 156 ) M5 सर्वथा. —( l. 157 ) M3 -कर्मणि ( for -कर्मनि- ). D6 विफलाय ( for विफलानि ). —( l. 159 ) D7 अतः; G3 कृतः ( for वृतः ). —( l. 160 ) T3 नु ( for तु ). T1.3 नः ( for वः ). —( l. 161 ) M5 स्वप्नात्तन् ( for तु स्वप्नान् ). T3 स्वप्न इमं ( for स्वप्नान्नेमम् ). D6 T3 चार्थम् ( for अर्थम् ). —( l. 163 ) D6.10.11 T2 M3 समुत्थितः ( for उपस्थितः ). —( l. 164 ) M1.2 तु ( for च ). —( l. 165 ) M3 चरितात्. —( l. 167 ) D5.7.10.11 तथा ( for मता ). —( l. 168 ) D10.11 G1 शरदिंदु- ( for शारदेन्दु- ). —( l. 170 ) D6 सलोहित-. —( l. 172 ) D10.11 T3 हुताग्निर्. D5 T1 G2.3 हेति-; D10.11 आर्चिः-; T3 इव; M1.2 दीप्त- ( for अर्चि- ). T3 हुताग्निवर्चःसंकाशाम् ( for the prior half ). T3 नारीम् ( for सौरीम् ). ※ Cg : अर्चिः शब्दस्य इकारान्तत्वमार्षम्. ※ —D5.7.10.11 T1.2 G1 om. l. 173. —( l. 174 ) D10.11 T2.3 G3 M1.2.5 विमलं ( for वदनं ). D7 G1 विमलं; D10.11 T2.3 G3 M1.2.5 वदनं ( for विपुलं ). D6 transp. वदनं and विपुलं. T1 चारुशोभनं. —( l. 175 ) D5 T1 M3 तदा ( for तद् ). D5 कामेन ( for कामस्य ). M1.2 आगतः ( for एयिवान् ). —( l. 181 ) T3 श्रांतोहं. D6 T3 अनिशं ( for सततं ). —( l. 182 ) D7.10.11 तरिष्यंति; M5 तारयंति ( for उत्तरन्ति ). —( l. 183 ) T3 बहुसत्त्वं ( for °सत्त्व- ). D10.11 T3 G1 M5 -समाकीर्णे ( for -समाकीर्णं ). G2 M5 नरवर- ( for दशरथ- ). —( l. 184 ) D6 T1 G1.3 अपि ( for अथ ). —( l. 186 ) D10.11 नो ( for मे ). T3 मानुषात्ते ( for मानुषान्मे ). T3 तथापि नु-; G1 तथामते ( for तथापि तु ). —( l. 187 ) T2.3 तथा; M1.5 पुरा ( for तदा ). D5 T1.3 दैवासुरे( T3 °रे ) ( for देवासुरे ). G1 जयः ( for ऽजयम् ). —( l. 188 ) G2 तन्मे; M5 सर्वे ( for ते मे ). M5 शृण्वंतु ( for च तथा ). G3 M5 कपीन् ( for हरीन् ). —( l. 189 ) T3 transp. समुद्रस्य and पुरस्कृत्य. —( l. 190 ) D10.11 प्राप्य; G2 M1.5 प्राप्तौ ( for वीरौ ). M5 वीरौ च ( for संप्राप्तौ ). —( l. 192 ) D5 सुनीतश्च; T1 सुनीतिश्च; T3 सुयुक्तं; M1.2 सुनीतिं ( for सुनीतं ). T3 चाभि-; G1 अभि-; M5 च वि- ( for चाभि- ). —( l. 193 ) M5 जगत्यां यस्य ( for °त्यन्यस्य ). —( l. 194 ) D6 T3 निःसंगेन जये मम; G1.3 निश्चयो न जये मम ( for the post. half ). —( l. 196 ) G1 सुचुक्रोध

यदा तु रामस्य सलक्ष्मणस्य
प्रसह्य सीता खलु सा इहाहृता।
सकृत्समीक्ष्यैव सुनिश्चितं तदा
भजेत चित्तं यमुनेव यामुनम्। [ 200 ]
सर्वमेतन्महाराज कृतमप्रतिमं तव ।
विधीयेत सहास्माभिरादावेवास्य कर्मणः ।
न्यायेन राजकार्याणि यः करोति दशानन ।
न स संतप्यते पश्चान्निश्चितार्थमतिर्नृपः ।
अनुपायेन कर्माणि विपरीतानि यानि च । [ 205 ]
क्रियमाणानि दुष्यन्ति हवींष्यप्रयतेष्विव ।
यः पश्चात्पूर्वकार्याणि कर्माण्यभिचिकीर्षति ।
पूर्वं चापरकार्याणि स न वेद नयानयौ ।
चपलस्य तु कृत्येषु प्रसमीक्ष्याधिकं बलम् ।
क्षिप्रमन्ये प्रपद्यन्ते क्रौञ्चस्य खमिव द्विजाः। [ 210 ]
त्वयेदं महदारब्धं कार्यमप्रतिचिन्तितम् ।
दिष्ट्या त्वां नावधीद्रामो विषमिश्रमिवामिषम् ।
तस्मात्त्वया समारब्धं कर्म ह्यप्रतिमं परैः ।
अहं समीकरिष्यामि हत्वा शत्रूंस्तवानघ ।
अहमुत्सादयिष्यामि शत्रूंस्तव विशां पते ।
यदि शक्रविवस्वन्तौ यदि पावकमारुतौ । [ 215 ]
तावहं योधयिष्यामि कुबेरवरुणावपि ।
गिरिमात्रशरीरस्य महापरिघयोधिनः ।
नर्दतस्तीक्ष्णदंष्ट्रस्य बिभीयाद्वै पुरंदरः ।
पुनर्मां स द्वितीयेन शरेण निहनिष्यति ।
ततोऽहं तस्य पास्यामि रुधिरं काममाश्वस । [ 220 ]
वधेन वै दाशरथेः सुखावहं
जयं तवाहर्तुमहं यतिष्ये ।
हत्वा च रामं सह लक्ष्मणेन
खादामि सर्वान्हरियूथमुख्यान् । [ 225 ]
रमस्व कामं पिब चाग्र्यवारुणीं
कुरुष्व कार्याणि हितानि विज्वरः ।
मया तु रामे गमिते यमक्षयं
चिराय सीता वशगा भविष्यति ।

Colophon

रावणं क्रुद्धमाज्ञाय महापार्श्वो महाबलः । [ 230 ]

---

( for प्रचुक्रोध ). —After l. 196, $G_{2.3}$ $M_5$ K ( ed. within brackets ) ins.:

7* संप्रधार्यैव तत्कार्यं करणीयं त्वया विभो ।
संप्रधार्य सहास्माभिः पूर्वमेव यथातथम् ।

[ (l. 2) $M_5$ सहामात्यैः (for सहास्माभिः). $G_2$ यथा तथा ( for यथातथम् ). ]

—(l. 198 ) Note hiatus between सा and इह. $D_6$ $T_3$ ते ( for सा ). $M_1$ त्वया हृता ( for इहा° ). —( l. 199 ) $D_5$ $T_3$ तथा ( for तदा ). —(l. 201 ) $T_3$ मया राजन् ( for महाराज ). —( l. 202 ) $D_7$ $T_2$ $G_1$ विधीयते; $T_3$ विदधीय ( for विधीयेत ). $G_1$ आरादेव ( for आदावेव ). —(l. 203 ) $T_2$ राजा. $D_6$ -कर्माणि ( for -कार्याणि ). —$G_1$ om. ( hapl. ) from the post. half up to the prior half of l. 207. —(l. 204) $D_7$ तस्मान् ( for पश्चान् ). —(l. 205 ) $M_5$ कार्याणि ( for कर्माणि ). —(l. 206 ) $D_5$ हविष्यं प्रयतेष्विह ( for the post. half ). —(l. 207 ) $G_1$ यः कर्माणि चिकीर्षति; $G_2$ कुरुते मोहमास्थितः; $M_5$ कुरुते बुद्धिमोहितः ( for the post. half ). —(l. 208 ) $D_6$ $T_3$ $G_2$ [ उ ]त्तर- ( for [ अ ]पर- ). $D_{5.6}$ $T_{2.3}$ $G_{2.3}$ $M_{3.5}$ न स ( by transp. ). —(l. 209 ) $T_3$ चलितस्य ( for चपलस्य ). $T_3$ $G_1$ $M_{1.2.5}$ च ( for तु ). $D_6$ कृत्ये तु ( for कृत्येषु ). $T_2$ फलं ( for बलम् ). —(l. 210 ) $D_{6.10.11}$ $T_2$ $G_2$ छिद्रम् ( for क्षिप्रम् ). $T_2$ प्रदृश्यंते ( for प्रपद्यन्ते ). —(l. 211 ) $T_2$ om. ( hapl. ) from the post. half up to the prior half of l. 213. $T_3$ कार्यं त्रिविधसंहितं; $G_2$ कार्यं प्रतिचिकीर्षता ( for the post. half ). —(l. 212 ) $D_5$ दृष्ट्वा ( for दिष्ट्या ). —(l. 213 ) $G_2$ $M_{1.2}$ कर्मणि ( for कर्म हि ). —(l. 214 ) $D_5$ त्वया ( for तव ). —(l. 215 ) $T_2$ उत्पाटयिष्यामि. $D_{10.11}$ निशाचर ( for विशां पते ). —(l. 216 ) $G_2$ मारुतपावकौ ( by transp. ). —(l. 218 ) $T_3$ गदा- ( for महा- ). $D_7$ $M_5$ शितशूलधरस्य च ( for the post. half). —(l. 219 ) $T_2$ $G_1$ नदतस् ( for नर्दतस् ). —$D_5$ om. ( hapl. ? ) from the post. half up to तस्य in l. 221. $M_{1.2}$ मे; $M_5$ च ( for वै ). —(l. 220 ) $T_3$ $M_{1.2}$ मा ( for मां ). —(l. 222 ) $T_3$ $M_{1.2}$ ते ( for वै ). $T_3$ सुखाहं; $M_{1.2}$ सुखार्हं ( for सुखावहं ). —(l. 223 ) $T_2$ तदा ( for तव ). —(l. 224 ) $M_{1.2.5}$ तु ( for च ). —(l. 225 ) $D_6$ $T_3$ -वीर- ( for -यूथ- ). —(l. 229 ) $T_1$ वशमागमिष्यति.

Colophon. —*Sarga no.* ( figures, words or both ): $D_{5-7.10.11}$ $T_{1.3}$ G M 12; $T_2$ 11. —After colophon, G $M_{1.2.5}$ conclude with श्रीरामाय नमः.

—Before l. 230, $Ś_1$ Ñ $B_4$ $D_{1-4.8.9.12}$ ins.:

8* संक्रुद्धास्ते ततस्तत्र बहवः प्रियवादिनः ।
उच्यमानाः सुबहुशश्चुक्रुशुः सहरावणाः ।
रोषाच्चान्ये प्रजहसुर्भृशमन्ये निशश्वसुः ।
समीक्ष्यान्योन्यमायस्ताश्चखादुर्दशनानपि ।

[ (l. 1 ) $Ñ_2$ illeg. for the prior half. $D_8$ सर्वे ( for तत्र ). $Ñ_2$ [ ऽ ]प्रियमीदृशं; $B_4$ $D_{2.4.8.9}$ [ ऽ ]प्रियवादिनः; $D_1$ [ ऽ ]पि प्रवादिनः ( for प्रियवादिनः ). —( l. 2 ) $Ś_1$ $D_{12}$ तु बहुशश्; $D_4$ च बहवश् ( for सुबहुशश् ). $D_{1.2.4.12}$ चुक्रुधुः ( for चुक्रुशुः ). $D_8$ ते सरावणाः ( for सहरावणाः ). —(l. 3 ) $D_1$ दोषाच्; L ( ed. ) शेषाश् ( for रोषाच् ). $Ñ_1$ $D_2$ विनिश्वसुः ( for निशश्वसुः ). —( l. 4 ) $Ś_1$ $Ñ_1$ अदशन्; $Ñ_2$ $B_4$ $D_9$ ददंशुर् ( for चखादुर् ). $Ñ_1$ $B_4$ $D_8$ दशनानि ( for दशनान् ). —$Ñ_2$ illeg. from नपि up to व ( see var. ) in the prior half of l. 230 ].

—(l. 230 ) $D_5$ $T_1$ $G_3$ आलोक्य ( for आज्ञाय ). $Ś_1$ Ñ $B_4$ $D_{1-4.8.9.12}$ तस्मिंस्त( $Ś_1$ $D_{12}$ °न्य )थोक्ते( $Ś_1$ $B_4$ $D_4$ °क्त- ).

मुहूर्तमनुसंचिन्त्य प्राञ्जलिर्वाक्यमब्रवीत् ।
यः खल्वपि वनं प्राप्य मृगव्यालनिषेवितम् ।
न पिबेन्मधु संप्राप्य स नरो बालिशो भवेत् ।
ईश्वरस्येश्वरः कोऽस्ति तव शत्रुनिबर्हण ।
रमस्व सह वैदेह्या शत्रूनाक्रम्य मूर्धसु । [235]
बलात्कुक्कुटवृत्तेन वर्तस्व सुमहाबल ।
आक्रम्याक्रम्य सीतां वै त्वं भुङ्क्ष्व च रमस्व च ।
लब्धकामस्य यत्पश्चादागमिष्यति ते भयम् ।
प्राप्तमप्राप्तकालं वा सर्वं प्रतिसहिष्यसि ।
कुम्भकर्णः सहास्माभिरिन्द्रजिच्च महाबलः । [240]
प्रतिषेधयितुं शक्तौ सवज्रमपि वज्रिणम् ।

व( N2 illeg. up to व )चने( for the prior half ). Ś1 Ñ B4 D1–4.8.9.12 प्रतापवान् ( for महाबलः ). —(l. 231 ) M5 इव (for अनु- ). Ś1 Ñ B4 D1–4.8.9.12 शिरस्यं( B4 °सां )जलिमाधा (Ś1 B4 D12 °दा )य ( for the prior half ). Ś1 Ñ B4 D1–4.8.9.12 M5 रावणं ( for प्राञ्जलिर् ). —After l. 231, Ś1 Ñ B4 D1–4.8.9.12 ins. :

9* धर्मं कामफलं विद्धि तथा शत्रुविनाशनम् ।
इन्द्रियार्थोपभोगो हि कामः सत्यपराक्रमः ।
शब्दगन्धरसस्पर्शा रूपाणि विविधानि च ।
भक्ष्यभोज्यमभिप्रेतमुचितं मनसस्तथा ।
एतन्मूलं त्रिवर्गस्य भवेद्राक्षसपुंगव । [5]
दाराश्चैवादितो मूलं सुखार्थममितौजसः ।

[ (l. 1 ) D8 काल- ( for काम- ). Ñ1 D1.2.8 पर- ( for शत्रु- ). —(l. 2 ) D3 -[ उ ]पभोगे. B4 [ ऽ ]पि ( for हि ). D1 सत्यपरायणः. —(l. 3 ) D1–4.8 -स्पर्शं-. —(l. 4 ) Ś1 D4.12 भक्ष्यं. D8 अपि श्लाघ्यम् ( for अभिप्रेतम् ). Ñ2 B4 D4.9 मुदितं; D1–3.8 उदीर्ण-( D2.8 °र्णा ) ( for उचितं ). B4 च मनस ( for मनसस् ). —(l. 6 ) Ś1 Ñ1 D12 दानम्; D1–3.8 पानम् ( for दाराश्च ). Ś1 Ñ1 D12 [ उ ]दितं. B4 राजन् ( for मूलं ). ]

—(l. 232 ) D9 पशैश्च. Ñ2 [ उ ]पवने ( for [ अ ]पि वनं ). Ś1 Ñ B4 D1–4.8.9.12 गत्वा ( for प्राप्य ). Ś1 Ñ B4 D1–4.8.9.12 दुर्ग( Ś1 Ñ1 B4 D9 °र्गं- ); G3 महा- ( for मृग- ). D2 व्याड-. D5 T M3.5 -समाकुलं ( for -निषेवितम् ). —(l. 233 ) G2 क्षण ( corrupt ) ( for मधु ). D5 T1 M3 संप्राप्तं; T2.3 मांसानि; M5 मांसादीन् ( for संप्राप्य ). T1 damaged for स नरो. —For l. 233, Ś1 Ñ B4 D1–4.8.9.12 subst. :

10* मध्वानीय न चाश्नाति मन्ये तं मूढचेतसम् ।

[ Ñ2 B4 D9 न चास्वादन् ; D1 तथाप्यत्ति; D3.4 न चाश्नाद्वै; D8 ( with hiatus ) इवोधंतं; L ( ed. ) न चाश्नाति. D1 तं मन्ये ( by transp. ) ( for मन्ये तं ). Ñ2 D8 मूढचेतनं. ]

—Then all the above MSS. cont. :

11* अनन्ते तु झषग्राहे महाजलसमागमे ।
सागरान्ते सुनियता सर्वा सुग्रीववाहिनी ।
आगम्य हृष्टमुदिताः सर्वे वानरयूथपाः ।
संस्थिता हि परे पारे दिनानि सुबहून्यपि ।

[ (l. 1 ) Ñ2 B4 D9 [ ऽ ]ति- ( for तु ). Ś1 D12 हनुमत्प्रमुखग्राहा; Ñ1 अनंते विषयग्राहे ( for the prior half ). Ñ महाजन-. D9 -निषेविते ( for -समागमे ). —(l. 2 ) D12 सागरांतेषु. Ñ2 B4 D9 निपतिता ( for सुनियता ). —(l. 3 ) Ñ2 illeg. for आगम्य. D1 हृष्टा. Ñ सर्व- ( for सर्वे ). Ñ2 B4 D9 -पुंगवाः ( for -यूथपाः ). —(l. 4 ) D1 परं पारं बलानि ( for परे पारे दिनानि ). Ñ1 D4.8 [ अ ]थ ( for [ अ ]पि ). ]

—(235 ) D5 T1.3 G3 M1.2.5 मूर्धनि ( for मूर्धसु ). —(l. 236 ) D5.6 T1.3 M1.2 वर्तयस्व; D10.11 प्रवर्तस्व ( for वर्तस्व सु- ). —(l. 237 ) G3 आक्रम्य सीतां वैदेहीं ( for the prior half ). D5.10.11 T तां ( for त्वं ). M3 तथा भुंक्ष्व ( for त्वं भुङ्क्ष्व च ). —(l. 238 ) G3 M1 -कामश्च ( for -कामस्य ). D5–7.10.11 T1.3 G2 M2.3 ते; G3 M1 यः ( for यत् ). D5 T1 G2 चेद्भयं; D7.10.11 किं भयं; M3 यद्भयं ( for ते भयम् ). —(l. 239 ) T3 M1.2 प्राप्तकालमकालं वा ( for the prior half ). —G1 om. ( hapl. ) from the post. half up to the prior half of l. 242. D5.6 -सहिष्यति; D10.11 -विधास्यसे; T1 -स * * * ( damaged ); T3 -सहिष्यसे ( for -सहिष्यसि ). —(l. 240 ) Ś1 Ñ B4 D1–4.8.9.12 कुंभकर्ण. Ś1 Ñ B4 D1–4.8.9.12 महेंद्रजित्सुत्तमं ( for the post. half ). —(l. 241 ) D6 समरे ( for सवज्रम् ). D5 इव; D8 चापि ( for अपि ). —For l. 241, Ś1 Ñ B4 D1–4.8.9.12 subst. :

12* युद्धे विषहितुं शक्तः स्वयं नाप्यमरेश्वरः ।

[ D8 युद्धेन सोढुं कः शक्तः ( for the prior half ). Ś1 Ñ1 D8.9 च; Ñ2 B4 वा ( for न ). Ñ2 B4 D4.9 महेश्वरः. ]

—Then all the above MSS. cont. :

13* अन्तःपुरविहारेषु गुह्येष्वाम्रवनेषु च ।
चारुवर्हिणजुष्टेषु रमस्व सह सीतया ।
विज्ञाय तं महाबुद्धिः कुपितं राक्षसेश्वरम् ।
परमोदग्रया वाचा विभीषणमुवाच ह ।
न विभीषण राजानं परुषं वक्तुमर्हसि । [5]
क्रुद्धस्त्वेष महात्मा वै दहेदग्निरिवेन्धनम् ।
स्त्रीरत्नमतुलं लब्ध्वा सीतां प्राणसमां कथम् ।
द्विषते संप्रयच्छेति ब्रुवन्दोषं न बुध्यसे ।
न च साध्वयकं बाल्याच्छक्नोति विनिगूहितुम् ।
विषत्ते मनसो दोषं ब्रुवन्नेवं न बुध्यसे । [10]
कामं खमाक्रम्य पुरा विकारो
न त्वेष वै संक्रमते शुभानाम् ।
न दुष्टसंकल्पमतोऽविशुद्धं
क्षमाम राज्ञो नृपतिर्विकामाः ।
एवं च राजा बलवान्नृशंस- [15]
मनार्यकर्म क्षमते हि विप्राः ।
तस्मात्र ते संनिपतन्ति दण्डाः
छिताः शरीरे न पतन्ति बाणाः ।

उपप्रदानं सान्त्वं वा भेदं वा कुशलैः कृतम् ।
समतिक्रम्य दण्डेन सिद्धिमर्थेषु रोचय ।
इह प्राप्तान्वयं सर्वाञ्शत्रूंस्तव महाबल ।
वशे शस्त्रप्रतापेन करिष्यामो न संशयः । [245]
एवमुक्तस्तदा राजा महापार्श्वेन रावणः ।
तस्य संपूजयन्वाक्यमिदं वचनमब्रवीत् ।
महापार्श्व निबोध त्वं रहस्यं किंचिदात्मनः ।
चिरवृत्तं तदाख्यास्ये यद्वृत्तं पुरा मया ।
पितामहस्य भवनं गच्छन्तीं पुञ्जिकस्थलाम् । [250]
चञ्चूर्यमाणामद्राक्षमाकाशेऽग्निशिखामिव ।

---

स एवमुक्तो न शशाक किंचि-
　　द्विभीषणो वक्तुमतीव कोपात् । [20]
प्रियंस्तु तस्यानुचरो महात्मा
　　हरो महापार्श्वमुवाच वीरः ।
न ते महापार्श्व जिजीविषास्ति
　　यो रावणानन्तरजे निकामम् ।
विभीषणे वाक्परुषं ब्रवीषि । [25]
　　राज्ञस्तथार्थांस्तरसा निहंसि ।
इदं सुनीतं कुरुते न वेति
　　ब्रुवन्तु तस्यार्थपुरोहिताश्च ।
प्रचोदिताश्चापि कृते तु मन्त्रे
　　त्वया महापार्श्व न कुत्सनीयाः । [30]
न चेदिहानुप्रियमेव वाक्यं
　　न चेदयं राजहिताय मन्त्रः ।
स्त्रियश्च राज्ञो जडपङ्गुकांश्च
　　संपृच्छ वै तादृशांश्चैव मूढान् ।

Colophon

[ (l. 1) Ñ1 D1 गृहेषु; Ñ2 युक्तेषु; D12 गुह्येष्ट- (for गुह्येषु). D1 [उ]पवनेषु (for [आ]म्र°). —(l. 2) Ñ1 -देशेषु; Ñ2 -घुष्टेषु; D8 -पुष्टेषु (for -जुष्टेषु). D1 सहसा तया (for सह सीतया). —(l. 3) D3 विज्ञाप्य (for विज्ञाय). Ñ1 महाबाहुः; D3.8 महाबुद्धि (for °बुद्धिः). Ś1 परमेश्वरं (for राक्षसेश्वरम्). —(l. 4) Ś1 Ñ2 B4 D2.9.12 पुनश्च (for परम-). D9 [उ]दानया (for -[उ]दग्रया). —(l. 7) D1.3.12 लब्धां (for लब्ध्वा). —(l. 8) D8 द्विषतां. D1 दां (for सं-). D3.4.8 वं (for ब्रुवन्). Ñ2 B4 D9 मन्यसे (for बुध्यसे). —D1 om. (hapl.) l. 9–10. —(l. 9) Ś1 Ñ1 D12 ननु; D2.8 न तु (for न च). Ś1 Ñ2 B4 D3.4.9.12 सापत्नकं. D8 वाक्यं (for बाल्याच्). D3 संशक्तोसि; D4.8 शक्तोपि वि- (for शक्नोषि वि-). Ś1 Ñ1 D12 न विगूहितुं; L (ed.) परि° (for विनि°). —(l. 10) D2 वेद्मि ते; D8 विग्रहे (for विश्वस्ते). B4 D2 मनसा (for मनसो). B4 रुषन् (for ब्रुवन्). D1 एनं (for एवं). —(l. 11) D8 om. कामं खमाक्रम्य. Ś1 D12 पुरोधिकारो (for पुरा विकारो). Ñ2 B4 D9 कामं खमाक्रामतु वा विकारो; D2 कामं त्वमाक्रम्य परो विकारो (marg. also कामं खमाक्रामतु वेगकारी); L (ed.) क्रामस्य कामं पुरतो विकारो. —(l. 12) Ś1 D1.3.4.12 नन्वेष (for न त्वेष). D8 om. वै. Ñ1 तथ्यं क्रमते (for वै संक्रमते). B4 D8 corrupt (for शुभानाम्). —(l. 13) Ś1 D12 हृष्ट-; D1.2 दृष्ट- (for दुष्ट-). Ś1 D12 L (ed.) अहो विकारः (L [ed.] °रं); Ñ2 D8.9 अथाविशुद्धं; B4 यथाविशुद्धं (for अहोऽविशुद्धं). —(l. 14) L (ed.) शुद्धं क्षमाम (for क्षमाम). D3 रक्षोधिप- (for राज्ञो नृप-). —B4 om. l. 15–19. Ś1 Ñ1 D12 om. l. 15–18. —(l. 15) Ñ2 नु; D1 हि; D9 न (for च). D2 राज्ञाम् (for राजा). D1 न च वाग्; D2 अथवा (for बलवान्). D3 तव चानृशंसः —(l. 16) D1.4 नायंवि-; D2 अर्थं हि; D3 -मयं च (for अनार्य-) D2.4 क्षमतां (for क्षमते). D3.8 च; L (ed.) न (for हि). —(l. 17) D1.4 कस्मान् (for तस्मान्). —(l. 18) D1.4 निपतंति (for न पतन्ति). —B4 om. l. 21–22. —(l. 21) Ñ2 D9 प्रियस्य. D9 त्वस्य (for तस्य). —(l. 22) Ñ1 D1 धीरः; D3 वाक्यं (for वीरः). —(l. 23) B4 ज्वलन् (for न ते). —(l. 24) Ś1 D12 यो रावणं वक्षि न नि(D12 * * * *) विकारं. —(l. 25) Ś1 D1.12 विभीषणं. Ś1 Ñ1 D12 वा परुषं; Ñ2 B4 D9 वाक्यमिदं (for वाक्परुषं). —(l. 26) Ñ2 D9 तथार्थं; B4 तथा त्वं (for तथार्थांस्). Ś1 D12 धियं च राज्ञस्तरसा निहंसि. —(l. 27) D1.3 क्रियते (for कुरुते). D2.8 न च (for न वा). —(l. 28) Ś1 D2.4.8 ब्रुवंति. Ś1 Ñ2 D9 [अ]थ (for [अ]र्थ-). D1 -पुरोहितस्य; D3 -पुरोहिता ये; L (ed.) -पुरोहितानि (for -पुरोहिताश्च). Ñ1 तस्यानुसिद्धयर्थपुरोहितार्थः; D12 ब्रुवंति तस्यानुचरो महात्मा. —(l. 29) Ñ B4 D9 प्रदेशिताश्; D1 प्रवेदिताश्; D3.4 प्रणोदिताश् (for प्रचोदिताश्). D4 चाति-. Ś1 D8.12 [ऽ]पि; D1 [ऽ]ति-; D2 [ऽ]नु-; D9 सु- (for तु). —(l. 30) Ś1 सहायाश्च (for महापार्श्व). —(l. 31) Ñ1 [अ]द्य; Ñ2 B4 D3.4.9 [अ]स्य; D1 [अ]त्र (for [अ]नु-). D8 वाच्यं (for वाक्यं). —(l. 32) Ñ1 द्वेषो न वै; B4 न चेदिदं (for न चेदयं). —(l. 33) Ñ1 [ऽ]थ; D6 om. (for च). D1 द्विजपुंगवांश् (for जडपङ्गुकांश्). —(l. 34) Ś1 D2.8.12 वै (D8 तांस्)तादृशमेव; Ñ1 तांस्तांश्च तथैव; D1.3.4 वै तादृशकांश्; L (ed.) तांस्तादृशश्चैव (for वै तादृशांश्चैव). D1.8 मूकान्; D3 मोहात् (for मूढान्).

Colophon: Ñ1 D4.8 om. —*Kāṇḍa name*: Ś1 D1 om.; Ñ2 B4 D2.3.9.12 सुन्दरकाण्डे. —*Sarga name*: Ś1 D1.2.12 हरवाक्यं; Ñ2 महावाक्यं; B4 D3 महापार्श्ववाक्यं; D9 महोदरवाक्यं. —*Sarga no.* (figures, words or both): Ś1 D1.2.12 om.; Ñ2 D9 90; B4 92; D3 94. —After colophon, D2 concludes with राम. ]

—(l. 242) D7 साम (for सान्त्वं). G1 कुशली- (for कुशलैः). D5 T1 वृत्तं (for कृतम्). —(l. 243) M3 चंडेन (for दण्डेन). D5 T1 M1.2 सिद्धम् (for सिद्धिम्). D5.10.11 रोचये (for रोचय). —(l. 245) D7.10.11 M5 वशं (for वशे). D5.7 T1.2 G3 M5 -प्रपातेन; G1 (before corr. as in M1) -प्रघातेन; M1.2 -प्रभावेन (for -प्रतापेन). —(l. 246) T2 तथा (for तदा). T1 damaged for राजा महा-. —(l. 247) G2 तत्पूजयन् (for संपूजयन्). —(l. 248) D6 विबोध त्वं; D7 [अ]द्य वदतो; D10.11 प्रवदतो; G प्रमुदितो; M5 प्रमुषितं (for निबोध त्वं). M2 हरस्यं (meta.) (for रहस्यं). —(l. 249) D5 T1.2 G2 M3 मया पुरा (by transp.). —(l. 250) T2 सदनं (for भवनं). D7 M1.3

सा प्रसह्य मया भुक्ता कृत्वा विवसनां ततः ।
स्वयंभूभवनं प्राप्ता लोलिता नलिनी यथा ।
तच्च तस्य तदा मन्ये ज्ञातमासीन्महात्मनः ।
अथ संकुपितो देवो मामिदं वाक्यमब्रवीत् । [ 255 ]
अद्यप्रभृति यामन्यां बलान्नारीं गमिष्यसि ।
तदा ते शतधा मूर्धा फलिष्यति न संशयः ।
इत्यहं तस्य शापस्य भीतः प्रसभमेव ताम् ।
नारोपये बलात्सीतां वैदेहीं शयने शुभे ।
सागरस्येव मे वेगो मारुतस्येव मे गतिः । [ 260 ]
नैतद्दाशरथिर्वेद ह्यासादयति तेन माम् ।
को हि सिंहमिवासीनं सुप्तं गिरिगुहाशये ।
क्रुद्धं मृत्युमिवासीनं संप्रबोधितुमिच्छति ।
न मत्तो निशितान्बाणान्द्विजिह्वान्पन्नगानिव ।
रामः पश्यति संग्रामे तेन मामभिगच्छति । [ 265 ]
क्षिप्रं वज्रोपमैर्बाणैः शतधा कार्मुकच्युतैः ।
राममादीपयिष्यामि उल्काभिरिव कुञ्जरम् ।
तच्चास्य बलमादास्ये बलेन महता वृतः ।
उदयन्सविता काले नक्षत्राणां प्रभामिव ।
न वासवेनापि सहस्रचक्षुषा [ 270 ]
युधास्मि शक्यो वरुणेन वा पुनः ।
मया त्वियं बाहुबलेन निर्जिता
पुरी पुरा वैश्रवणेन पालिता ।

Colophon

निशाचरेन्द्रस्य निशम्य वाक्यं
स कुम्भकर्णस्य च गर्जितानि । [ 275 ]
विभीषणो राक्षसराजमुख्य-
मुवाच वाक्यं हितमर्थयुक्तम् ।

---

पुंजि( D7 °ज )कस्थलीं. —( l. 251 ) D6 T2.3 संचार्यमाणाम्. —( l. 252 ) D7.10.11 M3.5 कृता विवसना ( for कृत्वा विवसनां ). G3 M1.2 तदा ( for ततः ). —( l. 253 ) D6 T1.2 G3 M5 स्वयंभु- ; D7 G2 M1.2 स्वयंभोर् ( for स्वयंभू- ). D6 T3 लोडिता ( for लोलिता ). —( l. 254 ) M3 तस्य तच्च ( by transp. ) ; M5 तच्च तस्यास् ( for तच्च तस्य ). T1 G1.3 तथा मन्ये; T2 सभामध्ये ( for तदा मन्ये ). —( l. 255 ) M1.2 अधिकं ( for अथ सं- ). D10.11 वेधा ( for देवो ). —( l. 256 ) D6 T2.3 नारीं and अभि-( T3 °भ्या- ) ( for अन्यां and नारीं respy. ). —( l. 257 ) D6.7 T2.3 G3 भविष्यति; M5 पतिष्यति ( for फलिष्यति ). —( l. 259 ) D6.10.11 T2.3 नारोहये. T1 damaged for बलात्सीतां वैदे. G1 [ ऽ ]बलां ( for बलात् ). T3 शुभं; G2.3 M1.2 स्वके; M5 सुखे ( for शुभे ). —( l. 261 ) G1 ( with hiatus ) आसादयति ( for ह्यासादयति ). —( l. 262 ) G3 M3 यस्तु ( for को हि ). —G1 om. ( hapl. ) from the post. half up to the prior half of l. 263. —( l. 263 ) D7.10.11 T2 G1.2 M1.2.5 संबोधयितुम ; M3 प्रबोधयितुम् ( for संप्रबोधितुम् ). G2 अर्हति ( for इच्छति ). —( l. 264 ) D7.10.11 T2 G M1.2.5 निर्गतान् ( for निशितान् ). G2 M इव पन्नगान् ( by transp. ). —( l. 265 ) D7 G1 M5 -गर्जति ( for -गच्छति ). —( l. 266 ) D10.11 वज्रसमैर् ; T1 * * * मैर् ( damaged ) ( for वज्रोपमैर् ). —Note hiatus between the two halves of l. 267. —( l. 267 ) T2 संदीपयिष्यामि ( for आदीपयिष्यामि ). G1.2 M5 ( to avoid hiatus ) ह्युल्काभिर् ( for उल्काभिर् ). —( l. 268 ) G2 तस्यास्त्र- ( for तच्चास्य ). T3 वृतं ( for वृतः ). —( l. 269 ) D10.11 उदितः ; G1 समुद्यन् ( for उदयन् ). D5 T1 G3 M3 इव प्रभां ( by transp. ). —( l. 271 ) D6 T2.3 G3 योद्धास्मि; G1 युद्धेस्मि ( for युधास्मि ). —( l. 272 ) D5 T1.3 यथा ( for मया ). —( l. 273 ) D7.10.11 पुरा पुरी ( by transp. ).

Colophon. —*Sarga no.* ( figures, words or both ) : D5–7.10.11 T1.3 G M 13 ; T2 12. —After colophon, G M1.2.5 conclude with श्रीरामाय नमः.

—For l. 274–275, Ś1 Ñ B4 D1–4.8.9.12 subst. :

14* श्रुत्वा हरस्येन्द्रजितस्तथेदं
तथा महापार्श्ववचः सुरूक्षम् ।

[ ( l. 1 ) Ñ1 हरेश्च ( for हरस्य ). Ñ2 B4 तथोक्तं ( for तथेदं ). —( l. 2 ) D4.12 सुदक्षं; D8 -स्वरूपं ( for सुरूक्षम् ). ]

—( l. 276 ) Ñ B4 D1–3.8.9.12 -राजम् ; D4 om. ( hapl. ) ; L ( ed. ) -पुत्रम् ( for -मुख्यम् ). Ś1 -राजमेवम्. —( l. 277 ) Ś1 Ñ B4 D1–4.8.9.12 अर्थवच्च ( for °युक्तम् ). —After l. 277, Ś1 Ñ B4 D1–4.8.9.12 ins. :

15* न हिंसतो धर्मपरान्मनुष्या-
न्कामात्मनः क्रोधवशानुगस्य ।
जना नरेन्द्रस्य चिरं सकाशे
वसन्त्यतोये सरसीव हंसाः ।
त्यजन्ति मित्राणि तथैव बान्धवा [ 5 ]
नृपं सदोग्रं ह्यसमीक्ष्यकारिणम् ।
अधर्मशीलं पितरो द्विषन्ति
ह्येवंविधस्यास्ति कुतोऽर्थसिद्धिः ।
अदूषकस्यानपराधिनश्च
भार्या हृता तत्र किमेव साधु । [ 10 ]
सीताप्रमादेन निरर्थकेन
लङ्का सहास्माभिरिहाभ्युपैति ।

[ ( l. 2 ) Ś1 D12 किमात्मनः ( for कामा° ). D2 -[ अ ]नुगस्या ( for -[ अ ]नुगस्य ). —( l. 4 ) Ñ1 भवंति; D9 संत्यज्य ( for वसन्ति ). D9 तोये ( for [ अ ]तोये ). D8 शरदीव ( for सरसीव ). —L ( ed. ) transp. l. 5–6 and 7–8. —( l. 5 ) D1.8 तथैव ( for त्यजन्ति ). —( l. 6 ) Ñ1 D9.12 मदोग्रं; Ñ2 यदोग्रं; D8 स चोग्रं ( for सदोग्रं ). Ś1 D4.8.12 तु ( for हि ). —( l. 8 ) Ñ B4 D2.3.9 एवंविधस्य ( with hiatus ) ( for ह्येवं° ). —( l. 9 ) D1 अदूषणस्य. Ś1 D12 [ अ ]नयकारिणश्च ( for [ अ ]नपराधिनश्च ). —( l. 10 ) D3 एष ( for एव ). B4 युद्धं ( for साधु ). —( l. 11 ) L ( ed. ) सीतां. D1.4 -[ अ ]प्रदानेन; D8 -प्रवादेन ( for -प्रमादेन ). Ñ1 निबंधकेन; B4 निरात्मकेन; D1 न केवलं हि ( for निरर्थकेन ). —( l. 12 ) D8 हृता ( for सह ). Ñ2 B4 D9 इवाभ्युपैति; D1.4.8 इह व्यपैति ( for इहाभ्युपैति ). Ś1 D12 लंका विनाशं सहसाभ्यु( D12 °प )पैति. ]

वृतो हि बाह्वन्तरभोगराशि-
श्चिन्ताविषः सुस्मिततीक्ष्णदंष्ट्रः ।
पञ्चाङ्गुलीपञ्चशिरोऽतिकायः [ 280 ]
सीतामहाहिस्तव केन राजन् ।
यावन्न लङ्कां समभिद्रवन्ति
वलीमुखाः पर्वतकूटमात्राः ।
दंष्ट्रायुधाश्चैव नखायुधाश्च
प्रदीयतां दाशरथाय मैथिली । [ 285 ]
यावन्न गृह्णन्ति शिरांसि बाणा
रामेरिता राक्षसपुंगवानाम् ।
वज्रोपमा वायुसमानवेगाः
प्रदीयतां दाशरथाय मैथिली ।
न कुम्भकर्णेन्द्रजितौ न राजा
तथा महापार्श्वमहोदरौ च । [ 290 ]
निकुम्भकुम्भौ च तथातिकायः
स्थातुं न शक्ता युधि राघवस्य ।
जीवंस्तु रामस्य न मोक्ष्यसे त्वं
गुप्तः सवित्राप्यथवा मरुद्भिः । [ 295 ]

—(l. 278) Ś1 Ñ B4 D1-4.8.9.12 वृत्तोरु- (for वृतो हि). D12 T3 बाह्वांतर-; L (ed.) -बाहूत्तर- (for बाह्वन्तर-). M1.2.5 -भोगि- (for -भोग-). Ś1 D2.12 -वासं; Ñ B4 D1.3.4.8.9 -राशिं; T2 -राजिश् (for -राशिश्). —(l. 279) Ś1 Ñ B4 D1-4.8.9.12 चिंताविषं (D1 °निलं; D4 चिंताचिषं) तीव्रविपाकतीक्ष्णं (Ñ2 B4 D8.9 °दंष्ट्रं). —(l. 280) D7 T3 G3 M5 पंचांगुलिः. —For l. 280–281, Ś1 Ñ B4 D1.2 (reads twice).3.4.8.9.12 subst.:

16* दशाङ्गुलानेकमुखातिकायं
सीतामहाहिं वदने स्पृशेत्कः ।

[ (l. 1) D3 दशांगुलीनैक-. B4 -महाति-; L (ed.) -विषाति- (for -मुखाति-). —(l. 2) Ś1 Ñ1 D12 मीतो (for सीता-). Ñ1 D4.9 -महाहि- (for -महाहिं). ]

—Then, Ś1 Ñ B4 D1-4.8.9.12 cont.:

17* पुरा हि किंचिद्भवने महत्ते
महासुराणां भयमेति किंचित् ।
पुरा पुरीं हन्ति न ब्रह्मवादः
प्रयच्छ रामाय विदेहपुत्रीम् ।
पुरा पुरीं भीममभिद्रवन्ति [ 5 ]
वलीमुखा वानरयूथपालाः ।
सुपर्णसंघा इव निष्पतन्तः
प्रयच्छ रामाय विदेहपुत्रीम् ।
रामप्रियाग्राहमिषूग्रक्रूर्मं
चापद्रुमं वानरवीरमत्स्यम् । [ 10 ]
सुग्रीवनक्रं ह्युदधिं हरीणां
को जीवितार्थी प्रविशेदमूढः ।
पुरा कपीन्द्रोग्रबलाहकेन
रामप्रहाराशनिविद्युतेन ।
न शैलवर्षेण निहन्ति याव- [ 15 ]
त्प्रदीयतां दाशरथाय सीता ।
पुरा न यावन्महता बलेन
नौभिः प्लवैश्चार्णवमप्रमेयम् ।
तरन्ति सुग्रीवमुखा ह्यमूढाः
प्रयच्छ रामाय विदेहपुत्रीम् । [ 20 ]

[ (l. 1) D1.4 ह (for हि). Ś1 D12 कश्चिद् (for किंचिद्). Ś1 भवनं (for भवने). Ś1 D12 महात्मा; Ñ1 D1.3.4 महर्षि- (for महत्ते). —(l. 2) Ñ1 D1.3 ब्रह्मासुराणां; D4 ब्रह्ममहासुराणां. Ñ1 कश्चित्. —(l. 3) Ś1 Ñ1 D1.3.12 च (for न). Ñ1 तीव्रवादः; Ñ2 B4 D9 विप्रवादः (for ब्रह्मवादः). —Ś1 D1 om. (hapl.) l. 5–8. —(l. 5) D12 भीममुप-; L (ed.) तां समभि- (for भीममभि-). —(l. 7) D2.8 सुवर्णसिंहा. Ñ1 D3.4 निःपतंतः; D1 निःपतंति; L (ed.) निष्पतंति. —After l. 8, D1.2 (reads twice).3.4.8 ins.:

17(A)* पुरा वनौकोनिवहाः पुरं ते
प्रविश्य वीरास्तरसा हरन्ति ।
सिंहा वने क्षुद्रमृगानिवाशु
प्रयच्छ रामाय विदेहपुत्रीम् ।

[ (l. 1) L (ed.) पुरीं ते (for पुरं ते). D3 वनौकसः कोटिनिवहाः पुरं नः. —(l. 2) D2 (first time) निहंति; D4 वहंति (for हरन्ति). ]

—(l. 10) B4 चापभ्रमं; L (ed.) चापांभसं (for चापद्रुमं). —(l. 12) B4 D12 प्रविवेश मूढः (for प्रविशेदमूढः). —(l. 13) D1.8 कपींद्राग्र- (D8 °स्य-) (for कपीन्द्रोग्र-). —(l. 14) D12 रामः. —(l. 15) Ñ1 रणे च (for न शैल-). —(l. 16) D1-4 राजसुताय (for दाशरथाय). Ñ B4 D1.9 मैथिली (for सीता). —D8 om. l. 17–20. —(l. 17) D4 पुरं (for पुरा). —(l. 18) Ñ1 प्रविश्य (for प्लवैश्च). —(l. 19) Ś1 D12 हि योधाः; Ñ2 D4 हरींद्राः; B4 कपींद्राः; D3 च गूढाः (for ह्यमूढाः). ]

—After l. 281, D5 T1 G3 M1.2 repeat 6.9.21. —(l. 282) Ś1 Ñ B4 D1-4.8.9.12 एवं (Ś1 D9.12 पुरा) न यावत् (for यावन्न लङ्कां). D9 G3 समुपा (G3 °प) द्रवंति. —(l. 285) Ś1 Ñ1 D1-4.8.12 राजसुताय सीता (Ñ1 D4 मैथिली; D1 जानकी) (for दाशरथाय मैथिली). —After l. 285, Ś1 Ñ B4 D1-4.8.9.12 read l. 326–329 and 342–345. —Ś1 Ñ B4 D1-4.8.9.12 om. l. 286–289. —(l. 288) T2 G M5 -समप्रवेगाः (for -समानवेगाः). —After l. 289, D6 T3 G M1-3 read l. 326–329. —(l. 290) Ś1 Ñ B4 D1-4.8.9.12 हि (Ñ2 B4 D9 च) वीरौ; D5.6.10.11 T G3 च (D5 T1 G3 न) राजंस्; D7 G1 M1.2.5 च राजा (for न राजा). —(l. 291) Ś1 Ñ D1-4.8.12 कुतो; D10.11 तदा (for तथा). Ñ1 D1-4.10.11 G1.2 M3.5 वा (for च). —(l. 293) D7.10.11 G1.3 M1.3 समर्था (for न शक्ता). —(l. 294) T2 रामेण (for रामस्य). —For l. 292–295, Ś1 Ñ B4 D1-4.8.9.12 subst.:

18* आधावतां दाशरथेः शराणां
वेगं समर्था मनसापि सोढुम् ।

न वासवस्याङ्कगतो न मृत्यो-
नभो न पातालमनुप्रविष्टः ।
निशम्य वाक्यं तु विभीषणस्य
ततः प्रहस्तो वचनं बभाषे ।
न नो भयं विद्म न दैवतेभ्यो [300]
न दानवेभ्यो ह्यथवा कदाचित् ।
न यक्षगन्धर्वमहोरगेभ्यो
भयं न संख्ये पतगोत्तमेभ्यः ।
कथं नु रामाद्भविता भयं नो
नरेन्द्रपुत्रात्समरे कदाचित् । [305]
प्रहस्तवाक्यं त्वहितं निशम्य
विभीषणो राजहितानुकाङ्क्षी ।
ततो महार्थं वचनं बभाषे
धर्मार्थकामेषु निविष्टबुद्धिः ।
प्रहस्त राजा च महोदरश्च [310]
त्वं कुम्भकर्णश्च यथार्थजातम् ।
ब्रवीत रामं प्रति तन्न शक्यं
यथा गतिः स्वर्गमधर्मबुद्धेः ।
वधस्तु रामस्य मया त्वया वा
प्रहस्त सर्वैरपि राक्षसैर्वा । [315]
कथं भवेदर्थविशारदस्य
महार्णवं तर्तुमिवाप्लवस्य ।
धर्मप्रधानस्य महारथस्य
इक्ष्वाकुवंशप्रभवस्य राज्ञः ।
प्रहस्त देवाश्च तथाविधस्य [320]
कृत्येषु शक्तस्य भवन्ति मूढाः ।
तीक्ष्णा न तावत्तव कङ्कपत्रा
दुरासदा राघवविप्रमुक्ताः ।
भित्त्वा शरीरं प्रविशन्ति बाणाः
प्रहस्त तेनैव विकत्थसे त्वम् । [325]
भित्त्वा न यावत्प्रविशन्ति कायं
प्राणान्तिकास्तेऽशनितुल्यवेगाः ।
शिताः शरा राघवविप्रमुक्ताः
प्रहस्त तेनैव विकत्थसे त्वम् ।

---

जीवन्स रामो न विमोक्ष्यते त्वां
सर्वैः सुगुप्तं ह्यथ वा मरुद्भिः ।

[ (l. 1) Ś1 Ñ2 D3.8 अधावतां; Ñ1 आवाधतां. —(l. 2) Ñ1 om. वेगं. Ñ1 वोढुं (for सोढुम्). —(l. 3) D2 (m. also as above) प्रीतः (for जीवन्). D3 om. स. Ñ1 D2 न विमोक्षति; D3 परिमोक्षति. —(l. 4) D8 शक्तैः (for सर्वैः). D9 च (for सु-). Ś1 Ñ1 D12 तु (for हि). D4 महद्भिः (for मरुद्भिः). ]

—D11 om. l. 296–299. —(l. 296) D4 स (for first न). Ś1 Ñ2 B4 D1.3.4.8.9.12 [अं]कगतं; T3 [अ]वगतो (for [अ]-ङ्कगतो). D4.8 हि (for second न). —(l. 297) T2 अपि (for अनु-). Ś1 Ñ B4 D2.9.12 न चाप्यपामंतरतु (B4 D9 °मभि; D2 °मपि) प्रविष्टं (Ñ1 °ष्टः; B4 °विश्य); D1.3.4.8 न चाप्यपां पात (D3 °पि पाताल; D4 °संबाध; D8 °पां पार) मभि (D3 °तल) प्रविष्टं. —Ś1 Ñ B4 D1–4.8.9.12 om. l. 298–313. —(l. 300) T2 तु; G3 हि (for second न). G2 देवताभ्यो (for दैवतेभ्यो). —(l. 301) D10.11 T2.3 G1 [ऽ]पि (for हि). G3 कदाचन; M3 कुतश्चित् (for कदाचित्). —(l. 303) D5.10.11 पतगोरगेभ्यः. —D11 om. l. 304–305. —(l. 304) D5 तु (for नु). —(l. 306) D7 प्रहितं (for त्वहितं). —(l. 307) M5 भ्रातृ- (for राज-). D7 -[अ]भि- (for -[अ]नु-). —(l. 308) D6 M3 महात्मा (for महार्थं). —(l. 311) T3 तथार्थ- (for यथार्थ-). —(l. 312) D6 T2 G1.3 M3.5 ब्रवीथ; D7 ब्रवीषि (for ब्रवीत). M1 ततस् (for प्रति). —(l. 314) T3 यथा (for मया). D10.11 G M1 च (for वा). Ś1 Ñ B4 D1–4.8.9.12 मोक्षस्तु रामाद्भवतां (Ñ1 °तो; D1.3 °ता) भवेत्तु (Ñ2 B4 D2.9.12 °न्न; D1.3.4.8 मया वा). —(l. 315) Ś1 पूर्वैर्; Ñ1 D8 मुख्यैर् (for सर्वैर्). Ś1 Ñ B4 D1–4.8.9.12 राक्षसेंद्रैः (for राक्षसैर्वा). —(l. 316) L (ed.) अस्य (for अर्थ-). —(l. 317) Ś1 Ñ B4 D1–4.8.9.12 ह्यशक्यमस्य (for इवाप्लवस्य). —(l. 318) T2 महार्णवस्य (for °रथस्य). Ś1 Ñ B4 D1–4.8.9.12 धर्म (B4 °र्मैः) प्रधानः (D8 °नं) स (D2.4 सु-) महान्वृहच्छ्रीर्. —(l. 319) Ś1 Ñ B4 D1–4.8.9.12 प्रभवो महात्मा (Ñ1 °हावशाः); D5 G3 -प्रवरस्य राज्ञः (for -प्रभवस्य राज्ञः). —(l. 320) D10.11 पुरोस्य (for प्रहस्त). Ś1 Ñ B4 D1–4.9.12 देवा हि (Ñ1 D1.3 °वापि); D6.8 देवस्य (for देवाश्च). —(l. 321) Ś1 Ñ2 B4 D1.3.9.12 जातेषु; Ñ1 D3.4.8 जात (D3 °ल) स्य (for शक्तस्य). Ś1 Ñ2 B4 D1.2.8.9.12 योग्याः; Ñ1 D3.4 [अ]योग्याः (for मूढाः). —(l. 322) Ś1 Ñ B4 D1–4.8.9.12 T3 न यावत्तव (B4 D3.8 °त्तत्र-); M3 तता यत्तव (for न तावत्तव). —(l. 323) B4 D1–4.8.9 दुराधरा- (D4 °रा**) (for दुरासदा). D11 -निप्रमुक्ताः; G1 -विप्रयुक्ताः (for °मुक्ताः). —(l. 324) D7 प्रपतंति (for प्रविशन्ति). —(l. 325) Ś1 Ñ B4 D1–4.8.9.12 [इ]ह (for [ए]व). D8 T2 विकत्थनेन (T2 °सि त्वं). —M5 om. (hapl.); Ñ2 reads in marg. l. 326–329. —(l. 326) Ñ2 D7.10.11 T2 G1.2 M1–3 तावत् (for यावत्). Ś1 Ñ B4 D1–4.9.12 देहं; D8 बाणाः (for कायं). —(l. 327) B4 D2.5.6.8 T1.3 G1.2 M1.2 प्राणांतकास् (D6 T1.3 °गास्) (for प्राणान्तिकास्). —(l. 328) D3 -बाहु- (for -विप्र-). —(l. 329) T2 विकत्थसि (for विकत्थसे). Ś1 Ñ B4 D1–4.8.9.12 T3 प्रदीयतां दाशरथाय (D1.3.8 राजसुता) य मैथिली (Ś1 D1–3.8.12 सीता). —After l. 329, Ś1 Ñ1 B4 D1–4.8.9.12 ins.; while Ñ2 ins. before l. 326:

19* यदा भवान्द्रक्ष्यति वानरेन्द्रै-
रनीकमध्यं प्रविकीर्यमाणम् ।
दिशो द्रवन्तं हतघोषनादं
तदा भवान्वाक्यमिदं स्मरिष्यति ।

[ (l. 1) Ñ1 मया (for भवान्). D1.3 द्रक्ष्यसि; D2 रक्ष्यति (for द्रक्ष्यति). D9 वानरार्येर् (for वानरेन्द्रैर्). —(l. 2) Ś1 अनीकतस्त्वं; B4 D8 °मध्ये; D9 °मध्यैः (for °मध्यं). D1.3

न रावणो नातिबलस्त्रिशीर्षो [330]
न कुम्भकर्णस्य सुतो निकुम्भः ।
न चेन्द्रजिद्दाशरथिं प्रसोढुं
त्वं वा रणे शक्रसमं समर्थाः ।
देवान्तको वापि नरान्तको वा
तथातिकायोऽतिरथो महात्मा । [335]
अकम्पनश्चाद्रिसमानसारः
स्थातुं न शक्ता युधि राघवस्य ।
अयं हि राजा व्यसनाभिभूतो
मित्रैरमित्रप्रतिमैर्भवद्भिः ।
अन्वास्यते राक्षसनाशनार्थे [340]
तीक्ष्णः प्रकृत्या ह्यसमीक्ष्यकारी ।
अनन्तभोगेन सहस्रमूर्ध्ना
नागेन भीमेन महाबलेन ।
बलात्परिक्षिप्तमिमं भवन्तो
राजानमुत्क्षिप्य विमोचयन्तु । [345]
यावद्धि केशग्रहणात्सुहृद्भिः
समेत्य सर्वैः परिपूर्णकामैः ।
निगृह्य राजा परिरक्षितव्यो
भूतैर्यथा भीमबलैर्गृहीतः ।
सुवारिणा राघवसागरेण
प्रच्छाद्यमानस्तरसा भवद्भिः । [350]
युक्तस्त्वयं तारयितुं समेत्य
काकुत्स्थपातालमुखे पतन्सः ।
इदं पुरस्यास्य सराक्षसस्य
राज्ञश्च पथ्यं ससुहृज्जनस्य ।
सम्यग्धि वाक्यं स्वमतं ब्रवीमि [355]
नरेन्द्रपुत्राय ददाम पत्नीम् ।
परस्य वीर्यं स्वबलं च बुद्ध्वा
स्थानं क्षयं चैव तथैव वृद्धिम् ।
तथा स्वपक्षेऽप्यनुमृश्य बुद्ध्या
वदेत्क्षमं स्वामिहितं च मन्त्री । [360]

Colophon

---

प्रविशी( D$_{2}$ °दी )र्यमाणं ( for प्रविकीर्यमाणम् ). —( l. 3 ) D$_{8}$ द्रवंति ( for द्रवन्तं ). B$_{4}$ D$_{1}$ हय- ( for हत- ). Ś$_{1}$ Ñ$_{1}$ D$_{12}$ -नाथं ( for -नागं ). —( l. 4 ) D$_{1.9}$ स्मरिष्यसि. ]

—( l. 330 ) Ś$_{1}$ Ñ B$_{4}$ D$_{1-4.8.9.12}$ नापि महोदरोयं( D$_{1}$ °रो वा ) ( for नातिबलस्त्रिशीर्षो ). —( l. 331 ) M$_{3}$ कुंभकर्णोस्य ( for °र्णस्य ). Ś$_{1}$ Ñ B$_{4}$ D$_{1-4.8.9.12}$ न कुंभकर्णोपि न( D$_{8}$ न च ) चातिकायः. —( l. 332 ) D$_{6}$ T$_{3}$ तथा ( for न च ). D$_{3}$ विसोढुं; D$_{6}$ न सोढुं; D$_{7}$ प्रवोढुं ( for प्रसोढुं ). —( l. 333 ) Ś$_{1}$ Ñ$_{1}$ D$_{12}$ शक्ता रणे; Ñ$_{2}$ B$_{4}$ D$_{8}$ शक्तास्तु तं; D$_{1-3}$ शक्ताः स्थितं; D$_{4.9}$ शक्ताश्च तं ( for त्वं वा रणे ). T$_{2}$ damaged for शक्रसमं. D$_{5.7}$ T$_{1}$ M$_{2.5}$ समर्थः; G$_{3}$ M$_{1}$ समर्थं ( for समर्थाः ). Ś$_{1}$ Ñ B$_{4}$ D$_{1-4.8.9.12}$ शक्रसमप्रभावं. —Ś$_{1}$ Ñ B$_{4}$ D$_{1-4.8.9.12}$ om. l. 334–337. —( l. 334 ) G$_{2}$ वेदांतको ( for देवान्तको ). —( l. 336 ) D$_{5}$ व्यकंपनश्. D$_{10.11}$ चापि. D$_{5}$ -समानसाराः ( for °सारः ). —( l. 337 ) D$_{7}$ शक्तो ( for शक्ता ). —( l. 338 ) D$_{10.11}$ T$_{2}$ च ( for हि ). M$_{1.2.5}$ -[अ]भिपन्नो ( for °भूतो ). Ś$_{1}$ Ñ B$_{4}$ D$_{1-4.8.9.12}$ अयं कथं राम( D$_{2.3}$ काम; D$_{4}$ राग )बला( Ñ$_{2}$ B$_{4}$ D$_{9}$ °शरा; D$_{1.3.4.8}$ °वशा )भिपन्नो. —( l. 339 ) D$_{9}$ अमित्रैर् ( for अमित्र- ). Ś$_{1}$ Ñ B$_{4}$ D$_{2.4.9.12}$ G$_{2}$ -प्रभवैर्; D$_{8}$ -प्रसवैर् ( for -प्रतिमैर् ). D$_{8.9}$ महद्भिः ( for भवद्भिः ). —After l. 339, G$_{2}$ wrongly reads l. 350 for the first time, repeating it in its proper place. —( l. 340 ) Ś$_{1}$ Ñ$_{1}$ B$_{4}$ D$_{2-4.8.9.12}$ अध्यास्यते; D$_{1}$ न शास्यते; L ( ed. ) अध्यासितो ( for अन्वास्यते ). Ś$_{1}$ D$_{1-4.8.12}$ -लालनार्थं; Ñ$_{1}$ B$_{4}$ D$_{6.9}$ T$_{2.3}$ G$_{2}$ -नाशनार्थं ( for -नाशनार्थे ). —( l. 341 ) D$_{3}$ तीव्रः; D$_{5.8}$ M$_{3}$ तीक्ष्ण- ( for तीक्ष्णः ). D$_{7}$ ह्यसमीक्ष्यमाणः. —For l. 342–343, Ś$_{1}$ Ñ B$_{4}$ D$_{1-4.8.9.12}$ subst. :

20* सहस्रशीर्षस्य महोरगस्य
भोगेन भीमस्य महाविषस्य ।

[ ( l. 2 ) Ñ$_{1}$ भीमेन. ]

—( l. 344 ) T$_{2}$ damaged for परि. Ś$_{1}$ Ñ B$_{4}$ D$_{1-4.8.9.12}$ बलं; D$_{4}$ परैः ( for बलात् ). Ś$_{1}$ Ñ B$_{4}$ D$_{1-3.8.9.12}$ इदं. —( l. 345 ) Ś$_{1}$ Ñ B$_{4}$ D$_{1-4.8.9.12}$ नृपं च पापात्स( B$_{4}$ नृपास्तु चापं प )रिमोचयंतु. —( l. 346 ) Ś$_{1}$ D$_{12}$ यावत्सु-; Ñ$_{1}$ यात्र* ( for यावद्धि ). M$_{3}$ केशग्रहणं ( for °ग्रहणात् ). Ñ$_{1}$ भवद्भिर् ( for सुहृद्भिः ). —D$_{1}$ om. l. 347-349. —( l. 347 ) M$_{1.2}$ अपि चाप्त- ( for परिपूर्ण- ). Ś$_{1}$ Ñ B$_{4}$ D$_{2-4.8.9.12}$ अयं भव( Ñ$_{1}$ सुहृ )द्भिः परिपूर्णबाहुः( Ñ$_{2}$ °कामैः ). —( l. 348 ) G$_{3}$ विगृह्य. Ñ$_{1}$ [अ]पि हि ( for परि- ). Ś$_{1}$ Ñ B$_{4}$ D$_{2-4.8.9.12}$ -भाषि( D$_{2}$ °वि )तव्यो ( for -रक्षितव्यो ). —( l. 349 ) D$_{6}$ अथो ( for यथा ). —( l. 350 ) Ś$_{1}$ Ñ B$_{4}$ D$_{1-4.8.9.12}$ प्रवाहिणा; D$_{6}$ T$_{2.3}$ M$_{3}$ संहारिणा ( for सुवारिणा ). T$_{2}$ वानर- ( for राघव- ). —( l. 351 ) Ś$_{1}$ Ñ B$_{4}$ D$_{1-4.8.9.12}$ स( Ś$_{1}$ Ñ$_{1}$ सं ) मुह्य( D$_{4}$ °ध )मानः सहितैर्भ( Ś$_{1}$ D$_{12}$ °तो भ )वद्भिः. —( l. 352 ) Ś$_{1}$ Ñ$_{1}$ B$_{4}$ D$_{1-4.8.9.12}$ ह्ययं; D$_{5.6}$ T$_{3}$ G$_{1.3}$ M$_{5}$ स्वयं ( for त्वयं ). D$_{9}$ धारयितुं ( for तारयितुं ). —( l. 353 ) D$_{8}$ -तले ( for -मुखे ). Ś$_{1}$ वसेदयं; Ñ B$_{4}$ D$_{1.2.4.8.9.12}$ [ऽ]वसीदन्; D$_{3}$ च सीदन्; M$_{2}$ पतन्हि ( for पतन्सः ). —( l. 355 ) D$_{1}$ सर्वस्य ( for राज्ञश्च ). Ś$_{1}$ D$_{12}$ पश्यन् ( for पथ्यं ). Ś$_{1}$ Ñ B$_{4}$ D$_{1-4.8.9.12}$ ससुहृद्गणस्य ( for °ज्जनस्य ). —( l. 356 ) Ś$_{1}$ Ñ B$_{4}$ D$_{1-4.8.9.12}$ सम्यग्विभाव्य( B$_{4}$ D$_{1}$ °व्यं ); G$_{1}$ M$_{1.2}$ समीक्ष्य वाक्यं ( for सम्यग्धि वाक्यं ). Ś$_{1}$ D$_{12}$ [अ]व( D$_{12}$ [अ]थ )हितं; D$_{8}$ स्वमतिं; M$_{5}$ सफलं ( for स्वमतं ). —( l. 357 ) Ś$_{1}$ Ñ B$_{4}$ D$_{1-4.8.9.12}$ ददस्व; D$_{7.10.11}$ T$_{1.3}$ G$_{2}$ ददातु ( for ददाम ). D$_{7.10.11}$ मैथिलीं ( for पत्नीम् ). —( l. 358 ) Ñ B$_{4}$ D$_{1-4.8.9.12}$ च बलं ( for स्वबलं ). —( l. 359 ) M$_{1.2}$ तथाभि- ( for तथैव ). B$_{4}$ बुद्धिं ( for वृद्धिम् ). —( l. 360 ) M$_{1.2}$ हि ( for ऽपि ). Ś$_{1}$ Ñ B$_{4}$ D$_{1-4.8.9.12}$ [ऽ]प्यनु( Ñ$_{2}$ ह्यनु; B$_{4}$ °भि; D$_{2}$ परि )गृह्य मार्गं( Ñ$_{2}$ B$_{4}$ °ह्यमाणं ); D$_{5}$ T$_{1}$ G$_{1.3}$ M$_{5}$ [ऽ]प्यनुदृश्य बुद्ध्या ( for ऽप्यनुमृश्य बुद्ध्या ). —( l. 361 ) M$_{5}$ स्वयं ( for क्षमं ). D$_{10.11}$ स ( for च ). Ś$_{1}$ Ñ B$_{4}$ D$_{1-4.8.9.12}$

बृहस्पतेस्तुल्यमतेर्वचस्त-
    न्निशम्य यत्नेन विभीषणस्य ।
ततो महात्मा वचनं बभाषे
    तत्रेन्द्रजिन्नैर्ऋतयूथमुख्यः । [365]
किं नाम ते तात कनिष्ठ वाक्य-
    मनर्थकं चैव सुभीतवच्च ।
अस्मिन्कुले योऽपि भवेन्न जातः
    सोऽपीदृशं नैव वदेन्न कुर्यात् ।
सत्त्वेन वीर्येण पराक्रमेण [370]
    शौर्येण धैर्येण च तेजसा च ।
एकः कुलेऽस्मिन्पुरुषो विमुक्तो
    विभीषणस्तात कनिष्ठ एषः ।

ब्रवीमि यो भर्तृहितं यथावत् ( Ñ$_{2}$ °हिताय तावत् ). —After l. 361, Ś$_{1}$ Ñ B$_{4}$ D$_{1-4.8.9.12}$ ins. :

21* तपो वीरमुग्रं यशः पौरुषं वा
    न तस्याप्रमेयस्य शक्यं प्रमातुम् ।
तपोविक्रमाभ्यां समर्थो हि भोक्तुं
    स भूमिं सशैलां प्रभुः काननान्ताम् ।
रणे रामवह्निं न शक्नोति सोढुं [5]
    सहैरावणोऽपि स्वयं वज्रहस्तः ।
न रामेण वैरं महाराज कृत्वा
    कश्चिज्जीवितुं वा सुखं वापि शक्यम् ।
नरेन्द्राय तस्मै प्रियां साधु सीतां
    प्रयच्छात्मजीवं सुखं राक्षसेभ्यः । [10]
न ते पौरुषं वायुधं वा बलं वा
    प्रपश्यामि रामो रणे येन शक्यः ।
सतो वासतो वा समुत्पत्य सीता
    प्रदेया प्रणत्या न शक्या प्रहर्तुम् ।
पुनः सर्वमीशः सनक्षत्रचन्द्रं [15]
    समर्थः स सोढुं जगच्चाजगच्च ।
सपत्नस्तु रामोऽभिपन्नो विधाता
    स्वयं भूतनाथः प्रशक्तः स्वयंभूः ।

[ D$_{1}$ om. l. 1. —(l. 1) Ñ$_{1}$ B$_{4}$ D$_{3.4.8}$ अग्र्यं ( for उग्रं ). D$_{3}$ नयः ( for यशः ). —(l. 2) D$_{4}$ om. न. —D$_{1}$ om. l. 3–4. —(l. 3) D$_{8}$ तपोविग्रहाभ्यां. B$_{4}$ [ऽ]पि ( for हि ). —(l. 4) Ś$_{1}$ D$_{12}$ समग्रां ( for सशैलां ). D$_{3}$ काननानां ( for काननान्ताम् ). —(l. 5) L (ed.) -बाहुं ( for -वह्निं ). Ś$_{1}$ Ñ$_{1}$ D$_{1.9}$ शक्तोति- ; B$_{4}$ D$_{2}$ शक्नोषि ( for शक्नोति ). —(l. 6) B$_{4}$ सहैरावनो; D$_{1}$ बली रावणो ( for सहैरावणो ). D$_{8}$ om. स्वयं. D$_{1}$ वज्रकल्पं. —(l. 7) D$_{8}$ चैवं ( for वैरं ). —(l. 8) Ñ$_{2}$ B$_{4}$ D$_{2}$ जीवितं. D$_{1}$ ते सुखं; D$_{8}$ om. ( for वा सुखं ). Ñ$_{1}$ वासवस्य ( for वा सुखं वा ). D$_{2.8.9}$ चापि ( for वापि ). —(l. 9) D$_{8}$ सुसाधु ( for साधु ). Ñ$_{1}$ साधुशीलां ( for साधु सीतां ). —(l. 10) Ñ$_{1}$ [अ]थ जीवं; D$_{1.3}$ स्वजीवं; D$_{8}$ om. ( for [आ]त्मजीवं ). D$_{1.4}$ समं ( for सुखं ). L (ed.) राक्षसेश. —(l. 11) Ś$_{1}$ D$_{12}$ वा सुखं; D$_{1.9}$ चायुधं; D$_{3}$ वा जयं ( for वायुधं ). D$_{2}$ transp. वायुधं and वा बलं. B$_{4}$ न चाप्यायुधं वा. D$_{8}$ न * पौरुषं चापि * * बलं *. —Ś$_{1}$ D$_{12}$ om. l. 13–14. —(l. 13) B$_{4}$ ततो वामतो ( for सतो वासतो ). D$_{3}$ om. second वा. Ñ$_{1}$ त्वया यत्र ( for समुत्पत्य ). D$_{4.8}$ सीतां ( for सीता ). D$_{1}$ सतो *सतोस्य**** सीता. —(l. 14) D$_{1}$ प्रदातुं; D$_{2.3}$ प्रदानं; D$_{8}$ प्रणम्य; L (ed.) प्रदाप्या ( for प्रदेया ). Ñ$_{1}$ D$_{1-3}$ प्रणम्या; D$_{8}$ प्रदेया ( for प्रणत्या ). Ñ$_{1}$ D$_{8}$ युक्ता ( for शक्या ). Ñ$_{2}$ D$_{8.9}$ [अ]पहर्तुं; D$_{1}$ om. ; D$_{3}$ [अ]पहर्तुं ( for प्रहर्तुम् ). D$_{4}$ प्रियां रामपत्नीं त्वरा त्वं प्रयच्छ. —(l. 15) Ś$_{1}$ D$_{2.12}$ सर्वमेवं; Ñ$_{1}$ D$_{3.8}$ सर्वमीशं; D$_{4}$ सर्वमीनं ( for सर्वमीशः ). Ś$_{1}$ Ñ$_{2}$ सु- ( for स- ). —(l. 16) B$_{4}$ D$_{4}$ समर्थं ( for समर्थः ). D$_{3.4}$ न ( for स ). D$_{1}$ om. from जगच्चा up to l. 17. —D$_{2}$ reads l. 17–18 in marg. —(l. 17) B$_{4}$ D$_{3.9}$ विधात्रा; D$_{4}$ तु धाता ( for विधाता ). Ñ$_{1}$ D$_{8}$ सपत्न( D$_{8}$ °त्नै )स्तु रामा( D$_{8}$ °मो )-भिपन्नान्विधाता. —(l. 18) Ñ$_{1}$ यथा ( for स्वयं ). D$_{8}$ हि नाथः ( for भूतनाथः ). Ś$_{1}$ D$_{12}$ स शक्तः ; D$_{9}$ प्रसक्तः ( for प्रशक्तः ). ]

Colophon. —*Kāṇḍa name* : Ś$_{1}$ om. ; Ñ B$_{4}$ D$_{1.3.4.8.9.12}$ सुंदरकांडे; D$_{2}$ लंकापर्वणि. —*Sarga name* : Ś$_{1}$ Ñ B$_{4}$ D$_{1-4.8.9.12}$ विभीषणवाक्यं. —*Sarga no.* ( figures, words or both ): Ś$_{1}$ Ñ$_{1}$ D$_{1.2.4.8.12}$ om.; Ñ$_{2}$ D$_{9}$ 91 ; B$_{4}$ 93; D$_{3}$ 95; D$_{5-7.10.11}$ T$_{1.3}$ G M 14 ; T$_{2}$ 13 ; L (ed.) 87. —After colophon, D$_{2}$ concludes with राम; G M$_{1.2.5}$ with श्रीरामाय नमः .

—(l. 362) Ś$_{1}$ Ñ D$_{12}$ तदस्य; B$_{2.4}$ D$_{3.9}$ तत( D$_{3}$ * * )स्तु; D$_{1.2.4.8}$ ततस्तन् ( for वचस्तन् ). —(l. 363) Ś$_{1}$ Ñ B$_{2.4}$ D$_{1-4.8.9.12}$ वाक्यं तु( Ñ$_{1}$ D$_{1}$ च ) ( for यत्नेन ). —(l. 364) G$_{1.3}$ महार्थं ( for महात्मा ). Ś$_{1}$ Ñ B$_{2.4}$ D$_{1-4.8.9.12}$ इदं बभाषे वचनं महा( D$_{1}$ दुरा )त्मा( Ñ$_{2}$ B$_{4}$ D$_{9}$ °हामनास् ). —(l. 365) D$_{6}$ तथा ( for तत्र ). D$_{5-7}$ T$_{2.3}$ G M$_{1-3}$ -योध- ( for -यूथ- ). Ś$_{1}$ Ñ B$_{2.4}$ D$_{1-4.8.9.12}$ तस्मिंस्त( Ñ$_{2}$ B$_{4}$ D$_{9}$ °स्मै त )दा नैर्ऋत-राजपुत्रः. —(l. 366) Ś$_{1}$ Ñ B$_{4}$ D$_{1-4.8.9.12}$ इदं हि; B$_{2}$ कामं हि ( for किं नाम ). Ñ$_{1}$ तं ( for ते ). —(l. 367) M$_{5}$ अलौकिकं. D$_{10.11}$ वै बहु- ( for चैव सु- ). Ś$_{1}$ Ñ B$_{2.4}$ D$_{1-4.8.9.12}$ धर्मान्वितं चै( D$_{1}$ नै )व सुनीति( B$_{2}$ मुनीत; D$_{1}$ विनीत )व( Ś$_{1}$ D$_{8.9.12}$ °म )च्च. —(l. 368) B$_{2}$ तस्मिन्. D$_{5}$ T$_{1.3}$ हि; G$_{3}$ न ( for ऽपि ). G$_{3}$ तु ( for न ). Ś$_{1}$ Ñ B$_{2.4}$ D$_{1-4.8.9.12}$ नाम कथं नु( Ś$_{1}$ च; Ñ$_{1}$ प्र-; B$_{2}$ स; D$_{2.4.8}$ तु; D$_{12}$ सु- ) ( for योऽपि भवेन्न ). L (ed.) सुजातं ( for न जातः ). —(l. 369) Ś$_{1}$ Ñ B$_{2.4}$ D$_{1-4.8.9.12}$ त्वमीदृशं व्याहरसि( D$_{1.8}$ °से; D$_{12}$ °स्य ) प्रगल्भं( Ś$_{1}$ D$_{12}$ °ल्भः ). —(l. 370) Ñ$_{1}$ शास्त्रेण; B$_{4}$ सांत्वेन; D$_{2}$ बलेन; T$_{1.3}$ सत्त्वेन ( for सत्त्वेन ). D$_{8}$ धैर्येण ( for वीर्येण ). Ñ$_{2}$ ( also ) निशाचरेण ( for पराक्रमेण ). —(l. 371) Ś$_{1}$ धर्मेण; D$_{3}$ om. ( hapl. ); D$_{8}$ शौचेन; T$_{3}$ वीर्येण ( for धैर्येण ). Ñ$_{1}$ B$_{2}$ D$_{4.7.10.11}$ transp. शौर्येण and धैर्येण. —(l. 372) B$_{2}$ एवं; D$_{4}$ एषः ( for एकः ). B$_{2}$ हि ( for ऽस्मिन् ). Ś$_{1}$ Ñ B$_{2.4}$ D$_{1-4.8.9.12}$ हि( D$_{3}$ [ऽ]स्ति; D$_{9}$ * ) धीमान् ( for विमुक्तो ). —(l. 373) Ś$_{1}$ Ñ$_{1}$ D$_{1.3.4.8.12}$ जातस्तु नस् ; Ñ$_{2}$ B$_{4}$ D$_{9}$ जातश्च नस् ; B$_{2}$ [illegible] जातः पुनस् ( D$_{2}$ श्रुतस् ) ( for विभीषणस् ). Ś$_{1}$ Ñ B$_{2.4}$ D$_{1-4.8.9.12}$ एव ( for

किं नाम तौ राक्षस राजपुत्रा-
वस्माकमेकेन हि राक्षसेन। [ 375 ]
सुप्राकृतेनापि रणे निहन्तुं
शक्यौ कुतो भीषयसे स्म भीरो।
त्रिलोकनाथो ननु देवराजः
शक्रो मया भूमितले निविष्टः।
भयार्दिताश्चापि दिशः प्रपन्नाः [ 380 ]
सर्वे तदा देवगणाः समग्राः।
ऐरावतो विस्वरमुन्नदन्स
निपातितो भूमितले मया तु।
विकृष्य दन्तौ तु मया प्रसह्य
वित्रासिता देवगणाः समग्राः। [ 385 ]
सोऽहं सुराणामपि दर्पहन्ता
दैत्योत्तमानामपि शोकदाता।
कथं नरेन्द्रात्मजयोर्न शक्तो
मनुष्ययोः प्राकृतयोः सुवीर्यः।
अथेन्द्रकल्पस्य दुरासदस्य
महौजसस्तद्वचनं निशम्य। [ 390 ]
ततो महार्थं वचनं बभाषे
विभीषणः शस्त्रभृतां वरिष्ठः।
न तात मन्त्रे तव निश्चयोऽस्ति
बालस्त्वमद्याप्यविपक्वबुद्धिः।
तस्मात्त्वयाप्यात्मविनाशनाय [ 395 ]
वचोऽर्थहीनं बहु विप्रलप्तम्।
पुत्रप्रवादेन तु रावणस्य
त्वमिन्द्रजिन्मित्रमुखोऽसि शत्रुः।
यस्येदृशं राघवतो विनाशं
निशम्य मोहादनुमन्यसे त्वम्। [ 400 ]
त्वमेव वध्यश्च सुदुर्मतिश्च
स चापि वध्यो य इहानयेत्त्वाम्।
बालं दृढं साहसिकं च योऽद्य
प्रावेशयन्मन्त्रकृतां समीपम्। [ 405 ]

एषः). —(l. 374) Ś1 Ñ1 D12 तव् (for तौ). Ś1 Ñ B2.4 D1–4.8.9.12 पार्थिव-; D10.11 G2 M1.2.5 मानुष- (for राक्षस). D1 -पुत्रपौत्राव् (for राजपुत्राव्). —(l. 375) Ś1 Ñ B2.4 D1–4.8.9.12 निशाचरेण (for हि राक्षसेन). —(l. 376) Ś1 Ñ B4 D1–3.8.9.12 रणे प्रसह्यौ( Ñ1 °क्तौ; D8 °ह्य); B2 बलेन जेयौ; D4 रणे विषह्यौ; D7.10.11 निहंतुमेतौ (for रणे निहन्तुं). —(l. 377) D7 M3 शक्तौ (for शक्यौ). T3 वीरौ (for भीरो). Ś1 Ñ B2.4 D1–4.8.9.12 प्रशंससि( B4 °स्तौषि यस्) त्वं सु( Ñ1 तु; Ñ2 B4 D9 च; B2 * )महागुणेषु. —(l. 378) D8 किं लोक- (for त्रिलोक-). Ś1 Ñ B2.4 D1–4.8.9.12 -राजो (for -नाथो). —(l. 379) Ś1 Ñ B2.4 D1–4.8.9.12 शतक्रतुर्; D5–7.10 T G1.3 M शक्तो मया (for शक्रो मया). —(l. 380) Ś1 Ñ D1–4.6.9.12 भयार्दितश्; D10.11 भयार्पिताश् (for भयार्दिताश्). D3 सोपि (for चापि). Ś1 Ñ D1–4.6.9.12 प्रपन्नो (for प्रपन्नाः). —(l. 381) D5.6 G2.3 M3 तथा (for तदा). Ś1 Ñ B2.4 D1–4.8.9.12 म( D1.4 य)त्तेजसा देवगणाश्च सर्वे. —(l. 382) D7 विस्वनम्; D10.11 निस्वनम्; T3 भूतलम्; G3 [ऽ]पि स्वयम् (for विस्वरम). T3 G3 सन् (for स). Ś1 Ñ B2 D1–4.8.9.12 ऐरावणो( B2 °तो) वि( D1 °ति)स्वरमुन्नदंश्च; B4 ऐरावणो विश्वबसुर्नदंश्च. —(l. 383) Ś1 Ñ1 B2 D1.3.4.8.12 सः; Ñ2 B4 D9 च; D2 च सः; M5 [आ]शु (for तु). —(l. 384) D6 G1 M1.2 निष्कृष्य (for विकृष्य). D9 दंतं. D9 M2.5 च (for तु). Ś1 Ñ B4 D1–4.8.9.12 विकृष्य( Ś1 °ष्ट-) दंतं च( Ś1 D12 हि) मयास्य भूयो( Ś1 D1.12 °मौ); B2 विकृष्य दंतं च मया हि दंतिनो; T3 निःशक्तदेहस्तु मया प्रसह्य. —(l. 385) B2 विद्राविता. Ś1 D12 M1.2 समस्ताः; Ñ B2.4 D1–4.8.9 G2 M5 समेताः (for समग्राः). —(l. 386) D4 अहं (for सोऽहं). Ś1 D12 दर्पहर्ता (for °हन्ता). —(l. 387) G1 damaged after शोक up to कथं न in l. 388. Ś1 शोकहंता; Ñ1 D1–4.8–11 M1.5 °कर्ता; Ñ2 B2.4 D6.12 T2 °हता (for °दाता). —(l. 388) Ś1 Ñ B2.4 D1–4.8.9.12 कथं( D3 सोहं) न हन्यां त( D8 °न्यात्त )रसा प्रगृ( Ñ2 B4 D1.2.4.8 °स )ह्य. —(l. 389) M5 जयाय (for सुवीर्यः). Ś1 Ñ B2.4 D1–4.8.9.12 मनुष्ययोनी( Ñ2 °योनौ; B2.4 D9 °पोतौ; D1.8 °योनि) किमु तौ( B2 विहतौ; D3 कृपणौ; D4 किमुभौ) रणाग्रे( D1 नराऽग्रयौ; D4 रणेत्र; D8 ममाग्रे). —(l. 390) Ś1 Ñ B2.4 D1–4.8.9.12 महारथस्य (for दुरासदस्य). —(l. 392) B2 बभाषे (for महार्थं) and महात्मा (for बभाषे). Ś1 Ñ B4 D1.3.4.8.9.12 transp. महार्थं and बभाषे. D2 भूयो बभाषे वचनं महार्थं. —(l. 393) Ś1 Ñ B4 D1.2.4.8.9.12 धर्मभृतां; B2 धर्मवतां; D3 मंत्रविदां (for शस्त्रभृतां). —(l. 394) Ś1 Ñ B2.4 D1–4.8.9.12 शक्तिरस्ति (for निश्चयोऽस्ति). —(l. 395) T3 [अ]सि (for [अ]पि). Ś1 Ñ B2 D2.4.8.9.12 न पक्व; B4 (with hiatus) न इष्ट-; D1 (with hiatus) अपक्व-; D3 (also as in Ś1) G3 M5 विपक्व-; D7 [अ]विवेक-; T2 [अ]विकल्प- (for [अ]विपक्व-). —(l. 396) Ś1 Ñ2 B4 D1–3.8.9.12 त्वयेहात्म-; Ñ1 त्वयात्रात्म-; B2 त्वयेहाद्य; D4 तवेहात्म-; D7 M1–3 त्वया ह्य त्म-; T3 त्वयाद्यात्म-; G3 त्वया ह्यद्य (for त्वयाप्यात्म-). G3 विनाशनार्थं. —(l. 397) B2 वात्रा (for वचो). Ś1 Ñ2 B4 D4.12 G1(after corr.).3 विप्रलुप्तं; B4 D3.7.8 T3 G2 M5 °लब्धं; D1.2 °लुब्धं (for विप्रलप्तम्). —(l. 398) Ś1 D12 -प्रवादस्त्वसि; Ñ B2.4 D1–4.8.9 -प्रवादादसि( B2 D4 °पि; D1 °थ) (for -प्रवादेन तु). —(l. 399) D5 T1 G3 पुत्र- (for मित्र-). Ś1 Ñ B2.4 D1–4.8.9.12 त्वमस्य( B2 °मेव) जातः स्वयमेव शत्रुः. —(l. 400) Ñ B2.4 D1–4.8.9 यद्; G2 M1.2 यश्च (for यस्य). G3 विनाशनं (for विनाशं). —(l. 401) Ś1 Ñ B2.4 D1–4.8.9.12 निशाम्यमानं ह्यनु( Ñ1 D8 न हि; Ñ2 B4 D3 त्वनु; D4 तु न; D9 त्वत्र)मन्य( Ñ1 D8 पश्य,सेव( B2 °तेथ; D1 °से यः; D2 °सेथ). —(l. 403) D8 वा (for च). D3 [ऽ]पि (for य). Ñ1 D5.7.10.11 G1.2 M3 [आ]नयत् (for [आ]नयेत्). —(l. 404) Ñ2 B2.4 D9 भृशं; D1 कृशं; D8 कृतं (for दृढं). B2 हि (for च). Ś1 Ñ B4 D1–4.8.9.12 भूयः; B2 लोलं; G3 योग्यं (for योऽद्य). —(l. 405) T3 प्रावेशयन्; T3 G2 M5 प्रा( G3 प्र)वेशयेन् (for प्रावेशयन्). D6

मूढोऽप्रगल्भोऽविनयोपपन्न-
स्तीक्ष्णस्वभावोऽल्पमतिर्दुरात्मा।
मूर्खस्त्वमत्यन्तसुदुर्मतिश्च
त्वमिन्द्रजिद्बालतया ब्रवीषि।
को ब्रह्मदण्डप्रतिमप्रकाशा- [ 410 ]
नर्चिष्मतः कालनिकाशरूपान्।
सहेत बाणान्यमदण्डकल्पा-
न्समक्षमुक्तान्युधि राघवेण।
धनानि रत्नानि विभूषणानि
वासांसि दिव्यानि मणींश्च चित्रान्। [ 415 ]
सीतां च रामाय निवेद्य देवीं
वसेम राजन्निह वीतशोकाः।

Colophon

4

After 6.10.2, Ś1 Ñ1 D1–4.8.12 ins. :

गतासुं त्वां प्रपश्यामि मूढसत्त्वपराक्रमम्।
राक्षसानां बलं जानन्यः प्रशंससि राघवम्।
यौवराज्याभिषिक्तेन रावणावरजेन च।
सन्तोऽपि न गुणा वाच्या मम शत्रोर्विभीषण।
किं च मां राघवः शक्तो देवैरपि समागतः। [ 5 ]
उपगन्तुं रणे क्रुद्धं गृहीत्वा परमायुधम्।
राक्षसा वानरान्सर्वाल्लँङ्काद्वारमुपस्थितान्।
त्रासयिष्यन्ति संहृष्टा गजा वनमृगानिव।
जानीते चक्षुषा वाचा सर्वलोकप्रियाप्रियम्।
रामे ते चक्षुषी कान्ते वाग्ब्रवीति गुणान्पुनः। [ 10 ]
अस्मात्ते वाक्समायोगात्काकुत्स्थं लक्षये प्रियम्।
लक्ष्मणं वानरेन्द्रं च वानरांस्तस्य चानुगान्।
न चाहं त्वयि विश्वासं गमिष्ये शत्रुसेविनि।
अभिप्रेतं हि मनसो वाग्ब्रवीति शुभाशुभम्।
पूर्वं तु मनसा ध्यात्वा शुभं वा यदि वाशुभम्। [ 15 ]
पश्चात्सर्वाणि भूतानि कर्मणानुचरन्ति हि।
पुरस्ताद्यः स्तवं ब्रूयात्पुण्यकर्मगुणान्वितम्।
न तं वेद्मि स्तवं सत्यं परावृत्तस्तवं यथा।

---

T1 समीपे. Ś1 Ñ B4 D1.2.4 9.12 L (ed.) प्रवेशयेस्त्वा( Ñ2 D9 प्रवेशयेद्यो; B4 प्रावेशयद्यो; D1 प्रावेशयित्वा; D2 प्रवेशयित्वा; D12 प्रवेशयेद्वा; L [ ed. ] प्रवेशयेच्चा )विदितं समीपे; B3 प्रवेशयेद्यो-विहितं समासे; D3 प्रवेशयित्वावहितं समीपे; D8 प्रावेशितं वा वहितं समीपे ( corrupt ). —(l. 406 ) T3 तथा ( for मूढो ). D6 T1.2 G1.2 M3 प्रगल्भोविनय-; T3 [ अ ]प्रहस्तोविनय- ( for ऽप्रगल्भोऽविनय- ). Ś1 Ñ B2.4 D1–4.8.9.12 स( D1–4 प्र- ) मूढ( D2 °भूत )-कल्पो विन( D1 °ष )यादपेतस्. —( l. 407 ) D7 -प्रतापो ( for -स्वभावो ). —( l. 408 ) Ś1 Ñ2 D8.12 भीरुं समासाद्य; Ñ1 B3 D1–4.9 भीरुं च( Ñ1 °रुश्च; D3.4 °तं च ) मामद्य; B4 भीरुं च बालं च; D5.6 T1.2 G3 °त्यर्थ- ( for मूर्खस्त्वमत्यन्त- ). D8 सन् ( for च ). Ś1 Ñ2 D1–8.12 सुदुर्मतिं च; B3 सुदुर्लभं च; B4 D4.9 सुदुर्बलं च; D8 सदुर्मतिः ( for सुदुर्मतिश्च ). —( l. 410 ) Ś1 को दंडवेग- ( for को ब्रह्मदण्ड- ). Ś1 Ñ B2.4 D1–4.8.9.12 -प्रतिमान्सु( D1 °मोग्र; D2.9[ marg. also ] °मप्र )वेगान्( D9 °घोरान् ) ( for -प्रतिमप्रकाशान् ). —( l. 411 ) Ñ1 -कल्पान् ( for -रूपान् ). Ś1 D12 अर्चिष्मदुल्कानलसंनिभांश्च; Ñ2 B2.4 D1–4.8 9 अर्चिष्मतोर्का( B2 °ल्का )नलसंनिकाशान्. —( l. 412 ) M5 कामान् ( for बाणान् ). D4 -तुल्यान् ( for -कल्पान् ). —( l. 413 ) Ś1 Ñ B2.4 D1–4.8.9.12 G M1.2 समीक्ष्य ( for समक्ष- ). B3 D5 -युक्तान् ( for -मुक्तान् ). B2 इह; D2 ननु; D4 अति ( for युधि ). D8 राघवेभ्यः ( for राघवेण ). —( l. 414 ) Ś1 Ñ B2.4 D2.4.8.9.12 प्रगृह्य; D1 प्रसह्य ( for धनानि ). Ś1 Ñ2 D1.7.10–12 T2 G1.2 सु-; Ñ1 D2–4 G3 M1.2.5 स-; B2.4 D8.9 च ( for वि- ). —( l. 415 ) Ś1 D12 पुष्पाणि; B2.4 मुख्यानि; T2 M1.2 चित्राणि; L ( ed. ) मुख्यासि( नि ) ( for दिव्यानि ). Ś1 Ñ1 D12 M1.2 च दिव्यान्; Ñ2 B2.4 D1–4.8.9 च मुख्यान्; D7 विचित्रान् ( for च चित्रान् ). —( l. 416 ) Ś1 Ñ1 D1–4.8.12 तु ( for च ). B3 D4 रामस्य ( for रामाय ). —( l. 417 ) Ś1 Ñ B2.4 D1–4.8.9.12 लंकाधिप ( for राजन्निह ).

Colophon : Ñ1 om. —*Kāṇḍa name* : Ñ2 B2.4 D1.3.4.9.12 सुंदरकांडे; D2 लंकापर्वणि. —*Sarga name* : Ś1 Ñ2 D2–4.8.9.12 विभीषणवाक्यं; B3 विभीषणेंद्रजितो वाक्यं; B4 इंद्रजिद्विभीषणवाक्यं; D1 विभीषणेंद्रजित्संवादः. —*Sarga no.* ( figures, words or both ): Ś1 D1.2.4.8.12 om.; Ñ2 D9 89; B3 82; B4 91; D3 93; D5–7.10.11 T1.3 G M 15; T2 14; L ( ed. ) 86. —After colophon, D2 concludes with राम; G M1.2.5 with श्रीरामाय नमः.

4

Ś1 D12 om. l. 1–3. —( l. 1 ) Ñ1 गतार्थं. D8 तु ( for प्र- ). Ñ1 गूढं; D4 मोघ- ( for मूढ- ). Ñ1 गत- ( for -सत्त्व- ). —( l. 2 ) D8 बलज्ञानाद्; L ( ed. ) कुले जातस् ( for बलं जानन् ). D2 यत्; L ( ed. ) त्वं ( for यः ). Ñ1 D8 प्रशंसति. D1 यत्त्वं रामं प्रशंससि ( for the post. half ). —( l. 3 ) D4 यौवराज्ये. D1 तु ( for च ). —( l. 4 ) D2 शत्रोर्न ( for सन्तोऽपि ). D2.4 हि ( for न ). D1 ग्राह्या; D4 नोच्या ( for वाच्या ). —( l. 5 ) D2 कथं ( for किं च ). D8 सह्यागतैः ( for समागतः ). —( l. 6 ) Ś1 Ñ1 तमागतं; D12 तथागंतुं ( for उपगन्तुं ). D1 शक्तं; L ( ed. ) युक्तं ( for क्रुद्धं ). Ś1 D8.12 वरमायुधं; D1 वरुणा°; D4 च रणा° ( for परमा° ). Ñ1 गृहीतपरमायुधं ( for the post. half ). —( l. 7 ) D1.2 उपागतान् ( for उपस्थितान् ). —Ś1 D12 om. l. 9–10. —( l. 9 ) D3.4.8 जानीतो वाक्य चक्षुश्च; D2 जानीतश्चक्षुषी वाक्य ( for the prior half ). —Ñ1 om. l. 10. —( l. 10 ) D3.4 रामेति; D8 रामं ते ( for रामे ते ). D4 गुणान्पुरः; D8 गुणान्वितः ( for गुणान्पुनः ). —( l. 11 ) Ñ1 यस्माद् ( for अस्माद् ). —( l. 12 ) D8 वानरेंद्रेण. D2 तत्पदानुगान् ( for तस्य चानुगान् ). —( l. 13 ) D2 व्यवसे ( for गमिष्ये ). D8 -सेविते ( for -सेविनि ). —D12 om. ( hapl. ) l. 15. —( l. 16 ) Ś1 D12 च; Ñ1 D8 इ ( for हि ). —( l. 17 ) Ś1 Ñ1 पुण्यकर्मा; D8 शौर्य° ( for

पुरस्तादप्रियाः स्तव्याः परावृत्तास्तु ये प्रियाः।
इष्टभावात्परावृत्तं स्तौषि शत्रुं तथा मम। [20]

## 5

After 6.10.11, Ś1 Ñ1 D1–4.8.12 ins.; Ñ2 V1.3 B D9 ins. l. 9–12 only after 6.10.10 :

नाहं त्वां हन्तुमिच्छामि रक्षन्धर्ममिहात्मनः।
हतस्ते स्वयमेवात्मा ब्रुवतो राघवस्तवम्।
दुर्जनेनोच्यमानानि वचांसि मधुराण्यपि।
अकालकुसुमानीव त्रासं संजनयन्ति मे।
हृद्यस्ते यदि काकुत्स्थो विभीषण हिते रतः। [5]
निर्गच्छ विषयादस्मान्न त्वां द्रष्टुमिहोत्सहे।
ततस्तं कोपसंपूर्णं मोहात्त्यक्तमिव श्रिया।
रावणोऽमधुरं वाक्यं बभाषे स विभीषणम्।
उक्तवाक्ये दशग्रीवे जातकोपो विभीषणः।
मन्त्रिमध्ये स्थितः श्रीमानिदं वचनमब्रवीत्। [10]
सुहृदा ह्यर्थकामेन वाक्यमुक्तं दशानन।
न गृह्णन्ति दुरात्मानः कालस्य वशमागताः।
न प्रियत्वाद्गुणांस्तस्य राघवस्य ब्रवीमि ते।
हितार्थं राक्षसेन्द्रैतन्मया वाक्यमुदाहृतम्।
यदि नार्थहितं तत्ते मनसो वापि न प्रियम्। [15]
मन्त्रं ज्ञात्वा मया प्रोक्तं वाक्यं राक्षससंसदि।
मया तव हितं वाक्यं राक्षसेन्द्र महाबल।
इति प्रोक्तं सुहृद्वाक्यं तस्मिन्काले स्मरिष्यसि।
विरोधं जहि रामेण वानरैश्च महाबलैः।
प्रासैर्मन्त्रोपविष्टैश्च यथा यो मन्यते हितम्। [20]
यदि राजा दशग्रीवः श्रीमान्नित्योत्थितो भवेत्।
विचरेयुस्तदा हृष्टा राक्षसाः पृथिवीतले।
अथ तं ज्ञापयामास प्रहस्तं राक्षसेश्वरः।
राज्यान्मम परिभ्रष्टो दिशो यातु विभीषणः।
एवमुक्तस्ततो राज्ञा प्रहस्तो वाहिनीपतिः।
उत्थापयामास तदा रावणस्य यवीयसम्। [25]

पुण्यकर्म- ). Ñ1 गुणान्वितः . —(l. 18) L (ed.) एतं (for न तं). D4 ते विद्मः (for तं वेद्मि). D4.8 नित्यं (for सत्यं). Ś1 Ñ1 D12 पु( D12 प )रावृत्तं स्त( Ñ1 °त्तस्त )वे ( for परावृत्तस्तवं ). —(l. 19) Ś1 Ñ1 D12 तव; D1 च ये (for तु ये). L (ed.) पुरस्ताद्यः प्रियस्तस्य परावृत्तस्तवप्रियः. —(l. 20) Ś1 D12 अपावृत्तः ; Ñ1 परावृत्तः ; D2 पुरावृत्तः ; D4 पुरावृत्तं ( for परावृत्तं ). L( ed. ) न मां ( for मम ).

## 5

(l. 1) D1 हि (for [अ]हं). D8 हतुंम् (for हन्तुम्). D3 रक्षंतं धर्ममात्मनः ( for the post. half). D4 न त्वा हंतुं मया शक्यं रक्षता धर्ममात्मनः . —(l. 2) D8 तु (for ते). Ñ1 आत्मा तु; D1.8 आत्मा हि (for एवात्मा). D1.3 ब्रुवता (for ब्रुवतो). D8 राघव**. —After l. 2, D3.4.8 ins.; while Ś1 D12 ins. after l. 8 :

1* दुर्जनः परिहर्तव्यो विद्ययालंकृतोऽपि सन्।
मणिना भूषितः सर्पः किमसौ न भयंकरः।

[ = Nītiśataka St. 42 (N. S. P. ed.). —(l. 1) D4 भूषितो (for [अ]लंकृतो). ]

—Ñ1 om. l. 3–4. —(l. 3) D8 च (for [अ]पि). —(l. 4) D12 अकाले (for अकाल-). D1.3.4 संत्रासं (for त्रासं सं-). —(l. 5) D8 हृदये (for हृद्यस्ते). —(l. 6) Ś1 त्वा (for त्वां). —After l. 6, Ś1 D2.12 ins. an addl. colophon :

[ *Kāṇḍa name* : Ś1 om.; D2.12 सुंदरकांडे. —*Sarga name* : Ś1 D2.12 विभीषणपरित्यागः . —After colophon, D2 concludes with रामचन्द्र. ]

—L (ed.) om. l. 7–8. —(l. 7) Ñ1 मुक्तम् (for त्यक्तम्). —(l. 8) Ñ1 D1–4.8 रावणं मधुरं and विभीषणः (for रावणोऽमधुरं and विभीषणम् respy.). —D1–3 om. l. 9–10. —(l. 9) D4 -कंपो (for -कोपो). Ś1 D12 इति तस्य वचः श्रुत्वा महात्मा स विभीषणः . —For l. 11–12, cf. 6.10.15. —(l. 11) Ś1 D12 हित-; Ñ1 ह्यनु- (for ह्यर्थ-). Ñ2 V3 B D9 निशाचर (for दशानन). —(l. 12) Ñ2 V1.3 B D9 नरा मूढाः (for दुरात्मानः). Ñ1 प्रगृह्णंति महात्मानः (for the prior half). —(l. 13) Ś1 D8.12 गुणं (for गुणांस्). L (ed.) सद्यो (for तस्य). D1 श्रीरामस्य (for राघवस्य). —(l. 14) Ñ1 राक्षसेंद्रे तु; D1.2.8 धर्ममेवैतन्; L (ed.) राक्षसेंद्रस्य (for राक्षसेन्द्रैतन्). D8 मुदा (for मया). D3 उदीरितं (for उदाहृतम्). —(l. 15) Ś1 D12 यदि नैव; D3 यदि नात्म-; D8 यद्धितार्थं- (for यदि नार्थ-). D4 मन्यसे त्वं प्रियं वचः (for the post. half). —(l. 16) Ś1 D2 मंत्रज्ञत्वान् (for मन्त्रं ज्ञात्वा). —D4 om. l. 17. —(l. 17) D1 वाच्यं (for वाक्यं). D1.2.8 राक्षसैश्च (for राक्षसेन्द्र). D1.8 महाबलैः . —(l. 18) D1 प्रीति-; L (ed.) इह (for इति). D1 transp. तस्मिन् and काले. —(l. 19) Ñ1 D8 संवादं नापि; D1 संवादं चापि; D3 संवादो नापि; D4 विवादो नापि; L (ed.) संवादे नापि (for विरोधं जहि). —After l. 19, Ś1 D12 ins. :

2* मया तव हितं वाक्यं राक्षसैश्च महाबलैः।

[ Cf. l. 17. D12 राक्षसेंद्र महाबल ( for the post. half).]

—D2 reads l. 20–21 in marg. —(l. 20) Ñ1 D8 आसैर्; D4 प्राप्त- (for प्रासैर्). Ñ1 [आ]त्मा; L (ed.) यैर् (for यो). Ś1 D12 तैर्मन्यते (for यो मन्यते). D2 हिते. —(l. 21) D1 राजन् (for राजा). D2 नीतिपरः (for दशग्रीवः). D2 नित्योपि वा; D3 °दितो; D4 नित्ये स्थितो; D8 नित्यस्थितो (for नित्योत्थितो). D8 भवान्. —(l. 22) D4 ततो (for तदा). Ś1 -तलं (for -तले). —After l. 22, Ś1 Ñ1 D12 ins. :

3* उक्तवाक्ये दशग्रीवे जातकोपे विभीषणे।

[ L (ed.) दशग्रीवो जातकोपो. ]

—(l. 23) Ś1 D12 संज्ञापयामास; Ñ1 चाज्ञा°; D1.2.8 त्वाज्ञा°; (for तं ज्ञा°). —(l. 24) Ś1 D12 अयं मत्तः ; D2 राज्याश्रम- (for राज्यान्मम). —(l. 25) Ś1 D1.12 उक्ते (for उक्तस्). D8 तदा (for ततो). —(l. 26) D8 om. from the post. half up

न शक्यं भवता स्थातुं गच्छ या ते गतिर्मता।
क्रुद्धस्ते रावणो राजा राक्षसाश्च महाबलाः।
प्रहस्तस्य वचः श्रुत्वा रावणं रावणानुजः।
अब्रवीत्परुषं वाक्यं भीमकर्मा विभीषणः। [30]
निर्गमिष्याम्यहं राजन्यदिदं तव सुप्रियम्।
अप्रमादश्च लङ्कायां कर्तव्यो राक्षसेषु च।
अथवा किं करिष्यन्ति राक्षसा नगरी च ते।
रक्ष स्वात्मानमेव त्वं वानरा हि महाबलाः।
क्षिप्त्वा शृङ्गाणि शतशः पादपांश्च शिलायुधाः। [35]
लङ्कां संपूरयिष्यन्ति सप्राकारां सतोरणाम्।

## 6

After 6.11.1$^{ab}$, Ś D3.4.12 ins.; Ñ1 D1.2.8 ins. l. 1–6 only after 6.11.1$^{ab}$ :

क्रोधसंरक्तनयनं ससंध्यमिव तोयदम्।
तरङ्गकुटिलां लोलां भ्रुकुटीं भृशदारुणाम्।
कृत्वासीनं निरीक्षन्तं प्रासादाग्रममर्षणम्।
अभिवाद्य ततो भूमौ क्रोधपर्याकुलेक्षणः।
चतुर्भिः सचिवैः सार्धं निश्चक्राम विभीषणः। [5]
स मातरं पुनर्दृष्ट्वा तत्सर्वं विनिवेदितुम्।
आजगाम मुहूर्तेन जननीमवलोककः।
संप्रविश्य महाप्राज्ञः सप्तकक्ष्यं महागृहम्।
हस्त्यश्वरथसंपूर्णं नानायोधसमाकुलम्।
परश्वधसमाकीर्णं चापपाणिविभूषितम्। [10]
दिव्यरत्नसमाकीर्णं प्रासादशतशोभितम्।
नित्यं बर्हिणसंघुष्टं प्रमदाजनसंकुलम्।
पुण्याहरवघोषेण सर्वतः प्रतिनादितम्।
दीप्यमानं श्रिया जुष्टं यथा वै वैष्णवं पदम्।
दीयतां याच्यतां चेति श्रूयमाणमहास्वनम्। [15]
पुरंदरगृहप्रख्यं कुबेरसदनोपमम्।
आवृतं कल्पवृक्षैश्च समन्तादुपशोभितम्।
पुंनागबकुलाकीर्णं कदलीखण्डमण्डितम्।
तथा कलापिबहुलं नानापक्षिभिरावृतम्।
सर्वदोषविनिर्मुक्तं गृहैः काञ्चनवेदिभिः। [20]
स प्रविश्य महाप्राज्ञो राक्षसेन्द्रो विभीषणः।
अनेकैर्वर्षवरकैः स्थविरैः सर्वतो वृतम्।
जटावल्कलसंवीतैर्वेत्रजर्जरपाणिभिः।
पदाहतिसुसंविग्नो निश्वसन्नुरगो यथा।
बाष्पव्याकुलताम्राक्षः स्खलमानः क्वचित्क्वचित्। [25]
अवष्टम्भेन हि स्वेन मन्युना च परिप्लुतः।
शोकसागरमध्यस्थो नानादोषावमानितः।
भ्रात्रा ज्येष्ठेन पापेन क्रूरेण हतबुद्धिना।

---

to the prior half of l. 27. Ñ1 कनीयसं (for यवीयसम्). —(l. 27) D8 मतिर्मम (for गतिर्मता). —(l. 28) D1 ते (for च). D4 राक्षसश्च महाबलः (for the post. half). —(l. 30) Ñ1 परमं (for परुषं). —(l. 31) D3.8 यदि (for यद्). —(l. 32) D3.4 अप्रमादस्तु; D8 प्रसादश्चापि (for अप्रमादश्च). D1 लंकायाः. Ś1 Ñ1 D12 राक्षसेश्वर (for राक्षसेषु च). —(l. 33) D2.8 नगरीं. —(l. 34) D4 एवं (for एव). Ś1 D12 [अ]थ (for त्वं). —(l. 35) D4 शिलायुधान् (for शिलायुधाः). —(l. 36) Ś1 D2.3.12 संचूर्णयिष्यंति; Ñ1 संपूर्णयिष्यंति; D8 संपूरयिष्यामि.

## 6

(l. 1) D3 ससांध्यम् (for ससंध्यम्). —(l. 2) Ñ1 भृकुटीं तरंगकुटिलां (hypm.) (for the prior half). Ś2 भ्रुकुटीं; Ñ1 लोलां च; D2.4 भ्रु( D4 भृ )कुटिं. —(l. 3) D4 अमर्षिणं (for अमर्षणम्). —Ñ1 reads twice l. 4–5. —D3.4 om. l. 6. —(l. 6) L (ed.) द्रष्टुं (for दृष्ट्वा). Ñ1 D1.2.8 विनिवेद्य च (D2 तत्) (for °वेदितुम्). —(l. 7) D3 अवलोकयन् (for °लोककः). —(l. 8) Ś2 D3.12 स (for सं-). Ś1 महाप्रज्ञः. D4 सप्तकक्षं. D3 सप्तकक्षां महाबलः (for the post. half). —(l. 9) D3 -संपूर्णां. D3 -समाकुलां. —After l. 9, D3.4 ins.:

1* वृतां नैर्ऋतशार्दूलैर्गदामुद्गरपाणिभिः।
शक्त्यृष्टिपाशबहुलां ध्वजतोमरसंकुलाम्।
चर्मवर्मसमाकीर्णां प्रासशूलसमाकुलाम्।

[(l. 1) D4 वृतं (for वृतां). —(l. 2) D4 -बहुलं. D4 ध्वजतोरणसंकुलं (for the post. half). —D4 om. l. 3.]

—D4 om. l. 10. —(l. 10) D3 परश्वधायुधाकीर्णां चापबाणविभूषितां. —After l. 10, D3 ins.:

2* सप्तकक्षां प्रविश्यैव ददर्श भवनं महत्।
पाण्डुराभ्रप्रतीकाशं कैलासशिखरोपमम्।

—D12 om. l. 11. —(l. 11) D3 दीपरत्न-; D4 हर्म्यं धर्म- (for दिव्यरत्न-). —(l. 12) D3 नित्य- (for नित्यं). D4 प्रासादशत- (for प्रमदाजन-). —(l. 13) D4 -वाक्य- (for -रव-). —(l. 14) D4 पुष्टं (for जुष्टं). —(l. 15) D3 भुज्यतामेभिः श्रूयमाणं (for याच्यतां चेति श्रूयमाण-). —(l. 16) D8 -भवनोपमं. —(l. 17) D3.4 तु (for च). —(l. 18) D4 -स्तंभ-; D12 -षंड- (for -खण्ड-). —After l. 18, Ś2 erroneously repeats l. 12, 10, दिव्यरत्नस of l. 11 and l. 13–18. —(l. 19) L (ed.) दीर्घं (for तथा). D3.4 दीर्घिकाभामिर्व (D4 °मिश्र व )हुलं (for the prior half). —(l. 20) D3.4 कांचनवेदिकैः. —(l. 21) D4 सं- (for स). Ś1 महाप्रज्ञो; D4 °प्राज्ञे (for °प्राज्ञो). D4 विभीषणः (here and below). —(l. 22) D3.4 अनेकवर्षशतकैः (for the prior half). —(l. 23) Ś1 -गूर्जर-; Ś2 D3.12 -झर्झर- (for -जर्जर-). —(l. 24) Ś2 D12 पादाहतिसु-; D3 पादताडन-; D4 पादेन हत-. Ś D12 निःश्वसन्. —(l. 25) D3 बाष्पाकुलित-. D3 लंबमानः; D4 वलमानः (for स्खलमानः). —(l. 26) D3.4 L (ed.) अविषह्येन दुःखेन (L [ed.] तु स्वेन) (for the prior half). D3.12 प्रत्युवाच (for मन्युना च). —(l. 27) D3.4 नानादोष( D3 मानार्हः स )विमानितः (for the post. half). —(l. 28) D3 क्रूरेण (for पापेन). D4 भ्रात्रा क्रूरेण ज्येष्ठेन (for the prior half). D3.4 पापेन (for क्रूरेण). —(l. 29) D3 स ददर्श ततो

ददर्श मातरं तत्र निर्मलां जाह्नवीमिव ।
संवीतशुक्लवसनां हंसगद्गदभाषिणीम् । [30]
वरासनगतां देवीं भूषणैरुपशोभिताम् ।
सर्वलक्षणसंपूर्णां जननीमवलोक्य ताम् ।
पादयोर्न्यपतद्दूराच्छिन्नमूल इव द्रुमः ।
उद्धृत्य बाहू विपुलौ धर्मात्मा स विभीषणः ।
तमार्तरूपं दृष्ट्वैव केकसी जातविस्मया । [35]
स्वाङ्कमारोपयामास विलपन्तमचेतनम् ।
मूर्ध्नि चैनमुपाघ्राय इदमाह शुचिस्मिता ।
किमर्थं त्वं नरश्रेष्ठ पूर्णचन्द्रनिभानन ।
पद्मपत्रविशालाक्ष गजविक्रान्तगामिक ।
दुन्दुभिस्वननिर्घोष मत्तवारणवारण । [40]
धर्मबुद्धे महाप्राज्ञ केनासि त्वं विमानितः ।
ब्रूहि धर्मसमाचार पितुर्वृत्तव्रते स्थितः ।
पद्मयोनिकुले जातः स त्वं केनासि दुर्मनाः ।
ब्रूहि कार्यं विशालाक्ष भयं कस्मादुपागतम् ।
महेश्वरात्सवित्रोर्वा इन्द्राद्वापि पितामहात् । [45]
प्रेतराजाधिपाद्वापि कुबेराद्वापि बुद्धिमन् ।
सर्वदेवसमूहाद्वा सर्वमाख्यातुमर्हसि ।
अथवा कोसलेन्द्राद्वा रामान्नयविशारदात् ।
यस्यानीता च सा देवी सीता सुरसुतोपमा ।
एवमुक्तः स मात्रा तु राक्षसेन्द्रो विभीषणः । [50]
आख्यातुमुपचक्राम यथावृत्तं तु राक्षसात् ।
भयगद्गदया वाचा ह्रिया किंचिदधोमुखः ।
संस्तभ्य च तथात्मानं धैर्यबुध्या निवेश्य च ।
पञ्चेन्द्रियग्रहैर्युक्तं संस्तभ्य मनसा गिरम् ।
स वक्तुमुपचक्राम जनन्यै सूनृतं वचः । [55]
शृणु मातर्यथा वाच्यं यद्वाक्यं हितनिष्ठुरम् ।
रावणस्य महाभागे मन्त्रकालविनिर्णये ।
उक्तः स तु मया देवी यथा सीता प्रदीयताम् ।
पादौ तस्याथ संगृह्य यथावदभिवाद्य च ।
रामेण तु महाबाहो न वैरं कर्तुमर्हसि । [60]
अन्यच्च शृणु मे राजन्यथा वक्ष्यामि सुव्रत ।
मारीचो येन निहतः कबन्धश्च महाबलः ।
विराधश्च महातेजाः खरश्च सगणो हतः ।
वाली येन हतो वीरः सप्त तालाश्च भेदिताः ।
विरूपा च कृता येन भगिनी रावणस्य सा । [65]
एवंविधानि कार्याणि श्रूयन्ते यस्य रावण ।
तस्य मुञ्च महाबाहो पत्नीं रामस्य धीमतः ।
एवमुक्तो मया देवि क्रोधेन कलुषीकृतः ।
धिग्धिगित्येवमुक्त्वा मां निर्भर्त्स्य च पुनः पुनः ।
ताडितोऽस्मि सभामध्ये पादेनाशनिवर्चसा । [70]

---

मातां; D4 मातरं स ददर्शाथ (for the prior half). —(l. 30) D3.4 शुक्लसंवीतवसनां हंसशुक्लशिरोरुहां (D4 सगद्गदप्रभाषिणीं). —(l. 32) L (ed.) -संपन्नां (for -संपूर्णां). —After the prior half of l. 32, D3 ins.:

3* सावित्रीमिव रूपिणीम् ।
चिन्तयन्तीं तमेवार्थं रामविग्रहसंयुतम् ।
ईषत्प्रम्लानवदनां विपद्मामिव पद्मिनीम् ।
एवं गुणगणाकीर्णां.

D3 अवलोकयन्. —(l. 34) D4 विपुलौ बाहू (by transp.). D3 उच्छ्रित्य बाहू विलपन् (for the prior half). —(l. 35) Ś2 दृष्ट्वा वै. Ś2 D3.4 कैकसी (here and below). D3 -संभ्रमा (for -विस्मया). —(l. 36) D3 अंकम् (for स्वाङ्कम्). Ś2 विचेतनं (for अचेतनम्). —(l. 37) D3 सुविस्मिता (for शुचिस्मिता). —(l. 38) D4 रौषि (for पूर्ण-). D3 विनयि- (for त्वं नर-) and रोदिषींदु- (for पूर्णचन्द्र-). —(l. 39) D12 om. (hapl.) from the post. half up to the prior half of l. 44. L (ed.) -विक्रम- (for -विक्रान्त-). D3.4 मत्तमातंगसद्गते (for the post. half). —(l. 41) D4 निवारितः (for विमानितः). —(l. 42) D4 काव्य-; L (ed.) कल्प- (for धर्म-). —(l. 43) D3.4 पद्मयोनेः कुलस्य त्वं (for the prior half). D3.4 नेता (for स त्वं). —(l. 45) Note hiatus between the two halves. D4 माहेश्वराद्. Ś2 D4.12 वा विष्णोर्; D3 विष्णोर् (subm.) (for सवित्रोर्). L (ed.) देवेंद्राद्वा (for इन्द्राद्वापि). D3 महाबल. —(l. 46) Ś D12 बुद्धिमान्; D4 बुद्धितः (for बुद्धिमन्). —After l. 46, D3 ins.:

4* वरुणात्पाशहस्ताद्वा पूर्ववैरचिकीर्षया ।

—(l. 48) D3 हि (for वा). —(l. 49) D4 यस्मान्नीता. D3 वरा (for च सा). —(l. 50) Ś1 तु (for स). L (ed.) स (for तु). D3.4 राक्षसेशो. —(l. 51) D3 राक्षसः; D4 रक्षसा; L (ed.) राक्षसीं (for राक्षसात्). —(l. 52) L (ed.) भयाद् (for भय-). D3.4 अवाङ्मुखः (for अधोमुखः). —(l. 53) D3 तदा (for तथा). Ś2 D12 L (ed.) धैर्यं बुध्या (L [ed.] °द्धौ) निवेश्य च; D3.4 धैर्येण वि(D4 °र्यं बुद्धि)निवेश्य च (for the post. half). —Ś D12 om. l. 54. —(l. 54) L (ed.) यश्चेंद्रियगृ(?ग्र)हे युक्तं(?क्तः) (for the prior half). D3 पंचेंद्रियग्राहयुतं संस्तभ्य मनःसागरं (unmetric). —(l. 55) D3 प्रवक्तुम्. D4 L (ed.) जनन्यावि(L [ed.] °न्यैवि)तथं वचः (for the post. half). —(l. 56) Ś2 D12 मया (for यथा). D3 शृणुष्वावहिता त्वं यन्मया दुरनुष्ठितं (subm.); D4 L (ed.) शृणु मातर्ममावेद्यं(L [ed.] °वद्यं) यन्मया दुरधि(L [ed.] °नु)ष्ठितं. —(l. 57) L (ed.) महाभागैर् (for °भागे). —(l. 58) D3.4 देवि (for देवी). —(l. 59) D3 अंगना सा परित्याज्या दहेदंगारवत्कुलं. —After l. 60, D3 ins.:

5* विशामो बलवीर्येण यशसाप्रतिमेन च ।
निरर्थकं वैरमिदं न त्वं कर्तुमिहार्हसि ।

—(l. 61) D4 सत्यं (for अन्यच्). D3.4 यत्त्वां (for यथा). —(l. 62) D3 निहतो येन (by transp.). —(l. 63) Ś1 D12 गतः (for हतः). —For l. 64-65, D3.4 subst.:

6* वाली ह्येकेन बाणेन प्रेषितो यमसादनम् ।
तस्य धर्मात्मनः पत्नीं मुञ्च मद्वचनात्प्रभो ।

[(l. 2) D4 विभो (for प्रभो).]

—(l. 66) D3.4 कर्माणि (for कार्याणि). —(l. 70) D4 पदा

पुनश्चोक्तोऽस्मि तेनात्र गच्छ गच्छेति मा चिरम् ।
भ्रष्ट निर्लज्ज नीचेति ध्रुवं निन्ये यमक्षयम् ।
शत्रुणा प्रहितो नूनं शत्रुपक्षप्रशंसकः ।
रामस्यानुगतं भक्तं न त्वां द्रष्टुमिहोत्सहे ।
एवमुक्तोऽस्मि परुषं रावणेन शुभानने । [ 75 ]
राममेवानुगच्छामि त्वां तु द्रष्टुमिहागतः ।
यदि मे दुरनुक्रान्तं यदि वा दुरनुष्ठितम् ।
यदि दुश्चरितं मन्ये ततो गृह्य प्रशाधि माम् ।
एवमुक्ता तदा तेन माता तस्य महात्मनः ।
नाशकद्भाषितुं सुश्रूर्मृण्मयीव व्यवस्थिता । [ 80 ]
ततः संज्ञामुपागम्य मुहूर्तादिव भामिनी ।
उवाच रुदती वाक्यं विभीषणमिदं तदा ।
एवमेतन्महाबाहो यथा वदसि पुत्रक ।
विद्धि नूनं विनाशं च सर्वेषां समुपस्थितम् ।
स्मारितास्मीह वचनं पुत्र तद्विपुलं त्वया । [ 85 ]
ब्रह्मणश्च महाबाहो तच्छृणुष्व समाहितः ।
दशग्रीवप्रभृतिषु जातेषु कुलनन्दन ।
निर्जितेषु च देवेषु सशक्रेषु महात्मसु ।
चिन्तयन्ती कुलस्याहं पुत्रं वंशकरं शुभम् ।
तपस्विनस्तव पितुर्गताश्रमपदं ह्यहम् । [ 90 ]
स्थितास्मि पुरतो वत्स तव पित्रे महात्मने ।
वक्तुकामा विशालाक्ष पितरं ते तपस्विनम् ।
ततो मां धिष्ठितां दृष्ट्वा पुरस्तादृषिसत्तमः ।
उवाच मधुरं वाक्यं हर्षगद्गदया गिरा ।
किमागमनकृत्यं ते ब्रूहि तत्त्वेन शोभने । [ 95 ]
एवमुक्तास्मि मुनिना पुत्र बुद्धिमतां वर ।
ततोऽहं वक्तुमारब्धा प्राञ्जलिः प्रणिपत्य नम् ।
आगतास्मि महाभाग संशयच्छेदनाय वै ।
तव वाक्येन ये जाताः पुत्रा मम महाव्रत ।
त्वं राज्यं विपुलं प्राप्ता लब्ध्वा पैतामहं पदम् । [ 100 ]
किंचिच्चिन्तास्ति संभूता दृष्ट्वा पुत्रं महाबलम् ।
अवध्यं वरदानेन सर्वैरपि दिवौकसैः ।
यक्षगन्धर्वनागैश्च पिशाचैश्चर्षिभिस्तथा ।
एवंविधेषु पुत्रेषु जातेषु तव सुव्रत ।
को नु वंशकरो ब्रह्मंस्तव पुत्रो भविष्यति । [ 105 ]
ऊचे मां स महाबुद्धिः काले धर्मभृतां वरः ।
दुराचारव्रतयुतो राज्ये स्थास्यति रावणः ।
कनिष्ठश्चापि धर्मात्मा पुत्रो वंशधरस्तव ।
राज्ये स्थास्यति धर्मेण यावद्भूमिर्धरिष्यति ।
पुनरुक्तः स तु मुनिर्मया पुत्र प्रणम्य वै । [ 110 ]
उवाच वचनं धीमान्सर्वज्ञो भगवानृषिः ।
शृणु केकसि यद्वृत्तं ब्रह्मणः सदने शुभे ।
देवानां संनिधौ भद्रे ऋषीणां च समागमे ।
यक्षकिंपुरुषाणां च पितॄणां वामलोचने ।
गन्धर्वाणां सनागानां पिशाचानां तथैव च । [ 115 ]
श्रेष्ठानां देवयोनीनां संनिधौ यन्मया श्रुतम् ।

---

तेन ( for सभामध्ये ). —D4 om. from the post. half up to the prior half of l. 71. —( l. 71 ) D3 मत्स्थानाद्; L ( ed. ) [ अ ]हं तेन ( for तेनात्र ). L ( ed. ) तत्र ( for first गच्छ ). —D4 om. l. 72. —( l. 72 ) D3 ध्वस्त ( for भ्रष्ट ). D3 न त्वां; L ( ed. ) न त्वा ( for ध्रुवं ). —( l. 73 ) D4 शत्रुणा हि ( hypm. ). —( l. 74 ) Ś2 D12 रामं चानुगतं रक्तं; D3 रामानुरागरक्तं च; D4 रामे सानुगसंसक्तं ( for the prior half ). —( l. 75 ) D4 पारुष्यं ( for परुषं ). —( l. 76 ) D12 [ उ ]त्सहे ( for [ आ ]गतः ). —( l. 77 ) D3.4 वा दुरति- ( for मे दुरनु- ) and दुरधि- ( for दुरनु- ). —( l. 78 ) D3.4 मह्यं; D12 मेव ( for मन्ये ). —( l. 79 ) Ś2 D3 एवमुक्त्वा. —( l. 80 ) D4 स्थिता तदा ( for व्यवस्थिता ). D3 मृत्युनेवास्थिता तदा ( for the post. half ). —( l. 81 ) D3 चैव ( for इव ). —( l. 82 ) D3 साबला ( for रुदती ). —( l. 84 ) D3.4 विधिर्नू( D4 क्षयो नू )नं विशालाक्ष ( for the prior half ). D3.4 समुपस्थितः. —( l. 85 ) D3.4 चास्मि ( for [ अ ]स्मीह ). D4 ते ( for तद् ). D3 पितुस्ते विपुलौजसः ( for Ś2 D4.12 यशः ( for त्वया ). D3 पितुस्ते विपुलौजसः ( for the post. half ). —( l. 86 ) D3 ब्रह्मर्षेः सु-; D4 ब्रह्मणस्तु. —( l. 88 ) D4 om. ( hapl. ) च देवेषु. D3.4 महामते ( for महात्मसु ). —( l. 89 ) D3.4 पुत्र. D4 वंशधरं; L ( ed. ) वशकरं. D3.4 सुतं ( for शुभम् ). —( l. 90 ) Ś1 तपस्विनं च पुत्रं तं; Ś2 D12 तपस्विने च पित्रे ते ( for the prior half ). D3 गत्वा ( for गता ). D3 तथा; D12 गृहं ( for ह्यहम् ). —( l. 91 ) D4 पितुस्तव महामते ( for the post. half ). —After l. 92, D3.4 ins. :

7* सर्वदोषविनिर्मुक्तं परमेष्ठिसमं गुणैः ।
ध्यानयोगसमायुक्तमाश्रमस्थं महामुनिम् ।

—( l. 93 ) D3 धिष्ठितो ( for धिष्ठितां ). —( l. 96 ) D3 ऋषिणा ( with hiatus ) ( for मुनिना ). D3.4 बुद्धिमता तदा ( for °मतां वर ). —( l. 100 ) D3.12 स्व- ( for त्वं ). D3 प्राप्तं. D4 लब्धं ( for लब्ध्वा ). D3 लब्धं तस्य महाफलं ( for the post. half ). —( l. 101 ) D4 पुत्रं दृष्ट्वा ( by transp. ). D3 विवृत्ता चास्मि संभूतान्दृष्ट्वा पुत्रान्महाबलान् . —( l. 102 ) D3 अवध्यान् ( for अवध्यं ). —( l. 105 ) D3 नो ( for नु ). L ( ed. ) वंशधरो. D4 वद ( for तव ). —After l. 105, D4 ins. :

8* एवमुक्तो महर्षिर्मा संप्रोवाचेति रावणः ।

—( l. 106 ) D3 किं तु वक्ष्ये महाबुद्धे कालः शस्त्रभृतां वरः; D4 कियंतं च महाबाहो कालं धर्मभृतां वर. —( l. 108 ) D3 कतरश्च; D4 कतमश्च ( for कनिष्ठश्च ). D3.4 वंशकरस् ( for °धरस् ). —( l. 110 ) D4 एवम् and च ( for पुनर् and तु respy. ). D3 एवमुक्तस्तु मति*र् ( for the prior half ). D3 हि ( for वै ). —( l. 111 ) D3.4 बुद्धिमान्वरः( D4 °नृषिः ) ( for भगवानृषिः ). —( l. 114 ) After पितॄणां, D12 erroneously repeats from च समागमे in l. 113 up to पितॄणां in l. 114. D3 पितॄणां च विशालाक्षि यक्षकिंपुरुषेष्वपि; D4 पितॄणां चापि यक्षाणां किंनराणां च शोभने. —Ś1 om. l. 115. —( l. 115 ) Ś2 सुनागानां ( for स° ). —( l. 116 ) D3.4 अन्यानां ( for श्रेष्ठानां ).

## 12

After 267*, Ś Ñ$_2$ D$_{1-4.8.9.12}$ ins. :

तद्युद्धमभवद्घोरं सुरासुरसमाकुलम् ।
देवतानां ततः सैन्यं पत्त्यश्वरथसंकुलम् ।
मत्तद्विपसहस्रैश्च संवृतं शूरसंमतम् ।
असुरैः सर्वतो भग्नं पलायत दिशो दश ।
तत्प्रभग्नं बलं सर्वं दृष्ट्वाहं त्वरयान्वितः । [5]
शिलापादपवर्षैश्च पर्वतैश्च प्रवृष्टवान् ।
असुराणां महत्सैन्यं सर्वतो द्रावितं मया ।
मयैव च सह स्थित्वा तदायुध्यत ते पिता ।
शक्तिभिर्भिण्डिपालैश्च पाशैस्तीक्ष्णैः परश्वधैः ।
एतस्मिन्नन्तरे राम राजा दशरथस्त्वरन् । [10]
एकैकेन च बाणेन दश पञ्च च सप्त च ।
निर्बिभेदासुरान्क्रुद्धः शतशोऽथ सहस्रशः ।
ततस्तं कोष्ठकीकृत्य दैतेयानां बलं तदा ।
अदृश्यं सायकैश्चक्रे ततः क्रुद्धो नराधिपः ।
संदधे चैव नाराचमाग्नेयास्त्रसमायुतम् । [15]
तेषां तं च मुमोचाशु ततोऽदह्यन्त दानवाः ।
असुराश्च सदैतेया हताः शतसहस्रशः ।
एतस्मिन्नन्तरे राम निर्वृताः सर्वदेवताः ।
वरेण छन्दयामासू राजानं पितरं तव ।
ब्रूहि राजन्महाबाहो वरदा देवताः स्थिताः । [20]
किं ते वरं ददत्वेताः सुयुद्धेनाद्य तोषिताः ।
दैवतैरेवमुक्तस्तु राजा दशरथोऽब्रवीत् ।
देवता यदि मे तुष्टाः पुत्रो मह्यं प्रदीयताम् ।
सर्वैः क्षत्रगुणैर्युक्तो महाबलपराक्रमः ।
एवमुक्ते तदा राज्ञा देवा वाक्यमथाब्रुवन् । [25]
चत्वारस्ते सुता राजन्भविष्यन्ति महाबलाः ।
ज्येष्ठो राम इति ख्यातो भरतो लक्ष्मणस्तथा ।
शत्रुघ्नश्च महावीर्यः सुमित्रानन्दवर्धनः ।
अयोध्यां गच्छ भद्रं ते विज्वरो भव पार्थिव ।
संपूज्य विधिवद्देवा दत्त्वा रत्नानि चाप्युत । [30]
अस्त्राणि चैव दिव्यानि रथं युक्तं च सुप्रभम् ।
चूडामणिं तथा राम दिव्यं चामृतसंभवम् ।
विसर्जितस्ततो देवैर्मया सह नराधिपः ।
आगच्छत तदा राजा अयोध्यां त्वरयान्वितः ।
मया सह महाबाहुस्तां पुरीं प्रविवेश ह । [35]
सत्कारेण महार्हेण पूजयामास मां नृपः ।
स सुखी मासमुषितो राज्ञस्तस्य निवेशने ।
ततो राजानमामन्त्र्य स्ववेश्म पुनरागतः ।
तस्य राज्ञो भवान्पुत्रः सर्वैः पुत्रगुणैर्युतः ।
यथा दशरथस्य त्वं तथा मम न संशयः । [40]
चिन्तयन्सततं राम किं कुर्यां नृपतेः प्रियम् ।
चिन्तयानस्य कालो मे गतोऽयं व्रीडितस्य च ।
विद्यते त्वयि मे स्नेहः परा संभावना च मे ।

## 12

(l. 1) D$_2$ तत्र युद्धं महद्घोरं (for the prior half). D$_{2.3}$ -भयंकरं (for -समाकुलम्). —(l. 2) Ñ$_2$ D$_9$ महत् (for ततः). —(l. 3) Ñ$_2$ D$_9$ -सहस्रेण (for -सहस्रैश्च). D$_3$ संश्रितं (for संवृतं). D$_9$ सुरसंवृतं; L (ed.) सुरसंमतं (for शूर-संमतम्). —(l. 4) L (ed.) पलायितं (for पलायत). —(l. 5) Ñ$_2$ D$_9$ ततो भग्नं (for तत्प्रभग्नं). —(l. 6) Ñ$_2$ D$_{3.8.9}$ -वृक्षैश् (for -वर्षैश्). Ś Ñ$_2$ प्रववृद्धवान्; D$_3$ प्रहृतवान् (for प्रवृष्टवान्). —(l. 7) Ñ$_2$ D$_9$ कृतं; D$_{1.8}$ अभूत् (for महत्). Ñ$_2$ D$_9$ विह्वलं; D$_{1.4}$ विद्रुतं; D$_{2.3.8}$ [ऽ]भिद्रुतं (for द्रावितं). —Ñ$_2$ D$_9$ om. l. 8–9. —(l. 8) D$_3$ सहितः (for च सह). D$_{1.3.8}$ राघव(D$_8$ °वः) (for ते पिता). —(l. 9) D$_{1.4}$ भिंडमालैश्. D$_{1.3}$ प्रासैस् (for पाशैस्). D$_{1-4.8}$ परस्वधैः. —(l. 10) Ñ$_2$ D$_9$ स्वयं (for त्वरन्). —(l. 11) D$_8$ स (for first च). L (ed.) वा (for third च). —(l. 12) Ñ$_2$ D$_9$ घोरान्; D$_8$ सर्वान् (for क्रुद्धः). D$_1$ [आ]शु संक्रुद्धः (for [अ]सुरान्क्रुद्धः). —(l. 13) D$_3$ स (for तं). Ś D$_{12}$ दैत्येंद्राणां (for दैतेयानां). Ś D$_{4.12}$ महत् (for तदा). Ñ$_2$ D$_{1.8.9}$ बलानि च(D$_{8.9}$ तु) (for बलं तदा). —(l. 14) D$_1$ अदृष्टं (for अदृश्यं). Ñ$_2$ D$_{1.8.9}$ चक्रुस् (for चक्रे). —(l. 15) D$_8$ तरसा (for नाराचम्). D$_3$ (with hiatus) आग्नेयास्त्रं (for आग्नेयास्त्र-). D$_{1.3}$ -समाहितं(D$_3$ °तः) (for -समायुतम्). —(l. 16) Ś D$_{8.4.12}$ तच् (for तं). D$_1$ वै (for च). D$_1$ [अ]थ (for [आ]शु). —D$_1$ om. l. 17–18. —(l. 17) Ñ$_2$ D$_9$ शतशोथ (for हताः शत-). —(l. 18) D$_{2.3.9}$ निवृत्ताः (for निर्वृताः). —(l. 25) Ś D$_{4.12}$ उक्तास् (for उक्ते). D$_3$ तथा (for तदा). D$_8$ राज्ञि (for राज्ञा). D$_2$ तदा (for अथ). Ñ$_2$ D$_9$ देवता वाक्यमब्रुवन् (for the post. half). —(l. 26) D$_1$ महाराज; D$_3$ पुरा राजन् (for सुता राजन्). —(l. 27) Ś$_2$ ततः (for तथा). —(l. 28) Ś Ñ$_2$ D$_{12}$ महावीरः (for महावीर्यः). Ñ$_2$ D$_1$ सुमित्रानंदिः. —(l. 30) D$_3$ पूज्य तं; D$_4$ तं पूज्य (for संपूज्य). Ñ$_2$ D$_{1.8.9}$ तं तु (for देवा). L (ed.) पूजितो विधिवद्देवैर् (for the prior half). D$_3$ [अ]थ (for च). Ś D$_{12}$ [अ]थ (for [उ]त). —(l. 31) Ñ$_2$ D$_{1.2.8.9}$ श(D$_{1.2}$ व)स्त्राणि (for अस्त्राणि). Ś रत्नानि (for दिव्यानि). —(l. 32) D$_3$ दिव्यं; D$_8$ शुभ्रं (for राम). D$_3$ रत्नं (for दिव्यं). D$_9$ वा (for च). —(l. 33) D$_1$ विसृष्टस्तु (for विसर्जितस्). D$_2$ तदा (for ततो). D$_{8.9}$ महात्मा स (for मया सह). —(l. 34) Note hiatus between the two halves. Ñ$_2$ D$_9$ अथागच्छत् (for आगच्छत). D$_3$ [अ]योध्यां (for राजा). Ś D$_{12}$ ह्ययोध्यां; D$_3$ स राजा (for अयोध्यां). —(l. 35) D$_8$ महाबाहो (for महाबाहुः). Ś D$_{4.8.12}$ स्वां (for तां). Ś D$_{4.12}$ च (for ह). —(l. 37) Ś$_2$ D$_{3.8.12}$ सु- (for स). D$_4$ सुखं (for सुखी). —(l. 38) Ś D$_{1.3.12}$ स्वं (for स्व-). Ñ$_2$ पुनरागमं. —(l. 39) Ñ$_2$ D$_{1.9}$ क्षत्र- (for पुत्र-). D$_9$ वृतः (for युतः). Ś D$_{4.12}$ सर्वज्ञः सुगुणैर्युतः (for the post. half). —(l. 40) D$_8$ तथा (for यथा). D$_3$ दशरथो मह्यं. D$_{1.8}$ मह्यं (for मम). D$_3$ प्रियो भ्राता (for तथा मम). —(l. 41) D$_3$ कुर्मो (for कुर्यां). —(l. 42) Ś D$_{4.12}$ [ऽ]यं (for मे). Ś D$_2$ मे कालो (by transp.) (for कालो मे).

कृतघ्नत्वादहं भीतो न कृतं तस्य यत्प्रियम् ।
करिष्ये ते प्रियं तस्माद्यथा दशरथस्य हि । [45]

## 13

After 6.15.24, Ś Ñ$_{2}$ B$_{4}$ D$_{1-4}$( Ś$_{1}$ D$_{2.3}$ followed by 294* )$_{.8.9.12}$ ins.; after 307*, Ñ$_{1}$ V$_{1.3}$ ins. l. 6–9 followed by l. 88–90 of App. I ( No. 14 ) and Ñ$_{1}$ ins. l. 20–29 and l. 34–37 followed by l. 4–8 and l. 14–17 of App. I ( No. 14 ) after 6.15.15; after 307*, B$_{2.3}$ ins. l. 6–9 followed by l. 88–89 of App. I ( No. 14 ) then ins. l. 1–2 followed by l. 39–87 ( B$_{2}$ l. 39–40 and l. 65–66 ) and l. 90 of App. I ( No. 14 ); D$_{6-7.10.11}$ S ( D$_{7}$ G$_{2}$ after 301*; M$_{1.2}$ after 302* ) ins. only l. 1–2 after 6.15.21 :

कृतानि प्रथमेनाह्ना योजनानि चतुर्दश ।
वानरैर्नगसंकाशैः सेतुकर्मणि निष्ठितैः ।
ततो विद्याधराः सर्वे देवा देवर्षयस्तथा ।
यक्षभूतपिशाचाश्च सर्वे चाप्सरसां गणाः ।
विस्मितास्तस्थुराकाशे बध्यमाने महोदधौ । [ 5 ]
श्रान्तान्न तपते सूर्यस्तदा वानरपुंगवान् ।
अभ्राणि जज्ञिरे दिग्भ्यः पीत्वा सूर्यप्रभामिव ।
प्रववर्ष च पर्जन्यो मारुतश्च शिवो ववौ ।
वृक्षेभ्यश्च तदा जज्ञे कपिभक्ष्यं फलं बहु ।
ततोऽस्तंगत आदित्ये निषेदुर्वानरर्षभाः । [ 10 ]
आरक्षांस्तु समास्थाय सर्वे ते सर्वतो दिशम् ।
सुषुपुः सुमहावीर्याः ससुग्रीवविभीषणाः ।
कथं दृश्येत सा लङ्का कथं बध्येत सागरः ।
एवं समुत्सुका भूत्वा शेरते वानरर्षभाः ।
उत्साहयुक्ता हरयः कौतूहलसमन्विताः । [ 15 ]
रात्रिशेषं तदत्युग्रं निन्युः कृच्छ्रादिवोद्यताः ।
ततः प्रभातसमये कृत्वा पौर्वाह्णिकीं क्रियाम् ।
परस्परं समुत्साह्य प्रस्थिताः सर्वतो दिशम् ।
ततः शृङ्गाणि जगृहुः पर्वतानां प्लवंगमाः ।
विचित्रपुष्पा गिरयो धातुचित्रशिखास्तथा । [ 20 ]
शोभन्ते हरिशार्दूलैरुद्यताः सेतुबन्धने ।
तानि कोटिसहस्राणि वानराणां महात्मनाम् ।
चिक्षिपुर्विविधं द्रव्यं समुद्रे सेतुबन्धने ।

---

D$_{12}$ मे ( for ऽयं ). D$_{3}$ विदितस्य ( for व्रीडितस्य ). D$_{4}$ प्रव्रीडितस्य; D$_{8}$ मे पीडितस्य ( for ऽयं व्रीडितस्य ). —( l. 44 ) Ś$_{1}$ भीमो; Ś$_{2}$ D$_{12}$ भीमं; D$_{9}$ क्रीतो ( for भीतो ). D$_{9}$ यस्य ( for तस्य ). D$_{3}$ तत् ( for यत् ). —( l. 45 ) Ś D$_{4.12}$ तव ( for ते ) and तस्य ( for तस्माद् ).

## 13

—V$_{1.3}$ om. l. 1–5. M$_{1}$ om. l. 1. —After l. 1, D$_{6}$ ins.:

1* द्वितीयेन तथा चाह्ना योजनान्येकविंशतिः ।
तृतीयेन तथा चाह्ना योजनान्येकविंशतिः ।
चतुर्थेन तथा चाह्ना द्वाविंशतिरिति श्रुतम् ।
पञ्चमेन त्रयोविंशद्योजनानां समन्ततः ।

[ cf. v.l. l. 1, 3, 5, 7 of 303*. ]

—( l. 2 ) B$_{4}$ नाग- ( for नग- ). Ś D$_{4.12}$ निश्चितैः ; B$_{2.3}$ [ अ ]धिष्ठितैः ; D$_{1.3}$ धिष्ठितैः ( for निष्ठितैः ). B$_{4}$ सेतुकर्मविनिश्चितैः ( for the post. half ). D$_{6-7.10.11}$ S प्रहृष्टैर्गज- ( G$_{2.3}$ °र्नग; M$_{1.2}$ °गिरि )संकाशैस्त्वरमाणैः प्लवंगमैः . —B$_{2.3}$ om. l. 3–5. —( l. 3 ) D$_{2}$ देव- ( for देवा ). B$_{4}$ ब्रह्मर्षयस् ( for देवर्षयस् ). —( l. 4 ) B$_{4}$ यक्षा भूताः ; D$_{1}$ यक्षभूताः ( for यक्षभूत- ). —( l. 6 ) Ś D$_{2.12}$ आर्तान् ( for श्रान्तान् ). D$_{1.2}$ पतते ( meta. ) ( for तपते ). Ś Ñ$_{1}$ D$_{2.4.12}$ कदाचिदपि वानरान् ( for the post. half ). V$_{1.3}$ B$_{2.3}$ श्रांतांस्तु न तपे( V$_{1}$ नातप ) त्सू- ( V$_{3}$ with hiatus आतपैः सू )र्यैः कथंचिद्वानरानिति ( B$_{2.3}$ °नपि ). —( l. 7 ) V$_{1}$ दिक्षु ( for दिग्भ्यः ). V$_{1.3}$ B$_{2.3}$ छादयित्वा रवेः प्रभां; D$_{3}$ संछाद्य सवितुः प्रभां ( for the post. half ). —( l. 8 ) D$_{2}$ प्रावर्षत ( for प्रववर्ष ). D$_{3}$ शिवं ( for शिवो ). Ñ$_{1}$ मारुताश्च शिवा ववुः; B$_{4}$ मारुतः शीतलं ववौ ( for the post. half ). —D$_{8}$ om. l. 9–11. —( l. 9 ) V$_{3}$ D$_{1}$ तथा ( for तदा ). B$_{4}$ D$_{12}$ कपिभक्ष्य- ; D$_{1-3}$ कपिभक्ष-( D$_{3}$ °क्षं ). Ñ$_{1}$ तदा ( for फलं ). Ś$_{1}$ D$_{4.12}$ परं; D$_{1}$ मुहुः ( for बहु ). Ś$_{2}$ परं फलं. V$_{1.3}$ B$_{2.3}$ कपिभक्षोपमं मधु ( for the post. half ). —V$_{1.3}$ B$_{2.3}$ om. l. 10–23. —D$_{12}$ om. ( hapl. ) l. 11–14. —( l. 11 ) B$_{4}$ D$_{2.9}$ ततः ( D$_{2}$ समा; D$_{9}$ सुसं ) स्थाप्य ( for समास्थाय ). D$_{3}$ ते च संप्राप्य. D$_{1}$ सर्वेथ ( for सर्वे ते ). B$_{4}$ D$_{2.3}$ दिशः ( for दिशम् ). —( l. 12 ) D$_{2.3}$ ते महावीर्याः ; D$_{4}$ स महावीर्यः ( for सुमहावीर्याः ). B$_{4}$ D$_{9}$ ससुग्रीवाः सलक्ष्मणाः ; D$_{4}$ सुग्रीवश्च विभीषणः ( for the post. half ). —( l. 13 ) D$_{1.3}$ कदा ( for कथं ). D$_{8}$ मध्येन ( for बध्येत ). —( l. 14 ) D$_{1}$ एवं समुत्सुकीभूताः ; D$_{3}$ एवं संजल्पमानास्ते ( for the prior half ). Ś$_{2}$ सर्वे ते; D$_{4}$ सेतवे ( for शेरते ). —( l. 16 ) D$_{4}$ [ उ ]न्नताः ; L ( ed. ) [ उ ]दिताः ( for [ उ ]द्यताः ). D$_{2}$ निन्युः कृच्छ्रेण चोद्यताः ( for the post. half ). —After l. 16, D$_{1}$ reads an addl. colophon. [ सुंदरकांडे सेतुबंधे प्रथमदिवसः. ] —( l. 17 ) D$_{3.4}$ पू( D$_{4}$ पौ )र्वाह्णिकां ( for पौर्वाह्णिकीं ). D$_{2}$ कृत्वा पौर्वाह्णिकीः क्रियाः ( for the post. half ). —( l. 18 ) B$_{4}$ D$_{2}$ समासाद्य ( for समुत्साह्य ). D$_{2}$ दिशः ( for दिशम् ). —Ś D$_{3.4.12}$ ins. l. 20–29 ; l. 34–37 after 298*, while Ñ$_{1}$ D$_{3}$ ins. l. 20–29 ; l. 34–37 after 6.15.15 ( D$_{3}$ after 15 [ r. ] ), Ś$_{2}$ D$_{4.12}$ repeating l. 20–21 and D$_{2.3}$ repeating l. 20–23 in their proper place. —( l. 20 ) D$_{2}$ ( first time ) चित्राश्च ( for गिरयो ). Ñ$_{2}$ B$_{4}$ D$_{1.9}$ -शिलास् ( for -शिखास् ). D$_{2}$( second time )$_{.8.9}$ तदा ( for तथा ). Ñ$_{1}$ विचित्रा गिरयो धातुश्चित्रशाखास्तथापरे. —( l. 21 ) Ś D$_{4.12}$ ( Ś$_{2}$ D$_{4.12}$ first time ) क्षोभ्यंते ( for शोभन्ते ). Ś Ñ$_{1}$ D$_{3.4.12}$ ( Ś$_{2}$ D$_{12}$ both times; D$_{3.4}$ first time ) उद्यतैः ; Ñ$_{2}$ B$_{4}$ D$_{9}$ आहृ( B$_{4}$ °ज्ञा )ताः ( for उद्यताः ). —D$_{1.12}$ om. l. 22–23. —( l. 22 ) Ś D$_{4}$ तस्मिन् ( for तानि ). D$_{2}$ ( first time )$_{.3}$( second time )$_{.9}$ कोटी- . —( l. 23 ) Ñ$_{1}$

शालैस्तालैः समन्दारैस्तथा वेत्रलताचयैः।
सेतुं बबन्धुः कीलैश्च वृक्षैश्च सुमहाबलाः। [25]
नवमेघनिकाशैश्च नगैः परमपुष्पितैः।
तैः समूलैः सपत्रैश्च नलः सेतुं निबद्धवान्।
बलिभिर्वानरैर्वेगाद्बाहुभिस्तीरजा द्रुमाः।
ताडिताः पातिताश्चैव समुद्रे सरितां पतौ।
प्रियकामस्तु रामस्य सुग्रीवः संप्रहर्षयन्। [30]
बद्धं समारभत्सेतुं स्वयं नदनदीपतौ।
वेगसारोष्णगे काले महाभ्रमिव वायुना।
स्वयं वानरराजेन गिरिशृङ्गमुपाहृतम्।
सुग्रीवश्चापि शृङ्गाणि गिरीणां शिखराणि च।
आरुह्यारुह्य शतशश्चिक्षेप लवणाम्भसि। [35]
दर्दुरस्याङ्गदः श्रीमाञ्शृङ्गमारुह्य पाणिना।
लवणाम्भसि चिक्षेप सविद्युतमिवाम्बुदम्।
अर्धयोजनविस्तीर्णं विन्ध्यस्य शिखरं महत्।
सुषेणः पाणिना गृह्य पातयामास सागरे।

## 14

After 294*, Ś Ñ2 B4 D2-4.8.9.12 ins.; Ñ1 V1.3 B2.3 ins. l. 4-5 ( Ñ1 V1 l. 4-8 ) and l. 14-17 after l. 37 and l. 88-90( B2.3 l. 88-89 ) after l. 9 of App. I ( No. 13 ), B2.3 ins. l. 39-87 ( B2 l. 39-40 and l. 65-66 ) and l. 90 after l. 2 of App. I ( No. 13 ); D1 cont. after App. I ( No. 13 ):

नीलेन मलयस्याथ शृङ्गं द्रुमलताकुलम्।
दोर्भ्यामुत्पाट्य तरसा क्षिप्तं लवणसागरे।
शब्दश्च सुमहाञ्जातो विद्युतामम्बरे यथा।
सशृङ्गं चन्दनवनं सर्वतः पुष्पितं महत्।

---

विविधैर् ( for विविधं ). Ñ2 B4 D9 सेतुबंधनं ( for सेतुबन्धने ). —V1.3 B2.3 read l. 24-29 after 6.15.15. —( l. 24 ) Ś2 D12 सालैस् ; Ñ2 B4 D1-3.8.9 शाल- ( for शालैस् ). Ñ1 समं तालैस् ; Ñ2 B4 D9 च हिंतालैस् ; D1.3.8 ससंतानैस् ( for समन्दारैस् ). V1.3 B2.3 गुल्मैः शलभ( V1.3 सताल )संतानैस् ( for the prior half ). V3 स्तंब- ( for तथा ). D3 चित्र- ( for वेत्र- ). Ñ1 -[ अ ]चलैः ; L ( ed. ) -शतैः ( for -चयैः ). V1 -नरैरपि ( for -लताचयैः ). —Ś1 om. l. 25. —( l. 25 ) V1.3 B2.3 कीर्णे( V3 °ले )षु ( for कीलैश्च ). L ( ed. ) सुमहाबलैः ( for सुमहाबलाः ). V1.3 B2.3 वृक्षेषु च महाबलाः ; D8 सुवृक्षैश्च महाचलैः ( for the post. half ). —( l. 26 ) Ñ1 नाग- ; Ñ2 B4 D8.9 न( D9 ना )गैर् ; V3 स च ( for नव- ). V3 तु ( for च ). —D9 om. from the post. half of l. 26 up to the prior half of l. 29; while Ñ2 om. ( hapl. ? ) from the post. half of l. 26 up to the prior half of l. 27. Ś2 B2 नागैः ( for नगैः ). B4 च परि- ( for परम- ). V1 -पूजितैः ( for -पुष्पितैः ). —( l. 27 ) D1 सपुष्पैः ( for समूलैः ). B2.3 सपत्रैः समूलैश् ( by transp. ). B4 D3 समूलैः सदपत्रैश्च ( for the prior half ). Ñ2 B4 नलसेतुः . Ñ1 V1.3 B2.3 बबंध तं; Ñ2 B4 प्रवर्धते; D1.3 अबंधयत् ; L ( ed. ) बबंध ह ( for निबद्धवान् ). —After l. 27, V1.3 B2.3 ins. :

2* अन्ये त्वसकृदादाय गिरीणां शिखराणि च।
सागरस्य जले चक्रुः सेतुं शतसहस्रशः।
ते द्रुमैः पुष्पिताग्रैश्च तृणकाष्ठैश्च वानराः।
मेघाभैः पर्वताग्रैश्च चक्रुः सेतुं महोदधौ।

[ ( l. 1 ) V3 B3 तु सकृद् ( for त्वसकृद् ). —( l. 2 ) V1 सेतुं चक्रुः ( by transp. ). —( l. 4 ) V3 पर्वताभैश् ( for पर्वताग्रैश् ). ]

—( l. 28 ) V1.3 B2.3 वेगिभिर् ( for वानरैर् ). Ś D2-4.12 वीरैर् ( for वेगाद् ). Ñ1 बलिभिस् ; V1.3 B2.3 कपिभिस् ; D3 बहुभिस् ( for बाहुभिस् ). —( l. 29 ) V1.3 B2.3 कंपिताः ; B4 इति ते ( for ताडिताः ). Ś2 पादिताश् ; Ñ V1.3 B2.4 पतिताश् ( for पातिताश् ). —V1.3 B2.3 om. l. 30-33. —( l. 30 ) D1 च ( for तु ). —( l. 31 ) Ñ2 B4 D9 आरभते; D1.3.8 समारेभे ( for समारभत् ). —( l. 32 ) Ñ2 B4 D9 विससार; D8 वेगेनैव ( for वेगसार- ). —V1.3 B2.3 ins. l. 34-37 after l. 8 of 298*. —( l. 34 ) Ñ1 B3 D2.3 त्वपि; Ñ2 B4 D1.8.9 शैल- ( for चापि ). B4 तरूणां ( for गिरीणां ). V1.3 B2.3 मेघसंनिभः. —( l. 35 ) V1.3 B2.3 चिक्षेप ( for शतशश् ). L ( ed. ) आरुह्य शतशो वृक्षैश् ( for the prior half ). V1.3 B2.3 शतशोथ सहस्रशः ( for the post. half ). —( l. 36 ) D1 प्रदुदुस ( corrupt ) ( for दर्दुरस्य ). D1 शृंगं ( for श्रीमान् ) and वेगम् ( for शृङ्गम् ). V1.3 B2.3 शृंगं श्रीमान् ( by transp. ). —( l. 37 ) Ñ1 विद्युद्वंतम् ( for सविद्युतम् ). Ñ2 B4 D9 सविद्युदिव तोयदः ; D8 लसद्विद्युदिवांबुदं ( for the post. half ). —After l. 37, Ś V1.3 B2.3 D2-4.12 cont. l. 4-8 ( Ś1 om. l. 8; V3 B2.3 cont. l. 4-5 ) and l. 14-17 ( Ś1 l. 15-17 only ) of App I ( No. 14 ), Ś D2-4.12 repeating l. 4-5 and l. 14-15 ( Ś1 D3 l. 15; D4 l. 14 only ) in their proper place. —Ñ1 V1.3 B2.3 om. l. 38-39. —D4 om. l. 39. —( l. 39 ) D1 कृत्वा ( for गृह्य ). Ś D12 पातयामास पाणिना गृह्य ( by transp. ).
—Thereafter D1 cont. App. I ( No. 14 ).

## 14

D1 om. l. 1-2.—( l. 1 ) Ś2 नलेन ( for नीलेन ). D3 [ अ ]द्रेः ( for [ अ ]थ ). D2-4.8 -शता( D8 -समा )कुलं ( for -लताकुलम् ). —( l. 3 ) Ñ2 B4 D9 स( Ñ2 सु- ) शब्दः ( for शब्दश्च ). L ( ed. ) जज्ञे ( for जातो ). Ñ2 B4 D9 घनानाम् ; D1 मेघानाम् ( for विद्युताम् ). —Ś D2-4.12 cont. l. 4-8 ( Ś1 om. l. 8 ) and l. 14-17 ( Ś1 l. 15-17 only ) after l. 37 of App. I ( No. 13 ), repeating l. 4-5 and l. 14-15 ( Ś1 D3 l. 15; D4 l. 14 only ) here. —( l. 4 ) D3 ( second time ) पर्वत- ( for चन्दन- ). Ś D2-4.12 ( all first time ) सशृंगकंदर( D3 °नंदन )वनं ; V1.3 B2.3 सचंदनवनं शृंगं ( for the

आरुह्याजह्रतुः श्रीमान्मैन्दश्च द्विविदश्च ह । [5]
हनूमता च वीरेण यत्कृतं सेतुकर्मणि ।
सप्तयोजनविस्तीर्णं पर्वतं प्राप्य पाणिना ।
लवणाम्भसि चिक्षेप मध्ये कपिवृषस्तथा ।
गजो गवाक्षो गवयः शरभो गन्धमादनः ।
पञ्चैते शिखरान्गृह्य महेन्द्रादागता द्रुतम् । [10]
चिक्षिपुः सहसा सर्वे पर्वतान्पर्वतोपमाः ।
पर्वतास्तु सुसंमुक्ताः पतन्तः सागराम्भसि ।
क्षोभं चक्रुः समुद्रस्य क्षीरोदस्येव मन्थने ।
गिरीणां भिद्यमानानां सागरे सेतुकर्मणि ।
भुवि दिव्यन्तरिक्षे च शुश्रुवे निनदो महान् । [15]
तेन वित्रासिताः सर्वे मृगपक्षिगणा वने ।
नाशक्नुवन्नुत्पतितुं शरीरेष्वेव शेरते ।
आश्चर्यमित्यभाषन्त मुनयो दिवि संस्थिताः ।
पुष्पवर्षाणि मुमुचुः सगन्धर्वमहोरगाः ।
साधु साध्विति चाभाष्य वानरान्प्रशशंसिरे । [20]
देवदुन्दुभयो नेदुर्ननृतुश्चाप्सरोगणाः ।
तुम्बुरुप्रमुखाश्चैव गन्धर्वा गीतकोविदाः ।
दिव्यतानेषु गायन्ति तन्त्रीलयसमन्वितम् ।
दिवि तेषां निनादस्तु वानराणां च निस्वनः ।
पर्वतानां च संघर्षाच्छब्दः समभवत्तदा । [25]
शुचिशुक्रव्यपगमे मेघानां गर्जतामिव ।
सत्त्वानां च महानादैः स्तनिता गिरिकन्दराः ।
तेन शब्देन महता नान्यच्छ्रूयेत किंचन ।
द्वितीयेऽहनि तस्मिंस्तु मध्यं प्राप्ते दिवाकरे ।
श्रान्तास्तु वानराः सर्वे वृक्षमूलानि भेजिरे । [30]
फलानि भक्षयित्वा च पीत्वा च विविधं जलम् ।
विश्रान्ताश्च वितृष्णाश्च पुनः सर्वे प्रतस्थिरे ।
वृक्षान्केचित्समाजह्रुः शिलाः केचित्समाहरन् ।
पर्वतानां तथा सानूंस्तृणकाष्ठं तथापरे ।
क्षिपन्ति सहसा हृष्टा वानरा लवणाम्भसि । [35]
क्षिप्तं क्षिप्तं नलः सर्वं समीभूतं करोति सः ।
आगतैर्गच्छमानैश्च नर्दमानैश्च वानरैः ।
पर्वतैः क्षिप्यमाणैश्च संकुलं सर्वतोऽभवत् ।
दिवसेन द्वितीयेन षड्विंशद्योजनानि तु ।

---

prior half). $V_1$ $D_2$ (first time) पर्वतं (for सर्वतः). —(l. 5) $B_3$ $D_9$ आरुज्य. Ś(both times) $\tilde{N}_1$ $V_1$ $D_{4.8.12}$($D_{4.12}$ first time) जह्रतुः; $B_{2.3}$ प्रद्रुत; $D_8$ (second time) जगृहुः (for [आ]जह्रतुः). $V_{1.3}$ $B_{2.3}$ शीघ्रं (for श्रीमान्). $D_1$ आरुष्यारुष्यत श्रीमान् (for the prior half). $Ś_1$(first time) $D_{12}$(second time) यः (for ह). $D_3$ (second time) तथा. $V_{1.3}$ $B_{2.3}$ $D_3$(first time) मैंदो द्विविद एव च (for the post. half). —(l. 6) $V_1$ illeg. for च वीरेण. $D_1$ तत् (for यत्). $V_1$ कृते वै; $D_2$ सत्कृते (for यत्कृतं). $D_3$ -कर्मणा. $\tilde{N}_2$ $B_4$ $D_9$ transp. यत्कृतं and सेतुकर्मणि. —(l. 7) $D_4$ सप्तयोजनमास्तीर्णं (for the prior half). $V_1$ गृह्य (for प्राप्य). —(l. 8) $Ś_2$ $\tilde{N}_1$ $D_{1.3.12}$ तदा (for तथा). —$\tilde{N}_2$ om. l. 10. —(l. 10) $D_{1.8}$ शृंगाण्यादाय सर्वे($D_8$ पंचै)ते (for the prior half). —(l. 11) $B_4$ वानरा रिपुघातिनः (for the post. half). —(l. 12) $D_1$ च (for तु). $B_4$ $D_{2.4.9}$ सुसंयुक्ताः; $D_{1.3.8}$ समं मु($D_3$ मु)क्ताः; L (ed.) सुसंक्रुद्धाः (for सुसंमुक्ताः). $D_3$ पतिताः (for पतन्तः). Ś $\tilde{N}_2$ $D_{12}$ लवणांभसि. —(l. 13) Ś $D_{2.4.12}$ सागरस्य (for क्षीरोदस्य). $D_{12}$ पर्वणि. —(l. 14) $V_{1.3}$ $B_{2.3}$ वानरैः (for सागरे). —(l. 15) $V_3$ चैव (for दिवि). $Ś_1$ $V_1$ $D_{12}$ ($Ś_1$ $D_{12}$ second time) दिवि भुवि(by transp.); $Ś_2$ (second time) दिवि भूमि-; $V_3$ भुवि चैव (for भुवि दिवि). $\tilde{N}_2$ $V_1$ $B_{2-4}$ [अं]तरीक्षे. Ś $D_{2.4.9.12}$ (Ś $D_{2.12}$ both times) श्रूयते; $\tilde{N}_1$ शुशुभे; $D_1$ शुश्राव (for शुश्रुवे). —(l. 16) $\tilde{N}_1$ विद्राविताः (for वित्रासिताः). —(l. 17) $D_1$ अशक्नुवन्. $Ś_1$ तत्पतितुं; $\tilde{N}_1$ निःपतितुं; L (ed.) प्रतिस्थातुं (for उत्पतितुं). $D_8$ नाशक्नुवंत पतितुं (for the prior half). Ś $D_{4.12}$ [अ]पि (for [ए]व). $D_3$ वर्तते. $V_{1.3}$ $B_{2.3}$ अशक्नु($V_3$ न शक्त)वंतः पतितुं शिखरे ष्वभ्य($B_{2.3}$ °षु व्य)शेरते($B_{2.3}$ °त). —After l. 17, Ś $D_{4.12}$ ins. l. 9–10 of 298*; while $V_1$ ins.:

1* ,*** भवनं केचित्किंनरा भयमोहिताः ।
******** काननश्चाभवत्तदाः ।

—$D_4$ om. from l. 18 up to पुष्पवर्षाणि in l. 19. —(l. 20) L (ed.) भाषंतो (for चाभाष्य). $Ś_2$ वानरेंद्राः (for वानरान्प्र-). $D_{1.2.4}$ च प्र($D_1$ श)शंसिरे. —(l. 21) $D_1$ दिवि (for देव-). —(l. 22) $\tilde{N}_2$ $B_4$ $D_{1.3}$ तुंबरु- (for तुम्बुरु-). $\tilde{N}_2$ $B_4$ $D_9$ गान- (for गीत-). —(l. 23) Ś $D_{4.12}$ दिव्या गानेषु; $D_{1.8.9}$ दिव्यताले($D_8$ °गाने)षु; $D_2$ दिव्यं गणेषु; $D_3$ दिव्यगानेन. —(l. 24) Ś $D_{1.4}$ निःस्वनः. —(l. 25) $B_4$ $D_{2.3.8}$ संहर्षाच्च($D_3$ °र्ष-) (for संघर्षाच्). $D_8$ तु सुमहांस् (for समभवत्). Ś $D_{12}$ महान् (for तदा). —$Ś_1$ om. l. 26–27; $D_4$ om. from l. 26 up to the prior half of l. 27. —(l. 26) $D_{1.3.8}$ -व्यतिक्रामे($D_8$ °क्रांते) (for -व्यपगमे). $D_9$ इव गर्जतां (by transp.). —(l. 27) L (ed.) स्वनिता. $D_3$ स्तंभिता वानरा गिरा (for the post. half). —(l. 28) $B_4$ शैल- (for तेन). $D_8$ [अ]न्यो (for [अ]न्यच्). $D_4$ रूपेण (for श्रूयेत). $D_8$ निस्वनः. $\tilde{N}_2$ $B_4$ $D_{1.9}$ नान्येश्रूयंत निः($\tilde{N}_2$ नि)स्वनाः; $D_3$ रोदसी समपूरिता; L (ed.) नान्योश्रूयत कश्चन (for the post. half). —(l. 29) $\tilde{N}_2$ $B_4$ $D_8$ मध्ये (for मध्यं). —$B_4$ om. (hapl.?) l. 30–34. —$D_4$ om. l. 31–35. —(l. 31) $D_3$ ते; $D_8$ तु; L (ed.) [अ]थ (for first च). $D_9$ om. (hapl.) पीत्वा च. $D_8$ तु (for second च). $D_3$ मधुरं मधु. —(l. 32) $\tilde{N}_2$ $D_9$ [प]व दृ($D_9$ तृ)प्ताश् (for वितृष्णाश्). $D_8$ प्रलंबिरे; L (ed.) प्रपेदिरे. —Ś $D_{12}$ om. l. 33–35. —(l. 33) $D_8$ समाजग्मुः (for समाजह्रुः). —(l. 34) $\tilde{N}_2$ $D_9$ सार्थं (for सानूंस्). $D_1$ -काष्ठान्. $D_1$ परे तथा; $D_2$ (m. up to l. 36) अथापरे. $D_2$ तृणकाष्ठान्यथापरे (for the post. half). —(l. 35) $\tilde{N}_2$ $D_1$ तृप्ता (for हृष्टा). —(l. 36) $Ś_1$ $D_{12}$ सर्वैः (for सर्वं). $\tilde{N}_2$ $B_4$ $D_9$ सज्जीभूतं. L (ed.) च (for सः). —(l. 38) $D_8$ पर्वतं (for पर्वतैः). $D_2$ सर्वतः संकुलो (for

बद्धानि वानरैस्तैस्तु समुद्रे सेतुकर्मणि । [40]
पश्चिमायां तु संध्यायां यथा स्थानानि भेजिरे ।
कर्माणि कथयन्तस्ते स्वानि स्वानि प्लवंगमाः ।
रामाय कथयन्ति स्म पश्य सेतुं महोदधौ ।
रामपादावुपस्पृश्य सुग्रीवस्य च वानराः ।
शिश्यिरे तत्र तत्रैव केचिज्जाग्रति हर्षिताः । [45]
समुत्सुकानां तेषां तु गता सा शर्वरी सुखम् ।

Colophon

प्रभातायां तु शर्वर्यामुदिते च दिवाकरे ।
वानराणां सहस्राणि प्रयुतान्यर्बुदानि च ।
तथैवर्क्षसहस्राणि गोलाङ्गूलायुतानि च ।
बबन्धुः सागरे सेतुं राघवप्रियकाम्यया । [50]
अहं पूर्वमहं पूर्वमिति शैलान्प्रचिक्षिपुः ।
क्षिप्ता पर्वतवृष्टिः सा चालयामास सागरम् ।
क्षुभिते सागरे तस्मिन्क्षुब्धाः सागरवासिनः ।
नागाश्च दानवाश्चैव किमेतदिति मेनिरे ।
प्रलयः किं नु संप्राप्त उताहोऽमृतमन्थनम् । [55]
सेतुकर्म समारब्धं रामेण विदितात्मना ।
ज्ञात्वैवं तत्त्वतस्ते तु निरुद्विग्नास्ततः स्थिताः ।
वानरा रभसेनैव बबन्धुः सागरं तदा ।
अन्ये च सूत्रं गृह्णन्ति दृष्टिं संचारयन्त्यपि ।
समश्च क्रियतामेष नलमेवं बभाषिरे ।
अन्ये क्षिपन्ति ह्युपलान्पादपानपरे पुनः । [60]
विश्राम्यन्त्यपरे क्लान्ताः केचिन्निद्रां सिषेविरे ।
आस्फोटयन्वलन्तश्च चक्रुः किलकिलामपि ।
वृक्षाद्वृक्षं पतन्त्यन्ये पर्वतात्पर्वतं तथा ।
दिवसेन तृतीयेन पञ्चाशद्योजनानि च ।
बद्धानि कपिभिर्वीरैः शेषं तु दशयोजनम् । [65]
स्वस्त्ययं बध्यते सेतुरिति कृत्वा प्लवंगमाः ।
धृतिमन्तः प्रसुप्तास्ते कृतकर्माण एव च ।
प्रभातायां निशायां तु राममूचुर्वनौकसः ।
अद्य राम महाबाहो सेतुर्निष्ठां गमिष्यति ।
अद्य द्रक्ष्यसि तां लङ्कां पुरीं रावणपालिताम् । [70]

---

संकुलं सर्वतो). —D$_1$ om. l. 39. —(l. 39) D$_8$ om. (hapl.) द्वितीयेन. Ś$_2$ Ñ$_2$ B$_{2-4}$ D$_9$ च (for तु). —B$_3$ om. (hapl. see var.) l. 40–49. —(l. 40) B$_2$ च (for तु). D$_1$ चतुर्विंशत्तैः (for वानरैस्तैस्तु). —(l. 41) Ñ$_2$ B$_4$ तथा (for यथा). —(l. 42) D$_4$ om. (hapl.) स्वानि. —(l. 43) D$_1$ कथयंतश्च (for कथयन्ति स्म). B$_4$ नल- (for पश्य). —(l. 44) D$_{1-4.12}$ -पादानुप-; D$_8$ -पादांबुजं (for -पादावुप-). D$_4$ तु (for च). —(l. 46) D$_1$ केषांचिद् (for तेषां तु).

Colophon.—*Kāṇḍa name*: Ś$_2$ Ñ$_2$ B$_4$ D$_{1.3.4.9.12}$ सुंदरकांडे.—*Sarga name*: Ś D$_{3.4.12}$ सेतुकर्मारंभः; Ñ$_2$ B$_4$ D$_{2.8.9}$ सेतुकर्मः; D$_1$ द्वितीयदिवसे सेतुबंधनं.—*Sarga no.* (figures, words or both): Ś$_1$ B$_4$ D$_{1.2.4.8.12}$ om.; Ś$_2$ 101; Ñ$_2$ D$_9$ 103; D$_3$ 107; L (ed.) 97. —After colophon, D$_2$ concludes with राम.

—(l. 47) Ś D$_{12}$ च (for तु). Ñ$_2$ B$_4$ D$_{8.9}$ उद्गच्छति (for उदिते च). D$_1$ रविमंडले. D$_3$ समुद्गच्छति भास्करे (for the post. half). —(l. 48) D$_8$ transp. the post. half of l. 48 and the post. half of l. 49. B$_4$ (with hiatus) अयुतानि (for प्रयुतानि). —B$_4$ om. (hapl.) l. 49. —(l. 49) L (ed.) -शतानि (for -[अ]युतानि). —(l. 50) Ś Ñ$_2$ D$_{2.4.12}$ -प्रीति- (for -प्रिय-). —(l. 51) B$_3$ विचिक्षिपुः. —(l. 52) B$_3$ D$_8$ च (for सा). D$_1$ छादयामास (for चालयामास). D$_4$ (with hiatus) अंबरं (for सागरम्). —(l. 53) D$_8$ क्षुभिताः (hypm.) (for क्षुब्धाः). Ś D$_{4.12}$ -भूमयः (for -वासिनः). —(l. 54) D$_2$ तत्र (for चैव). —(l. 55) D$_{1.3.8}$ किं तु; D$_4$ किमु (for किं नु). B$_3$ प्राप्तोयम् (for संप्राप्त). —(l. 56) D$_1$ तथारब्धं (for समारब्धं). D$_3$ विजित- (for विदित-). —(l. 57) Ś$_2$ वै; D$_{1.2.4.8}$ [ए]व (for [ए]वं). Ś D$_{4.12}$ विदिताः सर्वे (for तत्त्वतस्ते तु). Ś D$_{2.12}$ निरुद्यो(D$_2$ °द्वे)गास् (for निरुद्विग्नास्). D$_1$ तथा; D$_8$ अव- (for ततः). Ś$_1$ ततः (for स्थिताः). —(l. 58) B$_4$ तथा; D$_4$ रताः (for तदा). —(l. 59) Ś D$_{4.12}$ सूत्रं प्र- (for च सूत्रं). D$_4$ दृष्टीः (for दृष्टिं). Ś D$_{2.4.12}$ संधा(D$_2$ °वा)रयंति (for संचारयन्ति). B$_3$ सूत्रं गृहीत्वा तत्रैव प्रहृष्टाः संचरंत्यपि. —(l. 60) B$_3$ अद्य (for एष). B$_3$ नलमुचुः श्वपातिना (corrupt) (for the post. half). —B$_4$ D$_1$ om. (hapl. ?) l. 61–62. —(l. 61) D$_{3.8}$ ह्यचलान् (for ह्युपलान्). Ś D$_{12}$ आक्षिपन्नचलान्केचित्; D$_2$ अन्ये * क्षिपंत्यचलान्; D$_4$ आक्षिपंति चाचलान् (subm.) (for the prior half). B$_3$ चापरे. Ś D$_{12}$ मुहुः; B$_3$ तथा (for पुनः). —(l. 62) Ś Ñ$_2$ D$_{4.12}$ श्रांताः (for क्लान्ताः). B$_3$ विश्रासंतः पराक्रांताः (for the prior half). D$_{2-4}$ नि(D$_2$ वि)षेविरे (for सिषेविरे). —(l. 63) Ś$_1$ D$_{2.4.12}$ प्र(D$_2$ व)वल्गुश् (for वलन्तश्). B$_3$ D$_3$ आस्फोटयंतः स्वबलान्(D$_3$ प्लुवंतश्च [hypm.]); B$_4$ D$_{1.8.9}$ आस्फोटयंतो वलं(B$_4$ रणं)तश् (for the prior half). —(l. 64) B$_3$ वहंति (for पतन्ति). D$_3$ तदा (for तथा). —(l. 65) B$_2$ D$_2$ द्वितीयेन (for तृतीयेन). B$_2$ D$_3$ षड्विंशद्; L (ed.) चत्वारिंशद् (hypm.) (for पञ्चाशद्). Ñ$_2$ D$_{1.2.8.9}$ तु (for च). —(l. 67) Ñ$_2$ B$_4$ D$_9$ श्वस्तावद्; B$_3$ स्वयं च; D$_2$ श्वस्त्वयं; D$_3$ सत्वरं (for स्वस्त्ययं). Ñ$_2$ B$_{3.4}$ D$_{1.3.8.9}$ बध्यतां. Ś D$_{12}$ मत्वा; B$_3$ [उ]क्तास्ते (for कृत्वा). —After l. 67, B$_3$ ins.:

2* अपराह्णे धृतिं कृत्वा उक्तवन्तः पुरान्यपि (sic) ।
पीत्वा च विविधं वारि कथाभिरुषिताः स्वयम् ।

—(l. 68) D$_3$ धृतिं कृत्वा (for धृतिमन्तः). B$_3$ ततः प्रसक्तास्ते तत्र (for the prior half). D$_3$ -कर्मणि (for -कर्माण). D$_1$ ते (for च). —(l. 69) Ś B$_3$ D$_{12}$ तु(B$_3$ च) शर्वर्यां; D$_{2.8}$ रजन्यां तु (for निशायां तु). —(l. 70) B$_3$ शृणु; D$_1$ पश्य; D$_8$ यस्य (for अद्य). Ś$_1$ एवमेव (for अद्य राम). B$_3$ सेतुनिर्बंधनेन च (for the post. half). —(l. 71) D$_1$ यदि (for अद्य).

एवमुक्त्वा ततो रामं वानरास्ते महाबलाः ।
एकोत्पातेन खं सर्वे समुत्पेतुर्वलीमुखाः ।
जगृहुश्चैव वृक्षांस्ते शिलाः केचित्प्लवंगमाः ।
शैलशृङ्गाणि चाप्यन्ये तृणकाष्ठान्यथापरे । [75]
अन्ये च वारयन्ति स्म बहुना किं प्रयोजनम् ।
अन्योन्यस्य च तेजांसि वर्धयन्तः प्लवंगमाः ।
आकाशं शङ्खसंकाशं छादयन्तो घना इव ।
नर्दमाना महानादं प्रावृट्काल इवाम्बुदाः ।
आकाशे समदृश्यन्त पक्षवन्त इवाचलाः । [80]
पर्वतानां ततो वृष्टिश्छादयन्ती नभस्तलम् ।
सागरोपरि मुक्ता सा शेषं संछाद्य धिष्ठिता ।
दशयोजनमात्रं तु सर्वं बद्धमशेषतः ।
बद्धो बद्धेति वदतां सिद्धानामम्बरे स्वनः ।
वानराणां च हृष्टानां सहसा संबभूव सः । [85]
दशयोजनविस्तारमायतं शतयोजनम् ।
नलश्चक्रे महासेतुं मध्ये नदनदीपतेः ।
समुद्रवरदानाच्च संविधानाच्च कर्मणः ।
सेतुः स्वल्पेन कालेन निष्ठां प्राप्तोऽभवत्तदा । [90]
वेलामूलात्प्रवृत्तः स लङ्कामूले प्रतिष्ठितः ।

**15**

After 6.15, Ś Ñ V$_1$ B$_{2-4}$ D$_{0-4.8.9.12}$ ins.:

ततो महात्मा कृतसेतुमीश्वरं
प्रतीतरूपं विजयाभिनन्दिनम् ।
पुनः समुद्रोऽभिजगाम राघवं
प्रभावमस्मै वरदोऽभिवर्धयन् । [5]
तमागतं लक्ष्मणवानराधिपौ
विभीषणश्चर्क्षपतिश्च जाम्बवान् ।
मुदा प्रतीता हरयो वरप्रदं
प्रणम्य रामं सगरस्य चात्मजम् ।
स दिव्यरूपाभरणो महाद्युति-
र्निशम्य रामं मुनिवेषधारिणम् । [10]

B$_3$ द्रक्ष्यामि. B$_4$ सीतां ( for लङ्कां ). D$_3$ लंकां तां ( by transp. ) D$_4$ अथ प्रसह्य तां सीतां ( for the prior half ). D$_4$ लंकां ( for पुरीं ). Ś$_1$ लंकापुरीं ( for लङ्कां पुरीं ). D$_1$ राक्षस- ( for रावण- ). —( l. 72 ) B$_3$ तदा ( for ततो ). —D$_1$ om. l. 73. —( l. 73 ) B$_3$ ते ( for खं ). L ( ed. ) प्लवंगमाः ( for वलीमुखाः ). —( l. 74 ) Ś$_1$ Ñ$_2$ तैश्च ( for चैव ). B$_3$ पादपान्केचित्; D$_1$ चैव ते शैलान् ( for चैव वृक्षांस्ते ). Ś$_2$ D$_{2.4.12}$ शैलान् ( for शिलाः ). Ś$_1$ वृक्षादी ** ( for वृक्षांस्ते शिलाः ). B$_4$ काश्चित् ( for केचित् ). —B$_3$ D$_2$ om. ( hapl. ) l. 75–77. Ś$_1$ om. l. 75–76. —( l. 75 ) Ñ$_2$ भृशं ( for तृण- ). D$_{1.3.8}$ L ( ed. ) तृण ( L [ ed. ] °णं )काष्ठम्. Ś$_2$ D$_{12}$ च ( for [ अ ]थ ). —After l. 76, D$_3$ ins.:

3* अनेन गिरिजालेन वध्यन्ते दशयोजनम् ।

—( l. 77 ) Ś$_1$ om. ( subm. ); L ( ed. ) तु ( for च ). D$_1$ अन्योन्यं ते तु ( for अन्योन्यस्य च ). D$_3$ वर्णयंतः ( for वर्धयन्तः ). L (ed.) परस्परं ( for प्लवंगमाः ). —After l. 77, D$_{12}$ erroneously repeats the prior half of l. 75. – ( l. 78 ) B$_3$ छादयामासुर्; L(ed.) छाद्यमानास्ते ( for शङ्खसंकाशं ). D$_8$ छादमाना; L ( ed. ) वर्षाकाले ( for छादयन्तो ). Ś$_1$ प्लवंगमाः ( for घना इव ). B$_3$ घना इव चांबरे ( subm. ) ( for the post. half ). —( l. 79 ) B$_3$ D$_{1.2}$ महानादान्. Ś D$_{12}$ नर्दयंतो महानादान् ( for the prior half ). —Ś$_1$ om. l. 80–81. —( l. 80 ) B$_3$ गृहीतवृक्षाश्चाकाशे ( for the prior half ). —( l. 81 ) Ñ$_2$ नभस्थलं. —( l. 82 ) B$_3$ -निष्ठा ( for मुक्ता ). —Ñ$_2$ illeg. for the post. half. Ś$_2$ धिष्ठितं; B$_{3.4}$ D$_9$ विष्ठिता ( for धिष्ठिता ). —B$_4$ om. ( hapl. ) l. 83–85. —( l. 83 ) Ś$_1$ -विस्तारं; Ś$_2$ -मात्रे तु ( for -मात्रं तु ). B$_3$ सेतुर्वद्धो विशेषतः ( for the post. half ). —( l. 84 ) Ñ$_2$ D$_{1.9}$ बद्धो बद्ध इति प्रोच्चैः ( for the prior half ). Ś$_2$ सुराणाम् ( for सिद्धानाम् ). D$_3$ श्रूयते ( for अम्बरे ). B$_3$ सिद्धानां वदतां वाचं बद्धो बद्ध इति स्वनः. —( l. 85 ) Ñ$_2$ om. ( subm. ); B$_3$ D$_{2.4}$ प्र- ( for च ). D$_8$ ह ( for सः ). —Ñ$_2$ illeg. for l. 86. —( l. 86 ) l. 86–87 = 6.15.20. B$_3$ -विस्तीर्णम् ( for -विस्तारम् ). D$_3$ transp. आयतं and शतयोजनम्. —Ñ$_2$ om. l. 87. —( l. 87 ) D$_8$ -पतौ ( for -पतेः ). —( l. 88 ) V$_{1.3}$ B$_{2.3}$ कर्मणां ( for कर्मणः ). D$_8$ विधातुः विश्वकर्मणः ( for the post. half ). —( l. 89 ) V$_3$ तेषां; D$_8$ दिष्ट्या ( for निष्ठां ). —Ñ$_2$ om. l. 90. —( l. 90 ) V$_3$ कूले सेतुः. Ñ$_1$ V$_3$ समुद्रस्य; B$_{3.4}$ D$_{1.9}$ प्रवृत्त( B$_4$ °त्ति )श्च; D$_3$ प्रववृते; L ( ed. ) प्रवृत्तः संल् ( for प्रवृत्तः स ). V$_1$ illeg.; B$_2$ कूले तूत्तर आरब्धो; D$_4$ महाबलैस्त्वभिवृतो ( for the prior half ). Ñ$_1$ om.; B$_2$ -कूले ( for -मूले ). —After l. 90, Ñ$_1$ V$_{1.3}$ B$_2$ ins.:

4* सागरस्येव सीमन्तश्चित्ररूपो व्यदृश्यत ।

[ Ñ$_1$ प्रकाशते; B$_2$ व्यदृश्यते ( for व्यदृश्यत ). ]

**15**

Ś$_2$ begins with ॐ; D$_1$ with श्रीगणेशाय नमः । नमः परमात्मने पुराणपुरुषोत्तमाय नमः । नमो हरहरिहिरण्यगर्भेभ्यो नमो व्यासवाल्मीकिशुकपराशरसद्गुरुचरणकमलेभ्यः सरस्वत्यै । and then ins. जयति भृगुवंशतिलकः etc. —( l. 2 ) V$_1$ प्रतीपरूपं. D$_0$ विजयाय ( for विजयाभि- ). Ś$_1$ D$_4$ -नंदनं; Ñ D$_{1.3}$ -नंदितं. —( l. 3 ) Ś Ñ$_2$ निजगाम; B$_{2.3}$ D$_{0.8}$ [ ऽ ]पि जगाम; B$_4$ [ ऽ ]तिजगाम. —( l. 4 ) B$_4$ D$_9$ प्रभावमस्यैव तदा ( for प्रभावमस्मै वरदो ). B$_{2-4}$ विवर्धयन्. —V$_1$ reads l. 5–8 after l. 40. —( l. 5 ) Ñ B$_4$ D$_{1-3.9}$ समागतौ; V$_1$ तथागतौ; D$_0$ तं स्वागतं ( for तमागतं ). B$_2$ वीक्ष्य च ( for लक्ष्मण- ). —( l. 6 ) Ś$_1$ B$_3$ om. च; D$_{1.3}$ तु ( for first च ). Ś B$_{2.3}$ D$_{4.12}$ वीर्यवान्. —( l. 7 ) Ñ V$_1$ B$_4$ D$_9$ ययुः ( for मुदा ). B$_{2.3}$ युतास्ते ( for प्रतीता ). —( l. 8 ) Ś D$_{12}$ प्रणेमिरे तं; D$_{1-4}$ प्रणेमु रामं. B$_{2.3}$ D$_{0.8}$ प्रणम्य रामाभिमुखाव( D$_8$ °खं च )तस्थिरे. —( l. 9 ) D$_4$ -माल्य- ( for -रूप- ). B$_2$ -[ आ ]वरणो; D$_{1.3}$ -[ आ ]भरणैर्. Ś$_2$ D$_{3.12}$ महाद्युतिं.

शिरस्युपाघ्राय जयाय पुत्रव-
त्समीक्ष्यमाणोऽनुशशास सागरः ।
न वत्स युद्धे मुनिवेष इष्यते
विभज्य कर्माणि चरन्ति पार्थिवाः ।
स राम राजाभरणैरलंकृतो [15]
जयाय गच्छेति जगाद सत्वरः ।
तथेति चोक्त्वा वचनं महोदधे-
र्विसृज्य चीराणि जटा निरस्य च ।
शुभानि राजाभरणानि चाददे
समुद्रदायं कवचायुधानि च । [20]
तथैव तेपे पुनरव्यतिक्रमं
मनोवचःकायसमाधिजं तपः ।
पिता यथैनं नियुयोज कृच्छ्रे
स चापि रामो ददृशे महीं गतः ।
स लक्ष्मणस्यापि तथा यथात्मन- [25]
श्चकार वर्मायुधभूषणक्रियाम् ।
तयोर्द्युतिः संददृशे नराग्र्ययो:
समेत्य चन्द्रोशनसोर्निशास्विव ।
ततस्तु रामं तपसा प्रदीप्तं
वरैश्च राजाभरणैरलंकृतम् ।
अनुग्रहायाभिनिनाय सागरः
सुदुष्प्रवेशं वरुणस्य चालयम् । [30]
स देवराजं वरुणं वरप्रदं
ज्वलन्तमृद्ध्या समुदीर्णरूपया ।
प्रतीतमासीनमुपेत्य राघव-
स्तदा ववन्दे शरणं जगाम च । [35]
अथाभ्युवाचाशिषमायुषि ध्रुवं
नराधिपायाम्बुपतिः प्रसन्नवाक् ।
बले च वीर्ये च विवृद्धिमाददे
त्वरेति चोवाच जयेति चेश्वरः ।
ततः समुद्रः प्रतिनीय राघवं [40]
पितेव पुत्रं प्रशशास बुद्धिमान् ।
भवाय कृत्वा भगवान्प्रदक्षिणं
ततोऽभ्ययात्सोऽपि यथागतो भुवम् ।
ततः प्रभुः सुखमुषितो विभावरीं
पुरोदयं सवितुरुपेत्य राघवः । [45]

—(l. 11) Ñ2 B3.4 D9 च राजपुत्रं; D1.3 जयाय पुत्रं. —(l. 12) V1 B3 D2.12 समीक्षमाणो. Ñ1 V1 [ऽ]भिससार; B2 D9 [ऽ]नुससार; D1 निशशास; D3 न शशाक (for ऽनुशशास). B4 राघवः (for सागरः). —(l. 14) D8 विमृश्य (for विभज्य). —B4 repeats l. 15–16 consecutively. —(l. 15) D3 त्वं (for स). V1 B4 (first time) -[आ]भरणानि मत्तो. B3 सुराज वै साभरणैलंकृता (corrupt). —(l. 16) B3 गच्छंति; D4 गच्छेच्च. Ś1 Ñ1 B2 जगाम; D0–2.4.8 चकार (for जगाद). Ñ1 तत्त्वतः; Ñ2 B4 (second time) D0.9 सत्वरं; D3 सागरः (for सत्वरः). V1 B4 (first time) गृहाण पश्चाद्विजयावहानि. —V1 lacuna for l. 17–18. —(l. 17) Ñ1 [उ]क्तं. Ñ1 B2 D8 वचनान्. B3 D1.3 महोदधिं. —(l. 18) Ñ1 B2 D0.8 जटा नियम्य; D1 जटामिमां (for जटा निरस्य). B4 om. च. —(l. 19) V1 ततः स रामः प्रविभज्य (for शुभानि राजाभरणानि). Ś B2 D12 [आ]दधे. —(l. 20) D2 समुद्रदत्तानि. B2.3 -[अं]बराणि (for -[आ]युधानि). —D1 om. from च up to स in l. 25. V1 om. च. —(l. 21) Ñ1 ते तत्; V1 B4 चैतत् (for तेपे). Ś अव्यतिक्रमन्; Ñ2 D9 एव साधुर्; B2.3 D8 अप्यतिक्रमं. —(l. 22) D8 चैव समीहितं (for -कायसमाधिजं). B4 वचः (for तपः). —(l. 23) Ñ V1 B4 D9 यदेनं; D2 तथैनं (for यथैनं). Ś D2.4.12 कृत्ये; B2 D0.8 कृच्छ्रतः (for कृच्छ्रे). B3 निजकृच्छ्रतस्तदा. —(l. 24) D3 तं and रामं (for स and रामो respy.). Ñ2 B3.4 D9 महीपतिः; D3 महीगतं (for महीं गतः). —(l. 25) Ñ1 B3 om. (hapl.) यथा. Ñ2 B4 D0.3.4.9 यथा तथा (by transp.). —(l. 26) Ñ1 V1 D0 कर्म-; D8 धर्म- (for वर्म-). Ñ V1 D0.1.3.8 -क्रियाः. —(l. 27) D1.3 संववृधे (for संददृशे). Ś1 Ñ2 V1 B2.3 D1.4 नराग्रयोः. —B3 om. l. 28. —(l. 28) Ñ2 B4 D9 चंद्रेण नभो. Ñ1 V1 निशामिव; B4 विभाति. —(l. 29) Ñ1 V1 B3.4 D3 राजा (for रामं). Ñ1 V1 B4 प्रदीप्तो; Ñ2 B2.3 D0.1.3.8.9 प्रदीपितं (B3 D3 °तो) (for प्रदीप्तं). —(l. 30) Ñ1 V1 B3.4 D3 अलंकृतः. —(l. 31) Ñ1 V1 अनुग्रहेणाति-; B3 अनुग्रहार्थाय; B4 D0 अनुग्रहायाति- (for अनुग्रहायाभि-). B4 D1 सागरं. —(l. 32) Ñ2 B2 D2–4.8.12 स (for सु-). —(l. 33) Ñ2 D0.9 संप्राप्य (D0 स चैव) राजा (for स देवराजं). —(l. 34) Ñ V1 B4 D9 समुपेत-; D1.3 यशसाभि- (for समुदीर्ण-). —(l. 36) V1 D2.4 om.; B2.3 सः (for च). —Ñ1 lacuna; B4 repeats consecutively l. 37. —(l. 37) B3 हि (for [अ]भि-). D3 [आ]विजयाशिषो (for [आ]शिषमायुषि). Ñ2 illeg.; B2 D3 ब्रुवन् (for ध्रुवं). V1 B4 (first time) अथ स्तुवन्ना (V1 °च्चा) शिषमायुषं ब्रुवन्; B4 (second time) D1 तथाभ्युवाचाशिषमभ्युदीरयन् (D1 °मायुषो-ब्रवीत्). —(l. 38) B2 स राघवश्च (for नराधिपाय). Ñ2 B4 D1.3.9 प्रतापवान् (for प्रसन्नवाक्). —(l. 39) V1 B4 आवृद्धिं; D0 आदधे. D4 बलं च वीर्यं च विवृद्धमाददे. —(l. 40) V1 B4 सं चेति (for त्वरेति). Ś Ñ2 D12 [उ]क्त्वाथ; D4 [उ]क्तं च (for [उ]वाच). B2 चेश्वरं; B3 राघवः (for चेश्वरः). —(l. 41) D0 समक्षं (for समुद्रः). Ñ1 V1 B2.3 D2.8 प्र (Ñ1 V1 स) विनीत (V1 D2 °य); B4 परिशास्य; D3 प्रतिनंद्य; D9 परिशाम्य (for प्रतिनीय). B2.3 -मानसं (for राघवं). —(l. 42) Ñ2 illeg. after प्रश up to l. 43. B2.3 प्रशशंस; B4 D9 यशसा च (D9 स) (for प्रशशास). Ñ1 B2.3 राघवं (for बुद्धिमान्). D0.8 सुहृद्भिरेव त्वरया समानयत्. —(l. 43) B4 D9 तं चापि; D1.3 रामाय (for भवाय). D4 हृत्वा (for कृत्वा). B2 वरुणं; B3 वरुणः; D1 [अं]बुपतिः (for भगवान्). —(l. 44) Ñ2 B4 D9 [ऽ]गमत् (for ऽभ्ययात्). Ñ1 V1 [ऽ]थ (for ऽपि). Ñ1 V1 B2.3 D0.2.8 यथागतं. Ñ1 V1 B3 प्रभुः; B3 D0.1.3.8 विभुः; D2 भुवि; L (ed.) [ऽ]भवत् (for भुवम्). —(l. 45) D0 अभितो (for उषितो). Ñ2 B4 D9 तीरेंबुधेः सोप्युषितो बभाषे. —(l. 46) Ñ2 पुरोदितं; B2.3 पूर्वोदयं; D1.3 पुरोदयात्. D9 उपैत्.

महाबलैः समभिवृतो बलाग्रणी-
मेहाद्भुतं समुपजगाम पर्वतम् ।

Colophon

ततः शङ्खविमिश्रेण भेरिशब्दानुनादिना ।
राघवस्यागमत्सैन्यं नानाप्रहरणान्वितम् । [ 50 ]
समासीनं ततस्तत्तु राघवस्य महद्बलम् ।
अशोभत तदा पूर्णं स्तिमितः सागरो यथा ।
समागतं ततस्तं तु दृष्ट्वा राजा दशाननः ।
मुहूर्तं ध्यानमास्थाय सचिवानभ्युदैक्षत ।
अथ तान्सचिवांस्तत्र बभाषे रावणस्तदा । [ 55 ]
वाक्यं वाक्यविदां श्रेष्ठाः शृणुध्वं मम राक्षसाः ।
न चोद्योगो मनो वोऽद्य सोऽयं प्राप्तश्च राघवः ।
सहितः सर्वसैन्येन वानराणां सलक्ष्मणः ।
साम्प्रतं चैव यत्कार्यं तत्कुरुध्वमकालिकम् ।
अवज्ञा न च कर्तव्या वानरेषु रणाजिरे । [ 60 ]
यैस्तृणीकृत्य नः सर्वान्सेतुर्बद्धो महोदधौ ।
भवन्तश्चैव रागान्धाः सुखसुप्ताः प्रसंगिनः ।
बध्यमानं तथा सेतुं यन्न वेत्थ निशाचराः ।
चारोऽत्र न प्रयुक्तश्च सर्वैर्मन्त्रिपदे स्थितैः ।
हितं मन्त्रयते राज्ञस्तेन मन्त्री निगद्यते । [ 65 ]
कार्याकार्याणि सततं राजा राज्ये करोति वै ।
तानि सर्वाणि कार्याणि मन्त्रिभिः सततोत्थितैः ।
अन्विष्यान्विष्य चिन्त्यानि तेन राजा सहायवान् ।
मन्त्रिभिः सर्वकार्यार्थाः कार्या नित्यमसंशयम् ।
एवं भवद्भिर्विस्रम्भाद्वञ्चितोऽहं निशाचराः । [ 70 ]
मामकं यदि वः कार्यं नास्ति कार्यतमं हृदि ।
अहमेकः करिष्यामि शात्रवाणां प्रबाधनम् ।
चारं चात्र नियोक्ष्यामि सान्त्वं भेदमथापि वा ।
रावणेनैवमुक्तास्ते राक्षसा व्रीडिताभवन् ।
व्रीडितानां ततस्तेषां मेघनादोऽभ्यभाषत । [ 75 ]
किमर्थं तप्यसे तात राघवाल्लक्ष्मणात्तथा ।

—(l. 47) $\tilde{N}$ $V_1$ $B_{2-4}$ $D_{0.1.3.8.9}$ महाबलः( $B_{2.3}$ °लिस; $D_{1.3}$ °ल- ). $\tilde{N}$ $V_1$ $B_4$ $D_9$ प्रतिनिह( $\tilde{N}_1$ $D_9$ °हि )तो; $B_{2.3}$ स्वतिसुखिनो; $D_{0.8}$ स्वभिविवृतो; $D_{1.3}$ -स्थितिवृतो; $D_{2.4}$ स्वभि( $D_4$ °पि वृतो (for समभिवृतो ). $Ś_1$ वलीमुखैः ; $Ś_2$ $D_{12}$ बलाय; $D_{1.3}$ महागृही; $D_3$ महाग्रणीर्. —(l. 48) $\tilde{N}_2$ $B_4$ तदद्भुतं; $V_1$ सहानुजः; $B_2$ महाद्भुतां; $D_9$ तमद्भुतं (for महाद्भुतं ). $\tilde{N}_2$ $B_4$ सोऽपि जगाम; $B_3$ स जगाम; $D_0$ सुवेलमुपजगाम. $\tilde{N}_1$ $V_1$ $D_8$ भूभृतं; $B_2$ तां चमुं; $B_3$ *चलं (for पर्वतम् ).

Colophon :—*Kāṇḍa name* : $Ś_2$ $\tilde{N}$ $V_1$ $B_{2-4}$ $D_{0.3.4.8.9.12}$ सुंदरकांडे; $D_2$ लंकाकांडे. —After Kāṇḍa name, $\tilde{N}_2$ ins. लंकापर्वणि. —*Sarga name* : $Ś_1$ $D_{4.12}$ समुद्रदायो( $D_4$ समुद्राय ) वरुणदर्शनं; $Ś_2$ $B_2$ $D_0$ समुद्रदायः( $D_0$ °यं ); $\tilde{N}_1$ समुद्रपुनर्दर्शनः ; $\tilde{N}_2$ $B_3$ $D_9$ समुद्रक्रमणं; $V_1$ $B_4$ समुद्रवरप्रदानं; $D_{1.3}$ वरुणदर्शनः ; $D_2$ समुद्रप्रतिदायं वरुणदर्शनं; $D_8$ सेतुबंधः. —*Sarga no.* ( figures, words or both ): $Ś_1$ $\tilde{N}$ $B_{2.3}$ $D_{0.2.4.8.12}$ om. ; $Ś_2$ 103 ; $V_1$ 87 ; $B_4$ 107 ; $D_1$ 1 ; $D_3$ 103 ; $D_9$ 98 ; L (ed.) 99. —After colophon, $D_2$ concludes with राम.

—(l. 49) $Ś_2$ $V_1$ भेरी- . $\tilde{N}_1$ $B_3$ -[ अ ]नुनादिनी; $B_2$ -[ अ ]नुयायिना; $D_0$ -[ अ ]नुनादितं; $D_{1.3}$ -[ अ ]नुगामिना (for -[ अ ]नुनादिना ). —(l. 50) $\tilde{N}$ $V_1$ $B_{2-4}$ $D_9$ सेना and -[ अ ]न्विता (for सैन्यं and -[ अ ]न्वितम् respy. ). —After l. 50, $B_3$ ins. :

1* शोभिता विविधाकारा समुद्रनिलये तदा ।

—$D_1$ om. (hapl. ?) l. 51–52. —(l. 51) $D_{2.8}$ समानीतं. $Ś$ $D_{8.9.12}$ महाबलं. —(l. 52) $Ś$ $D_{2.4.12}$ ततः (for तदा ). $\tilde{N}_2$ $D_{8.9}$ पूर्णः; $B_2$ पूर्वं; $D_2$ तूर्णं (for पूर्णं ). L (ed.) सागरः स्तिमितो (by transp.). —(l. 53) $B_4$ स आगतं; $D_4$ सभागतम्. $Ś_2$ $V_1$ $B_{2-4}$ $D_9$ तद् (for तं ). $B_{2.3}$ ज्ञात्वा (for दृष्ट्वा ). —(l. 54) $V_1$ $B_{2-4}$ $D_{1.3}$ समुदैक्षत; $D_3$ अभ्युदैक्ष्यत. —(l. 55) $D_3$ स तु (for अथ ). $B_{2.3}$ प्रथितान् (for अथ तान् ). —$D_4$ om. l. 56–57. —(l. 57) $D_{0.9}$ वा (for च ). $D_0$ चाद्य; $D_1$ वात्र; $D_2$ वाद्य. $Ś$ ततो( $Ś_2$ न चो )द्योगमसंभाव्यम् (for the prior half ). $D_{1-3}$ (with hiatus) अयं (for सोऽयं ). $Ś$ $D_{1-3.12}$ स (for च ). —(l. 59) $D_8$ संप्राप्तं (for साम्प्रतं ). $D_1$ न (for तत् ). —(l. 60) $\tilde{N}_2$ $B_{2.3}$ $D_{1-3.9}$ च न (by transp. ). —(l. 61) $Ś$ $D_9$ सेतुबंधे. $Ś$ $D_{9.12}$ महार्णवे (for महोदधौ ). —(l. 62) $\tilde{N}_1$ गंधाश्च (for रागान्धाः ). $Ś_2$ $\tilde{N}_2$ $B_{2.3}$ -प्राप्ताः; $D_{1.3}$ -[ आ ]सक्ताः (for -सुप्ताः ). $Ś_1$ $D_{4.12}$ सुसंगिनः; $\tilde{N}$ $D_9$ प्रशंसिनः; $B_4$ प्रसाधिनः (for प्रसंगिनः ). —(l. 63) $\tilde{N}$ $V_1$ $B_4$ $D_9$ तदा; $B_2$ यथा; $B_3$ यदा; $D_{1.3}$ महा- (for तथा ). $\tilde{N}$ $D_{0.1.8.9}$ वित्त; $D_4$ वेद (for वेत्थ ). $B_{2.3}$ न विज्ञाता (for यन्न वेत्थ ). $D_4$ निशाचरः. —$D_9$ om. (hapl.) l. 64–70. —(l. 64) $\tilde{N}$ $B_{2.3}$ $D_3$ चरो. $D_8$ नात्र (by transp. ). $\tilde{N}$ $V_1$ $B_{2-4}$ $D_{0.1.3.8}$ प्र( $B_3$ नि )युक्तो वः ( $D_{1.3}$ वै ) (for प्रयुक्तश्च ). —(l. 65) $D_0$ नूनं; $D_2$ मंत्रस् (for राज्ञस ). $Ś$ $D_{9.12}$ [ इ ]ति कथ्यते; $\tilde{N}_1$ $V_1$ $B_{3.4}$ [ इ ]ति( $\tilde{N}_1$ हि ) मन्यते (for निगद्यते ). —(l. 66) $Ś$ $D_{2.4.9.12}$ यानि कार्याणि (for कार्याका° ). $D_{1.3}$ राज्ञो (for राजा ). $\tilde{N}_1$ राज्यं. —(l. 67) $\tilde{N}$ $V_1$ $B_{3.4}$ इति (for तानि ). $Ś$ $D_{8.9.12}$ -[ उ ]द्यतैः. —(l. 68) $D_{1.3}$ तैर्हि (for तेन ). $D_0$ राजा तेन (by transp. ). $Ś$ $D_{4.9.12}$ राज्ञो महोदयः (for राजा सहायवान् ). —$B_3$ $D_1$ om. l. 69. $\tilde{N}_1$ erroneously reads l. 69–101 for the first time after l. 36 repeating them here. —(l. 69) $\tilde{N}_1$ $D_8$ सह (for सर्व- ). $D_0$ सर्वथा कार्याः (for सर्वकार्यार्थाः ). —(l. 70) $\tilde{N}_1$ $B_{2.3}$ $D_1$ विश्वासाद् (for विस्रम्भाद् ). —(l. 71) $B_4$ ममैकं (for मामकं ). $B_3$ $D_{2.9}$ कार्यं मतं (for कार्यतमं ). —(l. 72) $\tilde{N}_1$ $V_1$ $B_{2-4}$ एव (for एकः ). $Ś_1$ प्रसादनं; $Ś_2$ $\tilde{N}_2$ $D_{3.4.12}$ प्रसाधनं; L (ed.) प्रशासनं (for प्रबाधनम् ). —(l. 73) $B_4$ एवं चारं (for चारं चात्र ). $V_1$ विमोक्ष्यामि; $B_2$ विधास्यामि; $D_{1.2}$ प्रयोक्ष्यामि (for नियोक्ष्यामि ). $Ś_1$ $D_3$ सांत्वभेदम्. $D_9$ च (for वा ). —(l. 74) $D_0$ तु (for ते ). $B_3$ $D_{1.12}$ भृशं; $D_3$ तथा (for [ अ ]भवन् ). —(l. 75)

वानरेन्द्राच्च सुग्रीवाद्वानराणां बलादपि ।
मानुषो नृपती रामो राज्यभ्रष्टस्तथैव च ।
कथं बिभेषि तस्मात्त्वं देवान्कृत्वा वशेऽनघ ।
इहानीतो मया शक्रो नागपाशसितो रणे । [80]
विबुधा निर्जिताः सर्वे स्वर्गं गत्वा त्वया पुरा ।
प्रेताधिपो जितः संख्ये वित्तेशश्च पराजितः ।
वरुणः काद्रवेयाश्च कालकेयाश्च दानवाः ।
वसवो मरुतश्चैव तथा चन्द्रदिवाकरौ ।
पृथिव्यां सर्वराजानो निर्जितास्ते स्वतेजसा । [85]
किं करिष्यन्ति ते राजन्वानरा वनचारिणः ।
तौ वा मानुषमात्रौ तु भ्रातरौ रामलक्ष्मणौ ।
व्येतु ते संभ्रमो राजन्नहं हन्मि प्लवंगमान् ।
मम बाणपथं प्राप्य न कश्चिदपि जीवति ।
रामं च लक्ष्मणं चैव हतौ पश्य मया रणे । [90]
हनूमन्तं ससुग्रीवमङ्गदं गन्धमादनम् ।
सुषेणं जाम्बवन्तं च तथान्यान्वनगोचरान् ।
मेघनादवचः श्रुत्वा प्रहस्तो वाक्यमब्रवीत् ।
एवमेतन्न संदेहो यथा वदसि मानद ।
मुसलायोधिने मह्यं कः स्थास्यति रणाजिरे । [95]
वानरेषु न मे चिन्ता चलचित्तेषु रावण ।
मानुषेषु च क्लीबेषु भक्ष्यभूतेषु नित्यदा ।
अहमेको वधिष्यामि तव शत्रून्दशानन ।
सुखी भव महाराज यथेष्टं विचरस्व च ।
मुसलं भ्रामयानस्तु रावणाननमैक्षत । [100]
एवमुक्ते प्रहस्तेन धूम्राक्षो वाक्यमब्रवीत् ।
आगतौ यदि तौ राजन्मानुषौ रामलक्ष्मणौ ।
बद्ध्वा सेतुं समुद्रे तु वानराश्च तरस्विनः ।
लङ्कामूले स्थितास्तस्मात्संनह्यध्वं निशाचराः ।
गच्छामस्त्वरितं तत्र यत्र तद्वानरं बलम् । [105]
सुखसुप्तान्हनिष्याम एतद्धि मम रोचते ।
महोदरोऽथ निर्भर्त्स्य धूम्राक्षं वाक्यमब्रवीत् ।
सुरक्षितं च रामेण सुग्रीवेण च तद्बलम् ।
वानरैश्च महावीर्यैः समन्तात्परिवारितम् ।
न तत्र गमनं युक्तं पुरे गुप्तिर्विधीयताम् । [110]
पूर्वमेतदभूत्कृत्यं परे पारे महोदधेः ।
सेतौ वा बध्यमाने च विघ्नः कार्यो निशाचराः ।

Ñ V$_1$ B$_4$ तदा; B$_3$ D$_{8.9}$ तथा ( for ततस् ). B$_2$ तदेतेषां. D$_{1.2.4}$ ह्यभाषत. —(l. 76) Ñ$_2$ B$_{2.3}$ D$_{2.8}$ तप्यते. B$_{2.4}$ D$_4$ तदा; D$_3$ अथ ( for तथा ). —(l. 77) Ś Ñ$_2$ D$_{2.4.12}$ तथा बलात् ( for बलादपि ). —(l. 78) B$_2$ D$_{1.3}$ राज्याद् ( for राज्य- ). —(l. 79) Ñ$_1$ D$_8$ कस्माद्. D$_0$ त्वं देवान्नाथ ( for तस्मात्त्वं देवान् ). Ś$_1$ D$_{2.4.12}$ स्थाप्य वशे; D$_1$ विजयसे ( for कृत्वा वशे ). D$_0$ बलात् ( for ऽनघ ). —(l. 80) Ś$_1$ -वृतो; Ś$_2$ B$_4$ D$_{12}$ -[ आ ]वृतो; Ñ$_1$ B$_3$ D$_{1.2.4}$ -[ आ ]सितो; D$_3$ -कृती; L (ed.) -जितो ( for -सितो ). —(l. 81) B$_2$ नियुताः ( for निर्जिताः ). Ñ$_1$ मुर्द; B$_2$ दुर्ग; D$_{2.4}$ स्वर्गे ( for स्वर्गं ). B$_2$ पुरा मया; D$_8$ त्वया पुनः ( for त्वया पुरा ). —(l. 82) Ñ$_1$ B$_2$ धनेशश्च; D$_4$ वित्तेंद्रश्च; L (ed.) वित्तेशोत्र ( for °शश्च ). D$_9$ पुरा जितः ( for पराजितः ). —(l. 83) B$_2$ transp. काद्रवेयाश् and कालकेयाश्. D$_1$ दानवाः सगणा जिताः ( for the post. half ). —(l. 84) B$_3$ D$_9$ मारुताश्च. —(l. 85) D$_8$ पृथिव्याः. Ś D$_{2.12}$ ये च; D$_4$ चैव ( for सर्व- ). Ś D$_{2.4.12}$ विजि( Ś$_1$ °दि )तास्. Ś D$_{0.12}$ ते च; D$_{2.4}$ चैव; D$_8$ स्वेन ( for ते स्व- ). —(l. 86) V$_1$ ते सर्वे; D$_1$ राजन्नो ( for ते राजन् ). —(l. 87) Ñ$_1$ च ( for वा ). Ś$_2$ मानुषमात्रं; Ñ$_1$ वा नरमात्रौ. Ś$_1$ Ñ$_2$ D$_{12}$ च ( for तु ). —(l. 88) Ś$_1$ D$_{12}$ शत्रोर् ( for राजन् ). D$_4$ हन्मि सर्वान् ( for अहं हन्मि ). —(l. 90) D$_4$ वा ( for च ). Ñ$_1$ B$_{2.3}$ D$_1$ हतं ( for हतौ ). V$_1$ B$_4$ महारणे; D$_1$ रणाजिरे ( for मया रणे ). —(l. 91) Ś B$_2$ च; D$_8$ तु ( for स- ). Ś D$_{2.4.12}$ सांगदं. —(l. 92) D$_{0.3}$ वनचारिणः.—(l. 94) Ñ$_1$ B$_2$ एव ( for एतन् ). —(l. 95) Ś Ñ V$_1$ B$_{2-4}$ D$_{0.3.8.9}$ मुसलायोधिनो. Ñ$_1$ V$_1$ B$_{2-4}$ D$_{0.3.8.9}$ मेध ( for मह्यं ). D$_1$ न ( for कः ). —(l. 96) B$_{2.3}$ चिंता च; D$_{1.8}$ ते चिंता. D$_1$ बलवत्सु च रावण ( for the post. half ). – (l. 97) Ś Ñ$_2$ D$_{1.3.12}$ दीनेषु ( for क्लीबेषु ). B$_2$ क्लीबेषु मानुषेष्वत्र; B$_3$ क्लीबेषु मानुषेषु च ( for the prior half ). D$_{1.3.8}$ भक्ष- ( for भक्ष्य- ). Ñ V$_1$ B$_{3.4}$ D$_9$ मे सदा; B$_2$ वा सदा; D$_1$ नित्यशः; D$_8$ मानद; D$_8$ मां सदा ( for नित्यदा ). —(l. 98) D$_{2.3}$ हनिष्यामि. Ś Ñ B$_{3.4}$ D$_{1.2.4.12}$ शत्रुं ( for शत्रून् ). —(l. 99) Ś D$_{4.12}$ विचर स्वं; D$_0$ विरमस्व च ( for विचरस्व च ). —(l. 100) Ñ$_1$ B$_{2.3}$ D$_{2.4}$ भ्रा( Ñ$_1$ B$_{2.3}$ भ्र )ममाणस्तु; Ñ$_2$ V$_1$ B$_4$ D$_9$ भ्राम्यमाणस्तु; D$_8$ भ्रामयामास ( for भ्रामयानस्तु ). D$_1$ इक्ष्य च ( for ऐक्षत ). Ś D$_{2-4.12}$ रावणं समुदै( D$_2$ चान्ववै )क्षत; V$_1$ B$_4$ रावणेन समेल न ( for the post. half ). —(l. 101) Ś Ñ$_2$ V$_1$ B$_4$ D$_4$ उक्तो ( for उक्ते ). —V$_1$ om. ( hapl. ) l. 102–107. —(l. 102) D$_{1.3}$ भ्रातरौ ( for मानुषौ ). —(l. 103) Ñ$_2$ B$_{2.3}$ च ( for तु ). Ñ$_1$ D$_{8.9}$ समुद्रस्य. B$_{2.3}$ महाबलाः; D$_1$ तपस्विनः ( for तरस्विनः ). —(l. 104) D$_1$ यस्मात्संदह्यध्वं. —(l. 105) Ś Ñ$_2$ D$_{2-4.12}$ त्वरितास्. D$_1$ यत्र ( for तत्र ). D$_8$ यद् ( for तद् ). —(l. 106) Ñ$_1$ B$_4$ D$_9$ अथ; Ñ$_2$ illeg.; B$_{2.3}$ अद्य; D$_{0.3}$ सुखं ( for सुख- ). Ñ$_2$ B$_{2.3}$ D$_{0.1}$ हनिष्यामि. —(l. 107) Ñ$_1$ B$_{2-4}$ D$_{4.8.9}$ [ ऽ ]पि ( for ऽथ ). D$_8$ निष्क्रम्य. D$_3$ प्राह राक्षसं ( for वाक्यमब्रवीत् ). —After l. 107, B$_3$ ins. :

2* किं त्वं निरूप्यसे मुग्ध न जानामि हिताहितम् ।

—(l. 108) Ñ$_1$ B$_{2.3}$ तु ( for च ). Ñ V$_1$ B$_{2-4}$ D$_9$ लक्ष्मणेन ( for सुग्रीवेण ). —(l. 109) Ś Ñ$_2$ D$_{12}$ महावीरैः. V$_1$ परिरक्षितं; D$_4$ परिचारितं. —(l. 110) Ś$_1$ Ñ$_2$ [ आ ]गमनं ( for गमनं ). Ñ$_1$ V$_1$ B$_{3.4}$ D$_{0.2.3.9}$ पुर-; B$_2$ तत्र; D$_1$ पुनर् ( for पुरे ). D$_8$ विधीयते. —(l. 111) Ñ$_2$ illeg. for the prior half. D$_0$ एव हि ( for एतद् ). B$_2$ भवेत् ( for अभूत् ). Ñ$_1$ V$_1$ B$_4$ गुप्तं ( for कृत्यं ). B$_4$ D$_8$ परं; D$_3$ om. ( for परे ). —(l. 112) B$_{2.3}$ D$_{8.9}$ च ( for वा ). Ñ$_1$ V$_1$ B$_{3.4}$ D$_{0.3.4.8}$ तु; Ñ$_2$ D$_9$ [ ऽ ]पि; B$_2$ हि ( for च ). Ñ V$_1$ B$_4$ D$_9$

अयुध्यन्त शिलाहस्ताः समवेताः समन्ततः ।
तत्रायुधसहस्राणि तस्मिन्नायोधने भृशम् ।
राक्षसाः कपिमुख्येषु पातयांचक्रिरे तदा ।
वानराश्चैव रक्षःसु गिरिवृक्षान्महाशिलाः । [75]
प्रवीराः पातयामासुर्मत्तवारणसंनिभाः ।
शूराणां युध्यमानानां समरेष्वनिवर्तिनाम् ।
तद्राक्षसगणानां च सुयुद्धं समवर्तत ।
प्रभिन्नशिरसः केचिच्छिन्नैः पादैश्च बाहुभिः ।
शस्त्रैरर्दितदेहास्तु रुधिरेण समुक्षिताः । [80]
हरयो राक्षसाश्चैव शेरते गां समाश्रिताः ।
कङ्कगृध्रबलाढ्याश्च गोमायुगणसंकुलाः ।
कबन्धानि समुत्पेतुर्भीरूणां भीषणानि वै ।
भुजपाणिशिरश्छिन्नाश्छिन्नकायाश्च भूतले ।
वानरा राक्षसाश्चापि निपेतुस्तत्र वै रणे । [85]
ततो वानरसैन्येन हन्यमानं निशाचरम् ।
प्राभज्यत बलं सर्वं वज्रदंष्ट्रस्य पश्यतः ।
राक्षसान्भयवित्रस्तान्हन्यमानान्प्लवंगमैः ।
दृष्ट्वा स रोषताम्राक्षो वज्रदंष्ट्रः प्रतापवान् ।
प्रविवेश धनुष्पाणिस्त्रासयन्हरिवाहिनीम् । [90]
शरैर्विदारयामास कङ्कपत्रैरजिह्मगैः ।
बिभेद वानरांस्तत्र सप्ताष्टौ नव पञ्च च ।
विव्याध परमक्रुद्धो वज्रदंष्ट्रः प्रतापवान् ।
त्रस्ताः सर्वे हरिगणाः शरैः संकृत्तदेहिनः ।
अङ्गदं संप्रधावन्ति प्रजापतिमिव प्रजाः । [95]
ततो हरिगणान्भग्नान्दृष्ट्वा वालिसुतस्तदा ।
क्रोधेन वज्रदंष्ट्रं तमुदीक्षन्तमुदैक्षत ।
वज्रदंष्ट्रोऽङ्गदश्चोभौ संगतौ हरिराक्षसौ ।
चेरतुः परमक्रुद्धौ हरिमत्तगजाविव ।
ततः शतसहस्रेण वालिपुत्रं महाबलम् । [100]
जघान मर्मदेशेषु शरैरग्निशिखोपमैः ।

---

$M_3$ शूरा ये ( for शूरास्ते ). $D_{5.7.9-11}$ $G_{1.2}$ $M_5$ ते सर्वे; $D_6$ सर्वे तु; $T_{2.3}$ $M_3$ सर्वे ते ( for सर्वे च ). $M_{1.2}$ वानराश्चापि बलिनः सर्वे युद्धविशारदाः. —( l. 75 ) $T_2$ $M_3$ [ अ ]पि ( for [ ए ]व ). $D_5$ $T_1$ $M_{1-3}$ गिरीन्; $D_9$ $T_{2.3}$ G $M_5$ महा- ( for गिरि- ). $D_6$ $T_2$ महाबलाः; $G_3$ महोपलान् ( for महाशिलाः ). ❀ Ck : गिरिवृक्षानिति षष्ठीसमासः. ❀ —( l. 78 ) $G_1$ -बलानां; $G_2$ $M_5$ -हरीणां ( for -गणानां ). $D_5$ $T_1$ $M_{1.2}$ रक्षसां वानराणां च ( for the prior half ). $G_3$ असि- ( for सम- ). ❀ Cg : तद्राक्षसगणानां चेति । ते च राक्षसगणाश्च तद्राक्षसगणाः । तेषाम् । तच्छब्देन वानरा उच्यन्ते ।; so also Ct. ❀ —( l. 79 ) $D_5$ $G_1$ प्रभग्न-; $D_{9-11}$ अभग्न-; $T_3$ विभिन्न- ( for प्रभिन्न- ). $T_3$ छिन्नाः; $G_{1.2}$ भग्नैः; $G_3$ भिन्न- ( for छिन्नैः ). $G_2$ केशैश्; Cm.g as above ( for पादैश् ). $G_3$ $M_5$ सहस्रशः; Cm.g as above ( for च बाहुभिः ). —( l. 80 ) $T_3$ शरैर् ( for शस्त्रैर् ). $D_{5.6}$ $T_1$ $G_{1.3}$ $M_{1.2.5}$ Cg अर्पित-; $M_3$ अर्चित- ( for अर्दित- ). $G_1$ ते; $M_{1.2}$ च ( for तु ). —( l. 81 ) $G_1$ $M_{1.2}$ [ अ ]पि ( for [ ए ]व ). $G_3$ शेरते वानरास्तत्र ( for the prior half ). $D_{9.11}$ शरवेगं; $G_3$ $M_5$ सर्वतो गां ( for शेरते गां ). $M_{1.2}$ स्म रणक्षितौ ( for गां समाश्रिताः ). —( l. 82 ) $D_6$ -बलाकाढ्या; $D_7$ $T_{2.3}$ -बलाकाश्च; $D_9$ -वराहाश्च; $G_1$ -बलाश्चैव; $G_2$ -बलक्षाढ्या; $G_3$ -बलाश्चापि; $M_{1.2}$ -बलाकीर्णा; $M_3$ -बलैराढ्या ( for -बलाढ्याश्च ). $D_{5.7.9-11}$ $T_3$ -कुल- ( for -गण- ). —( l. 83 ) $M_{1.2}$ कबंधाश्च ( for कबन्धानि ). $G_{1.2}$ $M_5$ अभीक्ष्णं ( for भीरूणां ). —$G_1$ damaged from वै up to शि in l. 84. $D_7$ $G_2$ $M_5$ च ( for वै ). $M_{1.2}$ भीरूणां तु भयावहाः ( for the post. half ). —( l. 84 ) $G_2$ $M_5$ -काय- ( for -पाणि- ). $M_{1.2}$ छिन्नबाहुशिरःपादि( $M_2$ °दा ) ( for the prior half ). $D_{5-7}$ $T_{1.2}$ $G_{1.2}$ $M_{1.2.5}$ भिन्न-; $G_3$ भग्न- ( for छिन्न- ). $T_2$ तु ( for च ). —$D_9$ om. ( hapl. ? ); $D_7$ reads in marg. l. 85. —( l. 85 ) $G_3$ राक्षसैश् ( for राक्षसाश् ). $D_{7.10.11}$ भूतले ( for वै रणे ). $M_{1.2}$ पेतुः शतसहस्रशः ( for the post. half ). —( l. 86 ) $G_{2.3}$ $M_5$ -राजेन ( for -सैन्येन ). $M_{1.2}$ तु रक्षसां ( for निशाचरम् ). ❀ Cr : निशाचरं नैशाचरम् । वृद्ध्यभाव आर्षः । यद्वा निशि चरतीति निशाचरम् ।; so also Cm.g.t. ❀ —( l. 87 ) $D_{5.6}$ $T_{1.2}$ $G_2$ पार्श्वतः ( for पश्यतः ). —After l. 88, $D_{11}$ erroneously repeats निशाचरं प्राभज्यत बलं सर्वं. —( l. 89 ) $M_{1.2}$ [ अ ]भूद् ( for स ). —( l. 90 ) $M_{1.2}$ विवेश च ( for प्रविवेश ). $G_1$ -यूथपान् ( for -वाहिनीम् ). —( l. 92 ) $M_{1.2}$ जघान ( for बिभेद ). —$D_7$ om. l. 93. —( l. 93 ) $T_2$ $G_3$ $M_{1.2.5}$ महाबलः ( for प्रतापवान् ). —( l. 94 ) $M_{1.2}$ शर- ( for शरैः ). $G_{1.2}$ $M_5$ उत्कृत्त- ( for संकृत्त- ). $M_{1-3}$ -कंधराः ( for -देहिनः ) —( l. 95 ) $M_{1.2}$ समधावंत; $M_5$ प्रतिधावंति; Cm.g.t as above ( for संप्रधावन्ति ). —( l. 96 ) $G_3$ भीतान् ( for भग्नान् ). $M_5$ वायु- ( for वालि- ). $G_3$ $M_5$ रणे; $M_{1.2}$ बली ( for तदा ). —( l. 97 ) $D_9$ महताविष्टो ( for वज्रदंष्ट्रं तम् ). $D_9$ वज्रदंष्ट्रम्; $T_3$ आपतंतम्; $M_{1-3}$ उदै( $M_3$ °द्वी )क्षंतम् ( for उदीक्षन्तम् ). $M_5$ उदैक्षत महाबलः ( for the post. half ). —For l. 94–97, $D_6$ $T_2$ subst. :

2* चेलुः पेतुश्च मम्रुश्च वानराः शरपीडिताः ।
वज्रदंष्ट्रेण हरयो वातनुन्ना इव द्रुमाः ।
ततो भग्नास्तु हरयो वज्रदंष्ट्रभयार्दिताः ।
वालिसूनुं महात्मानं त्रातारमभिपेदिरे ।
तान्सर्वानङ्गदो वीरः समाश्वास्य महाकपीन् । [5]
वज्रदंष्ट्रवधार्थाय मनश्चक्रे प्लवंगमः ।
उत्पाट्य वृक्षं सहसा वज्रदंष्ट्रमभिद्रवत् ।
तं तु विव्याध नाराचैः सप्तभिर्वालिनन्दनम् ।
मर्मण्यभिजघानाशु वज्रदंष्ट्रः प्रतापवान् ।

[ ( l. 1 ) $D_6$ चेरुः पेतुश्च मम्रुश्च ( hypm. ) ( for the prior half ). —( l. 2 ) $T_2$ द्रुमा इव ( by transp. ). ]

—( l. 98 ) $G_3$ अंगदो वज्रदंष्ट्रस्तौ ( for the prior half ). $D_{10.11}$ Ck.t योयुध्येते परस्परं ( for the post. half ). —( l. 99 ) $M_{1.2}$ युयुधाते ततः क्रुद्धौ ( for the prior half ). ❀ Cm.k.t : हरिमत्तगजाविव । हरिः सिंह शार्दूलः । Ck adds स्वप्नेऽपि सिंहदर्शने गजानां मरणात् । Cm.t. cite Kataka. ❀ —( l. 100 ) $D_{5.7}$ $T_3$ $M_{1-3}$ शर- ( for शत- ). $M_5$ -सहस्राणि

रुधिरोक्षितसर्वाङ्गो वालिसूनुर्महाबलः ।
चिक्षेप वज्रदंष्ट्राय वृक्षं भीमपराक्रमः ।
दृष्ट्वा पतन्तं तं वृक्षमसंभ्रान्तश्च राक्षसः ।
चिच्छेद बहुधा सोऽपि मथितः पतितो भुवि । [105]
तं दृष्ट्वा वज्रदंष्ट्रस्य विक्रमं प्लवगर्षभः ।
प्रगृह्य विपुलं शैलं चिक्षेप च ननाद च ।
समापतन्तं तं दृष्ट्वा रथादाप्लुत्य वीर्यवान् ।
गदापाणिरसंभ्रान्तः पृथिव्यां समतिष्ठत ।
साङ्गदेन शिला क्षिप्ता गत्वा तु रणमूर्धनि । [110]
सचक्रकूबरं साश्वं प्रममाथ रथं तदा ।
ततोऽन्यं गिरिमाक्षिप्य विपुलं द्रुमभूषितम् ।
वज्रदंष्ट्रस्य शिरसि पातयामास वानरः ।
अभवच्छोणितोद्गारी वज्रदंष्ट्रः सुमूर्छितः ।
मुहूर्तमभवन्मूढो गदामालिङ्ग्य निश्वसन् । [115]
स लब्धसंज्ञो गदया वालिपुत्रमवस्थितम् ।
जघान परमक्रुद्धो वक्षोदेशे निशाचरः ।
गदां त्यक्त्वा ततस्तत्र मुष्टियुद्धमकुर्वत ।
अन्योऽन्यं जघ्नतुस्तत्र तावुभौ हरिराक्षसौ ।
रुधिरोद्गारिणौ तौ तु प्रहारैर्जनितश्रमौ ।
बभूवतुः सुविक्रान्तावङ्गारकबुधाविव । [120]
ततः परमतेजस्वी अङ्गदः कपिकुञ्जरः ।
उत्पाट्य वृक्षं स्थितवानासीत्पुष्पफलाचितम् ।
स जग्राहार्षभं चर्म खड्गं च विपुलं शुभम् ।
किङ्किणीजालसंछन्नं चर्मणा च परिष्कृतम् । [125]
विचित्रांश्चेरतुर्मार्गान्रुषितौ कपिराक्षसौ ।
जघ्नतुश्च तदान्योन्यं निर्दयं जयकाङ्क्षिणौ ।
व्रणैः सास्रैरशोभेतां पुष्पिताविव किंशुकौ ।
युध्यमानौ परिश्रान्तौ जानुभ्यामवनीं गतौ ।
निमेषान्तरमात्रेण अङ्गदः कपिकुञ्जरः । [130]
उदतिष्ठत दीप्ताक्षो दण्डाहत इवोरगः ।
निर्मलेन सुधौतेन खड्गेनास्य महच्छिरः ।
जघान वज्रदंष्ट्रस्य वालिसूनुर्महाबलः ।
रुधिरोक्षितगात्रस्य बभूव पतितं द्विधा ।
सरोषपरिवृत्ताक्षं शुभं खड्गहतं शिरः । [135]

---

( for °स्रेण ). $D_{6.7.9-11}$ हरि- ( for वालि- ). $D_5$ $G_{1.2}$ $M_{1-3}$ महाबलः ( for °बलम् ). —( l. 101 ) $D_5$ $T_1$ $M_{1-3}$ मातंगमिव तोमरैः ( for the post. half ). —( l. 102 ) $D_6$ $T_3$ -पुत्रो ( for -सूनुर् ). —( l. 104 ) $M_{1.2}$ निशाचरः ( for च राक्षसः ). —( l. 105 ) $D_6$ चिक्षेप ( for चिच्छेद ). $G_2$ भूमौ ( for सोऽपि ). $M_{1-3}$ निकृत्तः ( for मथितः ). $D_{10.11}$ प्रापतद् ( for पतितो ). —( l. 107 ) $G_1$ शिलां प्रगृह्य विपुलां ( for the prior half ). —( l. 108 ) $D_{6.9-11}$ $M_5$ तमापतंतं; $M_{1.2}$ आपतंतं स ( for समापतन्तं ). $D_{9-11}$ दृष्ट्वा स ( for तं दृष्ट्वा ). $G_1$ समापतंतीं तां दृष्ट्वा ( for the prior half ). $T_3$ उत्प्लुत्य ( for आप्लुत्य ). —( l. 110 ) $D_{9-11}$ $T_3$ अंगदेन ( for साङ्ग° ). $M_3$ गदा ( for शिला ). $D_5$ $T_1$ $M_{1.2}$ सोंगदेन बलोत्क्षिप्तो ( for the prior half ). $T_2$ रथ- ( for रण- ). —( l. 111 ) $G_3$ ततः ( for तदा ). —( l. 112 ) $G_3$ तदा ( for ततो ). $D_6$ आसाद्य; $G_3$ आदाय ( for आक्षिप्य ). $D_{7.9-11}$ $T_3$ ततोन्यच्छिखरं गृह्य ( for the prior half ). $T_3$ $M_5$ विपुल-; $G_2$ $M_{1.2}$ विविध- ( for विपुलं ). $G_3$ हरिसत्तमः. —( l. 113 ) $M_{1.2}$ अंगदो वज्रदंष्ट्रस्य ( for the prior half ). $G_2$ रक्षसः; $G_3$ वीर्यवान्; $M_{1.2}$ मूर्धनि; $M_3$ सोंगदः ( for वानरः ). —After l. 113, $D_6$ ins. :

3* शिला बलवता क्षिप्ता छेदयामास तच्छिरः ।

—( l. 114 ) $D_6$ $T_2$ शोणितोद्गामी. $D_6$ $T_{2.3}$ $G_1$ $M_3$ स मूर्छितः ; $G_3$ $M_5$ महाबलः ; $M_{1.2}$ [ऽ]मिताडितः ( for सुमूर्छितः ). —( l. 115 ) $G_1$ इव संमूढो ( for अभवन्मूढो ). $D_6$ निःश्वसन्; $M_5$ वीर्यवान् ( for निश्वसन् ). —( l. 116 ) $T_3$ प्राप्त- ( for लब्ध- ). —$M_1$ damaged for l. 117. —( l. 117 ) $M_3$ समरे ( for परम- ). —( l. 118 ) $T_3$ तदा ( for ततस् ). $T_3$ वीरो; $M_{1.2}$ तेन ( for तत्र ). $D_{5.6}$ $T_2$ $G_1$ $M_3$ अवर्तत; $M_{1.2}$ चकार ह ( for अकुर्वत ). —( l. 119 ) $D_{9.11}$ $T_{2.3}$ निघ्नतुस् ( for जघ्नतुस् ). —( l. 120 ) $M_{1.2}$ रुधिरोक्षितसर्वांगौ ( for the prior half ). $G_3$ प्रहारैर्झर्झरीकृतौ ( for the post. half ). —( l. 122 ) Note hiatus between the two halves. $T_3$ ( to avoid hiatus ) चांगदः ; $M_4$ ( to avoid hiatus ) स्वंगदः ( for अङ्गदः ). $D_{7.9-11}$ $T_3$ प्लवगर्षभः ( for कपिकुञ्जरः ). $M_{1.3}$ वालिपुत्रो हरीश्वरः ( for the post. half ). —( l. 123 ) $M_{2.3}$ बहु- ( for आसीत् ). $D_{7.9-11}$ $M_1$ -फलैर्युतं; $T_3$ $G_{1.2}$ $M_5$ -फलान्वि( $T_3$ °यु )तं ( for -फलाचितम् ). —After l. 123, $G_2$ ins. :

4* चिक्षेप परमक्रुद्धो वालिसूनुर्महाबलः ।
तं प्रचिच्छेद बाणौघैर्वज्रदंष्ट्रः स राक्षसः ।

—( l. 124 ) $D_{9-11}$ $T_3$ $G_{2.3}$ $M_{3.5}$ जग्राह( $M_5$ °हार ) चार्षभं चर्म ( for the prior half ). $M_{1.2}$ शितं ( for शुभम् ). ❀ Cr : स जग्राहेति । सः वज्रदंष्ट्रः . ❀ —( l. 125 ) $D_{6.7}$ -संछिन्नं ( for -संछन्नं ). —After l. 125, $D_7$ $G_3$ ins.:

5* वज्रदंष्ट्रोऽथ जग्राह सोऽङ्गदोऽप्यसिचर्मणी ।

—( l. 126 ) $D_{9-11}$ $T_3$ चित्रांश्च रुचिरान्मा( $T_3$ °षितौ मा )र्गांश् ( for the prior half ). $D_{9-11}$ $T_3$ चेरतुः ( for रुषितौ ). $G_{1.2}$ $M_{1.2}$ हरि- ( for कपि- ). $M_5$ कपिकुंजरराक्षसौ ( for the post. half ). —( l. 127 ) $T_{2.3}$ निघ्नतुश्. $G_2$ तथा ( for तदा ). $D_{9-11}$ $G_1$ नर्द( $D_9$ °दं )तौ; $T_{2.3}$ $G_3$ निर्दयौ; $M_5$ निर्भयं ( for निर्दयं ). —( l. 128 ) $D_{6.7.9-11}$ $T_{2.3}$ G $M_5$ व्रणैः सद्यैः ( $D_7$ $G_3$ °मग्रैः ; $D_{9-11}$ $T_3$ Ct °मुख्यैः ; $M_5$ °मस्तैः ) शोभेतां ( for the prior half ). —( l. 130 ) Note hiatus between the two halves. $D_{7.9.10}$ निमिष-. $M_5$ $D_{6.9}$ ( to avoid hiatus ) ह्यंगदः ( for अङ्गदः ). —( l. 132 ) $D_{6.9}$ तु; $M_5$ च ( for सु- ). $D_7$ [ अ ]हरच् ( for महच् ). —( l. 133 ) $D_6$ -पुत्रो ( for -सूनुर् ). $G_2$ महाहवे ( for °बलः ). ❀ Cr : अस्य शिरो जघानेत्यनेन वृक्षे प्रतिहते, अङ्गदोऽपि चर्मासी जग्राहेत्यवगम्यते ॥ Cg : अस्य वज्रदंष्ट्रस्येत्यन्वयः । केचित्तु स जग्राहार्षभं चर्मेति पठित्वा स वज्रदंष्ट्रः खड्गं जग्राह । अङ्गदो वृक्षं जग्राहेति व्याख्याय, खड्गेनास्य महच्छिर इत्यत्र वृक्षे प्रतिहतेऽङ्गदोऽपि चर्मासी जग्राहेत्यनेनावगम्यत इत्यपि

वज्रदंष्ट्रं हतं दृष्ट्वा राक्षसा भयमोहिताः ।
त्रस्ताः प्रत्यपतँल्लङ्कां वध्यमानाः प्लवंगमैः ।
विषण्णवदना दीना ह्रिया किंचिदवाङ्मुखाः ।
निहत्य तं वज्रधरप्रभावः
स वालिसूनुः कपिसैन्यमध्ये । [140]
जगाम हर्षं महितो महाबलः
सहस्रनेत्रस्त्रिदशैरिवावृतः ।

Colophon

## 27

After Sarga 6.44, $T_{2.3}$ ins. :

अकम्पने तु निहते हतशेषा निशाचराः ।
शशंसू राक्षसेन्द्राय निहतोऽकम्पनस्त्विति ।
अकम्पनं हतं श्रुत्वा रावणो लोकरावणः ।
संदिदेश महाकायं राक्षसं भीमदर्शनम् ।
निष्क्रमस्व महाबाहो स्वसैन्यपरिवारितः । [ 5 ]
वानराणां वधार्थाय तथा राघवयोर्द्वयोः ।
एवमुक्तो महाकायो रावणेन महाबलः ।
प्रणम्य च दशग्रीवं निष्पपात ततो द्रुतम् ।
अभिनिष्क्रम्य तद्द्वारं बलाध्यक्षं ततोऽब्रवीत् ।
अद्य वानरसैन्यानि प्लावयिष्ये शरोर्मिभिः । [ 10 ]
भर्तृवैरविमोक्षार्थं करिष्ये कर्म दुष्करम् ।
चतुश्चक्रसमायुक्तं रथं सांग्रामिकं मम ।
मयूरध्वजमुच्छ्रित्य पताकाभिरलंकृतम् ।
सर्वशस्त्रसमायुक्तं किङ्किणीजालशोभितम् ।
पिशाचवदनैश्चैव खरैर्युक्तं महारथम् । [ 15 ]
सहस्रेण समग्रेण महापवनरंहसा ।
संकल्प्य च रथं शीघ्रमानय त्वं ममान्तिकम् ।
तथा च सर्वसैन्यं मे नानाप्रहरणान्वितम् ।
भेरीशङ्खविमिश्रेण तूर्यनादेन नादितम् ।
द्वारेण दक्षिणेनैव निर्गच्छतु ममाज्ञया । [ 20 ]
महाकायवचः श्रुत्वा बलाध्यक्षो महाबलः ।
प्रणम्य च दशग्रीवं निष्पपात ततो द्रुतम् ।
त्वरयामास लङ्कायां महाकायस्य तद्बलम् ।
परिवार्य महाकायं चतुरङ्गं महाबलम् ।
परस्परकृतोत्साहं प्रयान्तं दक्षिणामुखम् । [ 25 ]
व्यूढं दृष्ट्वा महासैन्यमारुरोह महारथम् ।
महाकायो नदन्हृष्टः संनद्धकवचस्तदा ।
सैन्यैः परिवृतोऽगच्छद्युद्धभूमिं महाबलः ।
निर्गच्छति महाकाये उत्पाताश्च सुदारुणाः ।
अभवन्भयदा नृणां महाकायस्य पश्यतः । [ 30 ]
अस्थिवर्षं पपाताथ समांसं शोणितं बहु ।
सशर्करोऽनिलश्चासीत्सनिर्घातो महारवः ।
सेनायाश्चापि मध्ये तु गोमायुश्चाप्यधावत ।
रथाच्छत्रं पपाताथ समे च स्खलिता हयाः ।
रथे च न्यपतद्गृध्रो व्यनदन्नशिवं शिवाः । [ 35 ]
भूम्यामन्तर्गता भूत्वा प्रद्रवन्ति जगर्जिरे ।
मृगाश्च महिषाश्चैव ह्यपसव्यं प्रचक्रिरे ।
स उत्पातान्न गणयन्महाकायो युयुत्सया ।
स दक्षिणेन द्वारेण निर्ययौ रणकोविदः ।
आलोक्य वानरानीकं तद्राक्षसबलं महत् । [ 40 ]
अभ्यधावत वेगेन रणे चाभिमुखं तदा ।
वानराणामपि चमूर्दृष्ट्वा तद्राक्षसं बलम् ।
आभिमुख्येन धावन्तं युद्धाय समुपस्थिता ।
जगृहुः पर्वताग्राणि द्रुमांश्चाथ प्लवंगमाः ।
शिलाश्च विविधाकाराः केचिच्च नखदंष्ट्रिणः । [ 45 ]
ततः प्रववृते युद्धं घोररूपं भयावहम् ।
रक्षसां वानराणां च निघ्नतामितरेतरम् ।
नानारथवरौघश्च सादिनश्च सहस्रशः ।
पदातिनः पराक्रान्ता राक्षसा परिघायुधाः ।
जघ्निरे वानरान्वीरान्नामानि च बभाषिरे । [ 50 ]
रजः संध्याभ्रकपिलं प्रच्छादयत भास्करम् ।
संछादिताभवद्भूमिस्तदा वानरराक्षसैः ।
अश्मवृष्टिस्तदाकाशे शस्त्रवृष्टिः पपात च ।
रेणुना शस्त्रवृष्ट्या च न किंचित्प्रत्यदृश्यत ।
अन्धकारे कृते तस्मिन्कश्मलं महदाविशत् । [ 55 ]
रुरोध च रजस्तत्र कर्णनेत्राणि युध्यताम् ।
अन्योन्यं निगृहीताः स्म कश्मलाभिहता भृशम् ।
एवं युयुधिरे तत्र संज्ञाभिरितरेतरम् ।
केशाकेशि समालग्ना राक्षसा वानरास्तदा ।
रजसा पिहिते तस्मिन्भास्करे निष्प्रभे कृते । [ 60 ]
तत्र तत्रैव रजसा पततां धरणीतले ।

---

वर्णयन्ति ꙮ —$G_2$ om. l. 135–136. —(l. 135) $D_{9-11}$ $T_3$ तच्च तस्य( $T_3$ शेष- ) परीताक्षं ( for the prior half ). $G_3$ -हृतं ( for -हतं ). —(l. 137) $D_{7.9-11}$ $T_{2.3}$ $M_1$ ह्यभ्यद्रवन्; $G_1$ $M_{2.5}$ ह्य( $M_2$ चा )भ्यपतल् ( for प्रत्यपतल् ). $G_{2.3}$ स( $G_3$ सं ) त्रस्ताभ्य( $G_3$ °भ्यु )पतल्लंकां ( for the prior half ). —(l. 138) $D_7$ म्लाना ( for दीना ). —After l. 138, $D_6$ ins. :

6* रावणाय वधं प्रोचुर्वज्रदंष्ट्रस्य राक्षसाः ।

—(l. 139) $D_{5.6.10}$ वज्रवरः. $D_{7.9-11}$ -प्रतापवान्; $G_1$ $M_5$ -प्रभावं ( for -प्रभावः ). $G_2$ वज्रसमप्रभावं. —(l. 141) $D_6$ $T_2$ सहितो; $G_3$ $M_5$ मुदितो; Cm.k.t as above ( for महितो ). $D_6$ $T_2$ महाबलैः ( for °लः ).

Colophon. —*Sarga name* : $D_9$ वज्रदंष्ट्रवधः. —*Sarga no.* ( figures, words or both ): $D_5$ ( erroneously ) 53 ; $D_{6.7.10.11}$ $T_{1.2}$ G M 54 ; $D_9$ 30 ; $T_3$ 55. —After colophon, G $M_{1.2.5}$ conclude with श्रीरामाय नमः.

27

(l. 16) $T_3$ -परम- ( for -पवन- ). —(l. 33) $T_3$ मध्येन ( for मध्ये तु ). —(l. 38) $T_3$ अगणयन् ( for न गणयन् ). —(l. 43) $T_3$ समुपस्थितं. —(l. 44) $T_3$ [अ]पि ( for [अ]थ ). —(l. 48) $T_3$ नागा रथवरौघाश्च ( for the prior half). —(l. 51) $T_3$ -कपिशं ( for -कपिलं ). —(l. 53) $T_3$ ह ( for च ). —(l. 57) $T_3$ च ( for स ). —(l. 61)

च्युतानामिव तालेभ्यः फलानां श्रूयते ध्वनिः ।
शिरोभिः पतितैर्भाति रुधिरार्द्रैस्तदा मही ।
तपनीयनिभैः काले नलिनैरिव पुष्पितैः ।
उपशाम्यत्यधो घोरं रजः परमदारुणम् । [65]
रुधिरौघेण महता प्लाविते धरणीतले ।
ततो दृष्ट्वा सहस्राणि ऋक्षवानररक्षसाम् ।
रुधिरार्द्राण्यदृश्यन्त गैरिकानिव ते तदा ।
घ्नन्तमन्यं जघानान्यो दशन्तमपरोऽदशत् ।
देहीत्यन्यो ददामीति तदान्योन्यं बभाषिरे । [70]
तत्र तत्रैव शिरसां पततां धरणीतले ।
ऊरुभिश्च समं तावद्विनिकृत्तैर्महाहवे ।
बाहुभिर्विनिकृत्तैश्च हस्तपादैश्च सर्वतः ।
कबन्धशतसंकीर्णा भूर्बभूवोग्रदर्शना ।
ऋक्षाणां वानराणां च राक्षसानां गजैः सह । [75]
हयानां च रथानां च पतितानां महीतले ।
राशयः समदृश्यन्त गिरिमात्राः समन्ततः ।
संजज्ञे रणभूम्यां तु परलोका महानदी ।
शोणितौघा महारौद्रा श्वापदैरुपशोभिता ।
कूलापहारिणी सा तु याम्या वैतरणी यथा । [80]
मृतानां स्तनमानानामृक्षवानररक्षसाम् ।
शरीराणि वहन्ती सा सशब्दा व्याकुला तदा ।
मेदोमज्जाकर्दमा च भुजवृक्णाश्मशर्करा ।
शूराणां हर्षजननी भीरूणां भयवर्धनी ।
प्रावर्तत नदी घोरा युद्धे देवासुरोपमे । [85]
राक्षसा वानराश्चैव तां नदीमवगाहिरे ।
राक्षसैर्हन्यमानं तु शरशक्त्यृष्टितोमरैः ।
परिघैर्भिण्डिपालैश्च शूलमुद्गरपट्टिसैः ।
विह्वलं वानरं सैन्यमभज्यत दिशो दश ।
तच्च भग्नं बलं दृष्ट्वा वालिपुत्रोऽङ्गदोऽब्रवीत् । [90]
निवर्तध्वमधर्मज्ञा युध्यध्वं किं स्थितेन च ।
इह कीर्तिर्न हातव्या हत्वा शत्रूनणाजिरे ।
रामकार्यं तु कर्तव्यं सीतायाः परिमार्गणम् ।
युध्यन्तु सहिताः सर्वे न प्राणान्परिरक्षथ ।
एवमुक्त्वा तदा शूरः शिखरं गृह्य पाणिना । [95]
अङ्गदोऽभ्यद्रवत्क्रुद्धो राक्षसानां महाचमूम् ।
अङ्गदे संनिवृत्ते तु निवृत्ताः सर्वयूथपाः ।
पृथुश्च ऋषभश्चैव गवाक्षः पनसस्तदा ।
गजश्च गिरिसंकाशो वीरः शतबलिस्तथा ।
तथान्ये वानरश्रेष्ठा युद्धं चक्रुः सुदारुणम् । [100]
अङ्गदस्तेन शृङ्गेण राक्षसान्विनिपातयत् ।
तथान्यान्वृक्षवृष्ट्या तु शिलावर्षेण चापरान् ।
तलप्रहारैश्च तदा निजघानाथ राक्षसान् ।
हन्यमानाः पुनस्तेन वालिपुत्रेण धीमता ।
आयुधानि परित्यज्य प्रद्रुता भयपीडिताः । [105]
केचिल्लङ्कां प्रविष्टास्तु वानरैरर्दिता भृशम् ।
समुद्रे पतिताः केचित्केचित्तत्रैव तस्थिरे ।
राक्षसान्विद्रुतान्दृष्ट्वा वज्रनाभो न्यवर्तत ।
रुधिराशी महावीर्यः कालदंष्ट्रस्तथैव च ।
कालकल्पो विपाशश्च शतमायश्च राक्षसः । [110]
धूम्रश्च दुर्धरश्चैव तथैव च महाशिराः ।
महानादश्च बलवांस्तथान्ये रजनीचराः ।
निवृत्ता ह्यागतास्तत्र वानरान्रणमूर्धनि ।
निजघ्नुः शैलशूलैस्ते विव्यधुश्च परस्परम् ।
सिंहनादान्विनेदुश्च रणे वानरराक्षसाः । [115]
प्लवंगमा गर्वितहृष्टचेष्टाः
संग्राममासाद्य भयं विमुच्य ।
युद्धं समन्तात्सह राक्षसैस्तै-
र्नानाविधैश्चक्रुरदीनसत्त्वाः ।

Colophon

निवृत्तानां निवृत्तैस्तै रक्षसां वानरैः सह । [120]
संबभूवाद्भुतं युद्धं दारुणं रोमहर्षणम् ।
राक्षसं वज्रनाभं तु पृथुस्तु समयोधयत् ।
रुधिराशं गवाक्षस्तु योधयामास राक्षसम् ।
ऋषभः कालदंष्ट्रं तु महावीर्यमयोधयत् ।
पनसः कालकल्पं तु विपाशं च गजस्तथा । [125]
तथा शतबलिर्वीरः शतमायं निशाचरम् ।
धूम्रश्च दुर्धरश्चैव राक्षसौ सुमहाबलौ ।
क्रथनो मेघपुष्पश्च संक्रुद्धौ तावयुध्यताम् ।
महादंष्ट्रश्च संक्रुद्धो महाकायश्च राक्षसः ।
चक्रतुः सुमहद्युद्धं शरशक्तिसमाकुलम् । [130]
वानराणां सहस्राणि जघ्नतुस्तौ समन्ततः ।
वानरैर्हन्यमानैस्तु अङ्गदस्तानभिद्रवत् ।
अयुध्यन्त तथैवान्ये राक्षसा वानरैः सह ।
ते तत्र भृशसंतप्ता वध्यमानाः परस्परम् ।
व्याकुले ते बले ह्यास्तां वर्षासु सरिताविव । [135]
आविवेश तदा तीव्रं राक्षसानां महद्भयम् ।
हरीणां तु तथाभूतं महद्भयमजायत ।

---

$T_3$ शिरसा ( for रजसा ). —(l. 67) $T_3$ तस्मिन् ( for दृष्ट्वा ). —(l. 68) $T_3$ -[अ]क्तानि ( for -[आ]र्द्राणि ) and रूपितानीव गैरिकैः ( for the post. half ). —(l. 70) $T_3$ ततो ( for तदा ). —(l. 73) $T_3$ सर्वशः ( for सर्वतः ). —(l. 78) $T_3$ परलोक- . —(l. 81) $T_3$ समरे घोरे ( for स्तनमानानाम् ). —(l. 91) $T_3$ च धर्मज्ञा ( for अधर्मज्ञा ). —(l. 92) $T_3$ हंतव्या ( for हातव्या ). —(l. 93) $T_3$ परिमोक्षणं ( for °मार्गणम् ). —(l. 96) $T_3$ महाचमूः . —(l. 98) $T_3$ कंपनस्तथा ( for पनसस्तदा ). —(l. 101) $T_3$ राक्षसं ( for राक्षसान् ). —(l. 103) $T_3$ तथा ( for तदा ). —(l. 110) $T_2$ [ऽ]थ पार्श्वश्च ( for विपाशश्च ). —(l. 113) $T_3$ ह्यागतामर्षाः —After the prior half, $T_3$ ins.:

1* सर्वे युद्धविशारदाः ।
हन्तुं व्यवसितास्तत्र.

—(l. 114) $T_3$ च ( for ते ) and परश्वधैः ( for परस्परम् ). Colophon.—*Sarga no.*: $T_2$ 57 ; $T_3$ 58. —(l. 122) $T_3$ समयोजयत्. —(l. 125) $T_3$ तु ( for च ). —Note hiatus between the two halves of l. 132. —(l. 134) $T_3$

वध्यमानेषु सैन्येषु नदत्सु सुमहत्सु च ।
कूजतां स्तनतां चैव शब्दश्चासीत्सुदारुणः ।
रुधिरस्रावदिग्धाङ्गाः पुष्पिता इव किंशुकाः । [140]
वानरा राक्षसाश्चैव गैरिका इव चाभवन् ।
कबन्धानि समुत्पेतुर्ऋक्षवानरक्षसाम् ।
उत्पत्य निपतन्ति स्म नृत्यन्ते चापराणि च ।
संग्रामे वर्तमाने तु यमराष्ट्रविवर्धने ।
वज्रनाभो धनुर्गृह्य पृथुं सममिरर्दयत् । [145]
शरैश्च तीक्ष्णधारैस्तु कर्मारपरिमार्जितैः ।
पुनः शरशतेनैनं क्षिप्रहस्तो निशाचरः ।
पृथुर्विद्धः शरैर्गाढैरुत्पाट्य शिखरं गिरेः ।
भ्रामयित्वा मुमोचाशु वज्रनाभस्य रक्षसः ।
मुक्तं तु शिखरं दृष्ट्वा संपतन्तं तदाशुगैः । [150]
शरैश्चिच्छेद सहसा तद्विकीर्णं पपात ह ।
पातिते गिरिशृङ्गे तु पृथुर्दृष्ट्वा महाबलः ।
उत्पत्य पततां श्रेष्ठो रथस्य निपपात ह ।
अच्छिनत्तस्य धनुस्तस्य बभञ्ज च महाबलः ।
अश्वाञ्जघान तरसा स्यन्दनं च बभञ्ज ह । [155]
रथे भग्ने ततः क्षिप्रं शूलं जग्राह राक्षसः ।
आजघानाथ शूलेन पृथुं वानरपुंगवम् ।
स तु शूलविभिन्नाङ्गः पृथुर्वानरपुंगवः ।
स जघान शिरोमध्यं मुष्टिना तं निशाचरम् ।
विह्वलं तमुपालभ्य मुष्टिपातेन राक्षसम् । [160]
पादयोः स तु जग्राह भ्रामयामास तं पुनः ।
भ्रामयित्वा ततः पृथ्व्यां वज्रनाभं निशाचरम् ।
निष्पिपेष पृथुः पश्चात्पुनरप्याजघान ह ।
रुधिराशो गवाक्षं तु आकर्णविनियोजितैः ।
शरैरशनिसंकाशैर्बाह्वोरपि स चार्दयत् । [165]
स तु बाणविभिन्नाङ्गो गवाक्षो हरिसत्तमः ।
शिलापादपवर्षं च मुमोच सुमहद्बली ।
तच्छिलापादपं वर्षं निपात्य निशितैः शरैः ।
स शरैरग्निसंकाशैर्गवाक्षं तु न्यपातयत् ।
गवाक्षं पतितं दृष्ट्वा तारस्तु वनगोचरः । [170]
अभ्यद्रवत वेगेन रुधिराशं निशाचरम् ।
प्रगृह्य सालवृक्षं च भ्रामयामास सत्वरः ।
मुमोच सुमहाकायो निशाचरवधं प्रति ।
तमापतन्तं संप्रेक्ष्य शरेणैकेन सोऽच्छिनत् ।
वानरं दशभिर्विद्ध्वा सिंहनादं ननाद च । [175]
शरभूतं तु तं कृत्वा पातयित्वा च भूतले ।
रुधिराशो महावीर्यो व्यधमद्वानरं बलम् ।
वानराणां समन्तात्तु शरैः शतसहस्रशः ।
आवर्त इव तोयानां गतो याति निशाचरः ।
तस्य वानरसैन्यस्य अन्तकालस्तु सोऽभवत् । [180]
रुधिराशो दुराधर्षो राक्षसः शरचापधृत् ।
पातितैः पात्यमानैश्च गतसत्त्वैश्च मेदिनी ।
बभूव निखिला सर्वा पर्वतैरिव संतता ।
रुधिरौघसमाकीर्णा कबन्धशतसंकुला ।
अनेकतनुवृत्ता तु दुर्गमार्गा वसुंधरा । [185]
एतस्मिन्नन्तरे काले गवाक्षो वनगोचरः ।
संज्ञां प्राप्य मुहूर्तेन तारश्च पुनरुत्थितः ।
गवाक्षश्च महाकायः शिलां गृह्य च सत्वरः ।
भ्रामयित्वा मुमोचैनां निशाचरवधं प्रति ।
अनिवार्यशिलां तां तु दृष्ट्वा राक्षसपुंगवः । [190]
उत्पपात रथाच्छीघ्रं खड्गमादाय चर्म च ।
ससारथिं सचक्रं च सध्वजं तं सकूबरम् ।
रथं संचूर्णयामास सा शिला वानरेरिता ।
राक्षसं खड्गपाणिं तं समीक्ष्यायान्तमाहवे ।
गवाक्षः परिघं गृह्य तस्य चाभिमुखं ययौ । [195]
यावत्तु खड्गमद्धरद्धरिणा क्षिप्रकारिणा ।
परिघेण हतस्तावत्पपात च ममार च ।
रुधिराशं हतं दृष्ट्वा कालदंष्ट्रो निशाचरः ।
अभ्यद्रवच्च वेगेन ऋषभं वानरर्षभम् ।
ऐरावतकुले जातमारुह्य स गजोत्तमम् । [200]
छादयामास संक्रुद्धो ऋषभश्चापि दन्तिनम् ।
स गजं तूर्णमुत्पत्य ऋषभो वानरोत्तमः ।
तलेनाशनिकल्पेन कुम्भमध्ये ह्यताडयत् ।
तलप्रहाराभिहतो नादं कृत्वाथ संगरात् ।
अपासर्पद्धतुर्मात्रं शीघ्रं च प्रजहौ मदम् । [205]
राक्षसं कालदंष्ट्रं तु वानरो ऋषभस्तदा ।
रुधिरेण तु दिग्धाङ्गं सधातुमिव पर्वतम् ।
अभिदुद्राव वेगेन पुनस्तत्र महागजम् ।
विषाणं तस्य निष्कृष्य ताडयामास राक्षसम् ।
गजदन्तहतः सोऽथ उत्तमाङ्गे निशाचरः । [210]
पिण्डीकृत्य पपाताथ गतसत्त्वो महीतले ।
वानरेण हतः सोऽपि स्वेन दन्तेन कुञ्जरः ।
निपपात महीपृष्ठे वज्राहत इवाचलः ।
हाहाकारमभूत्सर्वं तदा तद्राक्षसं बलम् ।
कालदंष्ट्रे हते वीरे दृष्ट्वा ह्यासन्वनौकसः । [215]

---

परस्परैः.—(l. 135) Ts चले (for बले).—(l. 139) Ts स्वनतां (for स्तनतां).—(l. 146) Ts कर्दूर- (for कर्मार-).—(l. 150) Ts तथा शरैः (for तदाशुगैः).—(l. 151) Ts शतधा (for सहसा).—Ts om. (hapl.) from पुंगवम् in l. 157 up to वानर in l. 158.—(l. 159) Ts नि- (for स) and -मध्ये (for -मध्यं).—(l. 162) Ts तु तं (for ततः).—(l. 163) Ts चासीद् (for पश्चात्).—Note hiatus between the two halves of l. 164.—(l. 168) Ts निवार्य (for निपात्य).—(l. 172) Ts सत्वरं.—(l. 175) Ts भित्त्वा (for विद्ध्वा) and ह (for च).—(l. 176) Ts शरघातं (for °भूतं).—(l. 179) Ts यतो (for गतो).—Note hiatus between the two halves of l. 180.—(l. 184) Ts -समाकीर्णे-.—(l. 185) Ts -युक्ता (for -वृत्ता).—(l. 186) Ts वीरो (for काले).—(l. 188) Ts तत्परः (for सत्वरः).—(l. 193) Ts तं (for सं-).—(l. 201) Ts चोदयामास.—(l. 206) Ts तथा (for तदा).—Note hiatus between the two halves of l. 210.—(l. 211) Ts पिंडीकृत्वा.—(l. 213) Ts

कालदंष्ट्रं हतं दृष्ट्वा कालकल्पो निशाचरः ।
पनसं ताडयामास शरैः पावकसंनिभैः ।
शरैः संपूरिततनू रथेऽस्य निपपात ह ।
बभञ्ज च रथं स्वर्णं हयांश्च निजघान सः ।
मुष्टिना चाहनत्तं तु कालकल्पनिशाचरम् । [220]
मुष्टिप्रहाराभिहतो विह्वलो निपपात ह ।
लाक्षारससवर्णं तु मुखात्सुस्राव शोणितम् ।
जीवितेन प्रमुक्तश्च निष्क्रान्तदशनेक्षणः ।
तं हत्वा राक्षसं तूर्णं पनसो मुदितोऽभवत् ।
ननाद च महानादं मेघगम्भीरनिस्वनः । [225]
वारयन्वानरीं सेनां त्रिपाशोऽथ धनुर्धरः ।
शरैरनेकसाहस्रैः सूदयामास वानरान् ।
सूदमानं च तं दृष्ट्वा वानरान्रणमूर्धनि ।
गजस्तु गिरिसंकाशो राक्षसान्समभिद्रवत् ।
द्रुमवर्षं ववर्षाथ राक्षसं प्रति वानरः । [230]
क्रोधेन महताविष्टः समूलविटपैर्द्रुमैः ।
तां छादयन्तीं चाकाशं वृक्षवृष्टिं दुरासदाम् ।
चिच्छेद निशितैर्बाणैः शतशोऽथ सहस्रशः ।
स विध्य दशभिर्बाणैर्गजं तु गजगामिनम् ।
पुनश्च सप्तभिर्बाणैः स्तनयोरन्तरं महत् । [235]
आजघान च विंशत्या मुखे पञ्च शरैः शितैः ।
ततः शरसहस्रेण त्रिपाशो वानरोत्तमम् ।
स तदा भिन्नसर्वाङ्गो गजस्तु गजसंनिभः ।
वैनतेय इव क्षिप्रं तस्याङ्के निपपात ह ।
उत्पाटयत्ततस्तस्य शिरो ज्वलितकुण्डलम् । [240]
त्रिपाशस्य महावीर्यो गजस्तालफलं यथा ।
त्रिपाशं निहतं दृष्ट्वा शतमायो निशाचरः ।
अभ्यद्रवत वेगेन गजं प्रति गजो यथा ।
गजस्तु परिघं गृह्य राक्षसं समभिद्रवत् ।
वीरः शतबलिश्चैव ऋषभः पनसस्तथा । [245]
अन्ये च वानरश्रेष्ठाः शतमायं निशाचरम् ।
वृक्षैः शैलैर्महाकायाः शिलाभिः शिखरैस्तदा ।
शतमायश्च संक्रुद्धः शरवर्षं मुमोच ह ।
शक्तितोमरवर्षेण शूलवर्षेण राक्षसः ।
ववर्ष चैव चक्राणि गदाश्च मुसलानि च । [250]
परिघान्भिण्डिवालांश्च पाषाणानथ पर्वतान् ।
शतमायेन चोत्सृष्टं वानराणामथोपरि ।
मायाविहितमेतत्तु शस्त्रवर्षं पपात ह ।
ते हताः शस्त्रवर्षेण वानराः सर्व एव ते ।
युयुधुः संयुगे तस्मिंस्त्यक्त्वा प्राणान्सुदुस्त्यजान् । [255]
विसंज्ञान्वानरान्दृष्ट्वा वालिपुत्रोऽङ्गदस्तदा ।
अभिदुद्राव सहसा शतमायं महाबलम् ।
वेष्टयित्वा तु तैः सर्वैर्वानरैः पर्वतोपमैः ।
सह सैन्येन सर्वेण युद्धं चक्रे सुदारुणम् ।
ऋक्षाः शाखामृगाश्चैव वृक्षसंघांश्च चिक्षिपुः । [260]
शरवर्षेण तान्सर्वान्राक्षसः संप्रचिच्छिदे ।
गवाक्षः शृङ्गमुत्पाट्य चिक्षेप तरसा बली ।
ऋषभो द्रुमवृष्टिं च पनसः शिखरं गिरेः ।
शिलाश्चैव गजस्तस्मिन्विससर्ज चमूमुखे ।
रथचक्रं शतबलिः क्रथनः परिघं तथा । [265]
तानापतत एवाशु सर्वेषां च भुजच्युतान् ।
शरैरशनिसंकाशैश्चिच्छेद स पृथक्पृथक् ।
गवाक्षप्रहितं तत्र विस्तीर्णं शृङ्गमुत्तमम् ।
ऋषभेण द्रुमान्क्षिप्तान्प्राप्तानन्तरेऽच्छिनत् ।
गजेन च शिलां मुक्तां रथचक्रं च सायकैः । [270]
चिच्छेद शतमायस्तु पनसस्य गिरिं तथा ।
एवं छित्त्वा शरैस्तीक्ष्णैर्वानरान्प्रत्ययुध्यत ।
तत्कृत्वा दारुणं कर्म सिंहनादं ननाद च ।
एतस्मिन्नन्तरे क्रुद्धौ राक्षसौ धूम्रदुर्धरौ ।
शतमायं पुरस्कृत्य वानरांस्तौ निजघ्नतुः । [275]
क्रथनो वानरश्रेष्ठो जीवितं त्यज्य दूरतः ।
अभिदुद्राव वेगेन दुर्धरं राक्षसं रणे ।
प्राहरच्च तलेनैव गिरिशृङ्गोपमं शिरः ।
पपात च हतः संख्ये दुर्धरस्त्यक्तजीवितः ।
तं दृष्ट्वा युद्धशौण्डेन सखा तस्यैव रक्षसः । [280]
शिलया मेघतुल्येन धूम्रः प्राणैर्वियोजितः ।
धूम्रं च दुर्धरं चैव प्रेक्ष्य संख्ये निपातितौ ।
शतमायो रणे क्रुद्धो वानरान्समयोधयत् ।
एकमेकेन बाणेन त्रिभिस्त्रीन्दशभिर्दश ।
एकेन च शतं वीरो वानराणां जघान ह । [285]
अङ्गदं पञ्चविंशत्या गवाक्षं नवभिः शरैः ।
पृथु च दशभिर्बाणैर्ऋषभं सप्तभिस्तदा ।
पनसं चैकविंशत्या गजं षड्भिः शिलीमुखैः ।
शरेण गृध्रपत्रेण वीरं शतबलिं तदा ।
अन्यांश्च वानरगणाञ्शतशोऽथ सहस्रशः । [290]
व्यधमत्सायकैस्तीक्ष्णै राक्षसो धन्विनां वरः ।
ततस्तद्वानरबलं शरैरासीत्सुदुर्लभम् ।
पलायत दिशः सर्वा वर्जयित्वा तु यूथपान् ।
प्रनष्टान्वानरान्दृष्ट्वा अङ्गदप्रमुखास्तदा ।
राक्षसस्य च तद्वीर्यं निराशा जीवितेऽभवन् । [295]

स ( for नि- ). —( l. 214 ) $T_3$ तद्वानरं ( for तद्राक्षसं ). —( l. 220 ) $T_3$ चाहरत्तं तु कालकल्पं. —( l. 231 ) $T_3$ -विटपद्रुमैः. —( l. 236 ) $T_3$ मुखे पंचशतैरपि ( for the post. half ). —( l. 237 ) $T_3$ शत- ( for शर- ). —( l. 240 ) $T_3$ तत्र ( for तस्य ). —( l. 247 ) $T_3$ तथा ( for तदा ). —( l. 248 ) $T_3$ तु ( for च ). —( l. 251 ) $T_3$ अपि ( for अथ ). —( l. 253 ) $T_3$ -पिहितम् ( for -विहितम् ). —( l. 257 ) $T_3$ निशाचरं ( for महाबलम् ). —( l. 264 ) $T_3$ गिरेस् ( for गजस् ). —( l. 265 ) $T_3$ प्रधनः ( for क्रथनः ) and तदा ( for तथा ). —$T_3$ om. ( hapl. ? ) l. 266–271. —( l. 272 ) $T_3$ प्रत्यविध्यत ( for प्रत्ययुध्यत ). —( l. 276 ) $T_3$ वानरान् ( for जीवितं ). —( l. 279 ) $T_3$ आपपात ( for पपात च ). —( l. 284 ) $T_3$ त्रि- ( for त्रीन् ). —( l. 287 ) $T_3$ नवभिर् ( for दशभिर् ). —( l. 288 ) $T_3$ [ष]ड्व ( for [ष]ड्भि- ). —( l. 289 ) $T_3$ परं ( for वीरं ) and तथा ( for तदा ). —( l. 292 ) $T_3$ सुदुर्बलं ( for सुदुर्लभम् ). —( l. 294 )

जयो वास्तु वधो वेति बुद्धिं कृत्वा प्लवंगमाः ।
शिखराणि प्रगृह्याशु शतमायं प्रचिक्षिपुः ।
तानि तैः संप्रयुक्तानि अन्तरिक्षे शितैः शरैः ।
शिखराणि द्रुतं छित्त्वा शङ्खशब्दमथाकरोत् ।
सहस्रेण पृषत्कानां सहस्रमहनत्कपीन् । [ 300 ]
एकैकेन तु बाणेन यूथपान्समताडयत् ।
ततस्ते यूथपश्रेष्ठा भिद्यमानाः शिलीमुखैः ।
आकर्णपूरितैर्मुक्तै राक्षसेन पुनः पुनः ।
आकाशं सहसाप्लुत्य समं सर्वेऽपतंस्तदा ।
रथे तस्य महाकाया यूथपा गिरिसंनिभाः । [ 305 ]
जघान स हयांस्तस्य गवाक्षोऽथ ध्वजं गजः ।
पनसश्च रथं तस्य विध्वंसयत वानरः ।
ऋषभः सारथिं तस्य आयुधानि पृथुस्तथा ।
वीरः शतबलिश्चैनं मुष्टिनाभिजघान ह ।
शतमायस्ततः क्रुद्धः खड्गमादाय चर्म च । [ 310 ]
गरुत्मानिव वेगेन उत्पपात विहायसा ।
असिं शतबलिश्चापि प्रगृह्य प्रसभं बली ।
आकाशं शस्त्रसंकाशमुत्पपात हरीश्वरः ।
तावुभावम्बरे वीरौ तदा वानरराक्षसौ ।
खड्गपाणी सुसंक्रुद्धावन्योन्यमभिजघ्नतुः । [ 315 ]
खड्गेनाप्रहरद्रक्षो वानरेन्द्रस्य वक्षसि ।
चर्मणा वञ्चयामास पतन्तमसिमुत्तमम् ।
वञ्चयित्वा प्रहारं तु वीरः शतबलिः पुनः ।
ऊरुमुद्दिश्य खड्गं तु ऊरुभ्यां प्राहिणोत्तदा ।
छिन्नोरुरथशीर्षो वै चेष्टमानो यथोरगः । [ 320 ]
निपपात हतः सोऽथ गरुडेनेव पन्नगः ।
दृष्ट्वा तु शतमायं च गतासुं पतितं क्षितौ ।
प्रहृष्टा वानराः सर्वे विनेदुर्जलदा इव ।

Colophon

सचिवाञ्निहतं दृष्ट्वा शतमायं च राक्षसम् ।
निःशेषं च बलं सर्वं कृतं दृष्ट्वा प्लवंगमैः । [ 325 ]
रोषसंरम्भताम्राक्षो भ्रात्रा सह कनीयसा ।
वानरानभिदुद्राव महाकायो महाबलः ।
धनुः शक्रधनुःप्रख्यं सज्यं वेगेन वै कृतम् ।
आदाय सहसा वीरो जगामाभिमुखः परान् ।
रथमास्थाय शक्रारिर्दशहस्तप्रमाणतः । [ 330 ]
छत्रेण ध्रियमाणेन मयूरेण ध्वजेन च ।
कवचेन विचित्रेण वीज्यमानश्च चामरैः ।
लक्ष्म्या परमया युक्तः सारथिं वाक्यमब्रवीत् ।
चोदयाश्वानसंभ्रान्तः समेषु विषमेषु च ।
वानरान्हन्तुमिच्छामि यैर्हतं राक्षसं बलम् । [ 335 ]
एतान्हत्वा ह्यहं संख्ये ततो रामं सलक्ष्मणम् ।
सुग्रीवं च हनिष्यामि हनूमन्तं च वानरम् ।
अप्रमत्तो भवाश्वेषु सारथे वारणे तथा ।
मम त्वं युध्यमानस्य रथे तिष्ठस्व वीतभीः ।
प्रतिज्ञाय तु तद्वाक्यं सारथिस्तस्य रक्षसः । [ 340 ]
सहस्रं वाजिनां क्षिप्रं चोदयामास संयुगे ।
ततस्ते वानराः सर्वे शैलवृक्षशिलायुधाः ।
अभिसंगम्य वेगेन महाकायं प्रदुद्रुवुः ।
राक्षसोऽथ महाकायः शरैस्तान्समयोधयत् ।
चिच्छेद पर्वताग्राणि शिलावृक्षशतानि च । [ 345 ]
ततस्तु शरवर्षेण प्रच्छाद्य हरिवाहिनीम् ।
आकाशं छादयामास शरवृष्ट्या निशाचरः ।
दिशः प्रच्छादिताः सर्वास्तमोभूता इवाभवन् ।
अन्धकारीकृतं सर्वं न प्रज्ञायत किंचन ।
धनुषो निष्पतन्तश्च शरा बर्हिणवाससः । [ 350 ]
रक्ताः पीताः शिताः श्वेताः शलभानां प्रजा इव ।
आलात इव चाविद्धं धनुस्तस्य प्रजायते ।
विद्युद्भिरावृतं यद्वद्द्वितीयेन्द्रधनुर्दिवि ।
संघर्षजश्च बाणानां शब्द आसीत्सुदारुणः ।
दह्यतामिव वेणूनामभवद्दारुणो महान् । [ 355 ]
पर्वतैः पतितैश्चैव तरुभिश्चैव चूर्णितैः ।
वानराणां शिरोभिश्च शरीरैश्चैव संवृता ।
हस्तपादसमाकीर्णा ऋक्षवानरसंकुला ।
क्षणेनागम्यरूपा सा संबभौ युद्धमेदिनी ।
ततस्ते वानराः सर्वे बाणसंधानपीडिताः । [ 360 ]
न शेकुश्चेष्टितं यत्र शकुना इव पञ्जरम् ।
हन्यमानाः शरौघैस्तैर्निष्पन्दास्तु ततः स्थिताः ।
निरुच्छ्वासाः कृताः सर्वे शिलावृष्ट्या यथा द्विजाः ।
न तेषामङ्गुलमपि विवृतं समदृश्यत ।
निरन्तरीकृता बाणैः कदम्बा इव केसरैः । [ 365 ]
अशोकस्तबकाकारा रुधिरेण समुक्षिताः ।
निश्चेष्टाश्च कृताः सर्वे दाडिमप्रतिमैर्मुखैः ।
निश्चेष्टान्गतसत्त्वांश्च दृष्ट्वा सर्वान्प्लवंगमान् ।
अङ्गदो वानरश्रेष्ठो वानरान्वाक्यमब्रवीत् ।
न भेतव्यं न भेतव्यमेतस्य युधि रक्षसः । [ 370 ]
अहमेनं वधिष्यामि सत्यमेतद्ब्रवीमि वः ।
भवन्तः कृतकर्माणस्तिष्ठध्वं वानरोत्तमाः ।

Note hiatus between the two halves. $T_3$ तथा ( for तदा ). —Note hiatus between the two halves of l. 298. —(l. 304) $T_3$ तथा ( for तदा ). —(l. 306) $T_3$ [ आ ]दौ ( for स ). —(l. 307) $T_3$ स ( for च ). —(l. 308) Note hiatus between the two halves. $T_3$ तदा ( for तथा). —Note hiatus between the two halves of l. 311. —(l. 316) $T_2$ प्रहरद् ( for [ अ ]प्रहरद् ). —Note hiatus between the two halves of l. 319. —(l. 320) $T_3$ भिन्नोरुरद-. —(l. 321) $T_3$ [ ऽ ]पि ( for ऽथ ). Colophon. — *Sarga no.*: $T_2$ 58 ; $T_3$ 59. —(l. 331) $T_3$ छिद्रेण ( for छत्रेण ). —(l. 332) $T_3$ च चित्रेण ( for विचित्रेण ). —(l. 338) $T_3$ रथाश्वेषु ( for भवाश्वेषु ) and वानरे ( for वारणे ). —(l. 339) $T_3$ रणे ( for रथे ). —$T_3$ om. l. 349-355. —(l. 358) $T_2$ -समाकीर्ण-. —(l. 359) $T_2$ lacuna for -रूपा सा. —(l. 360) $T_3$ -संधिताः ( for -पीडिताः ). —(l. 361) $T_3$ कुंजरे ( for पञ्जरम् ). —(l. 362) $T_3$ ततः ( for स्थिताः ).

भागोऽवशिष्ट एकोऽयं मम रक्षो महाबलः ।
वानरानेवमुक्त्वा तु विधूयाङ्गेषु तान्शरान् ।
अभ्यधावत वेगेन प्रगृह्य महतीं शिलाम् । [375]
राक्षसाय मुमोचाथ तां शिलां योजनायताम् ।
जल्पमानो हतोऽसीति महाकायरथं प्रति ।
आपतन्तीं शिलां दृष्ट्वा पातयामास पत्रिसिः ।
त्रिभिः शरैरसंभ्रान्तो वानरं पञ्चभिर्भुजे ।
शिरस्येकेन बाणेन उरस्येकेन कर्णिना । [380]
निर्बिभेद च गात्रेषु स भृशं राक्षसर्षभः ।
स तदा भिन्नसर्वाङ्गो वालिपुत्रः प्रतापवान् ।
पाणिना मुखमामृज्य शोणिताङ्कमथाङ्गदः ।
वृक्षानुत्पाट्य तरसा द्रुमवृष्टिं ववर्ष ह ।
मुक्तामुक्तांस्ततस्तांस्तान्शरैश्चिच्छेद राक्षसः । [385]
छित्वा तु तांस्ततो वृक्षानङ्गदं प्रत्यविध्यत ।
शराणां च सहस्रेण धनुर्मुक्तेन संयुगे ।
महानादस्त्रिभिर्बाणैः परीप्सन्भ्रातरं रणे ।
अङ्गदस्तु ततः क्रुद्धस्ततोऽपि महतीं शिलाम् ।
भ्रामयित्वा मुमोचाशु महानादरथं प्रति । [390]
आपतन्तीं शिलां दृष्ट्वा गदां तस्यां मुमोच ह ।
गदया भस्मसाद्भूता निपपात शिला भुवि ।
ततो रोषसमाविष्टो रथेऽस्य निपपात ह ।
अङ्गदो धनुराच्छिद्य बभञ्ज च महाबलः ।
भङ्क्त्वा तस्य धनुर्दिव्यं केशान्संगृह्य राक्षसम् । [395]
क्षितावाविध्य वेगेन क्षिप्रं प्राणैर्व्ययोजयत् ।
भ्रातरं निहतं दृष्ट्वा महाकायो महाबलः ।
अङ्गदं ताडयामास वालिपुत्रं स्तनान्तरे ।
स तु तेन प्रहारेण मूर्छितो भ्रान्तचेतनः ।
पपात सहसा भूमौ विसंज्ञो वेदनार्दितः । [400]
अङ्गदं पतितं दृष्ट्वा वानराः सर्व एव ते ।
शिलापादपवर्षेण राक्षसं समवाकिरन् ।
छाद्यमानस्ततस्तैस्तु महाकायो निशाचरः ।
अविध्यत ततो बाणैर्वानरांस्त्वरयान्वितः ।
गवाक्षं दशभिर्बाणैः पृथुं पञ्चभिरायसैः । [405]
गजं शरशतेनैव तथा शतबलिं त्रिभिः ।
अशीत्या ऋषभं बाणैः पनसं सप्तभिः शरैः ।
सप्तत्या क्रथनं चैव मेघपुष्पं शतेन च ।
एवं स यूथपान्विद्धा क्षिप्रहस्तो निशाचरः ।
एकैकेन च तान्सर्वान्प्रत्यविध्य प्लवंगमान् । [410]
एतस्मिन्नन्तरे वीरः प्राप्य संज्ञां हरीश्वरः ।
अङ्गदः पाणिना नेत्रे प्रमृज्य रुधिराप्लुते ।
आयसीं तु गदां गृह्य हयांस्तस्याहनद्बली ।
सहस्रं वाजिनां तस्य सारथिं च व्यपातयत् ।
गदया चाहनत्तं तु राक्षसं मूर्ध्नि सत्वरम् । [415]
स तु तं रथमुत्सृज्य हताश्वं हतसारथिम् ।
महाकायो गदां गृह्य वालिपुत्रमभिद्रवत् ।
ततस्तौ तु गदाहस्तावुभौ वानरराक्षसौ ।
आजघ्नतुस्तदान्योन्यं वीरव्रतमनुव्रतौ ।
राक्षसस्ताडयामास मूर्ध्नि वानरपुंगवम् । [420]
प्रास्फोटच्च तदा मूर्ध्नि प्रसुस्राव च शोणितम् ।
अङ्गदश्चापि तं रोषाद्राक्षसश्चापि चाङ्गदम् ।
शातयानौ ततस्तौ तु समं च समवापतुः ।
ततस्तौ जर्जरीभूतौ पुष्पिताविव किंशुकौ ।
दन्ताभ्यामिव मातंगौ गदाभ्यां युध्यतो भृशम् । [425]
ते गदे शकलीभूते समुत्सृज्य प्रचक्रतुः ।
बाहुयुद्धं महाघोरं बलिशक्रौ यथा पुरा ।
तयोः पादाभिघाताच्च भस्मीभूतं रजोद्धतम् ।
प्रच्छादयन्तौ तं देशं दृश्येतां तेन तेजसा ।
तौ भुजैः समसृज्येतामायसैः परिघैरिव । [430]
अनुप्रहारैः पतितैः शिरोभ्यां पादघट्टनैः ।
पादप्रहारैः करजैः पादकीलैः पुनः पुनः ।
हाहाकारमकुर्वन्त वानराः पार्श्वतः स्थिताः ।
वालिपुत्र महावीर्य वालितुल्यपराक्रम ।
जयस्व शत्रुं दुर्धर्षं पिता ते दुन्दुभिं यथा । [435]
एवं संस्तूयमानस्तु बलेनापूर्यतां गतः ।
तलेनाशनिकल्पेन राक्षसं समताडयत् ।
पुनश्चैनं समुत्क्षिप्य पातयामास भूतले ।
तस्योपरि समारुह्य पञ्चमारममारयत् ।
हते तस्मिन्महाकाये सिंहनादो महानभूत् । [440]
वानराणां प्रहृष्टानां साधु साध्विति वादिनाम् ।
हतशेषास्तु ये तत्र राक्षसा विप्रदुद्रुवुः ।
लङ्कां प्रविविशुस्तूर्णं भयार्ता वानरार्दिताः ।
वानराः संगतास्ते तु रामपार्श्वं समागमन् ।
शशंसुश्च तदा सर्वे महाकायं निपातितम् । [445]
संग्रामं च महद्वृत्तमङ्गदं च परैः सह ।
तच्छ्रुत्वा राघवः प्रीतो वालिपुत्रं परिष्वजत् ।
सुग्रीवो वानराश्चान्ये हनूमाँल्लक्ष्मणस्तथा ।
विभीषणश्च संहृष्टो राघवं वाक्यमब्रवीत् ।
महाकाये हते राम रावणो निहतो ध्रुवम् । [450]
अङ्गदेन कृतं कर्म महद्राम न संशयः ।

—(l. 365) T3 निरंतरैः कृता. —(l. 371) T3 हनिष्यामि (for वधिष्यामि).—Note hiatus between the two halves of l. 380.—(l. 383) T3 शोणिताक्तम्.—(l. 385) T3 मत्तान्मुक्तांस् (for मुक्तामुक्तांस्).—(l. 386) T3 [अ]पि (for तु) and प्रत्युध्यत (for प्रत्यविध्यत).—(l. 388) T3 परीप्सन् (for परीप्सन्).—(l. 395) T3 केशे (for केशान्).—(l. 396) T3 वियोजयत् (for व्ययोजयत्).—(l. 406) T3 शत- (for शर-).—(l. 409) T3 विध्य (for विद्धा).—(l. 412) T3 प्रगृह्य (for प्रमृज्य).—(l. 414) T3 व्यपोथयत् (for व्यपातयत्).—(l. 415) T3 [अ]हरत् (for [अ]हनत्).—(l. 418) T3 राक्षसवानरौ (by transp.).—(l. 423) T3 सममापतुः (for समवापतुः).—(l. 425) T3 युध्यतां** (moth-eaten).—(l. 429) T3 दृश्यतां स्वेन (for दृश्येतां तेन).—(l. 430) T3 सह सृज्येताम्.—(l. 437) T3 तमताडयत्.—(l. 444)

संहर्षणं तत्र जगाम रामः
श्रुत्वा महाकायवधं महात्मा ।
तथा महाकायवधं महोग्रं
ततोऽङ्गदं प्रीतमना ददर्श ।    [ 455 ]

Colophon

रुधिरस्रावदिग्धाङ्गा राक्षसास्ते रणाजिरात् ।
प्रविश्य लङ्कां वेगेन रावणाय शशंसिरे ।
महाकायं हतं श्रुत्वा शतमायं च राक्षसम् ।
तथान्यान्निहताञ्श्रुत्वा महादैन्यमुपागत ।
शोकाविष्टश्चिरं ध्यात्वा दिशः समवलोक्य च । [ 460 ]
नेदमस्तीति संचिन्त्य अधोदृष्टिर्बभूव ह ।

## 28

After 911*, Ñ V ( $V_2$ missing up to l. 149, cf. v.l. 6.45.1 ) $B_{2-4}$ $D_{4.13}$ ins.:

युद्धादन्यतमं चैव न युक्तं समवैक्षत ।
वज्रदंष्ट्रं ततो वीरं व्यादिदेश महाबलः ।
शीघ्रं निर्याहि सहितो राक्षसैः सुमहाबलैः ।
हयै रथैस्तथा नागैर्बहुभिस्त्वभिसंवृतः ।
हत्वा रामं सह भ्रात्रा सुग्रीवं च हरीश्वरम् ।    [ 5 ]
निवर्तस्व रणे वीर न हि तेऽस्ति समो युधि ।
क्रुद्धस्य युध्यमानस्य घोरान्विसृजतः शरान् ।
प्रमुखे नोत्सहेत्स्थातुं वज्रपाणिरपि स्वयम् ।
असकृत्त्वत्सहायेन मया देवाः पराजिताः ।
यमश्च निर्जितः संख्ये सर्वव्याधिपुरस्कृतः ।    [ 10 ]
वज्रदंष्ट्रस्त्वेवमुक्तो राक्षसेन्द्रेण वीर्यवान् ।
कृत्वा प्रणामं संहृष्टः प्रत्युवाच दशाननम् ।
एष निर्यामि शत्रुघ्न तव शत्रुवधाय वै ।
सुखी त्वं भुङ्क्ष्व लोकांस्त्रीन्सीतां च निहतेश्वराम् ।
अद्य तौ नाशयिष्यामि मिथ्याप्रव्रजितौ रणे ।  [ 15 ]
शिवेन ध्याय मां राजन्नेष हन्मि रिपुं तव ।
ततस्तस्य बलाध्यक्षः समानीय महद्बलम् ।
सूतश्चाश्वरथं सज्जं तस्य शीघ्रमुपानयत् ।
आरुरोह ततो दिव्यं रथं हेमविभूषितम् ।
नानाप्रहरणाकीर्णं सचन्द्रमिव पर्वतम् ।    [ 20 ]
वानरैः सह संग्रामे युद्धकामस्य धीमतः ।
वज्रदंष्ट्रस्य वीरस्य शान्तिं चक्रुर्निशाचराः ।
अथर्वाणं समुद्दिश्य मन्त्रसंस्तवचोदिताः ।
रणप्रवेशसदृशीं कृत्वा वैजयिकीं क्रियाम् ।
ततः सर्वास्त्रविद्वांसः समरेष्वनिवर्तिनः ।    [ 25 ]
विद्याव्रतसमायुक्ताः कृतस्वस्त्ययनक्रियाः ।
धनुर्हस्ताः कवचिनो वेगेनाप्लुत्य राक्षसाः ।
बान्धवान्संपरिष्वज्य निपेतुः संयुगक्षमाः ।
तद्बलं प्रेक्ष्य निर्गच्छद्रावणाज्ञाप्रचोदितम् ।
आस्थितः परमं दिव्यं रथं पररथारुजम् ।    [ 30 ]
महायुधधरः श्रीमाञ्शुभवर्मधरः प्रभुः ।
शिरस्त्राणतनुत्राणी धन्वी परमदुर्जयः ।
स नील इव शैलेन्द्रो वर्मितः समभासत ।

---

$T_8$ उपागमन् ( for समागमन् ). —( l. 446 ) $T_8$ अंगदस्य ( for अङ्गदं च ). —( l. 452 ) $T_8$ प्रहर्षणं चात्र. Colophon. — *Sarga no.* : $T_2$ 59 ; $T_8$ 60. —( l. 457 ) $T_8$ [ आ ]शशंसिरे. —Note hiatus between the two halves of l. 461.

28

( l. 1 ) $D_{13}$ निवर्तितुं ( for अन्यतमं ). $D_4$ नैव ( for चैव ). Ñ$_1$ $V_{1.3}$ $B_{2-4}$ समवेक्षत. $D_4$ युक्तरूपमवैक्षत ( for the post. half ). —( l. 2 ) Ñ$_2$ $B_2$ महावीर्य( $B_2$ °रम् ) ( for ततो वीरं ). $B_2$ आदिदेश. Ñ$_2$ $B_2$ स रावणः ; $B_4$ $D_{13}$ महाबलं ( for °बलः ). —( l. 3 ) $D_4$ त्वं च ( for शीघ्रं ). $B_3$ तत्सैन्यं ( for सहितो ). —( l. 4 ) $V_1$ $D_4$ [ अ ]थ; $V_3$ [ अ ]नु- ( for [ अ ]भि- ). —( l. 5 ) $D_{13}$ स- ( for च ). Ñ$_2$ $B_2$ महाकपिं ( for हरीश्वरम् ). —( l. 6 ) $D_{13}$ सहैभिर्वानरैस्तथा ( for the post. half ). —( l. 7 ) $B_4$ वध्यमानस्य ( for युध्य° ). Ñ$_2$ संसृजतः . —( l. 8 ) $D_4$ प्रमुखं. $D_{13}$ इव ( for अपि ). —( l. 9 ) $D_{13}$ अजेयास् ( for असकृत् ). —$V_3$ om. l. 10-11. —( l. 10 ) $D_{4.13}$ -पुरःसरः ( for -पुरस्कृतः ). —( l. 11 ) Ñ$_2$ $D_4$ च ( for तु ). —( l. 12 ) $D_4$ कृतप्रणाम- ( for कृत्वा प्रणामं ). —( l. 14 ) $V_3$ सुभद्र ( for सुखी त्वं ). $D_4$ सुखं त्वं भुंक्ष्व लंकां च सर्वराक्षससेवितां. —( l. 15 ) $B_{2.4}$ निहनिष्यामि; $D_{13}$ मारयिष्यामि ( for नाशयिष्यामि ). $V_3$ -प्रव्राजितौ. Ñ$_1$ $V_{1.3}$ $B_4$ वने ( for रणे ). —$B_4$ om. l. 16. —( l. 16 ) Ñ$_1$ ध्यायसे; $V_1$ ध्याहि मां. $D_4$ स्वामिन् ( for राजन् ). $D_{13}$ शिवं ते ध्यायमानोहं ( for the prior half ). $V_{1.3}$ अयं हन्मि; $D_4$ यत्नेन हन्मि ( hypm. ); $D_{13}$ हनिष्यामि ( for एष हन्मि ). Ñ$_2$ रिपूंस्. —( l. 17 ) $B_3$ महत्सैन्यं ( for बलाध्यक्षः ). $D_4$ बलाद ( for महद् ). —( l. 18 ) $V_3$ व्यूह्य ( for सूतश् ). Ñ$_1$ साश्वं; $V_1$ चाथ; $V_3$ $B_3$ साश्व- ; $B_2$ चास्य ( for चाश्व- ). $V_1$ दिव्यं सज्जं ( for सज्जं and तस्य ). $B_4$ om. शीघ्रम्. —( l. 19 ) $D_4$ रथं ( for ततो ). —( l. 20 ) $V_{1.3}$ तोयदं ( for पर्वतम् ). —( l. 21 ) $B_4$ $D_{13}$ युध्यमानस्य ( for युद्धकामस्य ). —( l. 22 ) $B_3$ प्रयाणे तस्य ( for वज्रदंष्ट्रस्य ). —( l. 23 ) $D_{4.13}$ अथ वा तं ( for अथर्वाणं ). $B_3$ समुद्वीक्ष्य. $D_{13}$ -संभव- ( for -संस्तव- ). $B_4$ $D_{13}$ -चोदितां. $D_4$ मंत्रसंश्रवनोदिताः ( for the post. half ). —( l. 24 ) $V_3$ $B_{2.3}$ वन- ( for रण- ). $D_{13}$ -प्रदेश- ( for -प्रवेश- ). $D_4$ रण्ये प्रचेतःसदृशीं ( for the prior half ). $B_2$ ते वैदिकीं; $D_{13}$ वैजयिकां ( for वैजयिकीं ). $D_4$ क्रमात् ( for क्रियाम् ). —( l. 25 ) $D_4$ -विद्वीरः ( for -विद्वांसः ). $D_{13}$ [ अ ]मिवर्तिनः ( for [ अ ]निवर्तिनः ). —( l. 26 ) Ñ$_2$ $B_2$ दिव्य- ( for विद्या- ). —( l. 27 ) $D_4$ वेगम् ( for वेगेन ). $B_4$ $D_{13}$ [ आ ]क्रम्य; $D_4$ [ उ ]त्पत्य ( for [ आ ]प्लुत्य ). —( l. 28 ) Ñ$_2$ अन्योन्यं ( for बान्धवान् ). Ñ$_1$ $V_{1.3}$ संपरित्यज्य. Ñ$_2$ संयुगक्रियाः ; $V_1$ $B_{2.4}$ °प्रियाः ; $V_3$ समरेच्छया; $D_{13}$ संगरक्रिया ( for संयुगक्षमाः ). —( l. 29 ) $B_4$ निर्यातं ( for निर्गच्छन् ). Ñ$_2$ $B_2$ $D_4$ -प्रचो( $D_4$ °णो )दितः ; $B_3$ $D_{13}$ -प्रदेशितं ( for -प्रचोदितम् ). —( l. 30 ) Ñ$_1$ $V_1$ परमदारुणं ( for पररथारुजम् ). —( l. 31 ) $B_2$ -रथः ( for first -धरः ). Ñ$_1$ $V_1$ शुभचर्म- ; $B_{2.3}$ शुभकर्म- ( for °वर्म- ). —( l. 33 ) $B_{2.3}$ वर्धितः ; $B_4$ सत्कृतः

सिंहशार्दूलदर्पाश्च हयास्ते किङ्किणीचिताः ।
तस्य राक्षसवीरस्य चक्रुरग्रे रथोत्तमम् । [ 35 ]
कुक्षिपक्षगताश्चान्ये हयाः परमदुर्जयाः ।
सप्ततिर्द्वे सहस्रे च गजास्तावन्त एव च ।
मध्ये व्यूहरथस्थस्तु वज्रदंष्ट्रो महाबलः ।
धनुर्विस्फारयन्घोरं ननाद प्रजहास च ।
धनुःशतसहस्राणि राक्षसानां महात्मनाम् । [ 40 ]
नानाप्रहरणानां च बभूवुस्तस्य संयुगे ।
गदाभिः परिघैः शूलैः पट्टिशैः कूटमुद्गरैः ।
प्रगृहीतैर्व्यराजन्त राक्षसाः पर्वता इव ।
गर्जन्तो विनदन्तश्च क्रोशन्तश्चैव राक्षसाः ।
ततो युद्धाय निर्जग्मुः समरेष्वनिवर्तिनः । [ 45 ]
तत्र तूर्यसहस्राणां संजज्ञे निनदो महान् ।
हयानां च गजानां च गर्जतामतिवेगिनाम् ।
स तु दुन्दुभिनिर्घोषः पर्जन्यनिनदोपमः ।
शुश्रुवे शङ्खशब्दश्च राक्षसैः सुसमीरितः ।
तेन शङ्खनिनादेन भेरीतूर्यरवेण च । [ 50 ]
रथानां च निनादेन चुक्रोशेव नभस्तलम् ।
सागरप्रतिमौघेन बलेन महता वृतः ।
वज्रदंष्ट्रोऽतिसंक्रुद्धो निर्ययौ कालचोदितः ।
तस्य निष्पततो वेगाद्युद्धार्थं युद्धकाङ्क्षिणः ।
हया निपतिताश्चास्य गद्गदश्चाभवत्स्वरः । [ 55 ]
अन्तरिक्षात्पपातोल्का वायुश्च परुषो ववौ ।
वमन्ति स्म शिखिज्वालाः शिवा घोराश्च पश्यतः ।
उत्पातांस्तान्महाघोरान्प्रहस्य युधि दुर्जयः ।
उवाच वचनं श्रीमांस्तत्कालक्षमसुत्तमम् ।
अद्याहं दर्शयिष्यामि स्वबाहुबलमूर्जितम् । [ 60 ]
अद्य मद्बाणनिहतांस्तान्द्रक्ष्यथ वनौकसः ।
बान्धवा निहता येषां हरिभिर्यत्र संयुगे ।
अद्य ते निर्वपिष्यन्ति शत्रुमांसेन राक्षसाः ।
इदमद्य समुद्धूतं रजः समरमूर्धनि ।
अहं वै शमयिष्यामि शत्रुशोणितविस्रवैः । [ 65 ]
हृष्टाः संप्रति मोदध्वं त्यक्त्वा वै राघवाद्भयम् ।
अद्याहं निहनिष्यामि स्वबाहुबलमाश्रितः ।
कालमिन्द्रं कुबेरं च वरुणं समरुद्गणम् ।
तोषयिष्यामि राजानं रावणं विक्रमैः स्वकैः ।
वानरान्सकलान्हत्वा सुग्रीवं च हरीश्वरम् । [ 70 ]
मानुषौ भक्षयिष्यामि तावुभौ छद्मतापसौ ।
अक्षयाः सन्ति मे बाणाः सर्वे ह्याशीविषोपमाः ।
स्थातुं मम पुरः शक्ताः के रणे जीवितार्थिनः ।
हत्वा रिपुजनं संख्ये पुनरेष्याम्यहं पुरीम् ।
हतस्य त्रिदिवे वासो नास्ति युद्धसमा गतिः । [ 75 ]
भवन्तः पृष्ठतः कृत्वा भयं राक्षससत्तमाः ।
निहत्यैतान्हरीन्सर्वान्मोदन्तां सुखिता इव ।

( for वर्मितः ). D4 धर्मतः परिभाषितः ; D13 वर्मितः सन्प्रभासते ( for the post. half ).—(l. 34) D13 -दृप्ता ये ( for -दर्पाश्च ). V1.3 वाजिनः ; D13 हया वै ( for हयास्ते ). V3 किंकिणी-युताः .—(l. 35) Ñ1 B3 D4 -राजस्य ( for -वीरस्य ). Ñ1 सर्तुर्; V3 B2.3 D4 ( with hiatus ) कदुर् ( for चक्रुर् ). V3 अश्वा ( for अग्रे ). Ñ2 तस्थुरग्रे रथोत्तमे; B4 जग्मुरग्रे तथोत्तमं ( for the post. half ).—V3 om. l. 36–38.—(l. 36) Ñ2 स्वमपत्र-; B2 केचित्पक्ष-; B4 D4 कुक्षिपक्षि- (for कुक्षिपक्ष-).—(l. 37) D13 सहस्रं तु ( for °स्रे च ). B3 सप्तभिर्वै सहस्रेण; D4 सप्ततिर्द्विसहस्रे च ( for the prior half ).—(l. 38) Ñ2 V1 व्यूहे. Ñ1 B2.4 मध्य( Ñ1 °ध्ये )व्यूहोदरस्थस्तु( B4 °श्च ); D4 मध्ये व्यूहे रथस्तस्य ( for the prior half ).—(l. 39) Ñ2 स धनुः ( for धनुर्वि- ). Ñ1 D4 विस्फारयद् . B2.4 ह ( for च ).—(l. 40) D4 -सप्त- ( for -शत- ).—(l. 41) Ñ2 B2 तत्र ( for तस्य ).—(l. 43) B2 प्रगृहीता.—(l. 44) D4 नर्दतश् ( for क्रोशन्तश् ). V3 वानराः ( for राक्षसाः ).—(l. 46) B3 D13 ततस् ( for तत्र ).—(l. 47) D4 ध्वजानां ( for गजानां ). Ñ1 V1 B3 नदताम्; V3 नर्दताम् ( for गर्जताम् ). B2.4 नर्दतां परि( B4 °तामभि )धावतां; D4 नदतामस्त्रवेगिनां; D13 नैर्ऋतानां च वेगिनां ( for the post. half ).—V3 om. l. 48.—(l. 48) Ñ2 च ( for तु ). Ñ1 V1 B3 -निर्घोषैः .—(l. 49) B4 शुश्राव ( for शुश्रुवे ). V3 D13 -शब्दस्तु; B3 -शब्दैश्च ( for -शब्दश्च ). V3 समुदीरितः ; B4 च समी°; D4 च समंततः ; D13 स्वयमी° ( for सुसमीरितः ).—(l. 50) V3 भीम- ( for भेरी- ).—(l. 51) B4 चुकुशे च; D13 चुक्रोश च. B4 D4 नभस्थलं ( for °स्तलम् ).—(l. 53) Ñ2 [ऽ]पि सं- ; V1 भृशं; V3 B4 D13 [ऽ]भि सं- ( for ऽतिसं- ). D13 प्रययौ. D4 -नोदितः ; D13 -देशितः ( for -चोदितः ).—(l. 54) V3 वेगं. D13 युद्धार्थे ( for युद्धार्थं ).—(l. 55) Ñ1 D4 तस्य; V1 भूमौ ( for चास्य ).—(l. 56) Ñ V1.3 B2–4 D4 अंतरीक्षात् .—V3 om. l. 57.—(l. 58) D13 तु ( for तान् ). B3 उत्थितान् ( for प्रहस्य ).—(l. 59) V3 तद्रक्षोबलम् ( for तत्कालक्षमम् ).—B4 om. l. 60.—(l. 60) Ñ1 V1.3 सुबाहु- ; D4 प्रबाहु- . Ñ2 ( wrongly ) आश्रितः ( for ऊर्जितम् ).—(l. 61) D13 द्रक्ष्यसि ( for द्रक्ष्यथ ).—(l. 62) D4 तेषां ( for येषां ). Ñ1 D4 ये तु; V1.3 चात्र ( for यत्र ). B3 संयुताः ( for संयुगे ).—(l. 63) Ñ2 अद्य तान्निर्वपिष्यामि; D4 अद्य तेन जीविष्यंति; D13 अद्य निर्वापयिष्यामि ( for the prior half ). B4 निर्जिताः ( for राक्षसाः ).—(l. 64) D4 अहम् ( for इदम् ). B4 अन्यत् ( for अद्य ).—(l. 65) B3 अथ ( for अहं ). Ñ2 नाशयिष्यामि ( for शम° ). V3 D13 -निःस्रवैः ( for -विस्रवैः ).—(l. 66) D4 प्रहृष्टाः प्रतिमोदध्वं ( for the prior half ). B4 D4 संत्यक्त्वा ( for त्यक्त्वा वै ).—(l. 67) B4 अथाहं. B4 D13 दर्शयिष्यामि ( for निहनि° ). Ñ1 V1 सुबाहु- ; B4 -बलपूजितः ; D4 °विक्रमः ( for °माश्रितः ). V3 वानरान्वशमाश्रितान् ( for the post. half ).—(l. 68) V3 D13 मित्रं ( for इन्द्रं ).—(l. 69) Ñ2 राजेंद्रं; V3 तान्हत्वा ( for राजानं ). D4 निजैः ( for स्वकैः ).—(l. 70) Ñ2 B2 महाकपिं ( for हरीश्वरम् ).—(l. 71) B4 D13 रामलक्ष्मणौ ( for छद्मतापसौ ).—(l. 72) D4 ( with hiatus ) आशीविषोपमाः.—(l. 73) V3 विजयार्थिनः ( for जीविता° ).—(l. 74) Ñ2 B2 रिपुबलं. D13 सर्वं ( for संख्ये ). D4 हत्वारिबलं संख्ये च ( for the prior half ). D4 यास्यामि ( for एष्यामि ).—D4 om. l. 75–77.—(l. 76) D13 -पुंगवाः ( for -सत्तमाः ).—D13 om. l. 77.—(l. 77) V1.3 B4 तान् ( for [ए]तान् ). Ñ2 परान् ( for हरीन् ).

Colophon

वज्रदंष्ट्रं तु निर्यान्तं राक्षसैर्बहुभिर्वृतम् ।
गर्जन्तं सुमहाकायं भीमं भीमपराक्रमम् ।
ददर्श महती सेना सुग्रीवेणाभिपालिता । [80]
अभिसंजातहर्षाणां वानरैर्युद्धमिच्छताम् ।
आपतन्तं महानीकं राक्षसानां तरस्विनाम् ।
प्रत्युद्ययुः शिलाहस्ता वानरा जितकाशिनः ।
प्रविश्य ध्वजिनीं क्षिप्रं घातयामासु राक्षसान् ।
राक्षसाश्चापि संक्रुद्धा निजघ्नुर्वानरान्रणे । [85]
सर्वे रुधिरदिग्धाङ्गा राक्षसैर्जनितश्रमाः ।
वज्रदंष्ट्रबलं सर्वं निर्ममन्थुर्वनौकसः ।
ततो मुमोच बाणौघान्वज्रदंष्ट्रो रणे स्थितः ।
ददाह च रणे क्रुद्धो वानरान्सह यूथपैः ।
स सायकमयैर्जालैः सूदयामास तां चमूम् । [90]
उद्धूतमिव वातेन महताभ्रमहाचयम् ।
असृष्यमाणो निधनं स्वस्य सैन्यस्य राक्षसः ।
चकार कदनं घोरं धनुष्पाणिरवस्थितः ।
आवर्त इव संजज्ञे बलस्य महतो महान् ।
क्षुभितस्य यथा सिन्धोर्मथ्यमानस्य संप्लवः । [95]
वलीमुखशरीरैश्च ऋक्षाणां चैव मेदिनी ।
बभूव निचिता घोरैः पर्वतैरिव सर्वतः ।
हतवीरौघवप्रान्ता भग्नायुधमहाद्रुमा ।
शोणितौघमहातोया यमसागरगामिनी ।
असृग्घनमहापङ्का नानाकीर्णान्त्रशैवला । [100]
छिन्नकायशिरोमीना अङ्गावयवशाद्वला ।
गृध्रकाकसमाकीर्णा कङ्कसारससेविता ।
मेदोमज्जास्थिसंकीर्णा आर्तस्तनितनिस्वना ।
वज्रदंष्ट्रशरोद्धता ऋक्षवानरसंभवा ।
प्रावर्तत नदी घोरा भीरूणां भयवर्धिनी । [105]
तत्समीक्ष्य बलं सर्वं राक्षसेन निपातितम् ।
द्रवतो वानरान्सर्वान्राक्षसान्क्रमतोऽपि च ।
सहस्रांशुसुतः क्रुद्ध उत्पपात महाबलः ।

---

Colophon : $D_{13}$ om. —*Kāṇḍa name* : $\tilde{N}$ $V_{1.3}$ $B_{2-4}$ $D_4$ लंकाकांडे. —*Sarga name* : $\tilde{N}$ $V_{1.3}$ $B_{2-4}$ $D_4$ वज्रदंष्ट्रनिर्या ( $V_3$ °प्रया )णं. —*Sarga no.* ( figures, words or both ) : $\tilde{N}_1$ $V_3$ $B_2$ $D_4$ om. ; $\tilde{N}_2$ 31 ; $V_1$ 32 ; $B_3$ 29 ; $B_4$ 33. —( l. 78 ) $D_4$ च ( for तु ). —( l. 79 ) $D_4$ आयांतं. $V_3$ तु -महाकायं; $D_4$ सुमहावीर्यं ( for सुमहाकायं ). — After l. 79, $B_2$ ins. :

1* वानरा ददृशुस्तं वै कालमेघमिवागतम् ।

—( l. 80 ) $\tilde{N}_2$ $B_2$ $D_4$ [ अ ]नु- ( for [ अ ]भि- ). $V_3$ corrupt ( for the post. half ). —( l. 81 ) $D_4$ उप- ( for अभि- ). $V_{1.3}$ $B_{2.4}$ $D_{13}$ रक्षोभिर् ( for वानरैर् ). $B_2$ योद्धुम् ( for युद्धम् ). $V_1$ इच्छती. $D_4$ युद्धकांक्षिणां. $\tilde{N}_2$ वानराणां जयैषिणां ( for the post. half ). —( l. 82 ) $D_{13}$ आगतं तं. $D_4$ महासैन्यं ( for °नीकं ). $B_2$ यशस्विनां ( for तर° ). —$D_4$ om. l. 83–84. —( l. 83 ) $V_3$ $D_{13}$ प्रत्ययुध्यन् ( for प्रत्युद्ययुः ). $B_3$ बलेन ( for वानरा ). —( l. 84 ) $D_{13}$ पतिताः ( for ध्वजिनीं ). $V_1$ $B_3$ शीघ्रं ( for क्षिप्रं ). $V_3$ प्रविश्य राक्षसीं सेनां ( for the prior half ). $\tilde{N}_2$ $V_3$ $D_{13}$ पातयामास; $V_1$ जघ्नुः सर्वत्र; $B_4$ पातयामासु ( for घातयामासु ). —( l. 85 ) $B_3$ वानराश्च ( for राक्षसाश्च ). $B_2$ चाभि- ( for चापि ). $D_4$ निर्जघ्नुर्. —( l. 86 ) $V_3$ विजित- ( for जनित- ). —( l. 87 ) $D_{13}$ तत्र ( for सर्वं ). —( l. 88 ) $V_3$ illeg. for बाणौघान्. $V_3$ $B_4$ $D_4$ रथे स्थितः ; $D_{13}$ महाबलः ( for रणे स्थितः ). —$V_3$ om. l. 90. —( l. 90 ) $D_4$ अर्दयामास ( for सूदया° ). —( l. 91 ) $V_3$ उद्धूतशरवातेन महताभ्रचयोपमं. —( l. 92 ) $D_4$ विमृष्टमाणो. —$B_3$ om. from the post. half of l. 92 up to the prior half of l. 95. $B_2$ $D_{4.13}$ स्वसैन्यस्य च( $B_2$ स ) ( for स्वस्य सैन्यस्य ). —$D_4$ reads l. 94 after l. 88. —( l. 95 ) $V_3$ $D_4$ महासिंधोर्. —For l. 96–105, cf. 6.46.23–27. —( l. 96 ) $V_3$ वलीमुखैः प्रवीरैश्च ( for the prior half ). $V_1$ रक्षसां ( for ऋक्षाणां ). $D_{13}$ राक्षसानां च मेदसा ( for the post. half ). —$V_3$ illeg. for l. 97. —( l. 97 ) $D_4$ निहता ( for निचिता ). —$B_4$ $D_{13}$ read accusative in place of nominative in l. 98–105. —( l. 98 ) $D_{13}$ -संभ्रांतां ( for -वप्रान्ता ). $V_3$ ***रौघवप्रांता; $D_4$ तद्वीरौघैः सुसंध्यामा ( for the prior half ). $B_3$ -[ आ ]मुत्र- ; $B_4$ -स्कंध- ; $D_{13}$ -ध्वज- ( for -[ आ ]युध- ). $V_{1.3}$ भग्नद्रुममहाझषा ( for the post. half ). —( l. 99 ) $D_{13}$ शोणितौघां. —( l. 100 ) $\tilde{N}_1$ $V_1$ $B_3$ शकृद्धन- ; $\tilde{N}_2$ illeg. ; $B_4$ शकृन्मूत्र- ; $D_4$ वपामांस- ( for असृग्घन- ). $V_3$ $B_3$ -महापक्षा. $\tilde{N}_2$ $B_2$ -केशांत- ; $B_4$ $D_4$ -वर्णांत्र- ( for -कीर्णान्त्र- ). $V_3$ नानामस्तककच्छपा ( for the post. half ). —( l. 101 ) Note hiatus between the two halves. $D_4$ -शिरोग्रीवा ( for °मीना ). $V_3$ आवहंती भुजङ्गागं ( for the prior half ). $V_3$ महावयव- ; $D_{13}$ बद्धावयव-. $\tilde{N}_2$ $V_{1.3}$ $B_{2.4}$ $D_{13}$ -शर्करा( $B_4$ $D_{13}$ °रां ) ( for -शाद्वला ). $D_4$ स्वंगापरमकातरा: ( for the post. half ). —( l. 102 ) $V_{1.3}$ $D_4$ गृध्रगोमायुसंकीर्णा( $D_4$ °युक्ता च ) ( for the prior half ). $\tilde{N}_2$ हंस- ; $D_4$ काक- ( for कङ्क- ). $V_{1.3}$ $B_3$ $D_{13}$ -वायस- ( for -सारस- ). —( l. 103 ) Note hiatus between the two halves. $\tilde{N}_1$ $V_{1.3}$ $B_3$ -[ अं ]त्रयाकीर्णा; $B_4$ -[ अ ]स्थ्युपाकीर्णाम् ; $D_4$ -[ उ ]च्छ्रया° ; $D_{13}$ -वशाकीर्णाम् ( for -[ अ ]स्थिसंकीर्णा ). $V_3$ तल- ( for आर्त- ). $B_4$ -नादिनीं ( for -निस्वना ). $D_{4.13}$ आवर्तस्तनितस्वना( $D_{13}$ °नां ) ( for the post. half ). —( l. 104 ) $B_{2.3}$ -शरोद्भूता ( for -शरोद्धता ). $B_3$ -सेविता ( for -संभवा ). —( l. 105 ) $B_2$ आवर्तते; $B_4$ $D_{13}$ प्रावर्तयन्. $\tilde{N}_2$ $B_2$ दारुणा ( for भीरूणां ). —( l. 106 ) $V_3$ राक्षसेंद्रेण पातितं ( for the post. half ). $D_4$ तां समीक्ष्य विलंबार्थां वानरं तं निपातितं. —( l. 107 ) $V_3$ दूरतो ( for द्रवतो ). $V_3$ भ्रमतो ( for क्रमतो ). $B_4$ वा ( for च ). $D_4$ राक्षसाद्भयसंयुतान् ; $D_{13}$ क्रमतो राक्षसानपि ( for the post. half ). —( l. 108 ) $V_3$ सहस्रांशुसुतः. —( l. 109 )

अभ्यद्रवच्च वेगेन राक्षसं जितकाशिनम् ।
स विनद्य महानादं त्रैलोक्यमभिनादयन् । [ 110 ]
जनयन्निव निर्ह्रादान्विधमन्निव पर्वतान् ।
प्रेक्ष्य पिङ्गाक्षमायान्तं राक्षसा विप्रदुद्रुवुः ।
तांस्तु विद्रवतो दृष्ट्वा राक्षसांस्त्रस्तमानसान् ।
स धनुर्धन्विनां श्रेष्ठो विक्रम्य रणमूर्धनि ।
ववर्ष शरवर्षेण सुग्रीवं प्रति वीर्यवान् । [ 115 ]
रोषितः शरवर्षेण बलेन महता तदा ।
निजघान हयान्क्रोधात्सुग्रीवो वानराधिपः ।
प्रवृद्धशाखाविटपं तरुणाङ्कुरपल्लवम् ।
समूलमुत्पाट्य बली स्कन्धवन्तं सुपुष्पितम् ।
तमिन्द्रचापप्रतिमं सारवन्तं महाद्रुमम् । [ 120 ]
उत्पाट्य कुपितस्तस्मै शालं बलसमन्वितः ।
राक्षसं तं समादिश्य प्रेषयामास वानरः ।
तमापतन्तं शतधा स चिच्छेद शिलीमुखैः ।
तस्य दृष्ट्वा महाघोरं कर्म सर्वेऽथ राक्षसाः ।
सिंहनादं नदन्ति स्म वज्रदंष्ट्रप्रहर्षणम् । [ 125 ]
ततः संपरिगृह्यासौ वीरः सुमहतीं शिलाम् ।
क्रोधाद्द्विगुणरक्ताक्षः पितुस्तुल्यपराक्रमः ।
तां शिलां पातयामास राक्षसस्य रथं प्रति ।
आपतन्तीं शिलां दृष्ट्वा गदामुद्यम्य संभ्रमात् ।
रथादाप्लुत्य वेगेन वसुधायां व्यतिष्ठत । [ 130 ]
प्रमथ्य च रथं तस्य निपपात शिला भुवि ।
सचक्रकूबरधुरं सध्वजं सशरासनम् ।
भङ्क्त्वा तु स रथं तस्य सुग्रीवः प्लवगेश्वरः ।
रक्षसां कदनं चक्रे सस्कन्धविटपैर्द्रुमैः ।
ते छिन्नशिरसो भग्ना राक्षसाः शोणितोक्षिताः । [ 135 ]
द्रुमैः प्रमथितास्तत्र निपेतुर्धरणीतले ।
विद्राव्य राक्षसानीकं विनदन्भैरवं रवम् ।
गिरिशृङ्गमथादाय तद्रक्षः समुपाद्रवत् ।
तमापतन्तं वेगेन गदामुद्यम्य वीर्यवान् ।
विनदन्नर्दयामास वानरेन्द्रं महाबलम् । [ 140 ]
तस्य क्रुद्धस्य रोषेण गदां तां बहुकण्टकाम् ।
न्यपातयत सुग्रीवे सा गदा शतधा गता ।
स हरिः क्रोधताम्राक्षस्तं प्रहारमचिन्तयन् ।
राक्षसस्योपरि महद्गिरिशृङ्गमपातयत् ।
स विह्वलितसर्वाङ्गो गिरिशृङ्गाभिताडितः । [ 145 ]
पपात सहसा भूमौ विशीर्ण इव पर्वतः ।
सुस्राव चास्य गात्रेभ्यः फेनिलं रुधिरं बहु ।
ततस्ते राक्षसा दृष्ट्वा वज्रदंष्ट्रं निपातितम् ।
विविशुर्नगरीं लङ्कां वध्यमाना वलीमुखैः ।
विमुक्तकेशाः क्षतजोक्षिताङ्गाः [ 150 ]
शिलातलैर्भिन्नविशस्तबाहवः ।

---

$V_{1.3}$ $B_2$ अभ्यद्रवत. $D_4$ राक्षसाञ्जितकाशिनः (for the post. half). —(l. 110) $V_3$ अपि नादयन्; $B_2$ अभिनर्दयन्. —(l. 111) $\tilde{N}_2$ निर्ह्रादं. $D_4$ जयन्निव ह्रदान्सर्वान् (for the prior half). $B_3$ विनदन्; $D_4$ वर्धयन् (for विधमन्). —(l. 113) $\tilde{N}_1$ वै द्रवतो. $D_4$ तत्र वानराः; $D_{13}$ तु महाबलान् (for त्रस्तमानसान्). —(l. 114) $V_1$ विस्फार्य (for विक्रम्य). $V_3$ बल- (for रण-). —(l. 115) $D_{13}$ -वर्षाणि. $V_3$ विससर्ज बहून्बाणान् (for the prior half). $B_3$ रणमूर्धनि (for प्रति वीर्यवान्). —(l. 116) $\tilde{N}_2$ $V_1$ $D_{13}$ तलेन; $V_3$ मदेन (for बलेन). —(l. 117) $V_3$ महाक्रोधात् (for हयान्क्रो°). —(l. 118) $V_3$ -वर्चसं (for -पल्लवम्). $V_1$ तरुणं बहुपल्लवं (for the post. half). —(l. 119) $D_4$ समूलमुत्पाटयामास (hypm.) (for the prior half) and समुत्थितं (for सुपुष्पितम्). —(l. 120) $D_{13}$ महाबलं (for °द्रुमम्). —(l. 121) $V_{1.3}$ $D_{13}$ तस्मै (for तस्मै). $\tilde{N}_1$ $V_3$ शालमूल-; $D_{13}$ पितुर्बल- (for शालं बल-). —(l. 122) $B_3$ $D_{13}$ तं ($D_{13}$ तु) समुद्दिश्य. —(l. 123) $V_1$ सहसा; $D_4$ च तथा; $D_{13}$ च तदा (for शतधा). —After the prior half of l. 124, $D_4$ reads erroneously from the post. half of l. 122 up to l. 123. —$D_4$ om. the post. half of l. 124. —(l. 125) $V_3$ $D_{13}$ वज्रदंष्ट्रं प्रहर्षयन् (for the post. half). —(l. 126) $V_3$ $D_4$ संप्र- (subm.) (for संपरि-). —(l. 127) $\tilde{N}_2$ $B_4$ -ताम्राक्षः; $V_3$ -चक्राक्षः (for -रक्ताक्षः). $D_4$ पितृतुल्य-. —$V_3$ om. l. 128. —(l. 128) $D_4$ बली (for शिलां). $V_1$ रथोपरि (for रथं प्रति). —(l. 129) $D_4$ आयांतीं तां; $D_{13}$ चालयंतीं (for आपतन्तीं). $D_{13}$ वेगवान् (for संभ्रमात्). —(l. 130) $B_2$ $D_{13}$ व्यवस्थितः (for व्यतिष्ठत). —(l. 131) $\tilde{N}_1$ $V_1$ $B_3$ सा प्रमथ्य; $B_4$ $D_{13}$ प्रमथ्य तं; $D_4$ प्रमथ्यमानं (hypm.). —(l. 132) $B_3$ सचंद्र-. $\tilde{N}_2$ -कूबरघनं; $V_1$ °हयं; $V_3$ $B_{2-4}$ $D_4$ °रथं; $D_{13}$ °युगं (for °धुरं). —(l. 133) $\tilde{N}_2$ स भंक्त्वा तु (by transp.); $B_4$ $D_{13}$ भंक्त्वा तु तद्. $B_4$ प्लवगाधिपः (for °गेश्वरः). —(l. 134) $V_3$ समृद्ध- (for सस्कन्ध-). $D_{13}$ शक्तिशूलपरश्वधैः (for the post. half). —(l. 135) $\tilde{N}_1$ $V_1$ तच्छिन्न-; $\tilde{N}_2$ विशीर्ण-; $D_4$ विच्छिन्न- (for ते छिन्न-). —(l. 136) $D_4$ संताडितास् (for प्रमथि°). —(l. 137) $B_4$ निपात्य; $D_{13}$ निर्मथ्य (for विद्राव्य). $\tilde{N}_1$ $V_1$ $B_3$ विस्वन् (for विनदन्). $B_3$ वरं (meta.) (for रवम्). $V_3$ corrupt; $D_4$ विननाद हरिः पुनः (for the post. half). —(l. 139) $V_3$ om. (hapl.) from the post. half up to the prior half of l. 141. $V_1$ $B_{3.4}$ वेगवान् (for वीर्यवान्). —(l. 140) $\tilde{N}$ $B_2$ निनदन्. $D_4$ ताडयामास; $D_{13}$ स्वर्दया° (for अर्दया°). $B_4$ राक्षसेंद्रं (for वानरेन्द्रं). —(l. 141) $D_{13}$ वेगेन (for रोषेण). $\tilde{N}_1$ $B_3$ $D_4$ ततः क्रुद्धः स रोषेण; $V_1$ स च क्रुद्धस्तु वेगेन (for the prior half). $V_3$ $D_4$ वज्र- (for बहु-). —(l. 142) $D_4$ कृता (for गता). —(l. 143) $D_4$ कपिः (for हरिः). $D_{13}$ तस्य संवीक्ष्य (for क्रोधताम्राक्षः). $D_4$ संप्रहारम् (for तं प्रहा°). —(l. 144) $V_1$ $D_{4.13}$ महान्. $B_4$ -गिरिशृंगाणि (for °शृङ्गम्). $D_{13}$ न्यपातयत्. —(l. 145) $B_3$ विज्वलित- (for विह्व°). —(l. 146) $B_2$ विकीर्णः; $D_4$ भिन्नशृंग (hypm.) (for विशीर्ण). —(l. 147) $\tilde{N}_1$ $V_1$ स्रोतोभ्यः; $V_3$ $B_4$ $D_4$ गात्रेषु (for गात्रेभ्यः). $B_3$ शोणितं (for फेनिलं). —(l. 149) $\tilde{N}_2$

रजोनिरुद्धोद्धतकण्ठवक्त्राः
शशंसिरे सूदितवज्रदंष्ट्रम् ।

Colophon

वज्रदंष्ट्रं हतं श्रुत्वा रावणो राक्षसाधिपः ।
किंचिद्दीनमनाश्चिन्तां प्रतिपेदे स राक्षसः । [ 155 ]
स निर्ध्याय मुहूर्तं तु मन्त्रिभिः सह राक्षसैः ।
वेश्मनः समतिक्रम्य क्रोधादुष्णं विनिःश्वसन् ।
ततः स रावणः सर्वैः सचिवै राक्षसाधिपः ।

## 29

After 6.46.47, B3 ( marg. ) ins. :

प्रहस्तं निहतं दृष्ट्वा प्रजङ्घो नाम राक्षसः ।
गजेन्द्रमग्रतो नीलमाससाद परंतपः ।
आपतन्तं गजं नीलो वेगेन नगसंनिभम् ।
सोऽश्वकर्णं समुत्पाट्य जघानाशु महागजम् ।
गजं च पादरक्षं तु तेन राक्षसं वानरः । [ 5 ]
निजघान स संक्रुद्धाञ्शतक्रतुरिवासुरान् ।
तं गजं पतितं दृष्ट्वा प्रजङ्घो रुषितः स्वयम् ।
नीलमासाद्य वेगेन शूलेनैव जघान सः ।
स * शूलेनाभिहतो महावेगोऽनलात्मजः ।
तेनैव हतनागेन प्रजङ्घमलय( °हनत् )स्वयम् । [ 10 ]
प्रजङ्घे निहते वीरे सप्तघ्नो नाम राक्षसः ।
प्रहस्तवधसंतप्तो युद्धान्नैव न्यवर्तत ।
पट्टिशं सुमहद्घोरं रक्तमाल्यानुलेपनम् ।
रौद्रं रौद्रं समातस्थौ बहुशत्रुभयावहम् ।
तस्य पट्टिशमाक्षिप्य द्विविदो बलदर्पितः । [ 15 ]
तमेवाभ्यहनद्घोरः पशुं खड्गगतं यथा ।
दिशागजसम ** सुप्रतिकाञ्जनोपमम् ।
जगाम गज *** ( illeg. ) वेगेन कालकामुखः ।
तेनापतन्तं संवीक्ष्य गजमैरावतोपमम् ।
जाम्बवानभिदुद्राव वार्यमाणः शरोर्मिभिः । [ 20 ]
गजाङ्कुशं समाक्षिप्य *** देवासुर * ।
कालकामुखमाक्रम्य निजघानास्य मूर्धनि ।
तं निवर्तमहा ******* स्थितम् ।
अभिदुद्राव वेगेन जाम्बवान्वानरर्षभः ।
सहस्राक्षसमो युद्धे जाम्बवन्तं महाबलम् । [ 25 ]
वृकाध्वो मोहयामास शक्राशनिसमैः शरैः ।
विज्वलन्तं समालोक्य हुताशनसमः कपिः ।
तद्रथं सहसा क्षिप्रं ** प्रावेशयन्नभः ।
स ताल इव चाविद्धः स रराज महाबलः ।
वृकाध्वस्तूद्धृतबलः पपात गतजीवितः । [ 30 ]
हर्षितं क्षिप्रमुत्पत्य हरीन्नाम शरं शतम् ।
पतन्तं रथमाक्षिप्य क्रीडति स्म तदा युधि ।
वृकाध्वं विक्षिपन्त्यन्ये रथमन्ये प्लवंगमाः ।
****** नैव केचित्त्वां * प्लवंगमाः ।
सर्वतश्चूर्णितैर्गात्रैः सर्वशो रक्षसां भयम् । [ 35 ]
पपात हरिभिर्मुक्तं प्रविष्टं वानरालयम् ।
नीलेन तु कृतं कर्म तद्दृष्ट्वा प्लवगोत्तमाः ।
प्रविश्य * द्रां सहसा निजघ्नुस्तान्निशाचरान् ।

## 30

After 951*, Ñ2 V B1( after first occurrence ).2–4 D3.4.9 T2 cont.; D1 ins. after an addl. colophon appearing after 6.47.7 (first occurrence); while D13 ins. after 6.47.7 ( first occurrence ); whereas T3 ins. after 6.47.6 :

संग्राममभिकाङ्क्षन्तं रावणं श्रुत्य भाविनी ।
तदोत्थाय ययौ देवी नाम्ना मन्दोदरी शुभा ।
माल्यवन्तं करे गृह्य यूपाक्षसहिता तु सा ।
मन्त्रिभिर्मन्त्रतत्त्वज्ञैस्तथान्यैर्मन्त्रिसत्तमैः ।
राक्षसैरावृता सर्वैर्वज्रजर्झरपाणिभिः । [ 5 ]
योषिद्भिश्चैव वृद्धाभिस्तथा कन्याभिरावृता ।
आयुधव्यग्रहस्तैश्च राक्षसैश्च समन्ततः ।
सभां तु प्रस्थिता देवी यत्रास्ते राक्षसाधिपः ।

---

V1 हन्यमाना; V3 corrupt ( for वध्यमाना ). —( l. 150 ) V3 क्षतजान्विताक्षाः ( for °जोक्षिताङ्गाः ). —( l. 151 ) Ñ भिन्नविहस्त-( Ñ2 °शस्त्र )बाहवः ; V1.3 भि( V3 छि )न्नविशस्त्रहस्ताः ; V2 भिन्न-विशस्तहस्ताः ; B2 भिन्नविशालगात्राः ; B4 भिन्नसशस्त्रबाहवः ; D13 छिन्नविशीर्णबाहवः . D4 शिलाप्रहारात्सुविसृष्टबाहवः . —( l. 152 ) Ñ1 B3 D4 -[ ऽ ]भि- ( for -नि- ) Ñ2 -[ उ ]घत-; B4 -[ उ ]द्धत-. D4 -कर्णवक्त्राः ( for -कण्ठवक्त्राः ).

Colophon. —*Kāṇḍa name* : Ñ V1 B2–4 D4.13 लंकाकांडे. —*Sarga name*: Ñ V B2–4 D4.13 वज्रदंष्ट्रवधः. —*Sarga no.* ( figures, words or both ) : Ñ1 V3 B2 D4.13 om. ; Ñ2 V2 32 ; V1 33 ; B3 30 ; B4 34.

—B4 om. l. 154–158. —( l. 155 ) D13 प्रपेदे स तु ( for प्रतिपेदे स ). —( l. 156 ) Ñ2 स विचार्य; V2 संनिधाय; B2 स संधाय; D13 स निर्णीय. —( l. 157 ) B3 D4.13 समभिक्रम्य ( for °तिक्रम्य ). D4 क्रोधाविष्टं ( for °दुष्णं ). —V1.2 D4 om. l. 158. —( l. 158 ) V1.2 तु ( for स ). D13 सह राक्षसैः ( for राक्षसाधिपः ).

30

( l. 1 ) B4 D3 भामिनी ( for भाविनी ). D4 रावणं युद्धशालिनं; T2.3 श्रुत्वा राक्षसपुंगवं ( for the post. half ). —( l. 2 ) V2 तथोत्थाय; V3 D4.13 तत्रो°; D1 हतोत्साहा; T2.3 अंतःपुराद् ( for तदोत्थाय ). B2 ततो; B3 महा- ( for ययौ ). B1.4 तत उत्थाय प्रययौ ( for the prior half ). B1.4 देवी; B3 ययौ; T2.3 दीना ( for नाम्ना ). V3 B4 तथा; B1 D1.3.13 T2.3 तदा; K ( ed. ) [ इ ]ति सा ( for शुभा ). —( l. 3 ) K ( ed. ) धृत्वा ( for गृह्य ). V1 D4 च सा; V2 तथा; B1 [ अ ]न्वगा; B3 D1 तदा ( for तु सा ). —V3 om. l. 4. —( l. 4 ) Ñ2 त्रिमिश्च ( for मन्त्रिभिर् ). B4 तथैभिर् ( for तथान्यैर् ). D4 मंत्रिभिः सह; T2.3 वृद्धसंमतैः . —( l. 5 ) D1 संवृता ( for आवृता ). T2.3 स्त्रीरक्षकैः ( T3 corrupt ) परिवृता ( for

छत्रेण ध्रियमाणेन अतिकायपुरःसरा ।
चामरैर्वररामाभिर्वीज्यमाना स्वलंकृतैः । [10]
गव्यूतिमात्रं विपुलां ध्वजमालोपशोभिताम् ।
उत्सारणं प्रकुर्वद्भिर्वेत्रजर्झरपाणिभिः ।
प्रविवेश सभां दिव्यां प्रभया द्योतमानया ।
द्रष्टुं वै रावणं सा तु मयस्य दुहिता तदा ।
प्राप्तां देवीं ततो राजा प्रियां मन्दोदरीं तदा । [15]
दृष्ट्वा ससंभ्रमं तूर्णं परिष्वज्य दशाननः ।
मन्त्रिणां तु ततस्तेषामासनान्यादिदेश ह ।
सौवर्णानि विचित्राणि सोपधानानि सर्वशः ।
तेष्वासनोपविष्टेषु सुखासीनेषु मन्त्रिषु ।
पर्यङ्के सूपविष्टा तु देवी मन्दोदरीसुतः ।
अतिकायो महाबाहुः पितरं चाभिवाद्य तम् । [20]
मातरं चाभिवाद्याथ तदासनगतोऽभवत् ।
प्रहस्तवधसंतप्तो महाकायवधार्दितः ।
लङ्कायाश्च विमर्देन कषायीकृतलोचनः ।
संग्राममभिकाङ्क्षन्स व्याकुलेनान्तरात्मना ।
अब्रवीद्विधिवत्सोऽथ महागम्भीरनिस्वनः । [25]
किमागमनकृत्यं ते देवि शीघ्रं तदुच्यताम् ।
तूर्णं मम समीपं तु किमर्थं त्वमिहागता ।
मन्त्रिभिः सहिता किं नु ब्रूहि साध्वि यथातथम् ।
एवमुक्ते तु वचने देवी वचनमब्रवीत् । [30]

the prior half). V3 D9 -मुद्गर-; B2.3 -कर्कर- (for -जर्झर-). —(l. 6) B3 D4 [अ]पि (for [ए]व). D1 बहुभिस् (for वृद्धाभिस्). T3 बहु- (for तथा). B1 तथा कन्याशतैरपि (for the post. half). —(l. 7) B4 आयुधैश्चोग्र-. B4 रक्षिभिस् (for राक्षसैश्च). Ñ2 D9 सुमहात्मभिः. B2 राक्षसस्य महात्मनः (for the post. half). —(l. 8) T3 तां (for तु). B4 सा तत्र; D9 संभ्रांता (for सभां तु). B2 यथा (for यत्र). Ñ2 B2 D1.3.4.9 राक्षसेश्वरः; V3 राक्षसोत्तमः (for राक्षसाधिपः). —(l. 9) Note hiatus between the two halves. V3 B1.3 D4 (all to avoid hiatus) ह्य(B1 चा; B3 सा)तिकाय- (for अति°). V1.2 B1.2.4 D4.13 -पुरःसरः; L (ed.) -पुरःसरैः. —(l. 10) Ñ2 V1 B2 D9 अप्सरामाभिर्; V3 अभि°; B3 व्यग्रहस्ताभिर्; B4 °वासोभिर्; D1.3 वेश्या°; D4 वरनामा च; D13 वेश°; T2.3 वीजयंतीभिर् (for वररामाभिर्). V B1.2.4 D1.4 वीज्यमानः. V2 B4 स्वलंकृतः; B2 (with hiatus) अलंकृतः; B3 समंततः; D4 T2.3 °कृता (for स्वलंकृतैः). —(l. 11) V1.3 B4 D4.9 गव्यूतिमात्र-; V2 T2.3 गुप्ता (V2 शता)र्धमार्ग-. B1 D1.3.13 K (ed.) शता(D1.13 सभा)र्धमार्ग(B1 °न; K [ed.] °र्गं)विपुलं (for the prior half). B4 -मालाभि-; T3 -मालाव- (for -मालोप-). B1 D1.3.13 K (ed.) -शोभितं. —(l. 12) T2.3 उत्सारणां च कुर्वद्भिर् (for the prior half). V3 D9 -मुद्गर-; B2.3 -कर्कर- (for -जर्झर-). —(l. 13) V2.3 B1.2.4 D3 T2.3 प्रविश्य च; D1.13 प्रविष्टा च (D1 तु); G (ed.) प्राविशच्च. D4 च तां (for सभां). V3 D4 देवी; D1 रम्यां (for दिव्यां). V1.2 D3.9 [उ]द्योतमानया; D4 °नसा; T3 °यन्निव (for द्योतमानया). D13 प्रययौ घोरमायया (for the post. half). —(l. 14) D9 दृष्ट्वैव (for द्रष्टुं वै). D4 याता (for सा तु). T2.3 भर्तारं द्रष्टुकामा सा (for the prior half). B3 तनया (for दुहिता). V1 हि सा; T3 तथा; K (ed.) तु सा (for तदा). —(l. 15) D3 तदा (for ततो). B3 स च; D9 प्रिया-; T2.3 भार्यां (for प्रियां). B2 D3 तथा; T2.3 ततः; G (ed.) शुभां (for तदा). D4 प्राप्तां मंदोदरीं देवीं ततो राजा प्रियां तदा. —(l. 16) K (ed.) स संभ्रमात् (for ससंभ्रमं). D1 दृष्टः ससंभ्रमस्तूर्णम् (for the prior half). —After the prior half of l. 16, D13 ins.:

1*

अवतीर्य रथात्ततः ।
प्रियां मन्दोदरीं राजा.

D1 उत्पत्य च; D13 परिगृह्य (for परिष्वज्य). —V3 om. l. 17–19. G (ed.) om. l. 17–21. —(l. 17) Ñ2 B3 D9 तदा (for ततस्). D1.4 सः (for ह). T2.3 न्यवेदयत् (for [आ]दिदेश ह). —B2 D4 om. l. 18. —(l. 18) B1.4 D1.13 सौवर्णसु- (for सौवर्णानि). Ñ2 D9 सुवर्णरत्नचित्राणि (for the prior half). —(l. 19) V2 B3 D1.3.4.13 प्रणामांतेषु; B1.4 तदा सर्वेषु; B2 प्रधानेषु च (for सुखासीनेषु). V1 प्रणामांते च मंत्रिषु (for the post. half). —(l. 20) T3 सा (for तु). V3 तूपविष्टेषु; B3 चोपविष्टायां; D13 तूपविष्टा च (for सूपविष्टा तु). B1.2.4 D1.3 पर्यंके(D3 °ते)षूपविष्टेषु; D4 पर्यंकांतनिविष्टेषु; T2 पर्यंते तूपविष्टा सा (for the prior half). B1 तदा; B3 देव्यां (for देवी). Ñ2 D9.13 ततः; T2.3 स्वयं; K (ed.) सुखं (for -सुतः). V3 B2 देवीं मंदोदरीं प्रभुः (B2 तथा) (for the post. half). —(l. 21) B4 महाबाहुं; T2.3 [ऽ]पि तेजस्वी (for महाबाहुः). B4 D3.4 च (for तम्). —(l. 22) D4 [अ]भिवंद्य (for °वाद्य). G (ed.) यथावच्चाभिनंद्याथ (for the prior half). D13 तत्र (for तदा). —(l. 23) B4 -संत्रस्तो (for -संतप्तो). —D13 om. (hapl.) from the post. half up to the prior half of l. 26. Ñ2 V3 D4 ह्यकंपन-; V1.2 B3 D9 (all with hiatus) अकंपन-; B2 ह्यकर्णन- (for महाकाय-). D4 -भय- (for -वध-). —(l. 24) V B4 D1.3.9 [अ]वमर्देन; B1 [अ]वमंत्रेण; B3 [अ]भि°; T2 [उ]प° (for विमर्देन). —(l. 25) V3 अभिकांक्षन्वै; B2 °संकांक्षन्; T2.3 कांक्षमाणश्च (for अभिकाङ्क्षन्स). K (ed.) आकुलेन (for व्या°). —D9 om. l. 26–27. V1 reads l. 26 twice. —(l. 26) V1 (both times).2 B1.4 D1.3 विविधं; T2.3 वचनं (for विधिवत्). Ñ2 राजा; V1 (second time) वाक्यं; B2 तत्र (for सोऽथ). V3 -निस्वनं; B1.2 D3 -निःस्वनः; D1.13 -निःस्वनं (for -निस्वनः). T2.3 भार्यां राक्षसपुंगवः (for the post. half). —(l. 27) K (ed) -कार्यं (for -कृत्यं). T2 शीघ्रमेव (for देवि शीघ्रं). —(l. 28) T2.3 त्वं; K (ed.) वै (for तु). D3 T2.3 इह चागता (for त्वमिहागता). —(l. 29) V3 D4.9.13 T2.3 किं तु; D1 साध्वि; K (ed.) चैव (for किं नु). Ñ2 D9 T2.3 सर्वं; B2 तत्त्वं; D1 किंचित्; D13 सत्यं (for साध्वि). V2 यथेप्सितं. —(l. 30) K (ed.)

विज्ञाप्यं शृणु राजेन्द्र याचे त्वाहं कृताञ्जलिः ।
नापराधश्च कर्तव्यो वदन्त्या मम मानद ।
श्रुता मे नगरी रुद्धा श्रुता मे राक्षसा हताः ।
धूम्राक्षसहिता वीराः प्रहस्तेन सहैव तु ।
भवन्तं युद्धकामं च निर्गन्तुं कृतनिश्चयम् । [35]
इति संचिन्त्य राजेन्द्र ममागमनकारणम् ।
न च युक्तं प्रमुखतः स्थातुं तस्य महात्मनः ।
रामस्य सुमहाभाग यस्य भार्या त्वया हृता ।
लक्ष्मणस्य च सौमित्रेर्यस्य नास्ति समो युधि ।
न च मानुषमात्रोऽसौ रामो दशरथात्मजः । [40]
एकेन येन वै पूर्वं बहवो राक्षसा हताः ।
चतुर्दशसहस्राणि जनस्थाननिवासिनाम् ।
खरश्च निहतः संख्ये तदा रामो न मानुषः ।
त्रिशिराश्च कबन्धश्च विराधो दण्डके हतः ।
शरेणैकेन वाली च तदा रामो न मानुषः । [45]
शङ्के चैनं महाराज मारीचस्य वधात्तदा ।
पितुश्च वचनाद्रामः प्रविष्टो दण्डकं वनम् ।
ब्रह्मचर्यव्रते युक्तः सह भ्रात्रा वनेचरः ।
तस्य भार्या जनस्थानाद्किमानीता पतिव्रता ।
अकारणकृतं यत्ते दोषाय समुपस्थितम् । [50]
पतिव्रतावरोधस्तु दोषमावहते महत् ।
न मह्यं रोचते बुद्ध्या एतेषां मन्त्रिणां तथा ।
रामभार्या सती सा तु रामाय प्रतिदीयताम् ।
विभीषणेन चैवोक्तं पूर्वमेव महात्मना ।
गतस्तत्रैव चासौ त्वां त्यक्त्वा राज्यं करिष्यति । [55]
वस्त्राणि चैव रत्नानि प्रेषयामि रघूत्तमे ।

---

रावणम् (for वचनम्). T2.3 इत्युक्ता राक्षसेंद्रेण मंदोदर्यब्रवीत्पतिं. —(l. 31) D1 विज्ञप्ति. V3 द्रृश्य (for शृणु). B4 त्वां हि; D1 त्वां ह; D4 [ऽ]हं त्वां; D13 त्वां तु; K (ed.) यत्त्वां (for त्वाहं). V3 याचे त्वा राक्षसेश्वर; T3 यथदाह कृतांजलिः (for the post. half). —(l. 32) D4 मापराधश्च; K (ed.) न हि रोषश्च (for नापराधश्च). V3 तु (for च). Ñ2 B3 D9 मंतव्यो; B1 धर्तव्यो (for कर्तव्यो). B2 नापराधाश्च कर्तव्याः; D3 नापराधोवधार्योथ (for the prior half). B3 ब्रुवंत्या (for वदन्त्या). —After l. 32, K (ed.) ins.:

2* शृणुष्वैकमना मह्यं वचनं वाक्यकोविद ।

—(l. 33) D1 श्रुत्वा मे नगरं रुद्धं (for the prior half). D1 श्रुत्वा (for श्रुता). —(l. 34) K (ed.) -प्रमुखा (for -सहिता). D1.3 च; D4 T2 ते (for तु). V3 प्रहस्ताकंपनेन तु; T3 प्रहस्तेन सह प्रियाः (for the post. half). —(l. 35) Ñ2 V B2 D9 योद्धुकामं (for युद्ध°). V3 D3.4 तु (for च). D13 भवंतं युद्धकांक्षंतं (for the prior half). V B4 निर्गतं; B1 निकुंभं; B3 निशम्य; K (ed.) गमने (for निर्गन्तुं). —(l. 36) T2 एवं (for इति). Ñ2 reads in marg. राजेन्द्र. —After the prior half of l. 36, Ñ2 D9 ins.:

3* त्वां वक्तुं किंचिदागता ।
एतदेव महाराज.
[(l. 1) D9 याचे त्वाहं कृतांजलिः.]

B2 याचे त्वाहं कृतांजलिः (for the post. half). —(l. 37) B2 योद्धुं; T2 युद्धे (for युक्तं). D4 न च युद्धमुखं तस्य; T3 K (ed.) युक्तं न (K [ed.] न युक्तं) प्रमुखे स्थातुं (for the prior half). T3 शक्यं; K (ed.) युद्धे (for स्थातुं). D1 युक्तं; T3 शक्यं (for तस्य). D4 दारावैस्य (for स्थातुं तस्य). —(l. 38) V3 च; B4 तु (for सु-). D1 महाभाग समस्तस्य; K (ed.) रामस्य च महेंद्रेण (for the prior half). B3 [अ]विधा हृता; B4 D13 T2 हृता त्वया (by transp.). —(l. 39) K (ed.) राजेंद्र (for सौमित्रेर्). D3 नास्ति यस्य (by transp.). B2 रणे (for युधि). —(l. 41) V2 B3 D1 पूर्वं वै (by transp.). Ñ2 V3 B2 transp. बहवो and राक्षसा. —(l. 42) V3 -सहस्राणां (for °णि). Ñ2 D9.13 T2.3 -निवासिनः (for °नाम्). —After the prior half of l. 43, D3 ins.:

4* दूषणस्त्रिशिरास्तथा ।
शरैराशीविषाकारैस्.

V3 तस्माद्; B4 तेन (for तदा). K (ed.) दूषणश्च महाबलः (for the post. half). —V2 om. (hapl.) l. 44–45. —(l. 44) K (ed.) महाबाहुर् (for कबन्धश्च). —After the prior half of l. 44, K (ed.) ins.:

5* हतो राक्षसपुंगवः ।
कबन्धश्च महातेजा.

K (ed.) तथा (for हतः). —(l. 45) B4 मारीचस् (for वाली च). B4 तेन; T3 तथा (for तदा). K (ed.) वानरेंद्रो निपातितः (for the post. half). —(l. 46) D1 च तं; K (ed.) चेदं (for चैनं). B3 महाबाहो; D3 °भाग (for महाराज). T2.3 शंके न मानुषं रामं (for the prior half). V1 T3 वधात्तथा; B4 वधादहं; D4 महात्मनः; D13 वधे तदा (for वधात्तदा). B1 मारीचमथनादहं (for the post. half). —(l. 47) D3 स (for च). T2.3 दंडकावनं (for °कं वनम्). K (ed.) दंडकारण्यमाश्रितः (for the post. half). —(l. 48) Ñ2 V2 -भ्राता (for भ्रात्रा). T2 वने रतः. —(l. 49) K (ed.) त्वयानीताविजानता (for the post. half). —(l. 50) B D4.13 अकारणं. D4 कृते (for -कृतं). Ñ2 D8 T3 तत्ते; B1.2 यत्तद्; B4 यत्तु; D9 T3 तत्र (for यत्ते). D4 T2 दोषोयं समुपस्थितः (for the post. half). —(l. 51) V1.2 -[अ]पराधस्; T3 -निरोधस् (for -[अ]वरोधस्). B1 च (for तु). D4 आह च ते; T3 आवाहयेत् (for आवहते). V B1 D3.4.9.13 महान्; T2.3 सदा (for महत्). —(l. 52) Note hiatus between the two halves. Ñ2 D9 तदेवं; V1.2 B2 D4 न शक्यं; T2.3 तन्मह्यं (for न मह्यं). Ñ2 D9 ममैषां; T2 यदेषां (for एतेषां). V3 तव; D1 अपि; D13 तदा (for तथा). —(l. 53) B4 तु सा (for सती). V3 B2.3 D13 या तु; B3 शीघ्रं; B4 T2.3 सीता; D4 साध्वी (for सा तु). D1 रामभार्यां समानीय (for the prior half). D3 रामस्य (for रामाय). B4 T2.3 राघवाय (B4 °मायैव) प्रदीयतां (for the post. half). —(l. 55) D1 अगस् (for गतस्).

सीतां चैव महाराज सुवर्णं वाहनानि च ।
मणिमुक्ताप्रवालं च तथा रजतमेव च ।
माल्यवान्गृह्य संयातु यूपाक्षश्च तथैव च ।
अतिकायस्तथा चायं कार्याकार्यविशारदः । [ 60 ]
विभीषणो गतः पूर्वमेभिस्तत्र गतैर्ध्रुवम् ।
संधिं करिष्यति व्यक्तं राघवं प्रणिपत्य ह ।
संमान्य मैथिलीं चास्मै प्रदास्यति विभीषणः ।
माल्यवांश्च महाकायो राक्षसानां हिते रतः ।
राघवं याच्य शिरसा संधिं कुर्वन्तु रावण । [ 65 ]
सान्त्वं भेदस्तथा दानं राज्ञामेतत्त्रयं शुभम् ।
अशुभं तु स्मृतं युद्धं तस्माद्युद्धं विवर्जयेत् ।

त्रिभिर्नयैर्जितं मन्ये अजितं विक्रमेण तु ।
स्वजनस्य क्षयं कृत्वा पुत्रभ्रातृवधं तथा ।
संशयं चात्मना गत्वा किं जितेन करिष्यसि । [ 70 ]
चञ्चला युद्धसिद्धिस्तु हन्ति वा हन्यतेऽपि वा ।
तस्माद्युद्धं न रोचेत संधिं कुरु दशानन ।
प्रणिपत्य महाबाहो राघवं प्रीतिनन्दनम् ।
दीयतामद्य सा सीता संधिस्ते तेन रोचताम् ।
साम्प्रतं संशयो राजन्पुरस्य सह बान्धवैः । [ 75 ]
आत्मनो राक्षसश्रेष्ठ वर्तते नात्र संशयः ।
तस्माद्राजन्ब्रवीम्येषा पुरस्यार्थे कुलस्य च ।
रक्षणीयस्त्वयात्मा वै सर्वमात्मन्यधिष्ठितम् ।

---

$D_9$ तेन ( for तत्र ). $V_2$ त्वां त्यक्त्वा; $D_1$ यत्रासौ; $D_4$ चैवासौ; $D_{13}$ ते भ्राता ( for चासौ त्वां ). $T_{2.3}$ गतस्तवा( $T_3$ °दा )नुजो राजन्; K ( ed. ) स गतस्तत्र वै राजन् ( for the prior half ). $\tilde{N}_2$ $D_9$ त्यक्त्वा साह्यं; $V_2$ $D_{3.13}$ तत्सहायं; $V_3$ तत्साहाय्यं; $B_{1.4}$ तत्सखायं; $D_1$ त्वार्तं साह्यं; $D_4$ श्रुत्वा हास्यं; $T_{2.3}$ आत्मकार्यं; K(ed.) अस्मत्कार्यं ( for त्यक्त्वा राज्यं ). —(l. 56) $B_1$ वरवस्त्राणि ( for वस्त्राणि चैव ). $\tilde{N}_2$ $D_9$ प्रेषयाद्य; $B_3$ $D_{13}$ $T_{2.3}$ प्रेषयामो( $B_2$ °म ); $D_4$ प्रेषिष्यामि ( for प्रेषयानि ). $D_1$ रघूद्वहे. $V_2$ $B_4$ प्रेषयिष्ये रघूत्तमं ( for the post. half ). —(l. 57) $B_{1.3}$ महाबाहो ( for °राज ). —(l. 58) $D_1$ -रत्न-( for -मुक्ता- ). $D_4$ -प्रवालानि ( for °लं च ). $D_1$ स्वर्णं ( for तथा ). $D_4$ राजतम् ( for रजतम् ). $D_1$ वा ( for second च ). —(l. 59) $\tilde{N}_2$ $B_3$ $D_9$ अनु-; $V_1$ om. (subm.); G ( ed. ) आशु ( for गृह्य ). $B_3$ यूपाक्षं ( for °क्षश् ). $V_2$ $B_1$ $D_3$ तु ( for first च ). $\tilde{N}_2$ $D_9$ महामतिः; $B_4$ तथैव हि; $T_2$ तथा प्रभो; $T_3$ [ ए ]व राक्षसः ( for तथैव च ). $D_4$ विरूपाक्षश्च वीर्यवान् ( for the post. half ). —$D_4$ om. l. 60–62. —(l. 60) $D_3$ कार्ये ( for चायं ). —(l. 61) $T_{2.3}$ तव ( for तत्र ). $\tilde{N}_2$ $B_3$ $D_9$ चतुर्भिस्त्वनुगैः( $B_3$ °र्भिः सचिवैः ) सह; V $B_{2.4}$ पंचभिस्त्वनुगैः सह ( $V_2$ $B_2$ °गैर्ध्रुवं ) ( for the post. half ). —(l. 62) $V_3$ $D_3$ करिष्यते ( for °ति ). $\tilde{N}_2$ $D_9$ सः ; V $B_{1.2}$ $D_1$ च; $B_3$ हि ( for ह ). —$V_3$ om. l. 63–65. –(l. 63) $D_4$ अस्मै ( for चास्मै ). —(l. 64) $\tilde{N}_2$ $B_3$ $D_{1.9}$ $T_{2.3}$ म( $D_9$ $T_2$ स )हामात्यो; $D_3$ °वृद्धो; $D_4$ °मायो ( for महाकायो ). G ( ed. ) माल्यवानतिकायश्च ( for the prior half ). G(ed.) रताः. —(l. 65) $D_{13}$ प्राप्य ( for याच्य ). $\tilde{N}_2$ $D_9$ transp. याच्य and शिरसा. $D_4$ राघवायाद्य शिरसा ( for the prior half ). $T_{2.3}$ शांतिं ( for संधिं ). $D_4$ इच्छतु; $T_3$ कुर्यात्तु. $B_3$ ते त्रयः; $D_3$ राक्षसाः ( for रावण ). $\tilde{N}_2$ $D_9$ संधिमेषः करिष्यति ( for the post. half ). —G ( ed. ) om. l. 66–68. —(l. 66) $\tilde{N}_2$ $V_2$ $B_{1.2}$ $D_{1.4.9}$ साम- ; $B_3$ सामं ( for सान्त्वं ). $\tilde{N}_2$ V $B_{2-4}$ $D_{9.13}$ $T_{2.3}$ भेदं ( for भेदस् ). $V_3$ तदा ( for तथा ). $V_3$ राज्यम्; $B_4$ ज्ञानम् ( for राज्ञाम् ). $D_{1.3}$ स्मृतं ( for शुभम् ). —(l. 67) $D_3$ तत् ; $D_4$ च ( for तु ). $\tilde{N}_2$ $D_9$ भवेद् ; K ( ed. ) स्म वै ( for स्मृतं ). $B_3$ अशुभं तस्य तद्युद्धं; $D_1$ कनिष्ठं सर्वतो युद्धं ( for the prior half ). $V_3$ $D_4$ $T_3$ विवर्जय; $D_3$ विसर्जयेत्; $T_3$ परित्यज ( for विवर्जयेत् ). —(l. 68) Note hiatus between the two halves. $D_4$ एतैर्नयैर्; $T_2$ त्रिभिन्यायैर्; $T_3$ सामाल्यैर्यैर् ( for त्रिभिर्नयैर् ). $B_1$ वृतं; $B_4$ धृतं ( for जितं ). $\tilde{N}_2$ $B_2$ त्रिभिर्नयोर्जितं मन्ये ( for the prior half ). $V_3$ $B_3$ $D_{4.13}$ ( all to avoid hiatus ) ह्य( $D_{13}$ त्व )जितं; K ( ed. ) सहितं ( for अजितं ). $\tilde{N}_1$ $D_9$ यत् ; $B_2$ $D_3$ च ( for तु ). —(l. 69) $V_3$ सु- ( for स्व- ). $T_{2.3}$ वधं ( for क्षयं ). $V_3$ भ्रातृपुत्र- ( by transp. ); $D_1$ पुत्रदार- ( for पुत्रभ्रातृ- ). $V_2$ तदा ( for तथा ). —(l. 70) $D_4$ समयं. $\tilde{N}_2$ $B_2$ $D_9$ परमं; $V_{1.2}$ $D_{1.13}$ $T_{2.3}$ चात्मनो ( for चात्मना ). $D_1$ कृत्वा ( for गत्वा ). $\tilde{N}_2$ $D_9$ जयेन; $V_1$ $D_{13}$ एतेन; $D_4$ राज्येन; $T_2$ चिरेण; $T_3$ रणेन ( for जितेन ). $B_{1-3}$ $D_{1.3.4.9.13}$ करिष्यति. —(l. 71) $\tilde{N}_2$ $V_2$ युधि; $D_9$ यदि ( for युद्ध- ). $D_1$ -संसिद्धिर् ; $T_2$ -सिद्धिर्हि; $T_3$ -बुद्धिस्तु ( for -सिद्धिस्तु ). $B_{1.4}$ $D_{1.3}$ हन्यते हन्यतेपि वा; $T_{2.3}$ हन्यते हंति चा( $T_2$ वा )परं; K (ed.) हन्यते तेजसापि वा ( for the post. half ). —(l. 72) $\tilde{N}_2$ $D_9$ रोचेहं; $D_1$ सेवेत; $D_4$ रोचे तत् ; $T_3$ कुर्वीत ( for रोचेत ). $D_4$ कि नु ( for कुरु ). —(l. 73) $\tilde{N}_2$ $D_9$ $T_{2.3}$ महाबाहुं ( for °बाहो ). $\tilde{N}_2$ $B_3$ $D_{13}$ प्रतिनंदय; $V_{1.2}$ प्री( $V_2$ प्र )तिनंदन; $V_3$ $D_1$ °नंदितं; $D_3$ प्रतिनंद्य च; $D_4$ °वर्धनं; $T_{2.3}$ रघुनंदनं ( for प्रीतिनन्दनम् ). —(l. 74) $\tilde{N}_2$ $V_{1.2}$ अस्य ( for अद्य ). $\tilde{N}_2$ $V_{1.2}$ $B_3$ $D_9$ सीताच; $B_1$ ते सीता; $B_2$ सीतास्मै; $B_4$ तत्सीता ( for सा सीता ). $T_{2.3}$ जीवाम ससुतामात्याः ( for the prior half ). $\tilde{N}_2$ तेन ते ( by transp. ) ; $V_3$ तेनैव; $B_2$ तेन हि; $D_3$ तेनेह; $D_{4.13}$ तेन च ( for ते तेन ). $B_2$ रोचते. —$D_{13}$ om. l. 75–76. —(l. 75) $V_3$ $B_1$ $D_9$ $T_{2.3}$ संशयं; $D_4$ शयनं ( for संशयो ). $T_{2.3}$ सर्वं ( for राजन् ). $D_3$ सांप्रतं संशयापन्नं ( for the prior half ). $V_2$ स्वजनस्य च; $B_1$ च सबांधवं; $B_4$ बांधवस्य च ( for सह बान्धवैः ). $\tilde{N}_2$ $B_{2.3}$ $D_9$ पुरं स्वं च सबांधवं; $V_3$ सपुरं सहबांधवं; $D_1$ पुरस्यांतः पुरस्य च; $D_3$ पुनस्तव सबांधवं; $D_4$ पुनरस्य महात्मनः ; $T_{2.3}$ पुरं ससुतबांधवं ( for the post. half ). —$D_3$ om. l. 76. —(l. 76) $\tilde{N}_2$ $D_9$ $T_{2.3}$ आत्मा च; $V_3$ $B_{1.3}$ आत्मानं( $B_3$ °यं ); $D_4$ आत्मना; G ( ed. ) मुंच त्वं ( for आत्मनो ). $T_{2.3}$ रक्षसां ( for राक्षस- ). $B_2$ स्वं च त्वं राक्षसेंद्रस्य ( for the prior half ). —After l. 76, L ( ed. ) reads l. 97–98 for the first time, repeating them in their proper place. —(l. 77) G ( ed. ) एतद् ( for राजन् ). K ( ed. ) [ ए ]वं ( for [ ए ]षा ). $V_2$ $B_{1.4}$ $D_{1.13}$ च; $B_2$ [ अ ]स्य; $D_3$ [ अ ]थ ( for [ अ ]र्थे ). $D_{13}$ शुभंकरी ( for कुलस्य च ). —(l. 78) $V_3$ $B_{1.4}$ $D_1$ स्वक्षर( $B_4$ ई )क्षणीयास् . $V_3$ तथात्मानः ; $B_{1.4}$ त्वयात्मानः ;

क्षमाशीलस्तथा रामः सत्यवादी च राघवः ।
धर्मनिष्ठो महाराज शरणागतवत्सलः । [ 80 ]
कुरुते चोदितः संधिं रामो दशरथात्मजः ।
लक्ष्मणश्च महाबाहुर्नित्यं भ्रातृहिते रतः ।
प्रहस्तेन कृतं किं नु युध्यता वानरे बले ।
धूम्राक्षेण च राजेन्द्र नित्यं समरबुद्धिना ।
महाकायेन च तथा महामायेन रक्षसा । [ 85 ]
अकम्पनेन वीरेण युध्यता राक्षसेश्वर ।
तथान्यैर्युध्यमानैश्च किं कृतं वानरे बले ।
न हतो यूथपः कश्चिद्बलोद्देशोऽपि रावण ।
येषां वीर्याद्बिभेतीन्द्रः कुबेरवरुणावपि ।
यमो वैवस्वतो येषां तथान्ये देवदानवाः । [ 90 ]
येषां नास्ति समा वीर्ये ते हता वानरैर्युधि ।
न चापि वानराः शक्या हन्तुं पादपयोधिनः ।
रक्ष्यमाणास्तु रामेण सुग्रीवेण च पालिताः ।
तत्र ते रोचतां संधिः सह रामेण रावण ।
योग्यश्च राघवो मित्रं कार्तवीर्यार्जुनो यथा । [ 95 ]
मा कृथाः शौर्यमानित्वं मा कृथाः कुलसंक्षयम् ।
मा कृथाः पुरनाशं तु मा कृथाः पुत्रसंक्षयम् ।
हितं सर्वं ब्रवीम्येषा कुरुष्व वचनं मम ।

Colophon

चात्मा; $D_{13}$ त्वमात्मा च; $T_{2.3}$ तथात्मा ते; K ( ed. ) तवात्मा च; G ( ed. ) त्वयार्था वै ( for त्वयात्मा वै ). $B_4$ ह्यात्मनि ( for आ° ). $V_3$ $B_{1.4}$ [ अ ]वस्थितं; $D_4$ चेष्टितं ( for [ अ ]धिष्ठितम् ). —For l. 78, $D_3$ subst. :

6* रक्षणीयं त्वयात्मानं रक्षयस्व त्वमात्मना ।

—(l. 79) $D_4$ धर्म- ( for क्षमा- ). $\tilde{N}_2$ $V_{1.2}$ $B_{2.3}$ $D_9$ दृढव्रतः ; $V_3$ च लक्ष्मणः ( for च राघवः ). $D_4$ सत्ययानोपि राघवः ( for the post. half). —(l. 80) $\tilde{N}_2$ धर्मनिष्ठ; $V_3$ $B_2$ $D_{1.3.13}$ $T_3$ °नित्यो; $D_4$ °रूपो ( for धर्मनिष्ठो ). $B_1$ महाराजः ; $D_1$ °सत्त्वः ( for °राज ). —$D_{13}$ transp. l. 81 and l. 82. — ( l. 81 ) $V_{1.2}$ $B_{2.3}$ मुदितः ; $V_3$ सर्वथा; $B_{1.4}$ नोदितः ; $T_{2.3}$ याचितः ( for चोदितः ). $D_3$ कुरु तेनादितः संधिं; $D_4$ कुरुतेंगदते सर्वं रल्वि ( corrupt ) ( for the prior half ). $D_3$ रामेण सह रावण ( for the post. half ). —( l. 82 ) K ( ed. ) महाबाहो ( for °बाहुर् ). —$V_3$ om. l. 83. —( l. 83 ) $B_4$ प्रग्रहणं ( for प्रहस्तेन ). $V_{1.2}$ $B_4$ $D_{3.4.9.13}$ $T_3$ तु ( for नु ). $B_1$( m. also as above ).$_4$ $D_3$ राक्षसे; $D_{1.9}$ रक्षसा ( for वानरे ). $D_4$ युध्यता राक्षसेश्वर ( for the post. half ). —$B_2$ om. ( hapl. ) l. 84–87. —( l. 84 ) $B_4$ हि ( for च ). K ( ed. ) राजेंद्रे. $V_{1.2}$ $D_{13}$ -गृध्रिणा; $B_{3.4}$ $D_3$ -गृद्धिना; $D_1$ -योधिना; $T_{2.3}$ -गृध्नुना ( for -बुद्धिना ). —After l. 84, $T_2$ ins. :

7* वज्रदंष्ट्रेण शूरेण तव तुल्यबलेन च ।

—$D_3$ om. l. 85. —( l. 85 ) $\tilde{N}_2$ $D_9$ बहु( $D_9$ वज्र )दंष्ट्रेण ( for महाकायेन ). $V_{2.3}$ $D_4$ transp. महाकायेन and महामायेन. —$V_3$ om. l. 86. —( l. 86 ) $B_4$ राक्षसे बले ( for °सेश्वर ). —( l. 87 ) $D_1$ बलिमिश्चैव ( for युध्यमानैश्च ). $B_4$ विकृतं ( for किं कृतं ). $T_3$ वानरं बलं; K ( ed.) राक्षसैर्बले ( for वानरे बले ). —( l. 88 ) $T_3$ स ( for न ). $D_4$ निहता यूथपाः केचिद् ( for the prior half ). $\tilde{N}_2$ बलादेकोपि; $V_{1.2}$ $B_{2.3}$ $D_9$ °शोपि; $V_3$ $B_4$ °शेन ( for बलोद्देशोऽपि ). $V_{1.2}$ वानरः . —$D_4$ om. ( hapl. ) l. 89–94. —( l. 89 ) $T_2$ एषां; K ( ed. ) तेषां. $B_2$ राज्याद् ( for वीर्याद् ). $T_3$ बिभेद् ( for बिभेति ). $D_1$ [ इ ]व ( for [ इ ]न्द्रः ). —$V_3$ om. l. 90–91. —( l. 90 ) $D_1$ मयो ( meta. ) ( for यमो ). $T_{2.3}$ च बिभ्यते ( for वैवस्वतो ). $D_1$ तेषां; $D_3$ चैव ( for येषां ). —( l. 91 ) $T_2$ एषां ( for येषां ). $V_{1.3}$ B $D_{1.3.13}$ $T_{2.3}$ समो ( for समा ). —( l. 92 ) $T_2$ राक्षसैः ( for वानराः ). $\tilde{N}_2$ $V_3$ $D_9$ जेतुं ( for हन्तुं ). $V_1$ राक्षसयोधिभिः . —( l. 93 ) $V_{1.2}$ $B_{1.3}$ राक्षसानां ( for रक्ष्यमणास् ). $\tilde{N}_2$ $D_9$ च ( for तु ). $V_2$ महात्मना ( for च पालिताः ). —For l. 93, $V_3$ subst. :

8* अजेया वानरास्ते तु रामसुग्रीवपालिताः ।

—( l. 94 ) $V_3$ $T_{2.3}$ अत्र; $D_3$ तेन ( for तत्र ). $B_4$ मे ( for ते ). $B_4$ $T_2$ रोचते. $\tilde{N}_2$ सरामेण ( subm. ) ( for सह रामेण ). —G ( ed. ) om. l. 95. —( l. 95 ) $B_4$ तु ( for च ). $D_{13}$ [ ऽ ]प्येवं; $T_{2.3}$ मैत्रे ( for मित्रं ). V $B_3$ $D_{3.4.13}$ कार्तवीर्यो. —( l. 96 ) $V_{1.2}$ $B_2$ सौम्य मानित्वं; $V_3$ सौम्य त्वं क्रोधं; $B_1$ पुरनाशं तु ; $B_3$ सैन्य°; $B_4$ मूर्खमात्मानं; $D_3$ मौढ्य° ; $D_4$ सौम्य युद्धं च; $D_{13}$ मुग्ध° ; $T_{2.3}$ दुष्कृतं नित्यं; L ( ed. ) मोघ° ( for शौर्यमानित्वं ). —$V_{1.2}$ om. ( hapl. ) from the post. half of l. 96 up to the prior half of l. 97. —$B_1$ om. l. 97–98. $\tilde{N}_2$ $V_3$ $B_{2.3}$ $D_{4.9.13}$ om. ( hapl. ) l. 97. —( l. 97 ) L ( ed. ) ( first time ) सर्व-, ( second time ) गुरु- ( for पुर- ). $B_4$ $D_1$ च; $T_{2.3}$ त्वं ( for तु ). $B_4$ बल- ( for पुत्र- ). $D_1$ -नाशनं. —( l. 98 ) L ( ed. ) ( first time ) तव ( for हितं ). $\tilde{N}_2$ $D_{3.9}$ L ( ed., first time ) सत्यं; $V_3$ शीघ्रं; $T_{2.3}$ राजन् ( for सर्वं ). $B_4$ $D_4$ [ ए ]तत् ; K ( ed. ) [ ए ]षां ( for [ ए ]षा ). —After l. 98, $D_3$ ins. :

9* इत्युक्त्वा सा महादेवी पुण्या मन्दोदरी तथा ।
स्थिता च मौनमाश्रित्य पत्युः पादार्पितेक्षणा ।
स्वामिन्नलं विरोधेन राघवेण महात्मना ।
मनुष्यरूपो भगवान्नारायणो न संशयः ।
हेलयानेन रामेण शतयोजनविस्तृतः । [ 5 ]
काष्ठपाषाणवल्लीभिः दृश्यते पूरितोऽब्धि वै ।

—Thereafter $D_3$ ins. ; $\tilde{N}_2$ V $B_{2-4}$ $D_{1.4.9.13}$ $T_{2.3}$ ins. after l. 98 ; while $B_1$ ins. after l. 96 ( due to omission ) an addl. colophon :

[ *Kāṇḍa name* : $\tilde{N}_2$ $V_1$ $B_{1.3.4}$ $D_{4.13}$ लंकाकांडे. —*Sarga name* : $\tilde{N}_2$ $B_2$ मंदोदरीसंवादः( $B_3$ °विलापः ) ; V $B_{1.3.4}$ $D_{1.3.4.13}$ मंदोदरीवाक्यं; $D_9$ मयतनयावाक्यं. —*Sarga no.* ( figures, words or both ) : $V_3$ $B_2$ $D_{4.13}$ om. ; $\tilde{N}_2$ $V_2$ $B_{3.4}$ $D_{3.9}$ 35 ; $V_1$ $D_1$ 36 ; $B_1$ 33 ; $T_2$ 62 ; $T_3$ 63 ; K ( ed. ) [ प्रक्षिप्तः ] 1. ]

तस्यास्तद्वचनं श्रुत्वा प्रियाया राक्षसेश्वरः ।
दीर्घमुष्णं च निश्वस्य निरीक्ष्य च सभासदः । [ 100 ]
हस्ते मन्दोदरीं गृह्य वाक्यमेतदुवाच ह ।
त्वयाहं हितकाङ्क्षिण्या वचो यदभिभाषितः ।
न तन्मनसि मे देवि प्रविवेशाप्रियं प्रिये ।
देवाञ्जित्वा रणे पूर्वं ससुरासुरमानवान् ।
प्रणमे मानुषं कस्माद्वानरान्यः समाश्रितः । [ 105 ]
प्रणम्य रामं काकुत्स्थं किं वक्ष्ये सर्वदेवताः ।
कीदृशं वा भवेन्मह्यं जीवितं हतचेतसः ।
हृत्वा तस्य पुरा भार्यां मानं कृत्वा सुदारुणम् ।
राक्षसान्घातयित्वा तु लङ्कां संपीड्य सर्वतः ।
राघवं प्रणमे कस्माद्धीनवीर्य इवाबलः । [ 110 ]
जानामि सीतां धरणीप्रसूतां
जानामि रामं मधुसूदनं च ।
एतद्विजानाम्यहमस्य वध्य-
स्तथापि संधिं न करोम्यनेन ।
राघवं प्रणमंश्चाहं कथं जीवितुमुत्सहे ।
एष मे सहजो भावो नित्यं मनसि तिष्ठति । [ 115 ]
अपि भज्ये तदा देवि न नमेयं तु कस्यचित् ।
त्रैलोक्ये स पुमान्नास्ति यो मया न जितो रणे ।
देवानां च बलं हृत्वा देवराजो मया जितः ।
राघवं प्रणमे कस्मान्मूर्ध्नि स्थित्वा तु देहिनाम् । [ 120 ]
मा कृथा हृदि संतापं संजयिष्ये शुचिस्मिते ।
हनिष्ये राघवं चैव लक्ष्मणं वानरांश्च तान् ।

—(l. 99) V1.2 B2.3 राक्षसाधिपः ( for °सेश्वरः ). —(l. 100) V2.3 D3.13 T3 उष्णं दीर्घं ( by transp. ); D4 तूष्णीं कृत्वा ( for दीर्घमुष्णं ). B2 D4 T3 विनिश्वस्य; D1.3.9.13 च निःश्वस्य. T3 संनिरीक्ष्य ( for निरीक्ष्य च ). —(l. 102) B4 हि; D4 T2.3 तु; K (ed.) न- ( for [अ]हं ). D1 -कामिन्या ( for -काङ्क्षिण्या ). B4 D1 वात्ता यद्; D4 वचो सत्; T2.3 यद्वचो ( by transp. ) ( for वचो यद् ). B1.4 D1.3.13 T2.3 बहु; D4 चापि ( for अभि- ). —(l. 103) B4 वक्षसि ( for मनसि ). Ñ2 D9.13 प्रविशति; T2 प्रविशेद् ( for प्रविवेश ). V3 D1.3.4 T3 प्रियं ( for [अ]प्रियं ). —(l. 104) D3 हत्वा; D13 क्षिप्त्वा ( for जित्वा ). T2.3 सर्वान् ( for पूर्वं ). D1 transp. जित्वा and पूर्वं. B4 सयक्ष- ( for ससुर- ). B4 T3 -दानवान्; K (ed.) -मानुषान् ( for -मानवान् ). Ñ2 V B2.3 D4.9 अ( V3 स )सुरोरगदानवान् ( D4 °किंनरान् ) ( for the post. half ). —(l. 105) K (ed.) रामं ( for कस्माद् ). V1 T2 वानरं यः ( T2 च ) ( for वानरान्यः ). B4 समाश्रयः; D1 समन्वितः. D4 वानरान्वा तदाश्रितान्; D13 वानरैर्यः समावृतः ( for the post. half ). —(l. 106) D4 मानुषं रामं ( for रामं काकुत्स्थं ). B2 om. वक्ष्ये. V2 किं नु वक्ष्यंति देवताः ( for the post. half ). —(l. 107) D1 मावयेन् ( for वा भवेन् ). T2 मेद्य ( for मह्यं ). V1 च महौजसे; B2 हतचेतसे; B3 हि हतौजसः; D1.3.9 T2.3 ह( T2.3 हृ )ततेजसः; D4 हतचेतसं; G (ed.) °तेजसे ( for हतचेतसः ). —V3 om. l. 108–109. —(l. 108) Ñ2 कृत्वा; V2 D3 हत्वा ( for हृत्वा ). T3 तदा ( for पुरा ). T2.3 आगः ( for मानं ). D1 धृत्वा ( for कृत्वा ). —(l. 109) B2 राक्षसं ( for °सान् ). K (ed.) मारयित्वा ( for घात° ). Ñ2 V1 B4 D1.4.9 T2.3 च ( for तु ). Ñ2 D9.13 सर्वशः ( for °तः ). —(l. 110) Ñ2 V3 B2 D4.9 मानुषं ( for राघवं ). D1.3 हत- ( for हीन- ). Ñ2 B2–4 D13 इवाचलः; D4 °नलः; K (ed.) °परः ( for °बलः ). V3 हीनवीर्यस्य रावणः; T2 वीतवीर्यं इवालसः T3 हीनवीर्यपराक्रमं ( for the post. half ). —D1.3.13 T2.3 om., while G (ed.) reads within brackets l. 111–114. —(l. 111) Ñ2 D4 धरणि-; V1.2 B1.3.4 जनक- ( for धरणी- ). —(l. 113) V1.2 हि; D4.9 च ( for वि- ). B4 अहं च जानामि रामस्य वध्यस. —(l. 115) Ñ2 D1.13 T3 प्रणमित्वा; B2 प्रणमे न; T2 प्रणिपत्य ( for प्रणमंश्च ). V1 देवि; V2 D9 वाहं; D4 नाहं ( for चाहं ). V1.2 B2 जीवितम्; V3 जीवनम् ( for जीवितुम् ). —After l. 115, Ñ2 D9 ins.:

10* येषां रक्षःसहस्राणां नित्यं मध्येऽस्मि विष्ठितः ।
तेषां मध्ये कथं स्थातुं शक्ष्ये शत्रुवशं गतः ।
व्रतमेतत्पुरा संख्ये राक्षसानां स्थितस्य मे ।

[ (l. 1) Ñ2 मध्ये ( for रक्षः- ). —(l. 2) Ñ2 illeg. for the post. half. ]

—Thereafter Ñ2 D9 read l. 117 for the first time, repeating it in its proper place.

—Ñ2 repeats consecutively l. 116–117. —(l. 116) Ñ2 ( both times ) V3 D4.9 दोषो ( for भावो ). Ñ2 ( both times ) V3 T2 विष्ठितः; V1.2 B3 निष्ठितः; B1.4 [अ]धिष्ठितः; B2 निश्चितः; D1.13 धिष्ठितः; D9 वेष्ठितः; K (ed.) वर्तते ( for तिष्ठति ). —(l. 117) Ñ2 D9 ( both first time ) अधिराज्ये; B1 K (ed.) अ( B1 प्र )विभज्य; B2 अपि भद्रे; D13 अधिरुह्य ( for अपि भज्ये ). D13 समां ( for तदा ). D3 अपि प्राणांतमापन्नो; D4 प्रभज्येयमहं देवि; T3 विभज्ये वायवा संख्ये ( for the prior half ). D1 हि; D4 च; D13 तु ( for तु ). V3 नमस्यामि; B1 नमेयस्तु ( for नमेयं तु ). B4 अपि चेत ***** न नमे यस्य कस्यचित्; T2 अपि द्विधा च भज्येयं प्रणमे यस्य न कचित्.
—After l. 117, D1 ins.:

11* न जुहामि ततो येन शिरच्छेदाय आहुतीः ।
प्रतिबन्धधृते भीत्या स कथं करुणं वदे ।

—(l. 118) D9 त्रैलोक्येषु ( for °क्ये स ). —D4 om. l. 119–121. —(l. 119) D1.3.13 T2.3 देवतानां ( for देवानां च ). V1 जितो रणे ( for मया जितः ). —(l. 120) B2 D3 च देहिनां; D1 दशाननः. —(l. 121) V3 देवि ( for हृदि ). Ñ2 D9 विजयिष्ये; B3 संगमिष्ये; D1 जेष्येहं तं; D3 संविजिष्ये; D13 संजेष्येहं; T2.3 दुर्जयोस्मि; K(ed.) शमयिष्ये ( for संजयिष्ये ). T3 शुचिव्रते. —(l. 122) T2.3 संख्ये ( for चैव ). V3 चैव वानरान्; D13 वानरान्बलात्; T3 च महाबलं ( for वानरांश्च तान् ). —(l. 123) B4 राघवं. B4 D13 T2 हनिष्यामि ( for वधि° ). —D1 om. ( hapl. ) from the post. half up to the

सुग्रीवं च वधिष्यामि हनूमन्तं च वानरम् ।
न तु संधिं करिष्यामि राघवेण सहैव तु ।
वैदेहीं नार्पयिष्यामि राघवस्य भयादहम् । [ 125 ]
साम्प्रतं न च संधिं तु करिष्यति स राघवः ।
सागरं सुमहद्बद्ध्वा रुद्ध्वा लङ्कां सकाननाम् ।
राक्षसान्प्रवरान्हत्वा संधिं कुर्यात्कथं प्रिये ।
न त्वहं संधिमिच्छामि कदाचिदपि भाविनि ।
गच्छ त्वं भव विस्रब्धा सर्वमेतत्सुखोदयम् । [ 130 ]
मा कृथा हृदि संतापमहं यास्ये रणाजिरम् ।
अद्य सर्वान्हनिष्यामि शत्रून्समरमूर्धनि ।
पुत्राश्च ते महावीर्या मेघनादपुरोगमाः ।
न तेषां मुच्यते कश्चिदपि मृत्युर्वरानने ।
अन्तःपुराय गच्छ त्वं सुखिनी भव सस्नुषा । [ 135 ]
एवमुक्त्वा परिष्वज्य भार्यां प्रीतमना इव ।
प्रविवेश तदा देवी स्वयं च भवनं शुभम् ।
चिन्तयामास तद्धोरं विग्रहं समुपस्थितम् ।
रावणस्तु ततो वाक्यं राक्षसानिदमब्रवीत् ।
कल्प्यतां मे रथः शीघ्रं क्षिप्रमानीयतां ततः । [ 140 ]
अद्य क्रोधं विमोक्ष्यामि निगूढं हृदयेशयम् ।
देवासुरे यथा पूर्वं रुद्रेण निहतेऽन्धके ।
चिरकालेप्सितं ह्येतद्युद्धं मे राघवेण ह ।
अद्य तूणीशया बाणा निर्मुक्ता इव पन्नगाः ।
रामं समभिधावन्तु विषाग्निप्रतिमाः शिताः । [ 145 ]
सुतेजसै रुक्मपुङ्खैस्तैलधौतैर्हिरण्मयैः ।
शरैरादीपयिष्येऽहमुल्काभिरिव कुञ्जरम् ।
वानरान्सुबहून्गृह्य राघवेण प्रचोदितान् ।

prior half of l. 125. $B_4$ विभीषणं ( for च वानरम् ). —( l. 124 ) $V_2$ $B_2$ च ( for first तु ). —$D_3$ om. ( hapl. ) from the post. half up to the prior half of l. 125. $T_3$ ते ( for second तु ). —( l. 125 ) $V_{1.2}$ $B_{2.3}$ अपि ( for अहम् ). —( l. 126 ) $B_1$ $T_2$ च न; $B_4$ $D_{1.13}$ न तु; $T_3$ तु न ( for न च ). $B_4$ $D_1$ $T_{2.3}$ च; $D_4$ मे ( for तु ). $B_4$ प्रकरिष्यति ( for करिष्यति स ). —( l. 127 ) $B_2$ समुद्रं ( for सागरं ). $D_{1.4}$ $T_{2.3}$ तु( $T_{2.3}$ च ) महद् ( for सुमहद् ). $\tilde{N}_2$ $D_9$ सेतुना सागरं तीर्त्वा ( for the prior half ). $V_3$ ( m. ) प्राप्ते; $D_3$ लब्ध्वा ( for रुद्ध्वा ). $D_4$ lacuna ; K ( ed. ) लंकामेत्य ( for रुद्ध्वा लङ्कां ). —( l. 128 ) $V_1$ $B_{2.3}$ $T_3$ राक्षस- ( for °सान् ). $D_4$ कुर्यां ( for कुर्यात् ). —( l. 129 ) $\tilde{N}_2$ $B_1$ नु ( for तु ). $T_{2.3}$ न चाहं संधिकामस्तु ( for the prior half ). $B_4$ $D_{1.3}$ $T_{2.3}$ भामिनि ( for भाविनि ). $D_4$ स कदाचिद्विभाविनि ( for the post. half ). —( l. 130 ) $D_1$ एव ( for एतत् ). $T_3$ शुभोदयं. $B_4$ सर्वलोकभयादपि ( for the post. half ). —( l. 131 ) $B_2$ रणाजिरे ( for °रम् ). —( l. 132 ) $T_3$ प्राप्य ( for अद्य ). K ( ed. ) वधिष्यामि ( for हनि° ). —( l. 133 ) $\tilde{N}_2$ $D_{4.9.13}$ च मे; $B_4$ ते सु- ( for च ते ). $T_3$ मत्पुत्राश्च ( for पुत्राश्च ते ). $T_{2.3}$ -पुरःसराः ( for -पुरोगमाः ). —( l. 134 ) $T_2$ मृत्युर् ( for कश्चिद् ). $V_2$ $D_9$ $T_2$ अप- ; $B_2$ कथं; $B_3$ om. ( for अपि ). $D_3$ मृत्योर् ( for मृत्युर् ). —( l. 135 ) $T_2$ अंतःपुराणि. $D_3$ transp. भव and सस्नुषा. —$B_4$ om. from l. 136 up to colophon. —( l. 136 ) $D_4$ एवमुक्ता. $V_{1.2}$ $B_3$ $D_9$ प्रीतिमना; $B_1$( after corr. as above ) $D_{1.3}$ प्रियमना ( for प्रीत° ). $D_4$ भर्तारं विमना इव ( for the post. half ). —After l. 136, $D_{13}$ $T_{2.3}$ ins. :

12* अनुजज्ञे महावीर्यो योद्धुकामो दशाननः ।

[ $D_{13}$ स ससज्जे ( for अनुजज्ञे ). ]

—( l. 137 ) $B_2$ ततो; $T_{2.3}$ च सा ( for तदा ). $\tilde{N}_2$ $D_9$ $T_{2.3}$ स्वमेव; $D_1$ स्वयं सा; $D_4$ स्वकं च ( for स्वयं च ). $D_1$ गुरुं ( for शुभम् ). —( l. 138 ) $T_{2.3}$ चिंतयाना तु. $V_3$ $D_{1.4}$ $T_{2.3}$ तं ( for तद् ). $D_{1.4}$ समुपस्थिता. —( l. 139 ) K ( ed. ) तदा ( for ततो ). —( l. 140 ) $B_1$ तु ( for मे ). $B_1$ $D_4$ $T_{2.3}$ रथं ( for रथः ). $D_9$ शीघ्रम् ( for क्षिप्रम् ). $D_1$ आनीयत. $\tilde{N}_2$ $D_{9.13}$ $T_{2.3}$ धनुः ; $D_1$ [ अं ]तिकं; $D_4$ इति ( for ततः ). —( l. 141 ) $V_3$ $D_{4.9}$ कोपं ( for क्रोधं ). $T_3$ विगूढं ( for नि° ). $B_3$ हृदि संस्थितं; $D_{4.13}$ हृदये( $D_4$ °य- )स्थितं ( for हृदयेशयम् ). K (ed.) गूढं सुहृदयेशयं ( for the post. half ). —$B_3$ repeats consecutively l. 142. —( l. 142 ) $B_3$ ( first time ) देवासुरैर् ; $T_2$ दैवासुरं; K ( ed. ) देवाहवे ( for देवासुरे ). $V_2$ दैवतैर् ; $D_{4.9}$ वज्रेण ( for रुद्रेण ). $\tilde{N}_2$ $D_9$ निहतोंधकः ; $D_{1.3.13}$ निहतांधके; $D_4$ निहतेसुरे ( for निहतेऽन्धके ). $B_{1.3}$ ( second time ) देवता निहता युधि ( for the post. half ). —After l. 142, $B_1$ ins. ; while $B_3$ ins. after l. 142 ( r. ) :

13* मया वीरेण महता देवराजश्च निर्जितः ।

—$B_1$ om. l. 143. —( l. 143 ) $V_1$ -स्थितं; $V_2$ $T_3$ -[ अ ]र्पितं ( for -[ इ ]प्सितं ). $D_4$ मेध ( for ह्येतद् ). $B_{2.3}$ $D_{9.13}$ चिरकाले हि( $B_3$ $D_{13}$ स्थि )तं ह्येतद्( $B_2$ °व ) ( for the prior half ). $D_3$ transp. ह्येतद् and युद्धं. $D_4$ वै ( for मे ). $\tilde{N}_2$ $V_2$ $B_2$ $D_{4.9}$ च; $V_1$ $T_{2.3}$ तु; $B_3$ $D_{13}$ हि ( for ह ). —( l. 144 ) $B_{1.3}$ त्यक्ता मया; $D_4$ तूणात्तु मे ( for तूणीशया ). K ( ed. ) विमुक्ता ( for निर्मुक्ता ). $V_3$ शर- ( for इव ). $B_{1.3}$ शतशोथ सहस्रशः ( for the post. half ). —( l. 145 ) $B_2$ $T_3$ -धावंति ( for -धावन्तु ). $D_4$ -प्रतिमाश्रिताः. $V_2$( with hiatus ) उल्कामिरिव कुंजरं; $D_3$ वर्षाग्निप्रतिमा हताः ( for the post. half ). —For l. 145, $B_{1.3}$ subst. :

14* वानरानभिनिघ्नन्तु शालतालशिलायुधान् ।

—( l. 146 ) $V_{1.2}$ $B_{2.3}$ $D_{13}$ सुतेजितै; $B_1$ सुतेजनै; $D_4$ सुतेजोमी ( for सुतेजसै ). $T_3$ मुक्त- ( for रुक्म- ). $\tilde{N}_2$ $D_9$ स्वतेजसैव काकुत्स्थं; $T_2$ सुकृतै रुक्मपुंखैस्तैस् ( for the prior half ). $B_2$ $D_4$ म( $D_4$ शै )लधौतैर्; $D_{13}$ शिला°; K ( ed. ) जल° ( for तैलधौतैर् ). $V_3$ अजिह्मगैः. —( l. 147 ) $V_3$ आपीडयिष्येहम् ; $B_1$ ( with hiatus ) आद्दिशमानेन; $D_{1.3.13}$ $T_{2.3}$ आदीपयाम्येनम् ( for आदीपयिष्येऽहम् ). $B_2$ शरीरं दीपयिष्येहम् ( for the prior half ). —G ( ed. ) om. l. 148–149. —( l. 148 ) $D_1$ तु ( for सु- ). $D_1$ दृष्ट्वा ( for गृह्य ). $V_2$ K ( ed. ) राघवार्त्त- ; $D_1$ राघवाज्ञा- ( for राघवेण ). $\tilde{N}_2$ illeg. ; $D_{1.3.9}$ प्रणोदितान्.

महाजवान्हनिष्यामि मम पार्श्वमुपागतान् ।

Colophon

## 31

After 6.51.1, Ñ2 D9 ins.:

कोऽसौ रामो महातेजाः कस्य पुत्रश्च राघवः ।
कस्य वै लक्ष्मणो नाम किं वा सुग्रीवसंमतम् ।
एतत्कथय मे क्षिप्रं सामपूर्वेण रावण ।
के राक्षसा हता युद्धे वानरैर्भीमविक्रमैः ।
विभीषणं च राजेन्द्र न पश्याम्यहमागतम् । [5]
स खल्वतिबलः शूरो निःशेषजनवल्लभः ।
वानरैर्न हतो युद्धे मम भ्राता विभीषणः ।
इत्युक्तः कुम्भकर्णेन प्रत्युवाचाथ रावणः ।
राजा दशरथो नाम बभूव भुवि विश्रुतः ।
तस्य वै राघवः पुत्रः सर्वशास्त्रविशारदः । [10]
स कस्मिंश्चित्ततः कार्ये पित्रा निर्वासितो वनम् ।
तस्य वै लक्ष्मणो नाम भ्राता ह्यनुजगाम तम् ।
स्वसुर्मे तेन रामेण भाविनोऽर्थस्य गौरवात् ।
लक्ष्मणं च समादिश्य कर्णनासं प्रचिच्छिदे ।
चतुर्दशसहस्राणि तथोभौ खरदूषणौ । [15]
हतान्येकेन रामेण मानुषेण पदातिना ।
तस्य भार्या मयानीता सीता नाम सुमध्यमा ।
ततः समभवत्सख्यं सुग्रीवस्य च तस्य च ।
रामेण वालिनं हत्वा सुग्रीवो ह्यभिषेचितः ।
ततः सुग्रीववचनाद्वानरा लघुविक्रमाः । [20]
गताः सर्वे दश दिशो मार्गमाणाश्च जानकीम् ।
ते त्वप्राप्यैव सुश्रोणीं प्रत्याजग्मुः कपीश्वराः ।
ततस्तु हनुमान्नाम सुग्रीवसचिवो बली ।
शतयोजनविस्तीर्णं ततार वरुणालयम् ।
राक्षसीं सिंहिकां चैव क्षिप्रं प्राणैर्व्ययोजयत् । [25]
राक्षसान्सुबहून्हत्वा दग्ध्वा लङ्कां च वानरः ।
कथयामास सीतायै प्रवृत्तिं राघवस्य च ।
तेनेयं नगरी लङ्का परिक्षिप्ता समन्ततः ।
ततः सीतां समासाद्य प्रवृत्तिं चोपलभ्य सः ।
गत्वा तु राघवाभ्यासं कथयामास वीर्यवान् । [30]
तच्छ्रुत्वा राघवो रामो बलेन महता वृतः ।
आजगाम महातेजाः सुग्रीवसहितो बली ।
संनिविष्टः समुद्रस्य तीरमासाद्य चोत्तरम् ।
तच्छ्रुत्वा राघवायोगं वानराणां महद्बलम् ।
विभीषणेनाहमुक्तः सीता निर्यात्यतामिति । [35]
अहं परुषितस्तेन श्रावितश्चैव विप्रियम् ।
राघवश्च रिपुर्व्यर्थं संस्तुतो मेऽनुशृण्वतः ।
ततो मयोक्तो निर्भर्त्स्य तूष्णीं तिष्ठत्यसौ पुनः ।
निहतश्च पदा वीरः क्रोधेनात्यन्तमूर्छितः ।
राघवं शरणं प्राप्तश्चतुर्भिः सचिवैः सह । [40]
लङ्कैश्वर्यं ततस्तस्मै राघवेण प्रतिश्रुतम् ।
बद्ध्वा तु सागरे सेतुं ततस्तं वरुणालयम् ।
समुत्तीर्य महातेजाः सह वानरसेनया ।
रुद्धा च नगरी लङ्का वानरैर्भीमविक्रमैः ।
राक्षसा ये च मुख्या मे हतास्ते युधि वानरैः । [45]
धूम्राक्षो निहतो वीरः प्रहस्तश्च निशाचरः ।
अकम्पनो महावीर्यो वज्रदंष्ट्रस्तथैव च ।
अन्ये च बहवो योधा वानरैर्युधि पातिताः ।
एवं ज्ञात्वा महाभाग रामाद्भयमुपस्थितम् ।
त्रायस्व तस्माद्भद्रं ते यद्यस्ति मयि सौहृदम् । [50]
एतच्छ्रुत्वा कुम्भकर्णो रावणं वाक्यमब्रवीत् ।
सीतामानयता राजन्त्वया शोभनं कृतम् ।
यदा रक्षःसहस्राणि सखराणि चतुर्दश ।
हतान्येकेन रामेण पर्याप्तं तन्निदर्शनम् ।
एष किं भवता रामो न श्रुतो वीर्यवान्प्रभो [55]
इदं तत्समनुप्राप्तं नन्दीश्वरवचो ध्रुवम् ।
नूनं स भगवान्देवः पद्मनाभोऽसुरान्तकृत् ।
रामरूपमिदं कृत्वा विष्णुर्ग्रसति राक्षसान् ।

---

V1.3 B1–3 D4 राघवौ संप्रधावितान्; T2.3 मृत्युना संप्रचोदितः (for the post. half). —V3 om. l. 149. —(l. 149) V1 ममानुजानतिक्रम्य; V2 B3 ममानुयायिभिः क्रांतान्; B1 D4 ममानुयातान्वि( D4 °जातिवि )क्रांतान्; B2 ममाज्ञामतिक्रांतान् (subm.); D8 समनुज्ञाहि विक्रांतान्; D13 ममानुजो हि विक्रांतो; K (ed.) यमं नयामि विक्रांतान् (for the prior half). V1 D13 उपागतौ (D13 °तः); D4 उपस्थितान् (for उपागतान्). —For l. 149, D1 subst.:

15* सरामानुजविक्रांतान्मया सार्धमुपागमत् ।;

while T2.3 subst.; D13 ins. after l. 149:

16* मां न जानाति काकुत्स्थस्तेन मत्पार्श्वमागतः ।

[ D13 यो ( for मां ) and योद्धुमुपागतः ( for मत्पार्श्वमागतः ).]

Colophon. B1.4 D9 T3 om. —*Kāṇḍa name*: Ñ2 V1 D4.13 लंकाकांडे. —*Sarga name*: Ñ2 V B2 D1.3.4.13 रावणवाक्यं( V2 °** ). —*Sarga no.* (figures, words or both): V3 B2 D4.13 om.; Ñ2 V2 D3 36; V1 D1 37; B3 26; T2 63; K (ed.) [ प्रक्षिप्तः ] 2; G (ed.) 34. —After colophon, B1 repeats 1–3, 5–6 (followed by 951*) of Sarga 6.47.

### 31

[ Ñ2 variants. —(l. 11) illeg. from the post. half up to the prior half of l. 13. —(l. 26) दृष्ट्वा (for दग्ध्वा). —(l. 31) श्रुत्वा तु (for तच्छ्रुत्वा). ]

## 32

After 1117*, Ś Ñ2 V B2.3 D1-4.8.9.12.13 T2.3 ins.:

यदर्थं तु पुरा सौम्य नारदाच्छ्रुतवानहम् ।
षण्मासादहमुत्थाय अशित्वा भक्ष्यमुत्तमम् ।
न च तृप्तोऽस्मि राजेन्द्र ततोऽहं प्रस्थितो वनम् ।
बहूनि भक्षयित्वाहं सत्त्वानि विविधानि च ।
भुक्त्वा प्रणयनं कृत्वा शिलातलमुपाविशम् । [ 5 ]
शिलातलस्थोऽपश्यं तं नारदं संशितव्रतम् ।
आकाशेन द्रुतं यान्तं मां दृष्ट्वा स त्वतिष्ठत ।
अवतीर्णश्च सहसा मया चैवाभिवादितः ।
उपविष्टः शिलायां तु ततोऽहं तमथाब्रुवम् ।
कुत आगम्यते ब्रह्मन्कुतो वा प्रतिगम्यते । [ 10 ]
एवमुक्तो महाराज नारदो मामुवाच ह ।
देवानामालयं मेरुं गतोऽहं देवसंसदि ।
युष्मत्तो भयभीतानां समाजस्तत्र संबभौ ।
तत्र ब्रह्मा च रुद्रश्च विष्णुश्च जयतां वरः ।
देवराजो महेन्द्रश्च लोकसाक्षी च पावकः । [ 15 ]
मरुतो वसवश्चैव चन्द्रादित्यौ ग्रहास्तथा ।
गन्धर्वा गुह्यकाश्चैव ऋषयो गरुडोरगाः ।
मन्त्रं ममन्त्रिरे तत्र वधं रक्षःकुलस्य ते ।
देवराजो निबद्धश्च यमः संख्ये पराजितः ।
जितौ तु सबलौ संख्ये कुबेरवरुणावपि । [ 20 ]
चन्द्रादित्यौ वशं नीतौ त्रैलोक्यं सचराचरम् ।
यज्ञा विध्वंसिताः सर्वे धर्मिष्ठाश्च हता नृपाः ।
देवोद्यानानि भग्नानि स्त्रियो नीता यथेष्टतः ।
रक्षसा तेन रौद्रेण रावणेन बलीयसा ।
ब्रह्मणो वरदानेन गर्वितेन सुरोत्तमाः । [ 25 ]
इत्युवाच ततो देवान्सर्वान्देवपुरोहितः ।
चिन्तयध्वं वधोपायं रावणस्य दुरात्मनः ।
एवमुक्ते तु वचने ब्रह्मा देवानुवाच ह ।
अवध्यत्वं मया दत्तं देवदैत्यैश्च रक्षसः ।
मानुषेभ्यो भयं तस्य वानरेभ्यश्च देवताः । [ 30 ]
सुरासुरसमूहेऽपि वधस्तस्य न विद्यते ।
तस्मादेष हरिर्देवः पद्मनाभस्त्रिविक्रमः ।

---

## 32

V2 missing up to l. 12 (cf. v.l. 6.51.15). B3 reads l. 1-51 twice except l. 41. V3 illeg. for l. 1-2. —(l. 1) Ś1 D4.8.9.12 यम् (for यद्). —(l. 2) Note hiatus between the two halves. D3 उत्थितो राजन् (for अहमुत्थाय). Ś Ñ2 D8.9.12 (to avoid hiatus) ह्यशित्वा (for अशित्वा). —(l. 3) D13 नैव. D9 तदाहं विस्मितोभवं (for the post. half). —(l. 4) Ñ2 V1.3 B3 (first time) D1.12.13 वै (for च). —(l. 5) V3 B2.3 (both times) तुष्टः (for भुक्त्वा). Ś V1 D8.12 प्राणायनं; D1 प्रतर्पणं (for प्रणयनं). D9 T2.3 बुभुक्षापनयं कृत्वा (for the prior half). D9 शिलायां सम्-. —(l. 6) T2.3 पश्यामि (for ऽपश्यं तं). D4 शिलातलस्थं पश्यंतं (for the prior half). Ś D8.12 मुनिसत्तमं; D2.4 शशिसंप्रभं (for संशितव्रतम्). D1 शिलातलोपविष्टेन द्रुतमाकाशगो मुनिः. —(l. 7) D1 दृष्टो हृष्टश्च संजातो; D9 आकाशेवस्थितं यांतं (for the prior half). Ñ2 D9 T2.3 च (Ñ2 तु) विद्रु (Ñ2 °ष्ठि)तः; B3 (second time) व्यतिष्ठत; D1 तु नारदः; D3.13 त्वधिष्ठितः (D13 °तं) (for त्वतिष्ठत). Ś D8.12 मां तु (Ś2 च) दृष्ट्वा स च स्थितः (L [ed.] तु स्थितं); B3 (first time) दृष्ट्वा मां स तु विष्ठितः; D2.4 मां च दृष्ट्वा समु (D4 स तू)त्थितः (for the post. half). —(l. 8) D13 वै च (for चैव). D4 [अ]भिवंदितः. T2.3 स मया चैव भाषितः (for the post. half). —(l. 9) Ñ2 B3 (second time) D9.13 T2.3 उपविष्टं. V1 D4 च (for तु). —(l. 10) V3 illeg. for the prior half. D9 T2.3 आगमनं (for °म्यते). D9 प्रतिगच्छसि. —V3 om. l. 11. —(l. 11) B2.3 (both times) मया राजन् (for महाराज). —(l. 12) D3 देवतासदः; D9 °सूदन; D13 T2.3 °संसदं (for देवसंसदि). —(l. 13) D2 युष्माकं; D13 युष्मद्भयो (for युष्मत्तो). V1 B3 (second time) संमतः (for संबभौ). —(l. 14) B2 D9 B3 (second time) ततो; D2.4 ननु (for तत्र). B2 D9 transp. रुद्रश् and विष्णुश्. —(l. 15) D8 [इ]व (for second च). —(l. 16) V1 B2.3 (first time) मारुतो. —(l. 17) V2 D1 गरुडो ऋषयोरगाः (metri causa) (for the post. half). —(l. 18) Ñ2 D13 प्रचक्रिरे; V3 B3 (second time) D8 संमंत्रिरे; D2 च मंत्रिरे (for ममन्त्रिरे). D9 T2.3 मंत्रयांचक्रिरे तत्र (for the prior half). T2 चास्य; T3 वास्य (for रक्षः-). Ś V3 D2.4.8 T3 च; D12 T2 T3 वः (for ते). D9 वधार्थं रावणस्य च (for the post. half). —(l. 19) D1 om. from निबद्धश् up to l. 20. D3 [ऽ]भिबद्धश्. Ñ2 V1.2 B2.3 (both times) D9.13 T2.3 तु (for च). V3 illeg.; L (ed.) येन संख्ये (for यमः संख्ये). —V3 om. l. 20. —(l. 20) D8 क्षितौ; T3 एतौ (for जितौ). Ñ2 च; B3 (second time) तौ (for तु). B2 T3 सबले (T3 °लं). T2.3 उभौ (for अपि). —(l. 21) V1 B3 (second time) D2.4 वशे (for वशं). Ñ2 च (for स-). —(l. 22) T2 च (for वि-). D3 येन (for सर्वे). D3 नृपा हताः (by transp.); D4 महानृपाः. D9 T2.3 धर्मिष्ठा बहवो हताः (for the post. half). —(l. 23) D3 (marg.) नीतानि (for भग्नानि). D3 यथेच्छतः. —(l. 26) B3 (second time) प्रत्युवाच; D2 इत्युक्त्वा च (for इत्युवाच). D2 T2.3 सर्व- (for सर्वान्). D9 वै स; D13 सर्व- (for देव-). —Ś2 om. l. 27-30. —(l. 27) D9 T2.3 चिंतयंतु (T3 °यित्वा) (for चिन्तयध्वं). D9 T2.3 रक्षसां रावणस्य च (for the post. half). —(l. 28) V2 वचनं (for वचने). —(l. 29) Ś1 D8.12 सहायत्वं (for मया दत्तं). Ś1 V2 D8.12 देवैर् (for देव-). Ñ2 D13 -दैत्यैस्तु; B2 -देवेंद्र-; D1 -दानव- (for -दैत्यैश्च). V1 B3 (first time) -राक्षसैः. V3 देवै*स्तस्य रक्षसः; B3 (secod time) देवदैत्येंद्ररक्षसां;

पुत्रो दशरथस्यास्तु चतुर्व्यूहः सनातनः ।
भवन्तो वसुधां गत्वा विष्णोरस्य महात्मनः ।
वानराणां तनुं कृत्वा सहायत्वं करिष्यथ । [ 35 ]
एवमुक्त्वा ततो ब्रह्मा तत्रैवान्तरधीयत ।
देवा अपि यथान्यायं जग्मुर्वै यत्र वासवः ।
एतदाख्यातवान्मह्यं नारदो भगवानृषिः ।
यथातत्त्वमशेषेण ततो यातः सुरालयम् ।
सोऽयं विष्णुः सुरैः सार्धं वानरत्वमुपागतैः । [ 40 ]
रामाभिधानो राजेन्द्र अस्मान्हन्तुमुपागतः ।
तन्मह्यं रोचते सीता रामाय प्रतिदीयताम् ।
कुरु मा विग्रहं तेन संधिस्तेनेह रोचताम् ।
त्रैलोक्यं नमते यस्य पूज्यश्च सततं प्रभुः ।
नमस्व रामं राजेन्द्र रक्षस्वात्मानमात्मना ।
योग्यश्च राघवो मित्रं संधिश्चैवोत्तमो भवेत् । [45]
सकामा न च वै देवा भविष्यन्ति निरुद्यमाः ।

Colophon

कुम्भकर्णवचः श्रुत्वा रावणो राक्षसाधिपः ।
तूर्णींभूतश्चिन्तयित्वा ततो वाक्यमुवाच ह ।
कुम्भकर्ण महाप्राज्ञ शृणुष्व वचनं मम ।
कोऽसौ विष्णुरिति ख्यातो यस्मात्त्वं तात बिभ्यसे । [50]
देवत्वे तं न मन्येऽहं तथान्यान्देवदानवान् ।
मानुषत्वं गते तस्मिन्किं भयं त्वामुपस्थितम् ।

---

D9 T2.3 देवताभ्यस्तु रक्षसः (for the post. half). —(l. 30) V3 मनुष्येभ्यो. D9 मर्कटेभ्यश् (for वानरेभ्यश्). —(l. 31) D1 तु (for ऽपि). —(l. 32) D1.4.9 T3 एव (for एष). —D9 om. from त्रिविक्रमः up to चतुर्व्यूहः in l. 33. —(l. 33) B2 [अ]स्य (for [अ]स्तु). V3 B2.3 (both times) D1 चतुर्बाहुः. —After l. 33, D2 ins.:

1* चतुर्धा विभजात्मानं राक्षसान्हन्तुमर्हसि ।

—while D9 T2.3 ins.:

2* मानुषं रूपमास्थाय रावणं शास्तुमर्हति ।

[ D9 हंतुम् (for शास्तुम्). ]

—(l. 34) D9 T2.3 भवंतश्च सुराः सर्वे (for the prior half). —D4 om. (hapl.?) from the post. half up to the prior half of l. 35. —(l. 35) D9 T2.3 तनूः (for तनुं). D9 संभावयितुमर्हथ (for the post. half). —For l. 34–35, D8 subst.:

3* संभवन्तु सहायार्थं विष्णोरस्य महात्मनः ।
भवन्तो वसुधां गत्वा ऋषिऋक्षकुलेषु च ।

—(l. 37) B2 transp. देवा and अपि. Ś D8.13 T2.3 यथान्याय्यं. V3 समेत्य (for जग्मुर्वै). Ś B3 (first time) D8 यत्र स (for वै यत्र). D9 T2.3 प्रतिजग्मुर्यथागतं (for the post. half). —(l. 38) D9 एवम्. D1 सर्वं (for मह्यं). —(l. 39) D9 T2.3 यथावृत्तम्. D9 तदा (for ततो). D13 याति. D1–4 सुरालये. —(l. 40) T2.3 [ऽ]पि (for ऽयं). V2.3 B2.3 (both times) मानुषत्व( V3 illeg. )मुपागतः (for the post. half). —After l. 40, D2 ins.:

4* रघूणां च कुलेऽक्षीबे देवानां हितकाम्यया ।
अजेयः समरे विष्णुर्मृत्युश्चैव सुरद्विषाम् ।

—Ś D2–4.8.12 om. l. 41. —(l. 41) Note hiatus between the two halves. V1 राक्षसेंद्र (hypm.); D1 रक्षेंद्र (for राजेन्द्र). G (ed.) युष्मान् (for अस्मान्). D9 T2.3 transp. अस्मान् and हन्तुम्. —(l. 42) D4 यत्सत्यं (for तन्मह्यं). V3 रामायैव (hypm.) (for रामाय). V2 प्रतिपाद्यतां. Ś B3 (first time) D2.8.9.12 T2.3 राघवाय (Ś B3 D8.12 रामायैव) प्रदीयतां (for the post. half). —(l. 43) D4 स्नेहस् (for संधिस्). V1 B2.3 (second time) [अ]त्र; V2.3 [अ]नु-; B3 (first time) [ए]व (for [इ]ह). D1.13 T2.3 ते तेन (for तेनेह). B3 (first time) रोचते; D2.4 रुच्यतां (for रोचताम्). —(l. 44) Ś D2.4.8.12 त्रैलोक्येन समस्तेन( D2 मया यस्तु; D4 मया नित्यं ); L (ed.) त्रैलोक्ये तु नमस्यस्तु (for the prior half). Ñ2 V1 B2.3 (both times) D9 पूज्यं (for पूज्यश्). Ś D8.12 यः (for च). Ñ2 B3 (first time) D9 प्रभुं; V1 B2.3 (second time) विभुं; V2.3 विभुः (for प्रभुः). T2.3 पूज्यश्चैव ततः प्रभुः (for the post. half). —V2 om. l. 45. —(l. 45) D8 (with hiatus) एवं (for रामं). L (ed.) रक्ष च (for रक्षस्व). —(l. 46) D1 नित्यं; D9 T2.3 मैत्र्ये( D9 °त्रे ) (for मित्रं). Ś D2.4.8.12 स संधिश्च; V1 B2 संधिस्ते च; V2 °स्तेन; D1 संसिद्धिश्च (for संधिश्चैव). —(l. 47) V2 ते (for न). T2 गमिष्यंति (for भविष्यन्ति). B3 (first time) न चोद्यमाः (for निरुद्यमाः).

Colophon: D9 T2 om. —*Kāṇḍa name*: V1 B3 (second time) D2.4.13 लंकाकांडे. —*Sarga name*: Ś Ñ2 V B3 (first time) D1–4.8.12 कुंभकर्णवाक्यं; B2 कुंभकर्णपुरावृत्तकथनं; B3 (second time) पुरावृत्तकथनं; D13 युद्धपर्वणि कुंभकर्णवचनं. —*Sarga no.* (figures, words or both): Ś1 V3 B2.3 (both times) D2.4.8.12.13 om.; Ś2 40; Ñ2 V2 D1.3 41; V1 42; T3 69. —After colophon, D2 concludes with राम.

—(l. 48) Ś B3 (first time) D2.4.8.9.12 राक्षसेश्वरः (for °साधिपः). —(l. 49) D13 तूर्णीं भूत्वा. D9 T2.3 चिरं ध्या( D9 स्थि )त्वा (for चिन्तयित्वा). V B2.3 (second time) ततो वचनमब्रवीत् (for the post. half). —D9 om. l. 50. —(l. 50) Ś V2 D2.4.8.12 कुरुष्व; Ñ2 शृणु च (for शृणुष्व). —(l. 51) Ñ2 V1.3 B2.3 (both times) D2.13 यस्य (for यस्मात्). Ś D8.12 वै बिभेषि च; D1.9 T3 तात बिभ्यसि. —V3 om. l. 52–53. —(l. 52) V1 देवत्वे न नमस्ये तं; B2 देवत्वेन न मंस्येहं; B3 D1.2.9 देवत्वेन न मन्येहं ( D9 नमेये न ); T2.3 देवत्वे न समो येन (for the prior half). T3 यदा (for तथा). Ś D2.4.8.12 य( D2.4 त )थान्ये देवदानवाः; D9 T2 तथान्यैर्देवदानवैः (for the post. half). —(l. 53) B2.3 D2.4 मानुषत्वे.

नित्यमाहारभूतास्तु मानुषाः सुमहाबल ।
खादयित्वा तु तान्पूर्वं कथं पश्चान्नमाम्यहम् । [ 55 ]
प्रणम्य मानुषं रामं सीतां दत्त्वा तु तस्य वै ।
हास्यभूतस्तु लोकानामनुयास्यामि पृष्ठतः ।
राघवं तं महाबाहो दीनरूपोऽथ दासवत् ।
ऋद्धिं तां पश्यमानोऽस्य कथं शक्ष्यामि जीवितुम् ।
हृत्वा तस्य पुरा भार्यां मानं कृत्वा सुदारुणम् । [ 60 ]
प्रणमेद्रावणो राममेष ते बुद्धिनिर्णयः ।
यदि रामः स्वयं विष्णुर्लक्ष्मणोऽपि शतक्रतुः ।
सुग्रीवस्त्र्यम्बकः साक्षात्स्वयं ब्रह्मा तु जाम्बवान् ।
अहो शास्त्राण्यधीतानि यस्य ते बुद्धिरीदृशी ।
अत्यन्तं वैरिणं रामं यो नमस्कर्तुमिच्छसि । [ 65 ]
देवत्वं यः परित्यज्य मानुषीं योनिमास्थितः ।
अस्मान्हन्तुं किलायातः स संधेयः कथं मया ।
यदि वा राघवो विष्णुर्व्यक्तं ते श्रोत्रमागतः ।
देवतानां हितार्थाय प्रविष्टो मानुषीं तनुम् ।
स वानराणां राजानं सुग्रीवं शरणं गतः । [ 70 ]
अहोऽस्य सदृशं सख्यं तिर्यग्योनिगतैः सह ।
वीर्यहीनस्तु किं विष्णुर्यो गतो ऋक्षवानरान् ।
अथ वा वीर्यहीनोऽसौ येन पूर्वं महासुरः ।
वामनं रूपमास्थाय याचितस्त्रिपदक्रमम् ।
बलिस्तु दीक्षितो यज्ञे तेन त्वं सख्यमिच्छसि । [ 75 ]
येन दत्ता मही सर्वा ससागरवनान्तरा ।
उपचारः कृतः पूर्वं स बद्धो यज्ञदीक्षितः ।
उपकारी हतस्तेन सोऽस्मान्नक्षति वैरिणः ।
यदा मे निर्जिता देवाः स्वर्गं गत्वा त्वया सह ।
तदा किं नास्ति विष्णुत्वं तस्य देवस्य राक्षस । [ 80 ]

—$D_{13}$ om. from गते up to मानु- in l. 56. $D_9$ $T_{2.3}$ सम्- ( for त्वाम् ). —( l. 54 ) $B_2$ ते; $D_1$ स्म; $D_3$ च ( for तु ). $V_1$ $B_3$ ( m. also as above ) नित्यं समरभीतास्तु ( for the prior half ). $D_{1.4}$ तु; $D_3$ च; $D_9$ ते; $T_{2.3}$ मे ( for सु- ). $V_{2.3}$ $D_{2-4}$ $T_3$ -महाबलाः . Ś $D_{8.12}$ मानुषाः संति चाबलाः ( for the post. half ). —( l. 55 ) $T_3$ भावयित्वा. Ś$_1$ Ñ$_2$ यः; Ś$_2$ $V_2$ $D_{2.8.12}$ यत्; $D_4$ यं ( for तान् ). $T_{2.3}$ सर्वान्. $D_9$ बिमेमि ( for नमामि ). —( l. 56 ) $B_2$ रूपं ( for रामं ). $D_9$ च ( for तु ). $D_9$ $T_{2.3}$ च ( for वै ). —( l. 57 ) $B_3$ हि; $D_9$ $T_{2.3}$ [ ऽ ]स्मि ( for तु ). —$D_1$ om. from the post. half up to the prior half of l. 59. $B_2$ अनुजानामि. —( l. 58 ) $V_2$ $T_2$ तु ( for तं ). $D_2$ राघवं प्रणमे कस्माद्; $D_9$ राघवं मानुषं नत्वा ( for the prior half ). Ñ$_2$ समुपास्यास्य; $B_3$ दीनरूपो हि. Ś $D_{2.4.8.12}$ ह्युपास्य वै( $D_{2.4}$ तं ); $D_9$ ह्यनाथवत् ( for ऽथ दासवत् ). $T_{2.3}$ दी( $T_3$ ही )नवीर्यपराक्रमं ( for the post. half ). —( l. 59 ) $V_2$ वृद्धिं; $T_{2.3}$ बुद्धिं ( for ऋद्धिं ). V $B_{2.3}$ $D_{3.9.13}$ $T_{2.3}$ च ( for तां ). $D_9$ [ ऽ ]द्य ( for ऽस्य ). Ñ$_2$ परऋद्धिं समालोक्य ( for the prior half ). —( l. 60 ) Ñ$_2$ वैरं; $T_{2.3}$ आगः ( for मानं ). $B_3$ तस्य; $D_1$ धृत्वा ( for कृत्वा ). $D_3$ च ( for सु- ). —( l. 61 ) $D_9$ कृपणो ( for रावणो ). $V_3$ om. ( subm. ) ( for ते ). $D_1$ -निश्चयः ( for -निर्णयः ). Ś $D_{8.12}$ एष बुद्धेर्विपर्ययः; $D_{2.4}$ एष बुद्धिवि( $D_4$ °द्धेश्च )निर्णयः ( for the post. half ). —( l. 62 ) $D_1$ om. ( hapl. ) from the post. half up to the prior half of l. 68. $D_9$ वा; $T_{2.3}$ च ( for ऽपि ). —( l. 63 ) $D_9$ $T_{2.3}$ शंकरः ( for त्र्यम्बकः ). Ś $D_{2.4.8.12}$ च ( for तु ). $D_{3.9}$ $T_{2.3}$ रावणः; $D_8$ राघवः ( for जाम्बवान् ). —( l. 64 ) Ś $V_3$ $D_{2-4.8.12}$ [ अ ]श्रु( $V_3$ $D_8$ [ अ ]ती )तानि ( for [ अ ]धीतानि ). L ( ed. ) तस्य ( for यस्य ). $D_8$ मतिर् ( for बुद्धिर् ). —$T_3$ om. l. 65. —( l. 65 ) Ś Ñ$_2$ $D_{2.8.12}$ $T_2$ अत्यंत-; $D_9$ पश्यंतु ( for अत्यन्तं ). $T_2$ -मानुषं ( for वैरिणं ). V $B_{2.3}$ अतीताश्रमिणं ( $V_3$ °मकं ) रामं ( for the prior half ). Ñ$_2$ $D_{13}$ मित्रं ( for नमस् ). Ś$_2$ $V_{1.3}$ इच्छति; $V_2$ $D_3$ अर्हति( $D_3$ °सि ) ( for इच्छसि ). $D_9$ यो नरं विष्णुमिच्छति ( for the post. half ). —( l. 66 ) $V_2$ परिष्वज्य ( for °त्यज्य ). Ñ$_2$ देवत्वं च परित्यक्तं ( for the prior half ). $B_2$ तनुम् ( for योनिम् ). Ñ$_2$ $V_{1.2}$ $B_2$ $D_{13}$ $T_{2.3}$ आश्रितः ( for आस्थितः ). —( l. 67 ) Ś $D_8$ इह; $B_2$ किम्; $D_{3.9}$ सम्- ( for किल ). —( l. 68 ) $V_3$ $D_{13}$ व्यक्तस् ( for व्यक्तं ). $D_1$ तत् ( for ते ). —$D_4$ om. from श्रोत्र up to सुग्रीवं in l. 70. Ś $D_8$ आगतं. $D_9$ $T_{2.3}$ अस्मान्हंतुमिहा( $D_9$ °तुं समा )गतः ( for the post. half ). —( l. 69 ) $D_3$ देवानां ( subm. ). Ñ$_2$ V $B_{2.3}$ $D_{3.13}$ हितार्थं तु ( for हितार्थाय ). —( l. 70 ) $D_9$ $T_{2.3}$ यो ( for स ). —( l. 71 ) Ś $D_{8.12}$ अस्याहो ( by transp. ); $V_2$ $D_3$ अतोस्य; $D_1$ अहो सु-. Ś $D_{8.12}$ -गणैः ( for -गतैः ). —$V_3$ om. l. 72. —( l. 72 ) $D_9$ वै ( for किं ). $V_1$ $B_3$ $D_{1.3}$ यः श्रितो; $B_2$ श्रितो यः; $D_9$ $T_{2.3}$ आश्रितो ( for यो गतो ). Ś $D_{8.12}$ वृक्ष-; Ñ$_2$ युधि; $D_3$ चर्क्ष- ( for ऋक्ष- ). —( l. 73 ) $D_9$ $T_{2.3}$ अवतीर्य महीं योसौ ( for the prior half ). $D_{13}$ पूर्वं. —( l. 74 ) Ś$_2$ याचितं. Ñ$_2$ त्रिपदक्रमः; V $B_{2.3}$ त्रिपदः पदं; $D_9$ प्रददौ बलिः; $T_{2.3}$ त्रिपदं तदा( $T_3$ °था ) ( for त्रिपदक्रमम् ). —( l. 75 ) $D_9$ दत्त्वा च; $T_{2.3}$ बलिश्च ( for बलिस्तु ). $D_1$ येन; $D_4$ [ ऽ ]नेन ( for यज्ञे ). —$D_4$ om. ( hapl. ) from the post. half up to the prior half of l. 78. $B_3$ येन त्वं; $D_9$ बद्धस्तत् ( for तेन त्वं ). Ñ$_2$ सख्यं त्वम् ( by transp. ). —( l. 76 ) $D_1$ पूर्वं ( for सर्वा ). $D_9$ $T_{2.3}$ तेन व्याप्ता मही कृत्स्ना( $D_9$ सर्वा ) ( for the prior half ). Ś Ñ$_2$ $V_{1.2}$ $D_{8.12}$ -वनाकरा( $V_{1.2}$ °र्णवा ); $D_9$ $T_{2.3}$ -धराधरा ( for -वनान्तरा ). —$D_9$ $T_{2.3}$ om. l. 77. —( l. 77 ) $B_2$ उपकारः. $V_{1.2}$ $D_{3.13}$ उपचारकृता( $D_{13}$ °तं ). Ś $D_{2.8.12}$ सर्वो ( for पूर्वं ). Ñ$_2$ पूर्वं कृतोपकारस्तु ( for the prior half ). $V_3$ प्रबद्धो. Ś $D_{2.8.12}$ बद्धो यज्ञस्य दीक्षितः ( for the post. half ). —( l. 78 ) $D_2$ उपचारी ( for उपकारी ). Ś Ñ$_2$ $D_{8.12.13}$ येन ( for तेन ). $D_9$ वै कथं ( for वैरिणः ). Ś $D_{2.4.8.12}$ य( $D_{2.4}$ सो )स्मान्नः कृतवैरिणः ( for the post. half ). —( l. 79 ) $T_2$ यथा ( for यदा ). $V_3$ $B_2$ ते ( for मे ). Ś $D_{8.12}$ निहताः. $D_9$ लोकाः ( for देवाः ). —( l. 80 ) $D_9$ $T_3$ तदानीं; $T_2$ तथा किं ( for तदा किं ). $D_8$ नास्य.

साम्प्रतं कुत आयातः स विष्णुर्येन बिभ्यसि ।
शरीररक्षणार्थाय ध्रुवं ते वाक्यमीदृशम् ।
नायं क्लीबयितुं कालः कालो योद्धुं निशाचर ।
आयुः पितामहात्प्राप्तं त्रैलोक्यं च वशीकृतम् ।
राघवं प्रणमे कस्माद्धीनवीर्यपराक्रमम् । [85]
गच्छस्व शयनीयाय शेषे च विगतज्वरः ।
शयानं न च हन्यात्त्वां राघवो लक्ष्मणस्तथा ।
अहं रामं वधिष्यामि ससुग्रीवं सलक्ष्मणम् ।
वानरांश्च हनिष्यामि ततो देवान्महारणे ।
विष्णुं चैव वधिष्यामि ये च विष्ण्वनुयायिनः । [90]
गच्छ गच्छ स्वकं क्षेत्रं चिरं जीव सुखी भव ।
भ्रातरं त्वेवमुक्त्वासौ रावणः कालचोदितः ।
सावलेपं सगर्वं च पुनर्वचनमब्रवीत् ।
जानामि सीतां धरणीप्रसूतां
जानामि रामं मधुसूदनं च ।
अहं हि जाने त्वहमस्य वध्य-
स्तेनाहृता मे जनकात्मजैषा । [95]
न कामाच्चैव न क्रोधाद्धरामि जनकात्मजाम् ।
निहतो गन्तुमिच्छामि तद्विष्णोः परमं पदम् ।
रावणस्य वचः श्रुत्वा क्रुद्धस्य परिदेवितम् । [100]
कुम्भकर्णः पुनर्वाक्यं साश्रुपूर्णमभाषत ।

---

$V_3$ om. ( hapl. ) देवस्य. Ñ$_2$ तस्य राक्षसपुंगव ( for the post. half ). —(l. 81) $V_3$ ( with hiatus ) यश्च ; $T_3$ कृत ( for कुत ). Ś $D_{8.12}$ आयाति; $T_3$ °सः ( for आयातः ). $V_{1.2}$ $B_{2.3}$ यस्य ( for येन ). Ñ$_2$ V $B_{2.3}$ $D_{3.13}$ बिभ्यसे; $D_1$ भेष्यसे ( for बिभ्यसि ). —(l. 82) $D_9$ $T_{2.3}$ -रक्षणार्थं त्वं ( for °र्थाय ). Ñ$_2$ $D_{13}$ त्वं ब्रवे; V $B_{2.3}$ $D_1$ ब्रुषे ( $V_3$ कथं ) त्वं; $D_8$ यद्ब्रूषे; $D_9$ $T_{2.3}$ वदसे ( for ध्रुवं ते ). —(l. 83) $B_2$ अलं ( for नायं ). Ś $B_3$ $D_{2.8.12}$ युद्धे ( for योद्धुं ). $D_4$ युद्धकालो; L ( ed. ) कालयुद्धे ( for कालो योद्धुं ). —(l. 84) $V_2$ $B_{2.3}$ स्वाम्यं; $D_9$ राज्यं ( for आयुः ). $D_9$ $T_{2.3}$ निरामयं ( for पितामहात् ). Ñ$_2$ V $B_{2.3}$ $D_{2-4.13}$ वशगं ( Ñ$_2$ $D_4$ च वशे; $V_3$ शरणं; $D_2$ वशवत् ) कृतं; $D_1$ सचराचरं; $D_9$ $T_{2.3}$ वशमागतं ( for च वशीकृतम् ). —(l. 85) $T_{2.3}$ दीन- ( for हीन- ). Ś$_2$ -वीर्यं. —(l. 86) Ñ$_2$ $D_1$ गच्छ त्वं; V $B_{2.3}$ तद्गच्छ ( for गच्छस्व ). V $B_{2.3}$ $D_9$ शयनीयं त्वं ( $D_9$ हि ); $D_4$ शयनार्थाय; $T_{2.3}$ शय निर्याहि ( for °नीयाय ). Ñ$_2$ $D_{13}$ स्वप त्वं ( Ñ$_2$ * ) वि- ; V $B_{2.3}$ पिब त्वं वि- ; $D_1$ सभां वापि; $D_2$ शेष्व त्वं वि- ; $D_3$ शय त्वं वि- ; $D_4$ ( *sup. lin.* also as in Ñ$_2$ ) श्रेष्ठ त्वं वि- ; $D_9$ यथा पूर्वं; $T_{2.3}$ यथा त्वं वि- ; ( for शेषे च वि- ). —(l. 87) Ñ$_2$ $D_2$ च न ( by transp. ); $B_3$ न हि ( for न च ). V $B_2$ $D_{1.3.13}$ शयमानं न. Ñ$_2$ $D_{2.4}$ तदा ( for तथा ). —(l. 88) Ś $B_3$ $D_{3.8.9.12}$ हनिष्यामि ( for वधिष्यामि ). —After the prior half, $D_{12}$ wrongly reads the post. half of l. 89 and the prior half of l. 90, repeating them in their proper place. $V_{1.3}$ $B_{2.3}$ $D_{13}$ सुग्रीवं च ( for ससुग्रीवं ). $V_2$ सुग्रीवं सहलक्ष्मणं ( for the post. half ). —(l. 89) Ś $D_{2.4.8.9.12}$ $T_{2.3}$ वधिष्यामि ( for हनि° ). $V_3$ -बले ( for -रणे ). —(l. 90) $D_9$ वापि ( for चैव ). Ś Ñ$_2$ $D_{1.8.12}$ हनिष्यामि ( for वधि° ). $D_4$ ये विष्णोरनु- . $V_2$ -[ अ ]नुजीविनः ; $V_3$ °***नः ( illeg. ); $T_{2.3}$ -निवासिनः ( for -[ अ ]नुयायिनः ). $D_9$ विष्णुलोकनिवासिनं ( for the post. half ). —(l. 91) V $B_{2.3}$ $D_{13}$ गच्छस्व तत् ( $B_2$ ते ) ( for गच्छ स्वक ). $B_3$ ( *inf. lin.* as above ) क्षिप्रं ( for क्षेत्रं ). $D_1$ स्वतंत्रस्त्वं ; $D_3$ स्वप क्षिप्रं; $D_4$ तु दुर्बुद्धे ( for स्वकं क्षेत्रं ). $D_9$ $T_{2.3}$ गच्छ गच्छस्व रक्षोद्य ( for the prior half ). —$D_4$ om. from the post. half up to the prior half of l. 92. —(l. 92) $T_3$ उक्तो. $D_9$ [ अ ]थ; $T_{2.3}$ हि ( for [ अ ]सौ ). $D_{1-4}$ कालनोदितः ; $D_{13}$ °देशितः ( for कालचोदितः ). —(l. 93) $V_1$ $D_2$ सगर्जं; $V_{2.3}$ $B_2$ च स ( $V_3$ ग )र्वं ( for सगर्वं ). Ś $D_{4.8.12}$ स गर्जन्वै. $D_9$ सावमानं सावलेपं ( for the prior half ). —$D_4$ om. l. 94–97. For l. 94–97, cf. l. 111–114 of App. I ( No. 30 ). —(l. 94) Ñ$_2$ धरणि- ; $V_2$ $D_3$ जनक- ( for धरणी- ). $T_{2.3}$ -सुतां च. $D_9$ च पयोधिजातां ( for धरणीप्रसूतां ). —Ñ$_2$ illeg. from l. 95–97. —(l. 95 ) $T_2$ त्वं ( for च ). Ś $V_{1.3}$ $D_{1-3.8.12.13}$ जानामि रामो मधुसूदनोयं. —(l. 96) $B_{2.3}$ एतद् ; $D_{12}$ अयं ( for अहं ). V $D_{1-3.13}$ वि- ; $T_{2.3}$ तु ( for हि ). Ś $D_{2.8.12}$ वयम्; L ( ed. ) स्वयम् ( for त्वहम् ). $B_2$ अद्य ( for अस्य ). Ś $D_{2.8.12}$ वध्यास्. $D_9$ तच्चापि जानामि यदस्य कार्यं. —(l. 97) $D_9$ तदा ( for तेन ). $D_{13}$ ते ( for मे ). $D_9$ $T_{2.3}$ [ इ ]यं ( for [ ए ]षा ). —(l. 98) Ś $V_3$ $D_{2.3.8.12}$ $T_2$ नैव च; $D_4$ चापि न ( for चैव न ). $T_3$ च कामान्न च ( for कामाच्चैव न ). Ś $D_{4.8.9.12}$ त्यजामि ( for हरामि ). $T_{2.3}$ हृता मे जनकात्मजा ( for the post. half ). —After l. 99, $B_{2.3}$ $D_2$ G ( ed. ) read an addl. colophon :

[ *Kāṇḍa name*: $B_{2.3}$ लंकाकांडे; $D_2$ लंकापर्वणि. —*Sarga name* : $B_{2.3}$ $D_2$ रावणवाक्यं. —*Sarga no.* ( figures, words or both ) : $B_{2.3}$ $D_2$ om.; G ( ed. ) 41. ]

—Ñ$_2$ illeg. for l. 100. —( l. 100 ) $D_9$ $T_{2.3}$ इति ब्रुवाणं तं क्रुद्धं ( $D_9$ क्रुद्धं तु ) ( for the prior half ). $D_1$ -वेष्टितं ( for -देवितम् ). $D_9$ रणे कृतविनिश्चयं; $T_{2.3}$ मरणे कृतनिश्चयं ( for the post. half ). —$B_{2.3}$ $D_9$ om. ( hapl. ); Ñ$_2$ illeg. for l. 101. —( l. 101 ) $V_{1.2}$ शनैर् ( for पुनर् ). $D_1$ साश्रुकंठम्; $T_{2.3}$ सांत्वपूर्वम् ; L ( ed. ) अश्रुपूर्णम्. Ś $D_{8.12}$ साश्रुपूर्णमुखोऽब्रवीत् ( for the post. half ).

## 33

After colophon of 6.51, Ś D2.8.12 ins.:

कुम्भकर्णवचः श्रुत्वा रावणो लोकरावणः ।
गन्तुमैच्छदतिक्रुद्धः सर्वसैन्येन संवृतः ।
संग्राममभिकाङ्क्षन्तं श्रुत्वा तं राक्षसेश्वरम् ।
तत्रोत्थाय ययौ देवी शीघ्रं मन्दोदरी तदा ।
माल्यवन्तं करे गृह्य यूपाक्षसहिता तथा । [5]
मन्त्रिभिर्मन्त्रतत्त्वज्ञैस्तथान्यैर्मन्त्रिसत्तमैः ।
राक्षसैरावृता सर्वैर्वेत्रमुद्गरपाणिभिः ।
योषिद्भिश्चैव वृद्धाभिस्तथा कन्याभिरावृता ।
आयुधव्यग्रहस्तैश्च राक्षसैश्च समन्ततः ।
सभां तु प्रस्थिता देवी यत्रास्ते राक्षसाधिपः । [10]
छत्रेण ध्रियमाणेन अतिकायपुरःसरैः ।
चामरैर्वीज्यमाना च द्युतिमात्रमलंकृतम् ।
राजमार्गं सुविपुलं ध्वजमालोपशोभितम् ।
उत्सारणं प्रकुर्वद्भिर्वेत्रमुद्गरपाणिभिः ।
प्रविश्य च सभां दिव्यां प्रभया द्योतमानया । [15]
द्रष्टुं वै रावणं सा तमपश्यद्गन्तुमुद्यतम् ।
प्राप्तां देवीं तु तां राजा प्रियां मन्दोदरीं तदा ।
दृष्ट्वा ससंभ्रमस्तूर्णं परिष्वज्य दशाननः ।
मन्त्रिणां तु ततस्तेषामासनान्यादिदेश ह ।
सौवर्णानि विचित्राणि सोपधानानि सर्वशः । [20]
स्वासनेषूपविष्टेषु प्रणामान्ते च मन्त्रिषु ।
पर्यङ्के चोपविष्टं तु तदा मन्दोदरीसुतः ।
अतिकायो महाबाहुः पितरं चाभिवाद्य तम् ।
मातरं चाभिवाद्याथ तथासनगतोऽभवत् ।
प्रहस्तवधसंतप्तो महाकायवधार्दितः । [25]
लङ्कायाश्चावमर्देन कषायीकृतलोचनः ।
संग्राममभिकाङ्क्षन्स व्याकुलेनान्तरात्मना ।
अब्रवीद्विविधं चैव महागम्भीरनिस्वनः ।
किमागमनकृत्यं तु देवि शीघ्रं तदुच्यताम् ।
तूर्णं मम समीपं तु किमर्थं त्वमिहागता । [30]
मन्त्रिभिः सहिता किं नु ब्रूहि साध्वि यथातथम् ।
एवमुक्ते तु वचने देवी वचनमब्रवीत् ।
विज्ञाप्यं शृणु राजेन्द्र याचे त्वाहं कृताञ्जलिः ।
नापराधश्च कर्तव्यो वदन्त्या मम मानद ।
श्रुता मे नगरी रुद्धा श्रुता मे राक्षसा हताः । [35]
धूम्राक्षसहिता वीर प्रहस्तसहितास्तथा ।
भवांश्च युद्धकामश्च निर्गन्तुं कृतनिश्चयः ।
इति जानीहि राजेन्द्र ममागमनकारणम् ।
न च युक्तं प्रमुखतः स्थातुं तस्य महात्मनः ।
एकेन येन वै पूर्वं बहवो राक्षसा हताः । [40]
चतुर्दशसहस्राणि जनस्थाननिवासिनाम् ।
खरश्च निहतः संख्ये सोऽयं रामो न मानुषः ।
त्रिशिराश्च कबन्धश्च विराधो दण्डके हतः ।
शरेणैकेन मारीचस्तदा रामो न मानुषः ।
शङ्के चैनं महाराज मारीचस्य वधात्तदा । [45]
पितुश्च वचनाद्रामः प्रविष्टो दण्डकं वनम् ।
ब्रह्मचर्यव्रते युक्तः सह भ्रात्रा वनेचरः ।
तस्य भार्या जनस्थानात्किमानीता पतिव्रता ।
अकारणकृतं तत्ते दोषोऽयं समुपस्थितः ।
पतिव्रतावरोधश्च महान्तं दोषमावहेत् । [50]
न मह्यं रोचते बुद्ध्या न चैषां मन्त्रिणां तथा ।
रामभार्या सती ह्येषा रामाय प्रतिदीयताम् ।
विभीषणेन चैवोक्तं पूर्वमेव महात्मना ।
गतस्तत्रैव रामश्च तद्वाचायं करिष्यति ।
वस्त्राणि चैव रत्नानि प्रेषयाम रघूत्तमे । [55]

---

## 33

[Cf. No. 30. This follows NW tradition with variants and stars and so is given separately.]

(l. 3) D2 रावणं श्रुत्य भामिनी (for the post. half). —(l. 4) D12 ततो (for तत्र). Ś [ आ ]ययौ (for ययौ). D2 नाम्ना and तथा (for शीघ्रं and तदा respy.). —(l. 5) D2 ·कपिं and तदा (for करे and तथा respy.). —(l. 11) Note hiatus between the two halves. D2 -पुरःसरा. —(l. 12) D2.8.12 वीज्यमान( D2 °नै )श्च् (for वीज्यमाना). Ś2 सा (for च). Ś2 D12 अलंकृतां(D12 °तैः) (for अलंकृतम्). D2 वीज्यमाना स्वलंकृतैः (for the post. half). —(l. 13) D2 सीतार्थं मार्ग- (for राजमार्गं सु-). —(l. 15) D2 तु (for च). —(l. 16) D2 तु (for तम्) and मयस्य दुहिता तदा (for the post. half). —(l. 17) D2 ततो (for तु तां). —(l. 18) Ś1 ससंभ्रमात्. —(l. 21) D2 तेष्वासनोप-. Ś1 D2 प्रणामांतेषु (for °मान्ते च). —(l. 22) D2 देवी (for तदा). —(l. 24) D2 [अ]भ्यवाद्य. D2.12 तदा (for तथा). —(l. 28) Ś D8 -निःस्वनः. —(l. 29) D2 ते (for तु). —D12 om. (hapl.) from देवि up to तु in l. 30. —(l. 30) D8 समीपे. —(l. 31) D2.8 तु (for नु). —(l. 32) Ś2 [इ]ति (for तु). —(l. 36) D2 वीराः (for वीर) and प्रहस्तेन सहैव तु (for the post. half). —(l. 38) D8 संचिन्त्य (for जानीहि). —After l. 39, D2 ins.:

1* रामस्य सुमहाभाग यस्य भार्या हृता त्वया ।
रामस्य च ससौमित्रेर्यस्य नास्ति समो युधि ।
न च मानुषमात्रोऽसौ रामो दशरथात्मजः ।

—(l. 41) Ś2 -निवासिनः. —(l. 42) D2 तथा (for सोऽयं). —(l. 43) D2 कथं वध्यो (for कबन्धश्च). —(l. 44) D2 वाली च (for मारीचस्). —(l. 49) D2 दोषाय समुपस्थितं (for the post. half). —(l. 50) D8 दोषमावहते महान् (for the post. half). —(l. 51) D2 तेषां (for चैषां). —(l. 52) D2 प्रिय (for प्रति-). —(l. 54) D8 त्वद्वचोयं. —(l. 56) D8 om. second च (subm.). —(l. 59) D2

सीतां चैव महाराज सुवर्णं वाहनानि च ।
मणिमुक्ताप्रवालं च तथा रजतमेव च ।
माल्यवान्गृह्य संयातु यूपाक्षश्च तथैव च ।
अतिकायस्तथा चायं कार्याकार्यविशारदः ।
विभीषणो गतः पूर्वमेभिस्तव गुणैर्ध्रुवम् । [ 60 ]
संधिं करिष्यति व्यक्तं राघवं प्रणिपत्य हि ।
सामात्यो मैथिलीं चास्मै प्रदास्यति विभीषणः ।
माल्यवांश्च महामायो राक्षसानां हिते रतः ।
राघवं याच्य तरसा संधिं कुर्वन्तु राक्षसाः ।
सान्त्वं भेदस्तथा दानं राज्ञामेतत्त्रयं शुभम् । [ 65 ]
असुखं तु स्मृतं युद्धं तस्माद्युद्धं विवर्जय ।
त्रिभिर्नयैर्जितं तत्र विक्रमेण जितं भवेत् ।
स्वजनस्य क्षयं दृष्ट्वा पुत्रभ्रातृवधं तदा ।
संशयं चात्मनो गत्वा किं जितेन करिष्यसि ।
चञ्चला युद्धसिद्धिस्तु जीयते न च जीयते । [ 70 ]
तस्माद्युद्धं न रोचेत संधिं कुरु दशानन ।
प्रणिपत्य महाबाहो राघवं वै प्रसाद्य च ।
दीयतामद्य सा सीता संधिस्तेनेह रोचताम् ।
साम्प्रतं संशयो राज्ञः पुरस्य सह बान्धवैः ।
आत्मनो राक्षसश्रेष्ठ वर्तते नात्र संशयः । [ 75 ]
मा कृथाः सर्वनाशं तु मा कृथाः पुत्रसंक्षयम् ।
तव सत्यं ब्रवीम्येषा कुरुष्व वचनं मम ।
तस्माद्राजन्ब्रवीम्येषा पुरस्य च कुलस्य च ।
रक्षणीयस्त्वयात्मा वै सर्वमात्मन्यधिष्ठितम् ।
क्षमाशीलस्तथा रामः सत्यवादी च राघवः । [ 80 ]
धर्मनित्यो महाराज शरणागतवत्सलः ।
कुरु तेनादृतः संधिं रामे दशरथात्मजे ।
लक्ष्मणश्च महाधन्वी नित्यं भ्रातृहिते रतः ।
प्रहस्तेन कृतं किंचिद्युद्धं ते राक्षसेश्वर
धूम्राक्षेण च राजेन्द्र नित्यं समरगृध्रिणा । [85]
महाकायेन च तथा महामायेन रक्षसा ।
अकम्पनेन वीरेण युध्यता राक्षसेश्वर ।
तथान्यैर्युध्यमानैश्च किं कृतं वानरे बले ।
न हतो यूथपः कश्चिद्बलोद्देशेऽपि रावण ।
येषां वीर्याद्बिभेतीन्द्रः कुबेरवरुणावपि ।
स च वैवस्वतो येषां तथान्ये देवदानवाः । [90]
येषां नास्ति समो वीर्ये ते हता वानरैर्युधि ।
न चापि वानराः शक्या हन्तुं पादपयोधिनः ।
रक्ष्यमाणास्तु रामेण सुग्रीवेण च पालिताः ।
तत्र ते रोचतां संधिः सह रामेण रावण ।
योग्यश्च राघवो मित्रं कार्तवीर्योऽर्जुनो यथा । [95]
मा कृथा मोघमानित्वं मा कृथाः कुलसंक्षयम् ।
मा कृथा गुरुनाशं च मा कृथाः पुत्रसंक्षयम् ।

Colophon

तस्यास्तु वचनं श्रुत्वा प्रियाया राक्षसेश्वरः ।
दीर्घमुष्णं च निःश्वस्य विलोक्य च सभासदः । [100]
हस्ते मन्दोदरीं गृह्य वाक्यमेतदुवाच ह ।
त्वया वै हितकाङ्क्षिण्या वचो यद्वहु भाषितम् ।
न तन्मनसि मे देवि यत्प्रोक्तोऽहं प्रियं प्रिये ।
देवाञ्जित्वा रणे पूर्वं ससुरासुरमानवान् ।
प्रणमे मानुषं कस्माद्वानरान्यः समाश्रितः । [105]
प्रणम्य रामं काकुत्स्थं किं वक्ष्ये सर्वदेवताः ।
कीदृशं वा भवेन्मह्यं जीवितं हतचेतसः ।
हृत्वा तस्य पुरा भार्यां मानं कृत्वा सुदारुणम् ।
राक्षसान्घातयित्वा तु लङ्कां संपीड्य सर्वतः ।
राघवं प्रणमे कस्माद्धीनवीर्यं इवाचलः । [110]
राघवं वै प्रणम्याहं कथं जीवितुमुत्सहे ।

कार्यः (for चायं). —(l. 60) D$_8$ यातः (for गतः). D$_{8.12}$ ध्रुवन् (for ध्रुवम्). —(l. 61) Ś$_1$ प्रतिपद्य (for प्रणिपत्य). —(l. 62) D$_{12}$ सामात्यौ (for °त्यो). —(l. 63) Ś$_2$ महाकायो (for °मायो). —(l. 64) Ś$_1$ वाच्य (for याच्य). D$_2$ संधिं कुर्वान्तु रावण; D$_{12}$ om. (for the post. half). —(l. 65) D$_2$ भेदं (for भेदस्). D$_8$ तदा (for तथा). D$_2$ श्रुतं (for शुभम्). —(l. 66) D$_{12}$ विसर्जय. —(l. 67) D$_2$ [अ]जितं (for second जितं). —(l. 68) D$_2$ कृत्वा (for दृष्ट्वा). Ś$_2$ D$_2$ तथा (for तदा). —(l. 70) D$_2$ हनते हन्यतेपि च (for the post. half). —(l. 71) D$_{12}$ कुर्वन् (for कुरु). —(l. 72) D$_2$ च (for वै). —(l. 74) D$_2$ राजन् (for राज्ञः) and न पुरस्य सबांधवैः (for the post. half). —(l. 77) D$_2$ सर्वं (for सत्यं). —(l. 78) D$_{2.12}$ [अ]थ (for first च). —(l. 79) D$_2$ तया त्वं (for त्वयात्मा). —(l. 82) Ś$_1$ रामेण सह मंत्रिभिः (for the post. half). —(l. 84) D$_2$ युध्यता राक्षसे बले (for the post. half). —(l. 85) D$_8$ -भीरुणा (for -गृध्रिणा). —(l. 87) Ś$_2$ वीर्येण (for वीरेण). —(l. 89) D$_2$ महतो (for न हतो). —(l. 96) D$_2$ नित्यं (for मित्रं). —(l. 97) D$_2$ मा कृथाः पुरनाशं हि (for the prior half). —After l. 98, D$_{2.12}$ ins. (followed by colophon):

2* सर्वं ब्रवीमि चैवान्ते कुरुष्व वचनं मम ।
[D$_{12}$ सत्यं (for सर्वं).]

[Colophon :—*Kāṇḍa name* : D$_2$ लंकाकांडे. —*Sarga name* : Ś$_1$ D$_{2.8.12}$ मंदोदरीवाक्यं. —*Sarga no.* (figures, words or both): Ś$_1$ D$_{2.8.12}$ om.; Ś$_2$ 42. —After colophon, D$_2$ concludes with राम.]

—(l. 100) D$_2$ उच्छ्वासं दीर्घनिश्वस्य; D$_{12}$ दीर्घमूलं च निश्वास्य (for the prior half). D$_2$ निरीक्ष्य (for विलोक्य). —(l. 102) D$_2$ हि (for वै). —(l. 103) Ś$_2$ तन्न (by transp.); D$_{12}$ नैतं (for न तन्). D$_2$ यथोक्तो (for यत्प्रोक्तो). —(l. 104) D$_2$ देवं (for देवान्). D$_2$ पूर्णं (for पूर्वं). D$_8$ असुर- (for ससुर-). D$_2$ वशं ससुरमानवान् (for the post. half). —(l. 108) D$_2$ कृत्वा (for हृत्वा). —(l. 110) D$_8$ [अ]नलः (for [अ]चलः). —(l. 112)

एष मे सहजो भावो नित्यं मनसि धिष्ठितः ।
अधिरुह्य तदा देवान्न नमेयं तु कस्यचित् ।
त्रैलोक्ये स पुमान्नास्ति यो मया न जितो रणे ।
देवतानां बलं हत्वा देवराजो मया जितः । [ 115 ]
राघवं प्रणमे कस्मात्कृत्ये स्थित्वा हि देहिनाम् ।
मा कृथा हृदि संतापं विजयिष्ये शुचिस्मिते ।
हनिष्ये राघवं चैव लक्ष्मणं च सवानरम् ।
सुग्रीवं च हनिष्यामि हनूमन्तं च वानरम् ।
न तु संधिं करिष्यामि राघवेण कदाचन । [ 120 ]
वैदेहीं नार्पयिष्यामि राघवस्य भयादहम् ।
साम्प्रतं न च संधिं तु करिष्यति स राघवः ।
सागरं तु महत्तीर्त्वा लङ्कां रुद्ध्वा सकाननाम् ।
राक्षसप्रवरान्हत्वा संधिं कुर्यात्कथं प्रिये ।
न त्वहं संधिमिच्छामि कदाचिदपि भामिनि । [ 125 ]
गच्छ त्वं भव विस्रब्धा भवेत्सर्वं सुखोदयम् ।
मा कृथा हृदि संतापमहं यास्ये रणाजिरम् ।
अथ सर्वान्हनिष्यामि शत्रून्समरमूर्धनि ।
पुत्राश्च ते महावीर्या मेघनादपुरोगमाः ।
न तेषां मुच्यते कश्चिदपि मृत्युर्वरानने । [ 130 ]
अन्तःपुराय गच्छ त्वं सुखिनी भव सस्नुषा ।
एवमुक्त्वा परिष्वज्य भार्यां प्रीतमना इव ।
प्रविवेश च सा देवी तदा स्वभवनं शुभम् ।
चिन्तयामास तं घोरं विग्रहं समुपस्थितम् ।
रावणस्तु ततो वाक्यं राक्षसानिदमब्रवीत् । [ 135 ]
कल्प्यतां मे रथः शीघ्रं क्षिप्रमानीयतां धनुः ।
अद्य क्रोधं विमोक्ष्यामि निगूढं हृदयोद्भवम् ।
देवासुरे यथा पूर्वं रुद्रेण निहतोऽन्धकः ।
चिरकालस्थितं ह्येतद्युद्धं मे राघवेण ह ।
अद्य तूणेशया बाणा निर्मुक्ता इव पन्नगाः । [ 140 ]
रामं समभिधावन्तु विषाग्निप्रतिमाः शिताः ।
सुतेजनै रुक्मपुङ्खैरतिधौतैर्हिरण्मयैः ।
सागरं दीपयाम्येष मुक्ताभिरिव कुञ्जरम् ।
वानरान्सुबहून्गृह्य राघवं संप्रवेशितान् ।
मामनुस्मृत्य विक्रान्तान्रामपार्श्वसमागतान् । [ 145 ]

Colophon

अथादाय शितं शूलं शत्रुशोणितरञ्जितम् ।
कुम्भकर्णो महातेजा रावणं वाक्यमब्रवीत् ।
रावणं च समालक्ष्य भ्रातरं कुपितेन्द्रियम् ।

## 34

After 6.55.35$^{cd}$, D3 ins. :

विभीषणो महाप्राज्ञ उवाच रघुनन्दनम् ।
निर्याति स्फुटदशनो दशाननस्य
　　भ्रातायं विपुलवपुर्यतः कनीयान् ।
कुर्वाणश्चरणभराज्जगद्विलोलं
　　प्रान्तेभक्षुभितक* : * कुम्भकर्णः । [ 5 ]
विन्ध्याद्रेरपि विपुलः शरीरबन्धो
　　धीः सूक्ष्मा कुशशिखरादपीष्यतेऽस्य ।
अन्यस्य व्रतसमुपार्जितः प्रतापः
　　संजातः * * सहसायमद्भुतेन ।
एतस्य त्रिजगदिदं तृणं रणाग्रे [ 10 ]
　　स्वप्नत्वात्कुशलममुष्य विष्टपानाम् ।
निःशङ्कं निवसति रावणोऽस्य बाहु-
　　प्राकारव्यवहितशत्रुवाहिनीकः ।
संनद्धः स्वसदशवाहिनीसमग्रः
　　संग्रामे क इव निवेद्यतामयं ते । [ 15 ]
वक्तव्यं किमपरमेहि सावधानः
　　संजातं जगदखिलं तुलाधिरूढम् ।
सुग्रीवः स्वयमभवत्ततः पुरस्ता-
　　दध्यास्त श्वसनसुतः प्रदेशमूलम् ।
संचक्रुर्भयमितरे कथंचिदस्मि- [ 20 ]
　　न्सौमित्री रघुपतिरन्तिके चकार ।
तारेयश्चरणरजोऽङ्घ्रिजैर्दुधाव
　　क्ष्माभृद्भिर्दहनसुतो ममर्द जह्ने ।
तस्यायं खरनखरायुधः सवेगः
　　सामीरिः समरखले समाससाद । [ 25 ]

Ś2 [ अ ]धिष्ठितः ( for धिष्ठितः ). —( l. 113 ) D2 देवी ( for देवान् ). —( l. 116 ) D2 कृत्यं ( for कृत्ये ). D2.12 तु ( for हि ). —( l. 117 ) D2 तं ( for वि- ). —( l. 118 ) D2 लक्ष्मणं वानरांश्च तान् ( for the post. half ). —( l. 119 ) D2 om. first च ( subm. ). D2 वधिष्यामि ( for हनि° ). —( l. 120 ) D2 सहैव तु ( for कदाचन ). —( l. 122 ) D2 करिष्यामि च राघवे ( for the post. half ). —( l. 123 ) D2 बद्धा ( for तीर्त्वा ). —( l. 124 ) D2 कुर्या ( for कुर्यात् ). —( l. 126 ) D2 सर्वमेतत् ( for भवेत्सर्वं ). —( l. 128 ) D2 अद्य ( for अथ ). —( l. 130 ) D8 वर्तेते ( for मुच्यते ). D8 अप- ( for अपि ). —( l. 132 ) D2 प्रियमना. —( l. 133 ) D2 तदा and स्वयं ( for च सा and तदा respy. ). —( l. 136 ) D2.8 कल्पतां. —( l. 137 ) D12 अधि- ( for अद्य ). D2 हृदये ऽभवं. —( l. 139 ) D2 -काले ( for -काल- ). D8 एवं ( for युद्धं ). Ś1 हि ( for ह ). —( l. 141 ) D2 विषाग्निप्रतिभासिताः ( for the post. half ). —( l. 142 ) D2 सुतेजसै and तैर्धौतैर्हि ( for सुतेजनै and अतिधौतैर् respy. ). —( l. 143 ) D2 [ ए ]व ( for [ ए ]ष ). —( l. 144 ) D2 राघवास्तं * देशितान् ( for the post. half ). —( l. 145 ) D2 रामपार्श्वमुपागतान् ( for the post. half ).

[ Colophon : —*Kāṇḍa name* : D2 लंकाकांडे. —*Sarga name* : Ś D2.8.12 रावणवाक्यं. —*Sarga no.* ( figures, words or both ): Ś1 D2.8.12 om.; Ś2 43. —After colophon, D2 concludes with राम. ]
—( l. 148 ) D2 अतीव हि ( for रावणं च ).

—Thereafter, all the above MSS. ( except D2 ) repeat 6.51.28$^{c}$–29$^{b}$, while D2 repeats 28$^{c}$–29.

नीलाद्याः कपिपतयः सहस्रभाज
आसीदप्युदरसमीप एव तस्य ।
सुग्रीवः स्वयमपि संगमोद्धुरत्वा-
द्धित्राणि द्युतिभिरवापदूर्ध्वकायम् ।
नापश्यत्प्रलघुतया बहून्घ्नतोऽपि [ 30 ]
स्पर्शेन स्फुटमवधीत्तु बहूनुपेतान् ।
सोऽङ्घ्रिभ्यां मृद इव पर्यटन्नशेषी-
स्चूर्णत्वं रणचतुरा हरीन्द्रकोटीः ।

## 35

After 6.55.76, $D_{7.10.11}$ $G_1$ K ( ed., within brackets ) ins. :

पीड्यमानस्तदार्थं तु विशेषं तस्य राक्षसः ।
ततश्चुकोप बलवान्सुमित्रानन्दवर्धनः ।
अथास्य कवचं शुभ्रं जाम्बूनदमयं शुभम् ।
प्रच्छादयामास शरैः संध्याभ्रमिव मारुतः ।
नीलाञ्जनचयप्रख्यः शरैः काञ्चनभूषणैः । [ 5 ]
आपीड्यमानः शुशुभे मेघैः सूर्य इवांशुमान् ।
ततः स राक्षसो भीमः सुमित्रानन्दवर्धनम् ।
सावज्ञमेव प्रोवाच वाक्यं मेघौघनिस्वनः ।
अन्तकस्याप्यकष्टेन युधि जेतारमाहवे ।
युध्यता मामभीतेन ख्यापिता वीरता त्वया । [ 10 ]
प्रगृहीतायुधस्येह मृत्योरिव महामृधे ।
तिष्ठन्नप्यग्रतः पूज्यः किमु युद्धप्रदायकः ।
ऐरावतं समारूढो वृतः सर्वामरैः प्रभुः ।
नैव शक्रोऽपि समरे स्थितपूर्वः कदाचन ।
अद्य त्वयाहं सौमित्रे बालेनापि पराक्रमैः । [ 15 ]
तोषितो गन्तुमिच्छामि त्वामनुज्ञाप्य राघवम् ।
यत्तु वीर्यबलोत्साहैस्तोषितोऽहं रणे त्वया ।
राममेवैकमिच्छामि हन्तुं यस्मिन्हते हतम् ।
रामे मयात्र निहते येऽन्ये स्थास्यन्ति संयुगे ।
तानहं योधयिष्यामि स्वबलेन प्रमाथिना । [ 20 ]
इत्युक्तवाक्यं तद्रक्षः प्रोवाच स्तुतिसंहितम् ।
मृधे घोरतरं वाक्यं सौमित्रिः प्रहसन्निव ।
यस्त्वं शक्रादिभिर्देवैरसह्यं प्राप्य पौरुषम् ।
तत्सत्यं नान्यथा वीर दृष्टस्तेऽद्य पराक्रमः ।
एष दाशरथी रामस्तिष्ठत्यद्रिरिवाचलः । [ 25 ]
इति श्रुत्वा ह्यनादृत्य लक्ष्मणं स निशाचरः ।

## 36

After 6.55.91, Ś $\tilde{N}_2$ ( preceded by an addl. colophon ) $B_2$ $D_{2.8.9.12}$ $T_{2.3}$ ( after the first occurrence of 6.55.91 ) ins. ; while $D_1$ ins. after 6.55.74; whereas $D_3$ ins. after 6.55.92 ; K ( ed. ) ins. within brackets after 6.55.98 :

पुरस्ताद्राघवस्यार्थे गदापाणिर्विभीषणः ।
अभिदुद्राव वेगेन भ्राता भ्रातरमाहवे ।
विभीषणं पुरो दृष्ट्वा कुम्भकर्णोऽब्रवीदिदम् ।
प्रहरस्व रणे शीघ्रं क्षत्रधर्मे स्थितो भव ।
भ्रातृस्नेहं परित्यज्य राघवस्य प्रियं कुरु । [5]

---

**35**

( l. 1 ) $D_{10}$ तद् ( for तदा ). $G_1$ K ( ed. ) भिद्यमानस्तदा बाणैर्( K [ ed. ] तैस्तु ) ( for the prior half ). $D_7$ $G_1$ विषेहे ( for विशेषं ). $G_1$ यत. —( l. 2 ) $G_1$ चुक्रोध ( for चुकोप ) and -नंदि- ( for -नन्द- ). —( l. 4 ) $G_1$ प्रचिच्छेद शरैस्तस्य ( for the prior half ). —( l. 5 ) K ( ed. ) -प्रख्यैः . —( l. 6 ) $G_1$ आचीयमानः ; K ( ed. ) आच्छाद्यमानः . —( l. 7 ) $G_1$ वीरः ( for भीमः ) and -नंदि- ( for -नन्द- ). —( l. 8 ) $G_1$ अवज्ञयैव ( for सावज्ञमेव ). $D_7$ K ( ed. ) -निःस्वनः( K [ ed. ]°नं ) ; $G_1$ -निस्वनं. —$D_{11}$ repeats l. 9–10 consecutively. —( l. 9 ) $D_7$ कष्टस्य; $G_1$ रुष्टस्य; K ( ed. ) क्रुद्धस्य ( for [ अ ]कष्टेन ). $G_1$ भयदातारम् ( for युधि जेतारम् ). —( l. 10 ) $G_1$ विभिंदता मां तरसा ( for the prior half ) and विख्याता ( for ख्यापिता ). —( 11 ) $G_1$ [ ए ]व; K ( ed. ) [ इ ]व ( for [ इ ]ह ). —( l. 12 ) $G_1$ तिष्ठतो ( for तिष्ठन् ) and को मे ( for किमु ). —( l. 13 ) $D_7$ $G_1$ ऐरावत- . $G_1$ -गज- ( for सम्- ) and चापि ( for सर्व- ). —( l. 15 ) $D_{11}$ $G_1$ बलेन. —( l. 17 ) $G_1$ सत्त्ववीर्यबलोपेतस् ; K ( ed. ) सत्त्वधैर्यबलौघेन ( for the prior half ). —( l. 18 ) $G_1$ गमिष्यामि ( for [ ए ]कमिच्छामि ). —( l. 19 ) $D_7$ चेन् ( for [ अ ]त्र ). $G_1$ तु निहते वीर ( for मयात्र निहते ) and यदि स्थास्यति ( for येऽन्ये स्थास्यन्ति ). —( l. 20 ) $G_1$ तद् ( for तान् ). —( l. 21 ) $G_1$ -सत्कृतः ( for -संहितम् ). —( l. 22 ) K ( ed. ) इदं ( for मृधे ). $G_1$ रक्षोवरं ( for घोरतरं ). —( l. 23 ) K ( ed. ) प्राह ( for प्राप्य ). $G_1$ असत्यः पापपूरुषः ( for the post. half ). —( l. 24 ) $G_1$ सर्वं ( for सत्यं ). —( l. 25 ) K ( ed. ) [ अ ]परः ( for [ अ ]चलः ). —$D_{11}$ om. ( hapl. ? ) from l. 26 up to 6.55.77[ab].

**36**

Ś $D_{2.8.12}$ om. l. 1. —( l. 1 ) $T_{2.3}$ ततस्तु ( for पुरस्ताद् ). K ( ed. ) गदायुक्तो. —( l. 2 ) Ś $D_{2.8.12}$ रक्षो; $T_2$ त्राता ( for भ्राता ). —( l. 3 ) $D_1$ पुनर् ( for पुरो ). Ś $D_{2.8.12}$ पालनीयं लघुं( $D_8$ तनुं ) स( $D_2$ त )दा ( for the post. half ). —After l. 3, Ś $D_{2.8.12}$ ins. :

1* करुणाक्रोधलज्जाभिर्व्याप्तोऽन्तर्वाक्यमब्रवीत् ।

[ $D_2$ बाष्पांतर् ( for व्याप्तोऽन्तर् ). ]

—( l. 4 ) $B_2$ वने ( for रणे ). $\tilde{N}_2$ $B_2$ $D_9$ क्षात्र- ( for क्षत्र- ). $D_{1.3.9}$ -धर्म- ( for -धर्मे ). K ( ed. ) स्थिरो. Ś $D_{2.3.8.12}$ भवान् ( for भव ). —( l. 6 ) $\tilde{N}_2$ स त्वं; $B_2$ $D_{1.3.9}$ यस्त्वं ( for यत्त्वं ). $B_2$ उपाश्रितः . —( l. 7 ) $\tilde{N}_2$ $B_2$ $D_9$ -[ अ ]नु- ( for -[ अ ]भि- ). $T_{2.3}$ K ( ed. ) —( l. 8 ) $B_2$ $D_{1.3}$ धर्मा( $B_2$ सत्या )भिसक्तानां;

अस्मत्कार्यं कृतं वत्स यस्त्वं राममुपागतः ।
त्वमेको रक्षसां लोके सत्यधर्माभिरक्षिता ।
नास्ति सत्याभिषक्तानां व्यसनं तु कदाचन ।
सन्तानार्थं त्वमेवैकः कुलस्यास्य भविष्यसि ।
राघवस्य प्रसादाच्च रक्षसां राज्यमाप्स्यसि । [ 10 ]
परिहृत्य च दुर्धर्ष शीघ्रं मार्गादपक्रम ।
न स्थातव्यं पुरस्तान्मे संभ्रमान्नष्टचेतसः ।
न वेद्मि संयुगे सक्तः स्वान्परान्वा निशाचर ।
रक्षणीयोऽसि मे वत्स सत्यमेतद्ब्रवीमि ते ।
एवमुक्तो वचस्तेन कुम्भकर्णेन धीमता । [ 15 ]
विभीषणो महाबाहुः कुम्भकर्णमुवाच ह ।
गदितं मे कुलस्यास्य रक्षणार्थमरिंदम ।
न कृतं सर्वरक्षोभिस्ततोऽहं राममागतः ।
तत्क्षन्तव्यं हि भवता सुकृतं दुष्कृतं तु वा ।
एवमुक्त्वाश्रुपूर्णाक्षो गदापाणिर्विभीषणः । [ 20 ]
एकान्तमाश्रितो भूत्वा चिन्तयामास तत्क्षयम् ।

## 37

After 1292*, $M_3$ B (ed.) K (ed.) ( both eds. within brackets ) ins.:

उन्मत्तस्तु तदा दृष्ट्वा गतासुं भ्रातरं रणे ।
चुकोप परमक्रुद्धः प्रलयाग्निसमद्युतिः ।
ततः समादाय गदां स वीरो
  वित्रासयन्वानरसैन्यमुग्रम् ।
दुद्राव वेगेन तु सैन्यमध्ये [ 5 ]
  दहन्यथा वह्निरतिप्रचण्डः ।
आपतन्तं तदा दृष्ट्वा राक्षसं भीमविक्रमम् ।
शैलमादाय दुद्राव गवाक्षः पर्वतोपमः ।
जिघांसू राक्षसं भीमं तं शैलेन महाबलः ।
आपतन्तं तदा दृष्ट्वा उन्मत्तोऽपि महागिरिम् । [ 10 ]
चिच्छेद गदया वीरः शतधा तत्र संयुगे ।
चूर्णीकृतं गिरिं दृष्ट्वा रक्षसा कपिकुञ्जरः ।
विस्मितोऽभून्महाबाहुर्जगर्ज च मुहुर्मुहुः ।
उन्मत्तस्तु सुसंक्रुद्धो ज्वलन्तीं राक्षसोत्तमः ।
गदामादाय वेगेन कपेर्वक्षस्यताडयत् । [ 15 ]
स तया गदया वीरस्ताडितः कपिकुञ्जरः ।
पपात भूमौ निःसंज्ञः सुस्राव रुधिरं बहु ।
पुनः संज्ञामथास्थाय वानरः स समुत्थितः ।
तलेन ताडयामास ततस्तस्य शिरः कपिः ।
तेन प्रताडितो वीरो राक्षसः पर्वतोपमः । [ 20 ]
विस्रस्तदन्तनयनो निपपात महीतले ।
सुस्राव रुधिरं सोष्णं गतासुश्च ततोऽभवत् ।

## 38

After 6.59, $D_{3.5-7.9-11}$ $T_{1.2}$ G M ins.; while Ñ $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ ins. after 6.61; $T_3$ ins. after 6.60.2 :

अतिकायं हतं श्रुत्वा लक्ष्मणेन महात्मना ।
उद्वेगमगमद्राजा वचनं चेदमब्रवीत् ।
धूम्राक्षः परमामर्षी धन्वी शस्त्रभृतां वरः ।

---

धर्मानु( K [ ed. ] °भि )रक्तस्य. Ś $D_{8.12}$ हि (for तु). —(l. 9) $T_{2.3}$ transp. त्वमेवैकः and कुलस्याय. —(l. 10) K (ed.) त्वं (for च). $T_3$ अत्स्यसि (for आप्स्यसि). —(l. 11) Ś $D_{8.12}$ त्वं प्रकृत्यातिदुर्धर्षः; $Ñ_3$ $B_2$ $D_9$ प्रकृत्या क्षांतिदुर्धर्षः; $D_{1-3}$ (with hiatus) प्रकृत्या( $D_1$ °हृत्य ) अपि दुर्धर्षः( $D_1$ °र्षं ); K (ed.) प्रकृत्या मम दुर्धर्ष (for the prior half). $Ś_2$ $Ñ_2$ $B_2$ $D_{1.9}$ अपाक्रम (for अपक्रम). —(l. 12) $B_2$ $T_{2.3}$ संभ्रमावि( $B_2$ °द्दु )ष्ट- . —(l. 13) K (ed.) वेत्तुं (for वेद्मि). $D_9$ शक्तः (for सक्तः). $D_1$ निशाचरान्. —(l. 15) $T_{2.3}$ ततस् (for वचस्). —(l. 16) $Ñ_2$ illeg. from मु up to l. 21. $B_2$ $D_9$ अभाषत; $D_3$ उपावहन् (for उवाच ह). —(l. 17) L (ed.) मंत्रितं (for गदितं). Ś $D_{8.12}$ च (for मे). —(l. 18) $D_1$ श्रुत्वा; $T_{2.3}$ श्रुतं (for कृतं). $B_2$ $D_9$ तेन (for ततो). —(l. 19) $D_1$ भगवता (for हि भवता). Ś $D_{2.8.12}$ कांक्षितव्यं तु भवता; K (ed.) कृतं तु तन्महाभाग (for the prior half). $D_1$ दुःकृतं सुकृतं. Ś $D_8$ न; $B_2$ $D_{9.12}$ नु (for तु). $T_{2.3}$ क्षंतव्यं भवता सर्वं सुकृतं वा तु दुष्कृतं. —After l. 19, $T_{2.3}$ ins. :

2* यत्त्वया विदितं सर्वं सर्वज्ञोऽसि पितुः समः ।

—(l. 20) $T_{2.3}$ गदाहस्तो (for °पाणिर् ). —(l. 21) $T_2$ आस्थितो (for आश्रितो ). $D_1$ शक्तितः ; $D_8$ बुद्धिमान् ; K (ed.) सुस्थितः (for तत्क्षयम्). $T_{2.3}$ चिंतयावनतस्थितः (for the post. half).

—Thereafter $D_1$ reads 93 (first time) and 90°–98.

श्रीराम.

### 37

(l. 10) Note hiatus between the two halves. —(l. 22) K (ed.) चोष्णं (for सोष्णं).

### 38

(l. 1) $D_5$ $G_{1.3}$ $M_3$ महौजसा (for महात्मना). —For l. 1–2, Ñ $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ subst.; while $D_6$ $T_{2.3}$ subst. only l. 2 for l. 2 :

1* अथ सर्वमिदं ज्ञात्वा रावणो लोकरावणः ।
उद्विग्नमानसो राजा सचिवानिदमब्रवीत् ।

[ (l. 2) $D_6$ $T_{2.3}$ समुद्विग्नमना (for उद्विग्नमानसो). ]

—(l. 3) Ñ $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ समर- (for परम-). $Ñ_1$ $D_{3.7.9-11}$ सर्व- (for धन्वी). —(l. 4) $D_{10}$ अतिकंपनः (hypm.). —$T_1$ damaged from स्तथैव च up to l. 8. $T_{2.3}$ (with hiatus) अतिकायो महोदरः (for the post. half). Ñ $V_{1.2}$ $B_{2-4}$ $D_{4.13}$ अकंपनो वज्रदंष्ट्रः प्रहस्तश्च महाबलः. —After l. 4, Ñ $V_{1.2}$ $B_{3.4}$ $D_{13}$ ins. :

अर्धराज्यं प्रदास्यामि कृते कर्मणि राक्षस ।
रावणस्य वचः श्रुत्वा कालनेमीत्युवाच तम् ।
राक्षसेन्द्र ब्रवीम्येतच्छृणु तत्संप्रधारय ।
त्वत्प्रियं च करिष्यामि न प्राणान्धारयाम्यहम् ।
मारीचस्य यथा जातं दण्डके मृगरूपिणः । [ 115 ]
तथैव मे न संदेहो भविष्यति दशानन ।
खरश्च दूषणश्चैव जम्बुमाली च राक्षसः ।
अक्षस्तव सुतो धीमानिन्द्रजिच्च महाबलः ।
कुम्भकर्णात्मजौ द्वौ तु निकुम्भः कुम्भ एव च ।
मकराक्षः खरसुतो दूषणो रणमूर्धनि । [ 120 ]
एते चान्ये च बहवो राक्षसा भीमविक्रमाः ।
अत्रैव निहताः सर्वे वसतस्तव रावण ।
एतान्विघातयित्वा तु पुत्रान्पौत्रांश्च बान्धवान् ।
राज्येन जीवितेनाथ किं करिष्यसि सीतया ।
सीतां प्रयच्छ रामाय राज्यं चैव विभीषणे । [ 125 ]
वनं याहि महाबाहो रम्यं कैलासमेव वा ।
युध्यस्व वा रणे वीर राघवेण महात्मना ।
विदार्यमाणो बाणौघैस्त्रिदिवं गन्तुमर्हसि ।
इति तस्य हितं वाक्यं रावणः कालनेमिनः ।
श्रुत्वा खड्गं विनिर्धूय कोपात्तं हन्तुमुद्यतः । [ 130 ]
संभाष्य रावणं रात्रौ कालनेमीत्युवाच तम् ।
एष गच्छामि राजेन्द्र पन्थानं घोरमद्भुतम् ।
प्रस्थाप्य तं महाराजो रावणो गृहमागतः ।
प्रदध्यौ तत्र संविग्नः कथं कार्यं भवेन्मम ।
कालनेमी च वेगेन ततो हनुमतः पुरा । [ 135 ]

मायया स ऋषिर्भूत्वा तस्मिन्महति कानने ।
आश्रमं कल्पयामास कदलीवनसंकुलम् ।
सालतालतमालाद्यैश्चूतवृक्षैः समन्वितम् ।
वेदाध्ययनसम्पन्नैः शिष्यैः सर्वत्र मण्डितम् ।
चित्राभिर्दीपमालाभिः शोभितं वल्कलैः शुभैः । [ 140 ]
पुष्पोपहारैर्विविधैर्धूपैश्चागरुमिश्रितैः ।
फलैर्मनोहरैः पुष्पैः सर्वं तद्योजनायतम् ।
आज्यधूमाकुलं दीप्तं सर्वप्राकारतोरणम् ।
वैरभावविनिर्मुक्तं शुद्धं निर्मललक्षणम् ।
अस्मिन्महाश्रमे दिव्ये कालनेमी स राक्षसः । [ 145 ]
अग्निहोत्रेण दिव्येन उपवासकृशोदरः ।
जटामण्डलभारेण चीरवल्कलसंवृतः ।
दीर्घश्मश्रुधरो भूत्वा तस्थौ जाप्यपरायणः ।
गृह्याक्षमालां हस्तेन तस्यागमनकाङ्क्षया ।
हनूमानपि तेजस्वी समुल्लङ्घ्य बहून्गिरीन् । [ 150 ]
तमाश्रमं ददर्शाथ स्वस्थो भूतलमण्डनम् ।
तर्कयामास तं दृष्ट्वा कस्यैतद्वनमुत्तमम् ।
वैरभावविनिर्मुक्तमाकर्षति मनो मम ।
किं वा मार्गभ्रमो जातो मम वेगेन गच्छतः ।
क काननं क वै मेरुः क च वै गन्धमादनः । [ 155 ]
क्षीराब्धिः क च वै ह्यत्र कुतो द्रोणगिरिः स्थितः ।
विभ्रमो मम किं ह्यत्र कुतश्च द्रुममण्डलम् ।
प्रागयं दृष्टमार्गस्तु दृश्यते नाश्रमो मया ।
अथवा किं कुतर्केण नमस्कार्यो महामुनिः ।
पीत्वोदकं ह्यस्य गृहे संपृच्छयाद्य व्रजाम्यहम् । [ 160 ]

---

त्वय्यधिष्ठितम्). —$D_{4.9}$ om. l. 100–111. —Note hiatus between the two halves of l. 101, 102 and 108. —(l. 112) $D_9$ कालनेमिरुवाच तं (for the post. half). —(l. 113) $D_4$ तात; $D_9$ तत्त्वं; $T_3$ तत्सु- (for तत्सं-). —(l. 114) $D_4$ प्राणांश्च (for न प्राणान्). —(l. 115) $D_4$ दंडे (for जातं). —(l. 116) $D_4$ तथायं मम देहोपि; $D_9$ तथा भव निःसंदेहो (for the prior half). $D_9$ न कार्यस्ते (for भविष्यति). —(l. 119) $D_4$ तौ तु; $D_9$ द्वौ च (for द्वौ तु). —(l. 120) $D_4$ दुर्धरो; $D_9$ धूम्राक्षो (for दूषणो). —(l. 122) $D_4$ संख्ये पश्यतस् (for सर्वे वसतस्). —(l. 123) $D_4$ वै (for वि-) and [अ]थ (for तु). $D_9$ भ्रातॄंश् (for पौत्रांश्). —(l. 124) $D_{4.9}$ $T_3$ जीवितेनापि ($T_3$ °च). —(l. 126) $D_4$ च (for वा). —(l. 127) $D_4$ *sup. lin.* त्वं (for वा). —(l. 128) $D_4$ दिवं वा (for त्रिदिवं). —(l. 130) $D_9$ रोषात् (for श्रुत्वा). —(l. 131) $D_4$ प्रणम्य (for संभाष्य). $D_9$ प्रहरंतं तु पौलस्त्यं (for the prior half). $D_4$ कालनेम्यभ्युपस्थितः (for the post. half). —(l. 132) $D_4$ (with hiatus) उद्यानं (for पन्थानं). —(l. 133) $D_4$ महातेजा (for °राजो) and आगमत् (for आगतः). —(l. 135) $D_4$ तु (for च). $D_4$ गतो (for ततो) and पुरः (for पुरा). —(l. 136) $D_4$ मायामय- (for मायया स). —(l. 137) $D_9$ आशु वै (for आश्रमं) and -संयुतं (for -संकुलम्). —(l. 138) $D_4$ शाल- (for साल-). $D_9$ तालशाल-. $D_4$ बहुवृक्ष- (for चूतवृक्षैः). —After l. 138, $D_4$ ins.:

6* स्वाहाकारस्वधाकारवषट्कारनिनादितम् ।

—(l. 140) $D_{4.9}$ दीपमालाविचित्राभिः (for the prior half). $D_9$ पवित्रैरुपशोभितं (for the post. half). —(l. 141) $D_9$ बहुभिर् (for विविधैर्). $D_4$ [अ]गुरु-. —(l. 142) $D_4$ पक्वैर् (for पुष्पैः) and वृतं योजनमायतं (for the post. half). —(l. 143) $D_4$ स्वर्णमहा- (for दीप्तं सर्व-). $D_9$ सर्वेषां च मनोहरं (for the post. half). —(l. 144) $D_4$ -[अ]समायुक्तं (for -विनिर्मुक्तं). $D_9$ वैराजादपि निर्मुक्तं (for the prior half). $D_4$ शुद्ध-. —(l. 145) $D_{4.9}$ तस्मिन् (for अस्मिन्). $D_9$ कालनेमिः. $T_3$ च (for स). —Note hiatus between the two halves of l. 146. —For l. 146–149, $D_{4.9}$ subst.:

7* दम्भयोगं समास्थाय चकार शिवपूजनम् ।

[ $D_9$ इंद्रयागं (for दम्भयोगं). ]

—(l. 150) $D_{4.9}$ गिरीन्बहून् (by transp.). —(l. 151) $D_9$ -मंडले (for -मण्डनम्). $D_4$ स्वस्थभूतमुमंडलं (for the post. half). —(l. 152) $D_4$ कस्य चेदमृषेर्गृहं; $D_9$ कस्य चैव मुनेर्वनं; $T_3$ कस्यैतन्महर्षेर्वनं (unmetric) (for the post. half). —(l. 153) $D_{4.9}$ पाप- (for वैर-). —(l. 154) $D_4$ वै (for वा). —$D_4$ om. l. 155–156. —(l. 158) $T_3$ पुरायं (for प्रागयं). $D_9$ [ऽ]स्ति (for तु) and नाश्रमं च कदाचन (for the post. half). $D_4$ न गृहं दृष्टमार्गोस्मि नाश्रमं विद्यते तदा. —(l. 159) $D_9$ $T_3$ नु तर्केण (for कुत°). —(l. 160)

कथयिष्यत्यसौ विप्रो मम मार्गं न संशयः ।
मुनयः कोपशीलाश्च सापराधं शपन्ति हि ।
लक्ष्मणे पतिते वीरे भोजने मम का कथा ।
मुनिं प्रणम्य विप्राङ्यात्पीत्वाम्भः प्रचुरं लघु ।
प्रयास्ये राघवस्यार्थं विहाय फलसंचयम् । [165]
इति कृत्वा मतिं वीरो हनूमांस्तस्य रक्षसः ।
संविवेशाश्रमं रम्यं संक्षिप्य तनुमद्भुताम् ।
अपश्यदाश्रमं रम्यं कदलीषण्डमण्डितम् ।
ऋषिरूपधरं चैव तं चापश्यन्निशाचरम् ।
अभिवाद्य महावीर्यं राक्षसं पवनात्मजः । [170]
उवाच परमप्रीतः प्राञ्जलिर्गौरवेण तम् ।
भगवन्विद्धि मां प्राप्तं हनूमन्तं त्वदाश्रमम् ।
रामकार्येण महता क्षीराब्धिं गन्तुमुद्यतम् ।
तृषा हि बाधते तात उदकं कुत्र विद्यते ।
यथेष्टं पातुमिच्छामि कथयस्व ममानघ । [175]
एवमुक्तो हनुमता कालनेमीत्युवाच तम् ।
कमण्डलुजलं रम्यं मम त्वं पातुमर्हसि ।
भुङ्क्ष्व चेमानि पक्वानि फलानि तदनन्तरम् ।
अत्रैव तिष्ठ स त्वं च निद्रां कुरु मदन्तिके ।
भूतं भव्यं भविष्यच्च वर्तमानं च सर्वतः । [180]
जानामि तपसा सर्वं रामकार्यं विशेषतः ।
रामस्य भार्या वैदेही रावणेन हृता वनात् ।
सीतार्थं सागरो बद्धो वाली च निहतो बलात् ।
रुद्धा च लङ्का रामेण राक्षसा निहता रणे ।
कुम्भकर्णो हतो वीरो मेघनादो निपातितः । [185]
पुत्रशोकाग्नितप्तेन रावणेन बलीयसा ।
निहतो वीर शक्त्या च लक्ष्मणो मयदत्तया ।
तस्य संजीवनार्थाय तवागमनकारणम् ।
त्वं योजनसहस्राणि ह्यागतोऽसि महाजव ।
दूतेन राघवस्याद्य त्वया दृष्टोऽस्मि वानर । [190]
धर्महीना न पश्यन्ति मानवा मां महीतले ।
रामस्यापि मया कार्यं कर्तव्यं करुणात्मना ।
तव मन्त्रान्प्रदास्यामि ह्योषधीः साधयन्ति ते ।
अस्मिन्नेव वने दिव्ये ह्योषध्यः सन्ति जीवदाः ।
पूज्योऽसि मम वत्स त्वं गुणवानतिथिर्यथा । [195]
मम प्रसादाल्लङ्कां च क्षणेनैव गमिष्यसि ।
इति श्रुत्वा वचस्तस्य रक्षसो ब्रह्मरूपिणः ।
तं प्रणम्याह हनुमानत्र स्थातुं मयोचितम् ।
लक्ष्मणे निधनं याते मया किं तात भुज्यते ।
कमण्डलोर्जलेनापि मम तृप्तिर्न जायते । [200]
नदीनदजलं वापि तीर्थं वापि जलाशयम् ।
कथय स्वप्रसादेन पातुमिच्छामि तत्त्वतः ।
सूर्योदये हि मरणं लक्ष्मणस्य महात्मनः ।
इदं हनुमतः श्रुत्वा वचनं रजनीचरः ।
प्रहसन्विस्मितः प्राह याहि दिव्यं सरोवरम् । [205]
ममाश्रमस्य चैतस्य पूर्वस्यां दिशि राजते ।
तस्मिन्सरोवरे पुण्ये पिब वार्यमृतोपमम् ।
एते शिष्या गुणवन्तो दर्शयिष्यन्ति तत्सरः ।
मीलिताक्षेण पातव्यं त्वया तद्वारि वानर ।
ततस्त्वमक्षयो भूत्वा शुभां सिद्धिमवाप्स्यसि । [210]

---

$D_4$ गृहस्थस्य; $T_3$ यस्य गृहे. $T_3$ संपृष्ट्वा. $D_9$ [अ]त्र (for [अ]द्य). $D_4$ संगतेन मनोहरं (for the post. half). —(l. 161) $D_9$ वीरो (for विप्रो). —After l. 161, $D_{4.9}$ ins.:

8* इति संचिन्त्य वेगेन गगनात्पवनात्मजः ।
निपपाताश्रमे तत्र फलानि समलोकयन् ।
अहो फलसमूहं तु न भक्षं मम साम्प्रतम् ।

[(l. 1) $D_9$ जवेन (for गगनात्). —(l. 2) $D_9$ [आ]श्रमं (for [आ]श्रमे) and मूलानि स विलोकयन् (for the post. half). —(l. 3) $D_9$ -समायुक्तं (for -समूहं तु) and मम भक्ष्यं च (for न भक्षं मम).]

—(l. 162) $D_{4.9}$ तापसाः (for मुनयः). $D_4$ च (for हि). —(l. 163) $D_{4.9}$ भोजनं मम वा कथं (for the post. half). —(l. 164) $D_9$ विज्ञाप्य (for विप्राङ्यात्). $D_4$ तस्मात्प्रणम्य पीत्वांभः प्रचुरं शीतलं लघु. —(l. 165) $D_4$ राघवस्याग्रे; $D_9$ रामकार्यार्थं. —(l. 167) $D_4$ स विवेश. $D_9$ [अ]द्भुतं (for [आ]श्रमं). $D_4$ स्वतनुं मतं (for तनुमद्भुताम्). —$D_{4.9}$ om. l. 168–169. —(l. 170) $D_4$ महामार्गे (for °वीर्यं). —(l. 171) $T_{2.3}$ प्रांजलिः. —(l. 173) $D_4$ यातुम् (for गन्तुम्). —(l. 174) Note hiatus between the two halves. $D_4$ मां (for हि). $D_9$ वर्तते (for विद्यते). —(l. 175) $D_9$ यथेच्छं (for यथेष्टं). —(l. 177) $D_4$ पुण्यं (for रम्यं). $D_9$ पातुमर्हसि सुव्रत (for the post. half). —(l. 178) $D_9$ भुक्त्वा (for भुङ्क्ष्व). —(l. 179) $D_4$ निद्रां च सुखं; $D_9$ त्वं वापि निद्रां (for स त्वं च निद्रां). —(l. 181) $T_{2.3}$ तापसः (for तपसा). —(l. 184) $D_4$ तु (for च). —$D_4$ reads l. 185–186 twice. —(l. 185) $D_4$ (second time) लक्ष्मणेन (for कुम्भकर्णो). —(l. 187) $D_4$ लक्ष्मणो निहतो वीर (for the prior half) and शक्त्या च (for लक्ष्मणो). —(l. 188) $D_9$ त्वदागमन-. —(l. 190) $D_4$ मया दृष्टोसि (for त्वया दृष्टोऽस्मि). —(l. 191) $D_4$ च (for मां). —(l. 192) $D_4$ [उ]भयथा (for [अ]पि मया). $D_9$ कर्मणात्मना (for करुणा°). —(l. 193) $D_4$ च (for प्र-). $D_4$ ह्यौषधीः; $D_9$ (with hiatus) औषधीः. —(l. 194) $D_9$ तस्मिन् (for अस्मिन्). $D_4$ ह्योषधि संति जीवनीः (corrupt) (for the post. half). —(l. 198) $D_{4.9}$ मम (for मया). —(l. 200) $D_4$ कमंडलु- (for कमण्डलोर्). —(l. 201) $D_4$ -सरो (for -जलं). —After the prior half of l. 201, $T_2$ erroneously repeats the post. half of l. 200 and the prior half of l. 201. —(l. 202) $D_4$ त्वं; $D_9$ त्वद्- (for स्व-). $D_4$ सत्वर (for तत्त्वतः). —$D_4$ om. l. 204. $T_2$ om. (hapl.) from the post. half of l. 204 up to the prior half of l. 212. —(l. 205) $D_4$ विस्मितं (for °तः). —(l. 206) $D_4$ नैकट्ये (for चैतस्य). $D_4$ भासते (for राजते). —(l. 207) $T_3$ रम्ये (for पुण्ये). —(l. 208) $D_4$ ते सरः; $D_9$ तत्त्वतः (for तत्सरः). —(l. 210) $D_9$ दिव्यां

ओषधयश्चापि वरदाः करिष्यन्ति तव प्रियम् ।
इदं प्रियं वचः श्रुत्वा विषवन्मधुमिश्रितम् ।
हनुमानुत्पपाताशु ततो दिव्यं सरः प्रति ।
स ददर्शाथ तद्दिव्यं सरः सर्वत्र शोभितम् ।
सुवर्णपद्मिनीजालैः कमलैः कुमुदैर्युतम् । [ 215 ]
मत्तभ्रमरसंघुष्टं पुण्डरीकैर्विराजितम् ।
नक्षत्रैर्निशि संपूर्णं शरदीव नभस्तलम् ।
तद्विगाह्य महावेगो हनूमान्पवनात्मजः ।
मीलिताक्षः पपौ तोयं मारुतिर्यूथपाग्रणीः ।
पिबन्तं तं समालक्ष्य ग्राही सा घोररूपिणी । [ 220 ]
ग्रहीतुकामा व्यात्तास्या जग्राह कपिकुञ्जरम् ।
चरणौ गिलितौ वेगात्तया वायुसुतस्य च ।
अधश्चकर्ष सा चोग्रमाचकर्ष च तं पुनः ।
हनूमांश्चिन्तयामास पङ्के मग्नोऽस्मि दारुणे ।
एवं संचिन्त्य वेगेन ह्यधः पुच्छं चकार सः । [ 225 ]
तस्याः पुच्छाग्रभागेन दन्तान्सर्वानपातयत् ।
कण्टकानिति विज्ञाय तीक्ष्णान्पङ्कसमुद्भवान् ।
तीक्ष्णाग्रनखनिर्भिन्ना जिह्वा तस्या द्विधाभवत् ।
ततोऽर्धे गिलिते काये तर्कयामास मारुतिः ।
किं करोमि कथं यामि रामकार्यं कथं भवेत् । [ 230 ]
मृते मय्यत्र सरसि रघुवंशो निपातितः ।
सुग्रीवः सह सैन्येन विनाशमनुयास्यति ।
मृतिं प्राप्स्यति वैदेही मयि पङ्के निमज्जति ।
भवत्वेवं करिष्यामि पौरुषं पण्डितो ह्यहम् ।
ततो हस्तेन संस्पृश्य मुखं तस्याश्च मारुतिः । [ 235 ]
हनूमता तदा ज्ञातं मकरीति न संशयः ।
अनयैवं गृहीते च मयि कार्यं कथं भवेत् ।
उदरेऽस्या निमज्ज्याशु निपतिष्यामि भूतले ।
ततो ह्रस्वं वपुः कृत्वा विविशे वायुनन्दनः ।
अन्धकारसमं घोरमुदरं स महामनाः । [ 240 ]
कुक्षौ प्रविष्टे प्लवगे ग्राही हर्षमुपागता ।
तं गिलन्ती गता मध्यं सरसः संभ्रमान्विता ।
हनूमानपि तेजस्वी तस्याः कुक्षिं गतस्तदा ।
अस्थीनि मांसमन्त्राणि सिराजालानि चिच्छिदे ।
ततः सा वेदनाग्रस्ता ग्राही तोयमथापिबत् । [ 245 ]
भेकनक्रतिमिग्राहभुजंगमसमन्वितम् ।
मुखतो वारि दुर्धर्षमागतं प्रेक्ष्य मारुतिः ।
प्रावृट्काले तु संप्राप्ते पयःपूरमिवोल्बणम् ।
गले निरुद्धे सा ग्राही बभ्राम जलमध्यतः ।
ममोदरे प्रविष्टं तु भक्ष्यमेतत्सुदुर्जयम् । [ 250 ]
मरिष्यामि न संदेहो ह्युदरं स्फुटतीव मे ।
कुक्षिस्थोऽप्युत्पपातोर्ध्वं हनूमान्पवनात्मजः ।
मायापञ्जरसंरुद्धो राजहंसो यथाभवत् ।
भूतलं प्रापिता ग्राही बलेनैव हनूमता ।
भैरवं विनदन्ती सा भूघातैः शिथिलाभवत् । [ 255 ]
नखैस्तां च विदार्याशु निश्चक्राम महाकपिः ।
यथा घनं तमश्चांशुभिर्निर्भिद्य रविमण्डलम् ।
मूलं विपाटयामास ग्राहीं तां हनुमान्क्षितौ ।
यथा वने गजो मत्तो पदा वेणुं करेण च ।
पातिता कपिसिंहेन मकरी सा ममार च । [ 260 ]
तस्याः शोणितवर्णेन रक्तवर्णमभूत्सरः ।
तत्रान्तरेऽपि सा ग्राही दिव्यरूपाभवत्क्षणात् ।

---

( for शुभां ). $T_3$ दिव्यदृष्टिमवाप्स्यसे ( for the post. half ). —( l. 212 ) $D_4$ प्रियवचः. $D_9$ मधुवद्विषमिश्रिते ( for the post. half ).—( l. 214 ) $D_4$ [ आ ]यतं ( for [ अ ]थ तद् ) and पर्वत- ( for सर्वत्र ). —( l. 215 ) $D_4$ कल्हार- ( for कमलैः ). $D_9$ अपि ( for युतम् ). —( l. 216 ) $D_4$ -संयुक्तैः ; $D_9$ -संघुष्टैः ( for -संघुष्टं ). —( l. 217 ) $D_4$ वनस्थलं ( corrupt ); $T_{2.3}$ नभस्थलं. —( l. 218 ) $D_9$ मारुतात्मजः . —( l. 220 ) $D_4$ ग्राहिणी; $D_9$ ग्राह्यसौ ( for ग्राही सा ). —( l. 221 ) $D_4$ $T_2$ व्याला( $T_2$ °प्ता )स्या. —( l. 222 ) $T_{2.3}$ गलितौ. —( l. 223 ) $D_9$ तं शूरम् ( for सा चोग्रम् ) and कपिः ( for पुनः ). $D_4$ च ( with hiatus ) अधः कर्षति ग्राही ऊर्ध्वमाकर्षते कपिः . —( l. 224 ) $D_9$ सागरे ( for दारुणे ). —( l. 225 ) $D_4$ युद्धे; $T_3$ क्रुद्धः ( for ह्यधः ). —( l. 226 ) $D_9$ -पातेन ( for -भागेन ). $D_4$ बभंज तान् ( for अपातयत् ). —( l. 227 ) $D_4$ शंकु- ( for पङ्क- ). —( l. 228 ) $D_4$ तीक्ष्णकंटैर्विनिर्भिन्ना ( for the prior half ). $T_{2.3}$ [ अ ]पतत् ( for [ अ ]भवत् ). —( l. 229 ) $D_4$ ततः कालकृतं कार्यं चिंतयामास मारुतिः. —$D_4$ om. l. 230. —( l. 231 ) $T_3$ हते ( for मृते ). $D_9$ विनाशितः ( for निपातितः ). —( l. 232 ) $D_9$ उप- ( for अनु- ). $D_4$ विमनाश्चानु- ( for विनाशमनु- ). —( l. 233 ) $D_4$ मृत्युं ( for मृतिं ). $D_9$ निमज्जिते ( for °ज्जति ). —( l. 234 ) $D_4$ पौरुषे ( for पौरुषं ). —$D_9$ om. l. 236–240. —( l. 236 ) $D_4$ [ आ ]ज्ञाय ( for ज्ञातं ). —( l. 237 ) $D_4$ मम ( for मयि ). —( l. 238 ) $T_3$ भूतलं ( for भूतले ). —( l. 239 ) $D_4$ विवेश हरि- ( for विविशे वायु- ). —( l. 240 ) $D_4$ अंधकूप- ( for अन्धकार- ). —( l. 241 ) $D_9$ कुक्षिं ( for कुक्षौ ). $D_4$ उपागमत् ( for °गता ). —( l. 242 ) $D_4$ संगिल्य तं; $D_9$ संगिलंती ( for तं गिलन्ती ). —( l. 244 ) $D_4$ ( with hiatus ) अस्थिमांसांत्रमज्जादि चिच्छेद उदरे स्थितः. —( l. 246 ) $D_9$ om. ( hapl. ? ) from ग्राह up to सा in l. 249. $D_4$ वेगेन मज्जतीं ग्राहीं भुजंगसमचेष्टितः . —( l. 247 ) $D_4$ आयांतं ( for आगतं ). —( l. 248 ) $T_2$ पूर्वम् ( for -पूरम् ). $D_4$ [ ओ ]घवत् ( for [ उ ]ल्बणम् ). —After l. 248, $D_4$ ins. :

9* संतोयान्त्राणि तरसा पूरयामास तद्बलम् ।

—( l. 249 ) $D_4$ ग्राही सा ( by transp. ) ( for सा ग्राही ) and संभ्रमाज् ( for बभ्राम ). —( l. 250 ) $D_4$ किं भक्षम् ( for तु भक्ष्यम् ). — ( l. 251 ) $T_3$ हृदयं ( for ह्युदरं ). —( l. 252 ) $D_{4.9}$ हि ( for ऽपि ). —( l. 253 ) $D_4$ बभौ ( for [ अ ]भवत् ). —( l. 256 ) $D_4$ उरो ( for तां च ). —( l. 257 ) $D_{4.9}$ घनं तमो यथा प्राच्यां ( for the prior half ). $D_4$ विभिद्य. —( l. 258 ) $D_4$ मुखतः पाटयामास; $D_9$ मूलं विदारयामास ( for the prior half ). —( l. 259 ) $D_4$ गजं मत्तं ( for गजो मत्तो ). $D_4$ सिंहदंतेन पातितं; $D_9$ सिंहेनेव महाजवः ( for the post. half ). —( l. 260 ) $D_4$ पाटिता. $D_4$ transp. सा and च. —( l. 261 ) $D_{4.9}$ -पूरेण ( for -वर्णेन ). —( l. 262 ) $D_4$

बभूव तनुमध्या सा पीनश्रोणिपयोधरा ।
मृगेक्षणा सुदशना नीलकुञ्चितमूर्धजा ।
द्योतयन्ती दिशः सर्वाः सर्वाभरणभूषिता । [265]
दिव्याम्बरधरा नारी दिव्यस्रग्वस्त्रधारिणी ।
वाति गन्धवहस्तस्याः वासयन्सर्वकाननम् ।
विमानं परमारूढा हनूमन्तमुवाच ह ।
साधु साधु महाबाहो स्वागतं ते महाकपे ।
भवत्प्रसादान्मुक्तास्मि शापाद्घोरान्महामते । [270]
भद्राभियातुमिच्छामि त्रिदिवं पवनात्मज ।
राक्षसस्यास्य विश्वासो न कर्तव्यस्त्वया कपे ।
प्रेषितो रावणेनासौ कालनेमीति राक्षसः ।
महाऋषिवपुर्भूत्वा त्वां हन्तुं द्रुतमागतः ।
अत्राश्रमो न कस्यास्ति मायैषात्र प्रदृश्यते । [275]
एनं जहि महावीर राक्षसं रावणात्मकम् ।
अनेन प्रेषितस्त्वं हि मरणार्थं सरोवरे ।
इहेत्युत्तरतः पश्य क्षीरोदं देवदुर्लभम् ।
तस्मिन्द्रोणगिरिः श्रीमांस्तिष्ठत्योषधिपर्वतः ।
श्रुत्वा तस्या वचो रम्यं हनूमान्विस्मयं ययौ । [280]
तामुवाच महाबाहुः कासि त्वमिति भामिनि ।
कथं जातासि मकरी भव्यरूपा सती जले ।
हनूमतो वचः श्रुत्वा तमुवाचाथ खेचरी ।
शृणु वीर मदीयां त्वं कथामाश्चर्यकारिणीम् ।
मां विजानीह्यप्सरसं विद्युन्मालीति विश्रुताम् । [285]
नृत्येन तोषितो देवो मया वै शंकरः पुरा ।
विमानं तेन मे दत्तं सर्वदा कामगं शुभम् ।
तेनानेन विमानेन सर्वत्र विचराम्यहम् ।
इन्द्रलोके च नृत्यन्ती श्रान्तात्यर्थमहं यतः ।
ततोऽस्मिन्पुण्यसलिले क्रीडार्थं समुपागता । [290]
शाण्डिल्येनाथ दृष्टाहं क्रीडन्ती मुनिना वने ।
मामुवाच ततो विप्रो मदनाकुलचेतनः ।
रतिं मे देहि सुश्रोणि हन्ति मां मदनो यतः ।
तव दृष्टिकृपाणेन मनो मे दारितं क्षणात् ।
अधरामृतपानेन जीवयस्व वराङ्गने । [295]
कामातुरो मयोक्तोऽथ ब्रह्मर्षिस्तपसि स्थितः ।
तपस्यसि किमर्थं त्वं मां कथं याचसेऽनघ ।
विप्रः प्रोवाच सिद्धं मे संप्राप्तं तपसः फलम् ।
त्वं यद्दृष्टासि रम्भोरु तरुणी मम सौख्यदा ।
ध्यात्वा क्षणं मयोक्तोऽथ मुनिस्तस्मिन्महावने । [300]
पुष्पवत्यद्य संजाता न भोग्या तव मानद ।
दिनत्रयं निरीक्षस्व सरस्यस्मिंस्तपोनिधे ।
स्नाताहमागमिष्यामि तव पार्श्वं सुखप्रदा ।
इदं मद्वचनं श्रुत्वा हितमित्येव सोऽब्रवीत् ।
युगत्रयसमं तस्य दिनत्रयमभूत्किल । [305]
तस्मिन्नेव दिने पश्चाद्रावणोऽसौ जगाम ह ।
जित्वा सर्वं जगत्संख्ये पर्वतं गन्धमादनम् ।
तस्य सैन्येन महता गलितो गन्धमादनः ।
शैलो विशीर्णगलितो भग्नशृङ्गमहीरुहः ।
सिंहशार्दूलविहगांस्त्रासयंश्च भुजंगमान् । [310]
ततः प्रदोषे लङ्केशश्चचार गिरिमूर्धनि ।
तत्र वै गायमानाहं दोलारूढा रजस्वला ।

---

ततांबरेपि; D9 ततांतरिक्षे (for तत्रान्तरेऽपि). D9 तदा (for क्षणात्). —(l. 263) T2.3 पीनश्रोणी-. —(l. 265) D4 कांत्या (for सर्वाः). —(l. 266) D4 -अनुलेपना; D9 -गंधधारिणी (for -वस्त्रधारिणी). —(l. 268) D4.9 विमानवरम्. —(l. 270) D4 तव (for भवत्-). D9 [अ]हं (for [अ]स्मि). —(l. 271) D4 पृष्टोसि (for भद्राभि-). —(l. 272) D9 कार्योस्ति महा- (for कर्तव्यस्त्वया). —(l. 274) D4 मायामयऋषिर्भूत्वा (for the prior half). D9 त्वाद्भूतं हंतुम् (for त्वां हन्तुं द्रुतम्). —(l. 275) D9 [अ]पि (for [अ]स्ति). D4 ह्यपि (for [अ]त्र प्र-). —(l. 276) D4 बलाद् (for महा-). D4 T3 रावणात्तु(T3 °त्म)जं. —(l. 277) D4 सरोवरं (for सरोवरे). —(l. 278) D9 T3 इतो हि (for इहेति). D4 द्रुतं हत्वा ततः पश्य (for the prior half) and -निर्मितं (for -दुर्लभम्). —(l. 279) D4 [औ]षधि- (for [ओ]षधि-). —(l. 280) D9 गृह्य (for रम्यं) and विस्मितो जगौ (for विस्मयं ययौ). —(l. 281) D4 महाबुद्धिः (for °बाहुः) and त्वं कस्यासि (for [अ]सि त्वमिति). D4.9 भाविनि (for भामिनि). —After l. 281, D4 ins.:

10* कौतूहलं महज्जातं ममात्र तव दर्शनात् ।

—(l. 282) D4.9 दिव्य- (for भव्य-). —(l. 283) D4.9 हनूमद्वचनं श्रुत्वा (for the prior half). —D9 om. l. 285. —(l. 285) D4 अहं स्वर्गांगना नित्यं मालिन्यप्सरसां वरा. —(l. 287) D4.9 सर्वकाममयं(D9 °गमं) शुभं (for the post. half). —(l. 289) T2 श्रांता (for श्रान्ता). D4 कपे (for यतः). D9 श्रांतात्यंतपरिश्रमात् (for the post. half). —(l. 291) D4 क्रीडंती दृष्टाहं (by transp.). D9 मुनिकानने (for मुनिना वने). —(l. 292) D9 तदा भद्रे (for ततो विप्रो). D4.9 -मानसः (for -चेतनः). —(l. 294) D4 -प्रपातेन (for -कृपाणेन) and प्रभुः (for क्षणात्). —(l. 296) D4 [अ]प्युक्तो (for [उ]क्तोऽथ). T2 एवं कामातुरोक्तोथ (for the prior half). —(l. 297) कथं मां (by transp.). —(l. 298) D9 प्राह च सिद्धिर् (for प्रोवाच सिद्धं). D4 सीदन्स विप्रः प्राहैतत् (for the prior half). —(l. 299) D4 यदीच्छसि (for यद्दृष्टासि). T2.3 तरुणा. D4 सौख्यं मे वचनं वद (for the post. half). —(l. 300) D4 [ऽ]सौ (for ऽथ). —(l. 301) T2.3 [अ]थ (for [अ]द्य). D9 तव भार्याद्य; T2.3 न(T2 सा) भार्या तव (for न भोग्या तव). —(l. 302) D4.9 प्रती(D9 परी)क्षस्व (for निरीक्षस्व). D4 तपोधन; D9 ममानघ (for तपोनिधे). —(l. 303) D4 न संशयः; D9 सुखप्रदं (for सुखप्रदा). —(l. 304) D4 बाढम् (for हितम्). —(l. 306) D4.9 [ऽ]भ्या(D4 ब्या)जगाम (for ऽसौ जगाम). —(l. 307) D4 -संस्थं (for संख्ये). —(l. 308) D4 दलितो (for गलितो). —(l. 309) T3 विस्तीर्ण- (for विशीर्ण-). D4.9 शिला विशीर्णा गलिता भग्नशृंगा महीरुहाः. —(l. 310) D4.9 -मातंगांस्(D4 °गास्) (for -विहगांस्). D4 त्रासिताश्च भुजंगमाः (for the post. half). —(l. 311) D9 प्रदोषं. —(l. 312) D4 तत्रापि गीयमानाहं;

दशग्रीवेण दृष्टाहं स्मरनिर्भिन्नचेतसा ।
मम पार्श्वमुपागम्य दशग्रीवोऽब्रवीद्वचः ।
मृगाक्षि कासि त्वं चात्र क्रीडसे रमणं विना । [315]
एषा चात्र मया सार्धं क्रीडां कुरु सुमध्यमे ।
आवयो रजनी यातु स्मरनिर्भिन्नचेतसोः ।
मृगाक्षि मां समालिङ्ग्य प्राप्स्यसे स्तनयोः फलम् ।
रावणं मां विजानीहि देवदानवसूदनम् ।
दशग्रीववचः श्रुत्वा मया तद्भाषितं पुरा । [320]
ब्राह्मणस्य तु जायां मामद्य जानीहि रावण ।
विशेषतश्च रजसा युताहं राक्षसेश्वर ।
युक्तं न ते महाराज यन्मां प्रार्थयसे रतम् ।
मयैवमुक्तः संप्राह रावणः काममोहितः ।
ब्राह्मणस्येदृशी भार्या कथं भवितुमर्हसि । [325]
देवाङ्गनासि बाले त्वं सर्वलोकस्य संमता ।
पुष्पिण्यपि विशेषेण रोचते मम भामिनि ।
परभार्यापरो भद्रे तद्भवत्यां रमाम्यहम् ।
इत्युक्त्वा केशपाशेषु मां गृहीत्वा जगाम ह ।
बलात्संधर्षिता तेन रावणेन दिनत्रयम् । [330]
रम्ये मनोरमे मासि चैत्रे श्रीगन्धमादने ।
ततो ममाभवत्पुत्रो ह्यतिकायोऽतिविश्रुतः ।
पुत्रं निवेद्य तस्याथ गताहं ब्राह्मणान्तिकम् ।
पत्न्यर्थमागता ब्रह्मंस्तव दातुं महत्सुखम् ।
महर्षे मां भजस्वेह प्राप्तं ते तपसः फलम् । [335]
इत्युक्तः स निरीक्ष्याथ मामुवाच महामुनिः ।
तव यौवनसारस्यं प्राप्तमन्येन वै फलम् ।
तरुणि त्वं तु भुक्तासि प्रतीतानि यतस्ततः ।
चर्वितावधरपत्रासि गजेनेव सरोजिनी ।
वञ्चितोऽस्मि त्वया पापे कुत्सितं ते मनो यतः । [340]
केशेषु च गृहीताशु कामुकेनापकारिणा ।
सरस्यस्मिन्महाघोरा ग्राही भूत्वा वसिष्यसि ।
श्रुत्वा शशाप भगवान्रावणेन प्रधर्षणम् ।
रावणश्च स पुत्रैश्च विनाशमुपयास्यति ।
इति शापे प्रयुक्ते तु मया विप्रोऽथ याचितः । [345]
बलात्संधर्षिता ब्रह्मन्रावणेन दुरात्मना ।
आगो न मे मुनिश्रेष्ठ करुणां त्वं कुरुष्व मे ।
शाण्डिल्येनैव चैवोक्तं सरस्यस्मिन्महाकपिः ।
हनूमान्नामकार्येण यदा त्वां स वधिष्यति ।
तदा त्वमप्सरा भूत्वागमिष्यसि ममान्तिकम् । [350]
इत्युक्त्वा मुनिशार्दूलो ययौ गङ्गातपोवनम् ।
अहमप्यनुयास्यामि शापान्मुक्ता सुरालयम् ।
ततः सा मानिनी रात्रौ तत्रैवान्तरधीयत ।
हनूमानपि तेजस्वी संभ्रमाविष्टचेतनः ।
अगमद्राक्षसाभ्याशं मुनिरूपधरस्य च । [355]
संविग्नः सोऽपि तं प्राह कथं कालव्यतिक्रमः ।
सरोवरे प्रजातस्ते नीतः किं कथयस्व मे ।
जलमेतत्सुखेनाप्तं त्वया वानरपुंगव ।

$D_9$ तत्रापि गीतं गायंती (for the prior half). —(l. 313) $D_9$ [अ]स्मि (for [अ]हं). $D_4$ दृश्य तु (for दृष्टाहं). —$D_9$ om. l. 314. —(l. 315) $D_4$ किं चित्रं; $D_9$ किं वापि (for त्वं चात्र). —(l. 316) $D_4$ एहि; $D_9$ एतां (for एषा). $D_9$ [अ]पि (for [अ]त्र). —(l. 317) $D_4$ रति- (for स्मर-). —(l. 319) $D_9$ -मर्दनं (for -सूदनम्). —(l. 320) $D_4$ [ए]तद् and तदा (for तद् and पुरा respy.). —(l. 321) $D_9$ भार्यां (for जायां). $D_4$ भार्याहं मा च (for जायां मामद्य). —(l. 322) $D_4$ तु रक्षोभिर् (for च रजसा) and अस्पर्शा रतिकर्मणि (for the post. half). $D_9$ रजस्वलां विशेषेण मां जानीहि निशाचर. —(l. 323) $D_9$ ते न (by transp.). $D_4$ रहः; $D_9$ रतिं (for रतम्). —(l. 324) $D_9$ स (for सं-). $D_4$ [इ]त्युक्तेथ मां (for [ए]वमुक्तः सं-). —(l. 325) $D_4$ $T_3$ अर्हति. —(l. 326) $D_9$ त्वं चारु (for बाले त्वं). —(l. 327) $D_{4.9}$ पुष्पवती (for पुष्पिण्यपि). $D_4$ रोचसे. $D_{4.9}$ भाविनि ($D_9$ °नी) (for भामिनि). —(l. 328) $D_9$ वरा (for -परो). $D_4$ [ऽ]स्मीति तस्मात्त्वां सु- (for भद्रे तद्भवत्यां). —(l. 329) $D_{4.9}$ -पाशे मां. $D_{4.9}$ गृहीत्वाथ and सः (for मां गृहीत्वा and ह respy.). —(l. 331) $D_4$ मनोहरे (for °रमे). $D_9$ मासे (for मासि). —(l. 332) $D_4$ इति स्मृतः; $D_9$ इति श्रुतः (for ऽतिविश्रुतः). —(l. 333) $D_4$ [अ]च (for [अ]थ). —(l. 334) $D_{4.9}$ रत्यर्थम् (for पत्न्यर्थम्). $D_4$ कर्तुं (for दातुं). —$D_4$ om. l. 335. —(l. 335) $D_9$ नूनं ते तपसा फलं (for the post. half). —(l. 336) $D_9$ [उ]क्ते (for [उ]क्तः). $D_4$ (m.) ब्राह्मण-स्तामुवाचेदं देवि प्रतारणा कृता. —(l. 337) $D_9$ तत् (for वै). —(l. 338) $D_4$ केन (hypm.) (for तु). $D_9$ उपभुक्तासि तरुणि (for the prior half). $D_4$ खंडितासि; $D_9$ रुजितासि; $T_2$ प्रणीतासि (for प्रतीतानि). —(l. 339) $D_4$ चुंबित-; $T_{2.3}$ चर्चित- (for चर्वित-). —(l. 340) $D_9$ मे (for ते). —(l. 341) $D_4$ गृहीतासि; $D_9$ गृहीत्वा तु. $D_4$ [अ]थ कामिके; $D_9$ [अ]वरोपिता (for [अ]पकारिणा). —(l. 342) $D_4$ तस्माद्ग्राही भविष्यसि (for the post. half). —$D_4$ om. l. 343–344. —(l. 344) $D_9$ सह पुत्रैश्च; $T_3$ च सपुत्रश्च (for च स पुत्रैश्च). —(l. 345) $D_4$ प्रदत्ते; $T_{2.3}$ प्रमुक्ते (for प्रयुक्ते). $D_4$ [ऽ]भि- (for ऽथ). —(l. 347) $D_{4.9}$ इति ज्ञात्वा (for आगो न मे) and शापस्यांतं (for करुणां त्वं). —(l. 348) $D_4$ चोक्तं मे (for चैवोक्तं) and महाकपे (for °कपिः). —(l. 349) $D_{4.9}$ -कार्यार्थं ($D_4$ °र्थे) (for -कार्येण). $D_4$ संभवेष्यति (corrupt) (for स वधिष्यति). —(l. 350) $D_9$ निजालयं (for ममान्तिकम्). $D_4$ स्वर्गं यास्यसि शोभने (for the post. half). —(l. 351) $D_4$ ययौ गंगां तपोधनः (for the post. half). —(l. 353) $D_4$ मालिनी ((for मानिनी). —(l. 354) $D_4$ संभ्रमान्नष्टमानसः (for the post. half). —(l. 355) $D_{4.9}$ रक्षसोभ्यासं ($D_9$ °शं). —(l. 356) $D_{4.9}$ कालनेम्यथ($D_9$ °पि) (for संविग्नः सोऽपि). —$D_9$ om. from the post. half up to the prior half of l. 360. $D_4$ वेला- (for काल-). —(l. 357) $T_3$ [ऽ]त्र (for प्र-). $D_4$ भवतः सरोवरे यातो (hypm.) (for the prior half). $D_4$ नीर; $T_3$ नीतं (for नीतः). —(l. 358)

गृहाण मम मन्त्राणि शिष्यो मे भव पुत्रक ।
मन्त्राण्यधीत्य शिष्येण दातव्या गुरुदक्षिणा । [ 360 ]
उवाच हनुमान्रक्षो गृहाण शुभदक्षिणाम् ।
इत्युक्त्वा रोषताम्राक्षो जघानोरसि राक्षसम् ।
हृदि मुष्टिप्रहारेण वज्रकल्पेन वेगवान् ।
कालनेमी बभूवाथ चतुःशृङ्गः स राक्षसः ।
गुरवे दक्षिणा दत्ता सुभव्या वानराधम । [ 365 ]
इत्युक्त्वा स ययौ रक्षो गृहीत्वा पवनात्मजम् ।
तत्र दन्तैश्चखादाथ कालनेमी रुजन्कपिम् ।
हनूमानपि विक्रम्य सुवेगाद्भुजपञ्जरात् ।
पादयोस्तं गृहीत्वाथ धरणीधरमाविशत् ।
पर्वताग्रे निपीड्याशु हस्ताभ्यां स ममर्द च । [ 370 ]
मर्द्यमानोऽपि विक्रान्तो राक्षसः पक्षिरूपधृक् ।
हनूमता धृतो दोर्भ्यां पतितो धरणीतले ।
पतितस्यापि जग्राह पक्षौ तस्य महाकपिः ।
तत्क्षणादथ रक्षोऽपि सिंहरूपेण चागमत् ।
मारुतिं तं जघानाथ दंष्ट्राभिर्दारयन्गजान् । [ 375 ]
हनूमांश्चिन्तयामास किं करोमीति साम्प्रतम् ।
एनमाशु गृहीत्वाथ पातयिष्यामि राक्षसम् ।
तस्यास्ये ज्वलितं काष्ठं क्षिप्त्वा जग्राह कर्णयोः ।
तरसा पातयामास मुखतः पवनात्मजः ।
ततः सुग्रीवरूपेण कालनेमीत्युवाच तम् । [ 380 ]
वृथा त्वं वानरश्रेष्ठ हन्त कालं विलम्बसे ।
एहि यावोऽधुना वीर उत्थितो लक्ष्मणः स्वयम् ।
भृत्येनाहं त्वया श्लाघ्यो हनुमन्रणकोविद ।
कण्ठे बाहू समासज्य रुरोद च मुहुर्मुहुः ।

हनूमतः कालनेमी वानराधिपसंनिभः ।
हनूमानपि संचिन्त्य मायासुग्रीव इत्ययम् । [ 385 ]
मन्मोहनाय संजातो राक्षसो वानराकृतिः ।
उत्क्षिप्य बाहू तस्याथ तं जघान महाकपिः ।
तलप्रहारघातेन पतितो राक्षसो भुवि ।
त्यक्त्वा सुग्रीवरूपं तद्बभूव रजनीचरः ।
रावणप्रेषितो वीरः कालनेमी निशाचरः । [ 390 ]
रूपं विकुरुते घोरं तदनल्पप्रमाणतः ।
ऊर्ध्वं तु योजनं पञ्च धुन्वन्नूर्ध्वाङ्घ्रिशिरोरुहान् ।
अष्टौ दंष्ट्राः सुतीक्ष्णाग्राः सृक्किणीश्चापि संलिहन् ।
विवृत्तनयनो घोरो मेघस्वनितनिस्वनः । [ 395 ]
अर्धदग्धमलातं तं प्रगृह्याभ्यद्रवत्तदा ।
हनूमानपि दुर्धर्षो दशयोजनमुच्छ्रितम् ।
रूपं कृत्वा सुविपुलं महाकायो महाबलः ।
उत्पत्याकाशमार्गं तु न्यपतत्तस्य चोपरि ।
त्वरितश्चापि वेगेन हनूमांस्तस्य रक्षसः । [ 400 ]
स्कन्धयोश्चरणौ दत्त्वा शिरो जग्राह सत्वरम् ।
हस्ताभ्यां त्रोटयामास ग्रीवामाक्रम्य रक्षसः ।
यथा पद्मवनं नालान्मातंगो मदविह्वलः ।
ततस्तु रक्षोगणकेतुभूतो
मभार तस्यां निशि केतुभूतः । [ 405 ]
वीरो हनूमानपि तं निहत्य
महाजवाद्द्रोणगिरिं जगाम ।

Colophon

---

$D_4$ पीतं and [ अ ]द्य ( for एतत् and [ आ ]सं respy. ). —(l. 359) $D_4$ मंत्रं च ( for मन्त्राणि ). —(l. 360) $D_4$ मंत्रान् ( for मन्त्राणि ). —(l. 361) $D_4$ [ अ ]सुर- ; $D_9$ वर- ( for शुभ- ). —(l. 362) $D_4$ क्रोधरक्ताक्षो. —(l. 363) $D_4$ वीर्यवान् ( for वेगवान् ). —(l. 364) $D_9$ कालनेमिर्. $D_4$ -शीर्षश्च ( for -शृङ्गः स ). —(l. 365) $D_9$ शुभा वानरनायक ( for the post. half ). —(l. 366) $D_4$ रुषा ( for ययौ ). —(l. 367) $D_4$ तुदन् ( for रुजन् ). —(l. 368) $D_9$ तेजस्वी ( for विक्रम्य ). —(l. 369) $D_{4.9}$ संगृहीत्वा. $D_4$ आरुहत् ( for आविशत् ). —(l. 370) $D_9$ कराभ्यां ( for हस्ताभ्यां ). $D_4$ स्वहस्ताभ्यां ममर्द सः ( for the post. half ). —(l. 371) $D_9$ [ ऽ ]थ ( for ऽपि ). $D_4$ मृष्टमानोपि निःक्रांतो ( for the prior half ). $T_2$ -रूपधृत्. —(l. 372) $T_2$ हनूमतो. —(l. 373) $D_9$ भुजौ ( for पक्षौ ). $D_4$ स च ( for तस्य ). —(l. 374) $D_4$ ततः क्षणाच्च रक्षोथ ( for the prior half ). —(l. 375) $D_4$ च; $D_9$ तु ( for तं ). $D_4$ वक्षसा जवात्; $D_9$ भीषयन्गजान् ( for दारयन्गजान् ). —(l. 376) $T_3$ मारुतिश्. $D_4$ [ इ ]ह ( for [ इ ]ति ). —(l. 377) $D_4$ बलाद्; $D_9$ कथं ( for आशु ). $D_4$ [ आ ]शु; $D_9$ तु ( for [ अ ]थ ). —(l. 379) $D_4$ तं बलात् ( for तरसा ). —(l. 380) $D_9$ सुग्रीवरूपेण पुनः कालनेमिरुवाच तं. —(l. 382) Note hiatus between the two halves. $D_{4.9}$ माम ( $D_9$ यामो )धुना. $D_4$ काले; $D_9$ कालाद् ( for वीर ). $D_9$ उत्तिष्ठन् ( for उत्थितो ). —(l. 383) $T_3$ -कोविदः . —(l. 384) $D_9$ इति ( for कण्ठे ). $D_{4.9}$ बाहुं. $D_4$ स ( for च ). —(l. 385) $D_9$ कालनेमिर्. $D_4$ वानरो रण- ( for वानराधिप- ). —$D_4$ om. l. 386. —(l. 386) $D_9$ [ अ ]पि ( for [ अ ]यम् ). —(l. 387) $D_4$ मम मोहाय ( for मन्मोहनाय ). —(l. 388) $D_4$ बाहुं ( for बाहू ). —After the prior half of l. 389, $D_4$ ins.:

11* हृदये कालनेमिनम् ।
तेन तलप्रहारेण.

—(l. 390) $D_4$ तु ( for तद् ). —$D_{4.9}$ om. l. 391-399. —(l. 395) $T_3$ -स्तनित- ( for -स्वनित- ). —(l. 400) $D_{4.9}$ पति( $D_9$ त्वरि )तेस्य ( for त्वरितश्च ). —(l. 401) $D_4$ सत्वरः. —(l. 402) $D_9$ पोथयामास. $D_4$ कूजतः ; $D_9$ कूटजं ( for रक्षसः ). —(l. 403) $D_9$ पद्मानन; $T_3$ पद्मवने. $D_4$ यथा पद्मं जले नालं ( for the prior half ). $D_9$ मतंगो. —(l. 404) $D_4$ स ( for तु ) and -हेतु- ( for -केतु- ). —(l. 405) $D_4$ कूजमानः ( for केतुभूतः ). —(l. 406) $D_9$ निपात्य ( for निहत्य ). —(l. 407) $D_4$ महाजवो.

Colophon. —*Kāṇḍa name* : $D_4$ लंका°. —*Sarga name* : $D_4$ कालनेमिवधः . —*Sarga no.* ( figures, words or both ) : $D_4$ om. ; $D_9$ 80 ; $T_2$ 106 ; $T_3$ 110.

क्षीराब्धिमध्ये स ददर्श भूधरं
विराजमानं नभसीव भास्करम् ।
स च प्रहृष्टः पवनात्मजस्तदा [ 410 ]
विलोक्य तं सानुषु धातुभिर्युतम् ।
आरुह्य तस्याद्भुतशृङ्गमेव
चचार चामीकरचारुभूषु ।
दवाग्निनावेष्टितदीपितो ह्यसौ
वितर्कयत्काननचारणः कपिः । [ 415 ]
अग्निर्भृशं तापकरस्तु देहिना-
माह्लादयत्येष हि मे मनः कथम् ।
इमाश्च दिव्यौषधिवल्लरीर्यथा
लतास्तथा हेममया भवन्ति ।
हिरण्यवर्णा रससाररेणवो [ 420 ]
विभान्ति नक्षत्रगणानुकारिणः ।
यथा च संख्ये निजवृत्तिसंस्थिता
विशुद्धभावाः खलु नाकगामिनः ।
ज्वलन्ति मार्गेषु चलन्ति रश्मयः
स्फुरन्ति सौगन्ध्यगुणं किरन्ति च । [ 425 ]
समागतं मां खलु वीक्ष्य चार्थिनं
सिद्धिं गता देवमहौषधीगणाः ।
ततो महात्मा पवनात्मजस्तदा
निशामयामास महौषधीश्च ताः ।
विचिन्वतस्तस्य ततश्च ताः शुभाः [ 430 ]
अदृश्यतां जग्मुरनन्तशक्तयः ।
विसिष्मिये वासवदूतनन्दनो
वनं विलोक्याथ जगाम चोत्सुकम् ।
ततः संप्रार्थयामास हनूमान्देवतागणान् ।
मम सिद्धिं प्रयच्छन्तु महौषध्यादयो वराः । [ 435 ]
भो शैलराज मद्वाक्यं शृणु देव सुखप्रद ।
रामकार्यस्य सिद्ध्यर्थं प्रयच्छ मम चौषधीः ।
मृतसंजीवनि श्रेष्ठे सौवर्ण्यकरणि शृणु ।
विशल्यकरणि ख्याते मातर्मे देहि दर्शनम् ।
विलीनाः पर्वतोद्देशे तेजः संछाद्य चात्मनः । [ 440 ]
ततः क्रोधादिदं वाक्यं भूधरं प्राह मारुतिः ।
न दया न च दाक्षिण्यं तव पाषाणरूपिणः ।
नखाग्रैस्त्वां खनित्वाहं पातयिष्यामि सागरे ।
इत्युक्त्वा चेष्टयामास पुच्छेन धरणीधरम् ।
वेष्टय चोत्पाटयामास तच्छृङ्गं लीलया कपिः । [ 445 ]
पुच्छेनावेष्ट्य दोर्भ्यां च गृहीत्वौषधिपर्वतम् ।
ननाद हनुमांस्तत्र समुद्र इव पर्वणि ।
तेन शब्देन महता गन्धर्वाः शस्त्रपाणयः ।
अनुजग्मुः सुसंरब्धा योद्धुकामास्तु मारुतिम् ।
कस्त्वं वानररूपेण संप्राप्तो निशि दारुणे । [ 450 ]
गन्धर्वाणां वचः श्रुत्वा हनूमान्वाक्यमब्रवीत् ।
श्रुता वा यदि किष्किन्धा जम्बूद्वीपसमाश्रया ।
वानराधिपतिस्तत्र सुग्रीवो नाम विश्रुतः ।
मित्रकार्यार्थमुद्युक्तो रावणेनाथ निग्रहे ।
मित्रभ्राता राक्षसेन शक्त्या च विनिपातितः । [ 455 ]
तदर्थं संप्रयातोऽहमोषधिं प्रति पर्वतम् ।
विशल्यकरणीं नाम जानेऽहं प्रथमौषधीम् ।
विघ्नो मेऽत्र न कर्तव्यः प्रसादं कर्तुमर्हथ ।
अहं वानरराजस्य भृत्यस्तस्य गुणैर्वृतः ।
हनूमानिति विख्यातस्तदर्थं प्रार्थयामि वः । [ 460 ]
हनूमतो वचः श्रुत्वा गन्धर्वास्ते महाबलाः ।
विचित्रकवचाः सर्वे नानाप्रहरणोद्यताः ।
कोलाहलं प्रकुर्वन्तः सायकैः समभिद्रवन् ।
ततो नानायुधैः सर्वे ते जघ्नुर्मारुतात्मजम् ।
हन्यमानः सुबहुभिरुत्पपातोर्ध्वमञ्जसा । [ 465 ]

—(l. 410) $D_4$ लेभे प्रहर्षं (for स च प्रहृष्टः). —(l. 411) $D_4$ तत् (for तं). —(l. 412) $D_4$ एवं; $D_9$ एकं (for एव). —(l. 413) $D_{4.9}$ -चारुभूषितं ($D_9$ °षणं). —(l. 414) $D_{4.9}$ $T_3$ दावाग्निना. $D_4$ किंत्विह दीपितोसौ; $D_9$ विरिमतविष्टितो ह्यसौ. —(l. 415) $D_4$ आकुलचेतसा; $D_9$ आप्त स चारुणः (corrupt) (for काननचारणः). —(l. 418) $D_4$ -मंजरिर्भृशं (for -वल्लरीर्यथा). —(l. 419) $D_9$ विभांति (for भवन्ति). $D_4$ लतास्तथा क्षेमकृते विभांति च. —$D_9$ om. l. 420–423. —(l. 420) $D_4$ सरलासवेन वा (for रससाररेणवो). —(l. 421) $T_3$ विभांति (for निभान्ति) and [अ]नुसारिणः (for °कारिणः). $D_4$ विभांति नक्षत्रगणेन चंद्रमाः. —(l. 422) $D_4$ ते (for संख्ये). —(l. 423) $D_4$ विशुद्धमानाः. —(l. 424) $D_9$ चरंति (for चलन्ति). —(l. 425) $D_{4.9}$ सौगंधिगुणं. $D_9$ om. च. —(l. 428) $T_3$ तथा (for तदा). —(l. 429) $D_4$ विचेष्टयामास (for निशामयामास). —(l. 430) $D_4$ वचैव (for ततश्च). $D_9$ च ताः शुभा लताः (for ततश्च ताः शुभाः). —(l. 431) $D_{4.9}$ अथो हि सिद्धयः (for अनन्तशक्तयः). —(l. 432) $D_9$ om. -दूत-. —(l. 433) $D_4$ जगाद (for जगाम). $D_{4.9}$ सो($D_9$ चो)-त्सुकः. —(l. 434) $D_4$ -गुणः (for -गणान्). —(l. 435) $D_{4.9}$ दिव्यौषध्यो दया($D_9$ °ध्यो यथा)पराः (for the post. half). —(l. 436) $D_{4.9}$ सुखप्रदं($D_9$ °दाः). —(l. 437) $D_9$ $T_3$ राज($T_3$ °म)कार्यार्थे- (for रामकार्यस्य). $D_4$ चौषधिं. $T_3$ प्रयच्छतु महौषधीः (for the post. half). —(l. 438) $T_3$ -संजीवनी. $T_{2.3}$ सौवर्ण($T_2$ °र्ण्य)करणी शुभे (for the post. half). —(l. 439) $T_{2.3}$ -करणी (for -करणि). —For l. 438–439, $D_4$ subst.:

12* मृतसंजीवनीं चेष्टां सौवर्णकरणीं तथा ।
विशल्यकरणीं चैव संधिनीं देहि मे गिरे ।

—Thereafter $D_4$ cont.:

13* करुणं वदतस्तस्य ददुस्तास्तस्य दर्शनम् ।

—(l. 440) $D_9$ पर्वतोद्देशात् (for °द्देशे) and संवार्य (for संछाद्य). —(l. 443) $D_{4.9}$ नखैस्त्वं (for नखाग्रैस्त्वां). —(l. 445) $D_4$ शतयोजनं; $D_9$ पर्वतस्य तत् (for लीलया कपिः). —(l. 449) $D_4$ समाजग्मुः (for अनु°). —$D_{4.9}$ om. l. 450–463. —(l. 457) $T_3$ प्रथमौषधिं. —(l. 464) $D_4$ -[आ]युधैर्जघ्नुर्; $D_9$ -विधैः शस्त्रैस् (for -[आ]युधैः सर्वे). $D_4$ गंधर्वास्तत्र मारुतिं (for the post. half). —(l. 465) $D_4$ स (for सु-).

ततश्च हनूमांस्तूर्णं रूपं कृत्वा सुदारुणम् ।
गन्धर्वान्हन्तुमारेभे नखदंष्ट्रायुधो हरिः ।
गन्धर्वैर्हनुमान्कस्त्वं त्यक्त्वा गच्छ महीधरम् ।
नो चेत्प्राणान्परित्यज्य स्वर्गं यास्यसि संयुगे ।
इत्युक्तो हनूमांस्तैस्तु पद्भ्यां तान्निजघान सः । [470]
बद्ध्वा पुच्छेन दीर्घेण गन्धर्वान्पर्वतोपमान् ।
हनूमान्भ्रामयामास गरुडः पन्नगानिव ।
केचिन्निपतिता भूमौ केचित्सान्द्रद्रुमेषु च ।
लाङ्गूलेन हताः केचित्केचिद्दन्तैर्विदारिताः ।
मुहूर्तेन हताः सर्वे गन्धर्वा युद्धदुर्मदाः । [475]
तिस्रः कोट्यो हतास्तत्र गन्धर्वाणां महात्मनाम् ।
शिष्टास्तं प्रणताः प्रोचुर्गन्धर्वा गगनान्तरे ।
गच्छ वीर महासत्त्व पन्थानः सन्तु ते शिवाः ।
केनापि न कृतं वीर कर्म त्वं च करिष्यसि ।
बाहुभ्यां धार्यते वीर पर्वतः शतयोजनः । [480]
ततस्तेनैव संत्यक्ता गन्धर्वा मानसं ययुः ।
स्तुवन्तस्तस्य कर्माणि खेचराश्च परस्परम् ।
हनूमानपि तेजस्वी वेगेन गगनं ययौ ।
पुनस्तेनैव मार्गेण पश्यन्नेव महीधरान् ।
तस्यामेव रजन्यां तु भरतः केकयीसुतः । [485]
स्वप्ने रामं ददर्शाथ तैलाभ्यक्तं तपस्विनम् ।
पङ्के निमग्नं दुःखार्तं रोदमानं मुहुर्मुहुः ।
तरसा चरमाणं तं ददर्श भरतस्तदा ।
जले विलुप्तमात्मानं केशहीनं यथाकुलम् ।
दृष्ट्वा प्रबुद्धः स्वप्नान्ते निशान्ते दुःखितोऽभवत् । [491]
निर्गत्य भरतस्तत्र गगनं समलोकयत् ।
गगनस्थानि भूतानि भ्रमन्ति निपतन्ति च ।
शिवा घोरा रुदन्ति स्म सृगालाश्च निपातिताः ।
रूक्षा वाता भृशं वान्ति रजो व्याप्ता दिशो दश ।
इति दृष्ट्वा निमित्तानि भरतश्चिन्तयान्वितः । [495]
किं नु रामस्य कुशलं लक्ष्मणस्य महामतेः ।
सीतायाश्चापि कुशलं कथं वै दण्डकावने ।
एभिर्निमित्तैः पृथ्वीशः पतितो हि न संशयः ।
राजा सर्वत्र रामश्च तस्याहं किंकरः सदा ।
कच्चिदार्यस्य व्यसनं पर्याप्तं दण्डकावने । [500]
किं वा प्राणान्परित्यज्य गतो हि यमसादनम् ।
चतुर्दशसमाः पूर्णा दण्डके परिसर्पतः ।
प्रवृत्तिरपि रामस्य न कच्चिच्छ्रूयतेऽधुना ।
तीर्थायनतपोयज्ञव्रतपूजासु किं च यत् ।
मया हि यत्कृतं पुण्यं तेन रामोऽद्य जीवतु । [505]
आहूय ब्राह्मणान्पूज्यान्कारयामास शान्तिकम् ।
रामस्नेहेन भरतो रुरोद निशि निर्भरम् ।

$D_9$ ततो हेतिभिर् (for उत्पपातोर्ध्वम्). —$D_{4.9}$ om. l. 466–467. —(l. 468) $D_{4.9}$ उक्तस् (for कस्त्वं). —(l. 469) $T_3$ प्राप्स्यसि (for यास्यसि). $D_{4.9}$ पतिष्यसि महार्णवे ($D_9$ °र्णे) (for the post. half). —(l. 470) $D_4$ विजघान. $T_3$ ह (for सः). —(l. 473) $D_4$ $T_2$ निपातिता. $D_4$ चांद्र-; $D_9$ पेतुर् (for सान्द्र-). —$D_9$ om. l. 474–475. —(l. 474) $D_4$ केचिद्विशीर्णा भग्नाश्च केचिन्नष्टा यतस्ततः. —$D_4$ om. l. 475–476. —(l. 477) $D_{4.9}$ प्रणतास्ते ($D_9$ °स्तु) हरिं प्रोचुर् (for the prior half). —(l. 478) $D_9$ निर्भयाः (for ते शिवाः). —(l. 479) $D_4$ कर्मेदं न करिष्यति (for the post. half). —(l. 480) $D_4$ पुत्र (for वीर). —(l. 481) $D_4$ च समं (for मानसं). —After l. 481, $D_9$ ins.:

14* एवं सुतबलं दृष्ट्वा प्रहृष्टः पवनो गतः ।
प्रणिपत्य ततो मूर्ध्ना हनूमानिदमब्रवीत् ।
किमागतोऽसि देवेश जगत्प्राण प्रजेश्वर ।
श्रुत्वा हनूमतो वाक्यं वायुः पुत्रमथाब्रवीत् ।
तुष्टोऽस्मि तव पुत्रस्य दृष्ट्वा दिव्यपराक्रमम् । [5]
शृणुष्व मम वाक्यं च येन जीवति लक्ष्मणः ।
मुहूर्तं धारयेस्त्वेवं यावदागमनं मम ।
पित्राज्ञया व्यतिष्ठत्स मुहूर्तं हरिसत्तमः ।
गतो वै पवनो देवः क्षीरो * * * * त्तमम् ।
पद्मपत्रे पुटीं कृत्वा क्षीरोदपय उत्तमम् । [10]
आदाय दत्तं हनुमानगृह्णात्पय उत्तमम् ।
इत्युक्त्वासौ गतो वायुः पयो दत्वा हनूमति ।
लक्ष्मणाय प्रदातव्या औषधी क्षीरमाश्रिता ।
पितुराज्ञां समाकर्ण्य प्रणम्य पितरं तथा ।
गिरेरादाय शिखरं जगाम स हरीश्वरः । [15]

[= l. 4–18 of 96* of App. I (No. 56). —Note hiatus between the two halves of l. 13.]

—$D_9$ om. l. 482–483. —(l. 482) $T_3$ नुदंतस् (for स्तुवन्तस्). $D_4$ सस्नुस्तस्मिंजले शुभे (for the post. half). —(l. 484) $D_4$ पश्यन्वै स महीरुहान्; $D_9$ पश्यन्वै धरणीधरान् (for the post. half). —(l. 485) $D_4$ कैकेयनंदनः (hypm.). —$D_9$ om. l. 488. —(l. 488) $D_4$ राक्षसैर्भक्ष्यमाणं तु (for the prior half). —(l. 489) $T_3$ lacuna for जले. $D_{4.9}$ मषीविलिप्तम् (for जले विलुप्तम्) and तृषा($D_9$ अथा)कुलं (for यथाकुलम्). —(l. 491) $D_4$ भवनात् (for भरतस्). $D_9$ निर्गतस्तत्र भवनात् (for the prior half) and पर्वतं (for गगनं). —(l. 492) $D_4$ च पतंति (for निपतन्ति). —$D_9$ om. l. 493. —(l. 493) $D_4$ नदंति (for रुदन्ति) and मृगाश्चाप्यप्रदक्षिणाः (for the post. half). —After l. 493, $D_4$ ins.:

15* नारी कापि सुदुःखार्ता मुक्तकेशा च रोदिति ।

—(l. 494) $D_{4.9}$ ज्वलंतीव (for रजो व्याप्ता). —(l. 496) $D_4$ किं तु $D_4$ [अ]पि कानने (for महामतेः). —(l. 497) $D_4$ किं तु (for चापि). $T_3$ वा (for वै). $D_{4.9}$ दंडके वने. —(l. 498) $D_4$ एवं; $T_3$ एतैर् (for एभिर्). $D_4$ पृथ्वीशाः; $T_3$ पृच्छद्भिः (for पृथ्वीशः). $D_4$ पतंतीह (for पतितो हि). $T_2$ हीन- (for हि न). —(l. 499) $D_4$ हि (for च). —(l. 500) $D_9$ प्राप्तं किं (for पर्याप्तं). $D_{4.9}$ दंडके वने. —(l. 503) $D_4$ श्रूयते तु सा (for श्रूयतेऽधुना). —$D_9$ om. l. 504. —(l. 504) $D_4$ तीर्थयानतपसे व्रतयज्ञोथ पूजनं. —(l. 505) $D_4$ पूर्वं (for पुण्यं). —(l. 507) $D_4$ विस्वरं (for निर्भरम्). —(l. 509) $D_9$ सं-

तस्मिन्नेव क्षणे धीमान्संप्राप्तः पवनात्मजः।
स दीप्यमानया भासा नन्दिग्रामं महाबलः।
दृष्टवान्भरतं तत्र जटावल्कलधारिणम्। [510]
तपस्विनं घनश्यामं विशालाक्षं धनुर्धरम्।
रामोऽयमिति मत्वासौ लक्ष्मणेन विना कथम्।
अत्रायमागतो रात्रौ विहाय हरियूथपान्।
अनेन सा परित्यक्ता सीता प्राणप्रिया सती।
रावणस्य गृहे रात्रौ संरुद्धा घोररक्षसः। [515]
एनं पृच्छामि किं यामि संदेहो मम साम्प्रतम्।
तस्यैव रूपसदृश एष कोऽपि भविष्यति।
न राम इति चाशङ्क्य लङ्कामभिमुखो ययौ।
हनूमाञ्शोकविकलः संभ्रान्त इव सत्वरम्।
भरतोऽपि च तं दृष्ट्वा गगने सूर्यसंनिभम्। [520]
दुष्टग्रहा भ्रमन्तीति जग्राह सशरं धनुः।
हन्तुमिच्छति काकुत्स्थो प्रयान्तं दक्षिणामुखम्।
तस्मिन्नेव क्षणेनाथ शुश्राव दिवि भाषितम्।
माविचारं कुरुष्वैवं तव बन्धुर्भविष्यति।
निवृत्तशस्त्रः शुद्धात्मा वाचं श्रुत्वा च खेरिताम्। [525]
स्नात्वा दानं ददौ वीरो विप्रेभ्यो हि तदैव तम्।
अतिचण्डेन वेगेन जगाम पवनात्मजः।
दक्षिणाकाशमार्गेण संप्राप्तो लवणार्णवम्।
सेतुना पूर्वबद्धेन भ्राजमानं यथा नभः।
रावणेन ततो रात्रौ माल्यवान्प्रेषितो द्रुतम्। [530]
बलेन महता युक्तो योद्धुं हनुमता सह।
आकाशगामिभिर्वीरैः राक्षसैः परिवारितः।
बलकोट्ययुतस्तस्थौ गगने सागरोपरि।
तमेव शरजालैश्च सर्वे जघ्नुः समुद्गरैः।
सर्वायुधैः कृपाणैश्च पट्टसै रणशालिनः। [535]
परिघैर्वज्रधारैश्च छादयन्ति प्लवंगमम्।
आत्मानं राक्षसै रुद्धं दृष्ट्वा स हनुमानिति।
ननाद घनवद्घोरं युद्धे च निदधे मनः।
हस्ताभ्यां धारयञ्शैलं पादाभ्यां निजघान तान्।
रक्षांस्यादाय पुच्छेन कव्यामास्फालयद्द्रुतम्। [540]
ततो हलहलाशब्दः संजज्ञे रक्षसां तदा।
तेन शब्देन संत्रस्ताः समुद्रजलवासिनः।
निहतास्ते महाघोरा राक्षसाः कामरूपिणः।
द्रुतं हनुमता तत्र पद्मयामेव महार्णवे।
ततोऽतिक्रुद्धो दशकन्धराज्ञको [545]
जघान बाणैः पवनात्मजं हृदि।
शितैः शरैर्माल्यवतोऽभितापित-
स्तदातिकोपाच्च जहार कार्मुकम्।
दीर्घेण लाङ्गूलबलेन रक्षो
बबन्ध पादौ गगने प्लवंगमः। [550]
उद्वेष्टमानः सहसाम्बरस्थितो
बिभेद तं शूलवरेण राक्षसः।
शूलं निमग्नं हृदि मारुतिस्तदा
ममर्द वै सागरमध्यसंस्थितः।
न तत्र वृक्षा न वनं न भूधराः [555]
कथं हि युद्धं स चकार मारुतिः।
दोर्भ्यां धृतो ह्यौषधिपर्वतस्तदा
पद्मयां तदाहन्यत कन्धरान्हरिः।

---

(for स). $D_4$ दीप्यमानः स्वया भासा (for the prior half) and महावनं (for °बलः). —(l. 512) $D_9$ विज्ञाय (for मत्वासौ). —(l. 513) $D_{4.9}$ [आ]यातः स्वयं (for [अ]यमागतो). —(l. 514) $D_{4.9}$ कथं (for परि-). $D_4$ -समा प्रिया (for -प्रिया सती). —(l. 515) $D_4$ साध्वी (for रात्रौ). $D_4$ घोरराक्षसैः; $D_9$ राक्षसीगणैः; $T_3$ घोररक्षसा. —(l. 518) $D_4$ अभिमुखं. —(l. 519) $D_4$ सत्वरः. —(l. 520) $D_4$ वह्नि- (for सूर्य-). —(l. 521) $D_9$ [इ]व (for [इ]ति). $D_4$ दुष्टग्रहोदयभ्रांत्या स जग्राह धनुः शरान्. —After l. 522, $D_9$ cont. a passage relegated to App. I (No. 57). —$D_9$ om. l. 523–526. —(l. 523) $D_4$ क्षणे सोथ. —(l. 525) $D_4$ निवृत्तः शुद्धः (for निवृत्तशस्त्रः) and तु खेचरीं (for च खेरिताम्). —(l. 526) $D_4$ तु (for तम्). —(l. 527) $D_4$ -प्रचंड- (for -चण्डेन) and हनूमान्मारुतात्मजः (for the post. half). —(l. 528) $D_4$ क्षणाद् (for दक्षिण-). $T_3$ जगाम (for संप्राप्तो). —(l. 529) $D_4$ राजमान इवानलः (for the post. half). —(l. 533) $D_9$ परिशोध्य गत स्वस्थो गगने सागरो यथा. —(l. 534) $D_9$ ते चैव शरजालेन (for the prior half). —For l. 532–534, $D_4$ subst.:

16* दृष्ट्वा तमतुलं व्यूहं किमेतदिति चिन्तयत्।
निःशङ्के खे तदा युद्धमभवद्राक्षसैः सह।
तुमुलं युगपद्वीरा बाणैर्जघ्नुश्च मारुतिम्।
गदाभिर्भिन्दिपालैश्च शक्तिभिश्च परस्वधैः।
कर्तरीजालपाशैश्च सर्वे जघ्नुश्च मुद्गरैः। [5]

—(l. 535) $D_9$ ते (for च). $D_{4.9}$ पट्टिशै. —(l. 536) $D_9$ परमैर् (for परिघैर्). —(l. 537) $T_2$ विद्धं (for रुद्धं). $D_4$ निशि; $T_2$ अपि (for इति). —(l. 538) $D_4$ समुद्रे विदधे मनः (for the post. half). —(l. 539) $D_9$ वारयञ् (for धारयञ्). $T_3$ ह (for तान्). —(l. 540) $D_4$ भृशं (for द्रुतम्). —(l. 542) $D_4$ -जीविनः (for -वासिनः). —(l. 543) $D_4$ हता वीरा (for निहतास्ते). —(l. 544) $D_9$ तेन (for तत्र). —(l. 545) $D_9$ तु (for ऽति-). $D_9$ दशकंधराज्ञया; $T_2$ दशकंठकार्यको. —(l. 547) $D_9$ $T_3$ माल्यवताभिता($T_3$ °पी)डितस्. $D_4$ स तैः शरैर्माल्यवताभिपातितैर्. —(l. 548) $D_4$ बद्धो (for तदा). —(l. 549) $D_4$ स दीर्घलांगूलवरेण रक्षसो. —(l. 551) $D_4$ उद्वेल्य पुच्छं; $D_9$ $T_3$ विचे($T_3$ उद्वे)ष्टमानं. $D_4$ [अं]बरे. —(l. 553) $D_4$ मारुतेस् (for मारुतिस्). —(l. 554) $D_4$ महच्च (for ममर्द). —(l. 555) $T_3$ वृक्षो (for वृक्षा). $D_4$ च भूधराश्च (for वनं न भूधराः). —(l. 556) $D_4$ च (for हि). —(l. 557) $D_9$ ह्येष स; $T_3$ ह्योषधि- (for ह्यौषधि-). —(l. 558) $D_4$ दधारास्य च (for तदाहन्यत) and कपिः (for हरिः). $D_9$ माल्यवतं जघान (for [अ]हन्यत कन्धरान्हरिः). —(l. 559) $D_9$ -संप्लवांतरे

स माल्यवाञ्शोणितबाहुसंप्लवः
शक्तिं ज्वलन्तीं च मुमोच सत्वरः । [560]
तया हतो नापि चचाल वानरो
भग्ना तदा सापि पपात सागरे ।
शक्तिं ततो भूधरराजदारिणीं
चिक्षेप वायोः सुतवक्षसि दृढे । [565]
शक्त्या हतो ग्लानिमुपागमत्तदा
वीरोऽपि धीमान्रुधिरेण संवृतः ।
तं पादमूलेन जघान मस्तके
कपिप्रवीरो गगनं प्रविश्य सः ।
पदप्रहारेण विकीर्णमूर्धजो
वीरो हनूमन्तमथाभिदुद्रुवे । [570]
ततश्च संज्ञामुपलभ्य स स्वयं
जग्राह खड्गं निशितं च सत्वरः ।
तेनातितीव्रेण जघान मारुतिं
कटिप्रदेशे दशकन्धराग्रजकः ।
ततस्तु भिन्नाग्निकणाः समुत्थिताः [575]
कृपाणघातेन हनूमतो भृशम् ।
नितम्बदेशेन विदारितस्तदा
शब्दो बभूवाथ महातिदारुणः ।
एवं कपिर्माल्यवता प्रभाषितः
संत्यज्य भो वानर शैलमर्णवे । [580]
याहि प्रमुक्तोऽसि मया दिगन्तरं
न लक्ष्मणो जीवति राघवप्रियः ।
नो चेद्धनिष्यामि सहस्व मारुते
ममास्त्रपूरं मम तापदारुणम् ।
पूर्वं मयास्मिँल्लवणार्णवे हरि-
र्जितो भृशं पन्नगशत्रुणा सह । [585]
निशम्य तत्तस्य वचोऽतिगर्वितं
प्रोवाच तं वानरयूथपेश्वरः ।
ममोरसि त्वं प्रहरस्व दुर्मते
करेण ते वृद्धतमस्य युध्यतः ।
स माल्यवान्वायुसुतस्य जल्पितं [590]
श्रुत्वा जघानोरसि तं वरासिना ।
ततो गलं गन्धवहात्मजस्तदा
संवेष्ट्य लाङ्गूलवरेण धावतः ।
तं भ्रामयामास नभस्थले रुषा
यथा विहंगाधिपतिर्भुजंगमम् । [595]
विस्रस्तवस्त्रश्च विकीर्णमूर्धजो
विभ्रष्टसर्वाभरणोऽल्पचेतनः ।
स माल्यवान्कृत्तसमस्तगात्रः
पपात वै भग्नशिरा महाहवे । [600]
तेनैव मार्गेण गतो रसातलं
खरैर्विशालं रमणीयमन्दिरम् ।
स राक्षसो वृद्धतमो रणे जितो
हनूमता संगरदुर्धरेण ।
कृतसमरविधिः स यूथपेन्द्रो [605]
सह गिरिणा रुधिरावलिप्तगात्रः ।
नभसि ययौ सुरपूजितोऽतिवेगा-
त्तमसि च जीवयितुं नरेन्द्रसूनुम् ।

Colophon

---

(for -संप्लवः). $D_4$ मारुतिशोणितप्लुतो (for शोणितबाहुसंप्लवः). —$D_9$ om. l. 560–562. —(l. 560) $D_4$ गदां (for शक्तिं). $T_3$ स (for च) and सत्वरं (for सत्वरः). —(l. 562) $D_4$ गदा च (for तदा सा). —(l. 563) $D_9$ $T_{2.3}$ शक्त्या and -धारिणं (for शक्तिं and -दारिणीं respy.). —(l. 564) $D_9$ जघान (for चिक्षेप). —(l. 565) $D_4$ हानिम् (for ग्लानिम्). —(l. 566) $D_9$ धीरो (for वीरो). $D_4$ हनुमान् (for ऽपि धीमान्). $D_{4.9}$ संप्लुतः (for संवृतः). —(l. 567) $D_4$ पादघातेन. —(l. 568) $D_9$ गगने. $D_4$ विवेश (for प्रविश्य सः). —(l. 569) $D_4$ तल- (for पद-) and विशीर्णमस्तको (for विकीर्णमूर्धजो). —(l. 570) $D_9$ रक्षो (for वीरो). $D_4$ रक्षोवरो वेदनया तदातुरः. —(l. 572) $D_4$ स विस्मितः (for च सत्वरः). $D_9$ च तदा चमूमुखे (for निशितं च सत्वरः). —(l. 573) $D_9$ -तीक्ष्णेन (for -तीव्रेण). —(l. 574) $D_9$ कंठ- (for कटि-). $T_2$ दशकंठकार्यकः. —$D_9$ om. l. 575. —(l. 575) $D_4$ त्वचोस्य (for ततस्तु). —(l. 577) $D_4$ नितंबदेशेतिकठोरकण्वकें. —$D_9$ om. l. 578. —(l. 578) $D_4$ om. [अ]थ. —(l. 579) $D_4$ ततो वचो; $D_9$ तस्मिंस्तदा; $T_3$ एवं वचो (for एवं कपिर्). $D_{4.9}$ $T_3$ प्र($D_9$ [अ]भि)भाषितं. —(l. 580) $D_4$ त्यजस्व (for संत्यज्य). —(l. 581) $D_4$ प्रयाहि (for याहि प्र-). —(l. 584) $D_4$ -घातं तु महच्च (for -पूरं मम ताप-). $D_9$ हि विशोचनीयं (for मम तापदारुणम्). —(l. 590) $D_4$ किं ते बलं (for करेण ते). $D_9$ जानामि बलं च (for ते वृद्धतमस्य). —After l. 592, $D_4$ ins.:

17* स चन्द्रहासोऽपि बभञ्ज मध्यतो
वक्षःप्रदेशे कठिनेऽतितेजसः ।

—(l. 593) $D_9$ तथागरं (for ततो गलं). —(l. 594) $D_4$ संस्पृश्य; $D_9$ संवेद्य; $T_3$ संपीड्य (for संवेष्ट्य). $D_9$ वानरः (for धावतः). —(l. 595) $T_2$ नभःस्थले. $D_4$ तदा (for रुषा). —(l. 598) $D_9$ वित्रस्त- (for विभ्रष्ट-). $D_9$ [ऽ]स्तचेतनः; $T_3$ [ऽ]ल्पतेजसः. —(l. 599) $D_4$ रक्तविलिप्त- (for कृत्तसमस्त-). —(l. 600) $D_9$ स (for वै). $D_{4.9}$ महार्णवे (for °हवे). —(l. 601) $D_4$ ययौ; $D_9$ ततो (for गतो). —(l. 602) $D_4$ बलैर्; $D_9$ जनैर्; $T_3$ जलैर् (for खरैर्). —(l. 603) $D_4$ वृद्धतरो (for °तमो). $D_9$ स राक्षसो विश्रुतो रणाजिरे. —(l. 604) $D_4$ -दुर्धरेण च (for -दुर्धरेण). —(l. 605) $T_2$ -समय- (for -समर-). $D_4$ -यूथपेंद्रनाथः (for -विधिः स यूथपेन्द्रो). $D_9$ कृतसमरो हरियूथपेंद्रमुख्यः. —(l. 606) $D_{4.9}$ स हरिवरो (for सह गिरिणा). $D_9$ -[अ]वसिक्त- (for -[अ]वलिप्त-). —(l. 607) $D_4$ -वीक्षितो (for -पूजितो). —(l. 608) $D_9$ समरपतितं (for तमसि च).

Colophon :—*Kāṇḍa name* : $D_4$ लंका°. —*Sarga name* : $D_4$ माल्यवतः पातालगमनं. —*Sarga no.* (figures,

स्तूयमानः सुरैः सिद्धैर्गन्धर्वैः सहचारणैः ।
अप्सरोभिश्च मुदितैर्न्यवर्तत महायशाः ।  [ 80 ]
उपर्येव स लङ्काया हनूमान्पवनात्मजः ।
संप्राप्तो यत्र सुग्रीवो राघवश्च सलक्ष्मणः ।
दृष्ट्वा प्राप्तं हनूमन्तं रामो हर्षमुपागतः ।
स्वागतं ते हरिश्रेष्ठ सुस्वागतमरिंदम ।
दिष्ट्या क्षेमेण संप्राप्तो गत्वा त्वं वानरोत्तम ।  [ 85 ]

## 62

After colophon of 6.89, D$_{4.9}$ T$_{2.3}$ ins.; while D$_3$ cont. l. 49–54, 43, 59–74, 94–138, 209–226, 266–277, 309–317 after App. I ( No. 61 ) :

रावणोऽपि हि तं श्रुत्वा वृत्तान्तं राघवस्य च ।
हनूमतः प्रभावं च शीघ्रं शुक्रान्तिकं ययौ ।
काव्यं प्रणम्य चाहेदं पाहि मां दैत्यपूजित ।
निर्मूलितोऽस्मि रामेण लङ्कां संरुध्य सर्वतः ।
हताः पुत्रा मम ज्येष्ठा बान्धवाः कुलजाश्च मे ।  [ 5 ]
केनोपायेन जीवामि कथयस्व कवे मम ।
दशग्रीवस्य वचनं श्रुत्वोवाच तदोशनाः ।
कुरुष्व विधिना वीर होमं येन जयिष्यसि ।
रथो धनुः शराः खड्गो वाजिनः कुण्डलानि च ।
निर्गमिष्यन्ति हवनाल्नो वै विघ्नो भवेद्यदि ।  [ 10 ]
गृहाणेमानि मन्त्राणि याहि शीघ्रं निवेशनम् ।
इत्युक्तो रावणो धीमान्मन्त्रान्संगृह्य शुक्रतः ।
आगमत्सहसा लङ्कामाकाशेन रणोत्सुकः ।
महेन्द्रभवनाकारं संप्राप्तः स्वं निवेशनम् ।

---

[ D$_9$ भूभृतं (for पर्वतं ). T$_3$ रामपार्श्वे. D$_9$ जगाम सः (for समागतः ). ]

—Then they cont. :

66* प्रणिपत्याग्रतो रामं सुग्रीवं सहलक्ष्मणम् ।
आचचक्षे यथावृत्तं यत्कृतं यच्च साम्प्रतम् ।
तच्छ्रुत्वा वचनं तस्य रामसुग्रीवलक्ष्मणाः ।
पर्यष्वजन्त संहृष्टा भुजैस्तैर्वायुनन्दनम् ।
वानरास्तु ततः सर्वे हर्षसंपूर्णमानसाः ।  [ 5 ]
पर्यष्वजन्त चान्योन्यं भुजैरास्फोटयन्ति च ।
साधु वीर सुषेणेति साधु मारुतनन्दन ।
इत्येवं प्रवदन्ति स्म सिंहनादैर्नदन्ति च ।
पुनरेव महाबाहुः सौमित्रि भ्रातृवत्सलः ।

[ (l. 1) D$_4$ चैव; D$_9$ च स- ( for सह- ). —(l. 2) D$_{4.9}$ यत्पूर्वं ( for यत्कृतं ). —(l. 3) D$_9$ श्रुत्वा तु ( for तच्छ्रुत्वा ). —(l. 8) T$_{2.3}$ प्रब्रुवंते ( for प्रवदन्ति ). D$_4$ सिंहनादं. ]

—D$_{4.9}$ T$_{2.3}$ om. l. 78–85. Ñ$_1$ D$_{13}$ om. l. 78. —For l. 77–78, D$_3$ subst. :

67* स मुक्त्वा पर्वतश्रेष्ठं पुनरायात्कपीश्वरः ।

—Then D$_3$ cont. :

68* प्रणम्य रामं सुग्रीवं राजानं पवनात्मजः ।
तान्प्रणम्य कपिश्रेष्ठान्हनुमान्वाक्यमब्रवीत् ।
राक्षसा देवरूपेण विघ्नं कर्तुमुपागताः ।
माया तेषां मया ज्ञाता ते पद्भ्यां मे प्रमर्दिताः ।
श्रुत्वा तद्वचनं तस्य रामसुग्रीवलक्ष्मणाः ।  [ 5 ]
प्रहृष्टास्ते परिष्वज्य हनुमन्तं कपीश्वरम् ।

—B$_1$ om. l. 79–81. Ñ$_1$ D$_{13}$ om. l. 80–85. —(l. 80) V$_1$ मुदितैरप्सरोभिश्च ( by transp. ). V$_3$ damaged for न्यवर्तत. —For l. 79–80, Ś D$_{3.8.12}$ subst. ; Ñ$_1$ D$_{13}$ subst. l. 1 only for l. 79 :

69* दैवतैः स्तूयमानस्तु तथा तुम्बुरुनारदैः ।
अप्सरोगीयमानस्तु तथा किंनरचारणैः ।

[ (l. 1) Ñ$_1$ D$_2$ च ( for तु ). Ñ$_1$ D$_{13}$ हाहा- ( for तथा ). ]

—V$_3$ om. l. 81. —(l. 81) V$_2$ तु ( for स ). B$_4$ लंकायां ( for लङ्काया ). B$_3$ उपेत्य च स लंकायां ( for the prior half ). B$_3$ मारुतात्मजः ( for पवना° ). V$_2$ संप्राप्तो मारुतात्मजः ( for the post. half ). —(l. 82) V$_2$ हनुमान् ( for संप्राप्तो ). V$_2$ सह- ( for च स- ). —(l. 84) V$_2$ B$_{1.2}$ कपि- ( for हरि- ). Ñ$_2$ D$_7$ स्वागतं वानरश्रेष्ठ ( for the prior half ). —B$_1$ om. l. 85. —(l. 85) Ñ$_2$ क्षणेन ( for क्षेमेण ). D$_7$ यो हि ( for गत्वा ). —Thereafter Ñ$_2$ V B$_{1.2.4}$ ins. l. 2–3 of 2066*; while B$_3$ ins. in marg. :

70* आगतं मारुतिं दृष्ट्वा सर्वे ते हरियूथपाः ।
रामलक्ष्मणसुग्रीवा विभीषणमहामतिः ।
कर्मणा विस्मिताश्चास्य साधु साध्विति चाब्रुवन् ।
लक्ष्मणे जीवितापन्ने रामः संहृष्टमानसः ।
आनन्दाश्रुजलाक्लिन्नो वचनं चेदमब्रवीत् ।  [ 5 ]

and then B$_3$ repeats 6.89.27 ( followed by l. 2–3 of 2066* ). —After this passage, D$_3$ cont. l. 49–54, 43, 59–74, 94–138, 209–226, 266–277, 309–317 of App. I ( No. 62 ) ; T$_{2.3}$ repeat 6.89. 26–27$^b$.

## 62

(l. 1) D$_9$ तच् and प्रवृत्तं ( for तं and वृत्तान्तं respy. ). —(l. 3) D$_4$ प्रोवाच and मया हि येन पूजितः ( also किं कृतं त्वामजानता ) ( for चाहेदं and the post. half respy. ). —(l. 4) D$_4$ निषूदितो. —(l. 5) D$_9$ हतः पुत्रो मम ज्येष्ठो ( for the prior half ). D$_4$ वै; D$_9$ T$_2$ ये ( for मे ). —(l. 7) D$_9$ तपोधनः ( for तदोशनाः ). —(l. 8) D$_9$ वधिष्यसि ( for जयिष्यसि ). —(l. 9) D$_4$ शरः ( for शराः ) and कुंजरास्तथा ( for कुण्डलानि च ). —(l. 10) T$_2$ भगवान्; T$_3$ भवनान् ( for हवनान् ). T$_3$ भविष्यति ( for भवेद्यदि ). D$_9$ नो चेद्विघ्नं भविष्यति ( for the post. half ). —(l. 11) D$_4$ होमैरिमांश्च मंत्रांश्च ( for the prior half ). —(l. 12) D$_4$ अध्याप्य ( for संगृह्य ). —(l. 13) T$_3$ अगमत् ( for आ° ) and आकारेण ( for °शेन ). —(l. 14) D$_4$ संप्राप्य स्वं; D$_9$ रावणः स्व- ; T$_3$

चकार दैत्यमार्गेण होमं स दशकन्धरः । [ 15 ]
विद्युज्जिह्वं समादिश्य रक्षणार्थं स वेश्मनः ।
लङ्काद्वारकवाटानि दत्त्वा सर्वप्रयत्नतः ।
हस्त्यश्वरथवृन्दानि स्थापयामास सर्वतः ।
ज्ञात्वा प्रविश्य मौनी सन्गुहां पातालसंनिभाम् ।
तत्राजुहाव युद्धार्थमग्निस्थापनपूर्वकम् । [ 20 ]
आजह्रुर्होमसंभारांस्त्वरिता ब्रह्मराक्षसाः ।
रक्तोष्णीषाणि वासांसि समिधोऽथ विभीतकाः ।
भल्लातककरञ्जांश्च बिल्वानां तु फलानि च ।
राजिकां गुग्गुलं चैव मांसरक्तशिरांसि च ।
काकान्गृध्रान्वयःश्येनान्बिल्वाखुकुरवानपि । [ 25 ]
छागांश्च कृष्णमीनांश्च मकरान्कच्छपानपि ।
जुहाव रावणः शीघ्रं नवनीतं घृतं मधु ।
दधिदूर्वाप्रवालांश्च पुष्पाणि तिलसर्षपान् ।
पायसं षड्सान्नानि विविधाभरणानि च ।
शिवध्यानेन चिक्षेप समिद्धे जातवेदसि । [ 30 ]
कर्पूरकुङ्कुमादीनि चन्दनान्यगरूंस्तथा ।
हुत्वा रोमाणि केशांश्च जुहाव रणकोविदः ।
ततो रसातलाद्धूमो घोरोऽभ्राम्बरमावृणोत् ।
सर्वलोकक्षयकरो निर्घातपवनोद्धतः ।
तं दृष्ट्वा देवगन्धर्वा वानराश्च भयं ययुः । [ 35 ]
विभीषणोऽथ संभ्रान्तो रामपार्श्वमुपागमत् ।
ततो रामो महातेजा रघूणां कुलवर्धनः ।
विभीषणमिदं वाक्यं प्रत्युवाचारिसूदनः ।
क्वासौ लङ्केश्वरः क्षुद्रो रावणो नाम दुर्मदः ।
रणभूमिं परित्यज्य क्वास्ते किं वास्य चेष्टितम् । [ 40 ]
स हि छिद्रप्रहर्ता च कृतपापश्च रावणः ।
बोद्धव्यस्तु त्वया वीर क्षिप्रमेव ममाज्ञया ।
राघवस्य वचः श्रुत्वा चारैरन्वेष्य सर्वतः ।
उवाच वचनं धीमान्राममेतद्विभीषणः ।
शक्त्या निर्भिद्य सौमित्रिं क्रूरकर्मा दशाननः । [ 45 ]
प्रविवेश पुरीं तूर्णं लङ्कामेव सहानुगः ।
सोऽवतीर्य रथात्तत्र वधमिच्छंश्च राघव ।
चिन्तयामास काकुत्स्थ वरदानं महात्मनः ।
दत्तं स्वयंभुवा पूर्वं वरं शत्रुविनाशनम् ।
अजेयं शत्रुभिर्लोकैः ससुरासुरमानवैः । [ 50 ]
रथं सर्वायुधोपेतं दिव्यमद्भुतदर्शनम् ।
युक्तमश्वैर्महावेगैः कामगैः कामरूपिभिः ।
अभेद्यकवचं चापि सर्वास्त्रैरभिसंवृतम् ।
तस्य होमस्य कालोऽयं देवायतनमास्थितः ।
जुहोत्यग्निं समाधिस्थो रौद्रैर्मन्त्रैर्महायशाः । [ 55 ]
पश्य पश्य महाभागानलाद्धूमं समाकुलम् ।
निश्चितं त्वद्भयाद्राजन्रावणो होममाचरत् ।
तस्य यावत्तु तत्कर्म न सिध्यति दुरात्मनः ।
तस्य तावत्त्वया वीर विघ्नः कार्यो बलीयसः ।
समाप्ते दिव्यहोमे तु दुर्जयोऽसौ भविष्यति । [ 60 ]
आदिशस्व महाबाहो यूथपान्कामरूपिणः ।
होमविध्वंसनार्थाय शीघ्रं स्वविजयाय च ।

संप्राप्तः रव- ( for संप्राप्तः स्वं ).—( l. 15 ) D4 प्रकुर्वन् ( for चकार ). —( l. 16 ) T3 विद्युज्जिह्वं. D4 रक्षणार्थं स्व-; D9 रक्षार्थं तस्य ( for रक्षणार्थं स ). —( l. 17 ) D4 -कपाटानि ( for -कवाटानि ) and सर्वत्र यत्नतः ( for सर्वप्र° ). —( l. 19 ) D9 प्रयत्न- ( for प्रविश्य ) and च ( for सन् ). T3 -संस्थितां ( for -संनिभाम् ). D4 गृहं पातालसंनिभं ( for the post. half ). —( l. 21 ) D9 आजह्रे ( for °ह्रुर् ) and त्वरितो राक्षसेश्वरः ( for the post. half ).—( l. 22 ) D4 रक्तोष्णीषं च. —( l. 23 ) D9 भल्लीतक-; T2 फल्ला° ( for भल्ला° ). D4.9 च ( for तु ). —( l. 24 ) D4 मांसं रक्तं ( for मांसरक्त- ). D9 -शिरास्थि ( for -शिरांसि ). —( l. 25 ) T3 गृध्रादयः ( for गृध्रान्वयः- ). D4 वयस्यांश्च ( for वयःश्येनान् ). D4 च्चिल्लाखुकुरटानपि; D9 भल्लूकान्कुक्कुटानपि ( for the post. half ). —D9 T3 om. ( hapl. ) l. 26. —( l. 26 ) T2 कूथवान् ( corrupt ) ( for कच्छपान् ). —( l. 28 ) D9 om. ( hapl. ) from the post. half up to the prior half of l. 32. D4 दधि- ( for तिल- ). —( l. 29 ) D4 शुक्रमीनांश्च ( for षड्सान्नानि ) and धातुण्यांभरणादपि ( corrupt ) ( for the post. half ). —( l. 30 ) D4 समृद्धे ( for समिद्धे ). —( l. 33 ) D4 यो रौद्रोचिरम् ( for घोरोऽभ्राम्बरम् ). D9 रौद्रोंबरमुपावृणोत् ( for the post. half ). —D9 om. l. 34. —( l. 34 ) D4 निर्वातपवनान्वितः ( for the post. half ). —( l. 35 ) D9 ययुर्भयं ( by transp. ). —( l. 36 ) D4.9 [ऽ]पि ( for ऽथ ). —D4.9 om. l. 37–55. —( l. 39 ) T3 क्रुद्धो ( for क्षुद्रो ) and दुर्मतिः ( for दुर्मदः ). —( l. 40 ) T3 च ( for वा ). —( l. 43 ) D3 चारैर्मम समाख्यातमेतत्संप्रति वर्तते. —( l. 50 ) T3 सप्तभिर् ( for शत्रुभिर् ). —( l. 53 ) T3 अमेद्यं. —For l. 49–54, D3 subst. :

1* ** त्वां हि रणे हन्ता कश्चिच्छत्रुः समागतः ।
तदा त्वया शान्तिगृहे होतव्यस्तु हुताशनः ।
समुद्दिश्याहुतीनां तु सहस्राणि दशैव तु ।
तत्राग्निमध्यात्स रथः सध्वजो वाजिसारथिः ।
उत्थास्यति महादिव्यः सर्वास्त्रवरसंयुतः । [ 5 ]
तमारुह्यारिभिः सार्धं सदेवासुरमानवैः ।
युध्यतो न भयं ते स्यात्तांश्च सर्वान्विजेष्यसि ।
कामरूपी कामगामी ह्यवध्यः सर्वजन्तुषु ।
एवं भविष्यसीत्युक्त्वा गतो ब्रह्मा स्वमन्दिरम् ।
तदग्निकार्यं यद्यस्य सिद्धिं समुपयास्यति । [ 10 ]

—Then D3 cont. :

2* अवध्यः स भवेत्तस्मिन्कृते कर्मणि राक्षसः ।

—( l. 56 ) D4.9 महाबाहो ( for °भाग ) and नभो धूम- ( for [अ]नलाद्धूमं ). —D4.9 om. l. 58–59. —( l. 59 ) D3 तदग्निकार्यविघ्नार्थं दिश सर्वान्हरीश्वरान्. —( l. 60 ) D9 यदि ( for दिव्य- ). T2 om. तु ( subm. ). D3 अन्यथा न वयं सर्वे भविष्यामो रघूत्तम. —D3 om. l. 61–62. —( l. 61 ) D4.9 T3 महाबे( D9 °भा )गान् ( for °बाहो ). —D4.9 om. l. 63.

विभीषणस्य तद्वाक्यं घोरं श्रुत्वा सुदारुणम् ।
ततो रामो महातेजाः सुग्रीवस्य मतेन च।
आदिदेश हनूमन्तमङ्गदं गन्धमादनम् । [65]
द्विविदं पनसं मैन्दं शरभं तारमेव च ।
गजं गवाक्षं वीराढ्यं धूम्रं ज्योतिर्मुखं तथा ।
ऋक्षं सेनापतिं नीलं नलं चापि महाबलम् ।
लब्धलक्ष्या महावीर्या यूथपाः कृतनिश्चयाः ।
उत्तस्थुस्ते बलैः सार्धं गर्जन्त इव तोयदाः । [70]
ते शिलापादपधरा महाकाया महाबलाः ।
गर्जन्तो रेजिरे सर्वे जङ्गमा इव पर्वताः ।
क्षणात्संप्राप्य नगरीं लङ्कां रावणपालिताम्।
प्राकारं सहसाप्लुत्य विविशुस्ते प्लवंगमाः ।
दश कोट्यः प्लवंगानां दशग्रीवनिवेशनम् । [75]
विविशुः सहिता घोरा गर्जन्तोऽतिभयंकरम् ।
रावणस्य गृहद्वारप्राङ्गणेऽतिविजृम्भिते ।
युद्धं समभवद्धोरं रक्षसां वानरैः सह ।
कपिभिः पर्वताकारैर्गजेन्द्राः पातिता भुवि ।
तथा विघटिताश्चाश्वा मथिताश्च सहस्रशः । [80]
शिरांसि राक्षसेन्द्राणां पतन्ति प्रस्फुटन्ति च ।
प्रासादान्पातयन्ति स्म रत्नानि तु हरन्ति च ।
प्रभाते विमले जाते न पश्यन्ति स्म रावणम् ।
मार्गमाणाः प्रयत्नेन वानरा राजवेश्मनि ।
विभीषणस्य या भार्या सरमा नाम राक्षसी । [85]
तया तु रावणस्थानं कथितं चोद्यमानया ।
हस्तस्य संज्ञया नीचैर्भर्तुः प्रियचिकीर्षया ।
निर्दिदेशाङ्गदायाथ होमो यत्र प्रवर्तते ।
ज्ञात्वा तु तत्र संस्थानं वालिपुत्रो महाबलः ।
रावणेन च या घोरा शिला क्षिप्ता गुहामुखे । [90]
पादाघातेन निर्भिन्ना साङ्गदेन महात्मना ।
तां गुहां प्रविवेशाथ राजपुत्रोऽङ्गदोऽग्रणीः ।
दक्षस्य यज्ञविघ्नाय वीरभद्रो यथा पुरा ।
ददृशुर्देवतागारे रावणं बलरक्षितम् ।
समाधिध्यानसंयुक्तं मौननिष्पन्दलोचनम् । [95]
स्रुवहस्तं समासीनं प्राङ्मुखं रक्तवाससम् ।
रक्तोष्णीषधरं दिव्यं पुरो ज्वलितपावकम् ।
विद्युद्भास्करसंयुक्तं संध्यायामिव तोयदम् ।
मन्दोदरीसमीपस्थं किरीटोत्तुङ्गभूषणम् ।
हारनिर्झरतोयाढ्यं महावदनकन्धरम् । [100]

—(l. 63) D3 घोरं शत्रुभयावहं (for the post. half). —(l. 64) D3 श्रुत्वा (for ततो) and स्वबलं च निरीक्ष्य सः (for the post. half). —(l. 66) D4 तारकं तथा (for तारमेव च). —(l. 67) D4.9 गवयं (for वीराढ्यं). D9 भीम- (for धूम्रं). D9 तदा. —For l. 65–67, D3 subst.:

3* आज्ञापयामास तदा विघ्नार्थं दश यूथपान् ।
माल्यवन्तं सुषेणं च गवाक्षं गवयं गजम् ।
अङ्गदं स हनूमन्तं शरभं गन्धमादनम् ।

—(l. 68) D3 चैव (for नीलं) and नीलं चैव (for नलं चापि). D4.9 नलं नील गणश्रेष्ठमादिदेश महामतिः. —D4.9 om. l. 69–72. —(l. 69) D3 -लक्षा (for -लक्ष्या). —(l. 74) D3 अथ वा (for सहसा). —For l. 73–74, D4.9 subst.:

4* तदोत्पत्य हरिश्रेष्ठाः प्रविष्टा नगरीं द्रुतम् ।
प्राकारं लङ्घयित्वा तु स्वबलाद्बलसंयुताः ।

[ (l. 1) D9 तथा (for तदा) and प्रविश्य नगरे शुभे (for the post. half). —(l. 2) D9 स्वमादाय बलं पुरः (for the post. half). ]

—(l. 75) D4 कोटि-. —(l. 76) D4 -भयंकराः; D9 -भयानकाः. —(l. 77) D4 -द्वारि (for -द्वार-) and प्रांगणेतीव संमते (for the post. half). —(l. 80) D4 रथा विघट्टिताश्चाश्च; D9 रथाश्वघाटिताश्च (corrupt) (for the prior half). —D9 om. l. 81. —After l. 81, D4 ins.; while D9 ins. after l. 80:

5* कबन्धानि विधीयन्ते बहु सीदन्ति मर्दिताः ।
विकृष्य दशनान्स्थूलान्द्विपेन्द्राणां वलीमुखाः ।
घ्नन्ति स्म राक्षसांस्ते तु न पश्यन्ति च रावणम् ।

[ D9 om. l. 1. —(l. 2) D9 रदनान् (for दश°) and बलीयसां (for वलीमुखाः). —(l. 3) D9 घ्नंतश्च राक्षसांश्चैरुर्धावंतश्च यतस्ततः. ]

—Thereafter D9 cont.:

6* नार्यो रुदन्ति बहुधा वृद्धाः परिपतन्ति च ।

—D4 om. l. 82–83. —(l. 82) D9 हारयंति (for पातयन्ति) and च (for तु). T2 महांति (for हरन्ति). —(l. 83) D9 च (for स्म). —(l. 85) D4 सा भार्या; D9 भार्या सा (for या भार्या). —(l. 87) D9 हस्तेन. —(l. 88) D4 अंगदाय विदग्धाय; D9 अंगदायाचचक्षे सा (for the prior half). —(l. 89) D4 तत्तदा स्थानं; D9 तत्र तत्स्थानम्. D9 अंगदः स महाकपिः (for the post. half). —(l. 90) D4 संनार्था (for या घोरा). D9 रावणेन प्रयत्नात्सा (for the prior half) and दत्ता (for क्षिप्ता). —(l. 91) T3 पादमूलेन. D4 तैर्; D9 वै (for निर्-). D4.9 ह्यंगदेन महाशिला (for the post. half). —(l. 92) D4.9 संविवेशाशु (D9 °थ) (for प्रविवेशाथ). —(l. 93) D9 दक्षस्य वीरभद्रो हि होमकाले यथा पुरा. —After l. 93, T2.3 read l. 139 for the first time, repeating it in its proper place. —D4.9 om. l. 94. —D3 om. l. 95. —(l. 95) D4 -संयुक्तो. D9 विवेश योगसंयुक्तो (for the prior half). D4.9 मौनी निष्पंदलोचनः (for the post. half). —After l. 95, D4.9 ins.:

7* अङ्गदेन ततो दृष्टो रावणो होमदीक्षितः ।

[ D9 तदा (for ततो). ]

—D4.9 om. l. 96–138. —(l. 97) D3 वीरं (for दिव्यं). —(l. 98) D3 -भानुर- (for -भास्कर-). —(l. 99) T2 -समीपं तं. D3 तं महापादपवनं किरीटोत्तुंगशृंगिणं. —(l. 100) D3 गुहा- (for महा-). D3 -कंदरं. —(l. 101)

वासोमन:शिलाधारं गिरिं नीलमिव स्थितम्।
स्तुवन्तमद्भुताकारं रौद्रं रौद्रपराक्रमम् ।
दृष्ट्वा तस्याद्भुतं कर्म वानरा: कृतनिश्चया: ।
हनूमन्तं पुरस्कृत्य सर्वे युद्धाय तस्थिरे ।
राक्षसाश्च महावीर्या: प्रासासिपरिघायुधा: । [105]
दंशितास्तस्थिरे सर्वे युद्धायामितविक्रमा: ।
ते बलेऽन्योन्यमासाद्य घोरे वानररक्षसाम् ।
चक्राते कदनं घोरमद्भुतं रोमहर्षणम् ।
पादपैर्गिरिशृङ्गैश्च शिलाभिर्दशनैर्नखै: ।
वानरा राक्षसाञ्जघ्नुस्तलैर्मुष्टिभिरेव च । [110]
राक्षसा: क्रोधरक्ताक्षास्तदा वानरपुंगवान् ।
नाराचैर्बहुभिस्तीक्ष्णैश्चिच्छिदुश्च महासिभि: ।
ते छिन्नभिन्नसर्वाङ्गा वानरास्त्यक्तजीविता: ।
निपेतुर्भूतले भिन्ना: केचिद्रुधिरकर्दमे ।
रक्षांसि च निपेतुश्च वानरैर्भीमविक्रमै: । [115]
चूर्णिता विविधैश्चैव पादपैर्मुष्टिभिस्तदा ।
दारितास्त्रैर्नखैस्तीक्ष्णैर्दन्तैरपि सुदारुणै: ।

तत्प्रवृद्धं महद्युद्धं कबन्धशतसंकुलम् ।
शूराणां हर्षजननं भीरूणां भयवर्धनम् ।
हर्षणं सुरनारीणां सर्वदु:खविमोक्षणम् । [120]
तस्मिन्युद्धे महाघोरे रक्षोवानरसंक्षये ।
प्रावर्तत नदी घोरा शोणितोदकवाहिनी ।
नानापताकसंछन्ना द्विपदेहशिलातला ।
विकोशासिचयोन्मीना मांसरक्तेभकर्दमा ।
रथचक्रमहाग्राहा प्रासपट्टसभोगिनी । [125]
शीर्णाभरणवेलाढ्या हतशूरमुखाम्बुजा ।
वर्मकच्छपसंबाधा हस्तिफेनावगाहिनी ।
क्रव्यादानन्दजननी गृध्रकाकोत्सवोद्भवा ।
उत्तेरुस्तां नदीं सर्वे यूथपास्ते सहस्रश: ।
नरा विच्छिन्नपाप्मानो नदीं वैतरणीं यथा । [130]
राक्षसा हतभूयिष्ठा विरथा हतचेतस: ।
त्यक्तसंग्रामसत्त्वास्ते भेजिरे सर्वतो दिशम् ।
दृष्ट्वा स्वं च बलं सर्वमिदमाहाङ्गदो वच: ।
पश्य राक्षसराज त्वं नयामि तव पार्श्वत: ।

---

$D_3$ -द्वारं ( for -[आ]धारं ). —(l. 102) $D_3$ जुह्वंतम् ( for स्तुवन्तम् ) and रुद्ररूप- ( for रौद्रं रौद्र- ). —(l. 108) $D_3$ चक्रतु: . $D_3$ लोम- ( for रोम- ). —(l. 109) $D_3$ शैल- ( for गिरि- ). —(l. 111) $D_3$ तथा ( for तदा ). —(l. 112) $D_3$ बिभिदुस्तीव्रैश्; $T_3$ विविधैस्तीक्ष्णैश् ( for बहुभिस्तीक्ष्णैश् ). —(l. 114) $D_3$ क्लिन्ना: ; $T_3$ छिन्ना: ( for भिन्ना: ). —(l. 115) $D_3$ तथा पेतुर् ( for निपेतुश्च ) and -कर्मभि: ( for -विक्रमै: ). —(l. 116) $D_3$ स्यु: शिला: शैलै:; $T_3$ विविधाश्चैव ( for विविधैश्चैव ). $D_3$ $T_3$ तथा ( for तदा ). —(l. 117) $D_3$ विदारिता नखैश्चैव ( for the prior half ). —(l. 118) $T_{2.3}$ प्रवृत्तं. $T_2$ महायुद्धं. $T_{2.3}$ कबंधभूत- . —(l. 119) $T_3$ च भयावहं ( for भयवर्धनम् ). —(l. 121) $D_3$ -संकुले ( for -संक्षये ). —(l. 123) $T_3$ महागज- ( for द्विपदेह- ). —(l. 124) $D_3$ -चया भीमा; $T_2$ -चयोर्मि* ( for -चयोन्मीना ). $D_3$ -संक्लेद-; $T_3$ -रक्तेन ( for -रक्तेभ- ). —(l. 125) $D_3$ -पट्टिश- ( for -पट्टस- ). —(l. 126) $D_3$ -रत्नाढ्या ( for -वेलाढ्या ) and -मुखानुगा ( for -मुखाम्बुजा ). —(l. 127) $T_3$ ( with hiatus ) अस्थि- ( for हस्ति- ). $D_3$ वज्रफेनीव ( for हस्तिफेनाव- ). —After l. 127, $D_3$ ins. :

8* शूरप्रमोदजननी भीरुणां भयवर्धिनी ।

—(l. 128) $D_3$ गृध्रकंकोद्भवोत्सवा ( for the post. half ). —After l. 128, $D_3$ ins. :

9* दुर्गमा स्वल्पसत्त्वानां सेव्या तेजस्विनां तथा ।

—(l. 129) $D_3$ महौजस: ( for सहस्रश: ). —(l. 130) $D_3$ नाराचच्छिन्न- ( for नरा वि° ) and इव ( for यथा ). —(l. 131) $D_3$ हततेजस: . —(l. 132) $D_3$ -संस्थास् ( for -सत्त्वास् ) and दिश: ( for दिशम् ). —(l. 133) $D_3$ दृष्ट्वापि स्वबलं भग्नं हतवीरं हतप्रभं. —After l. 133, $D_3$ ins. :

10* राक्षसेन्द्रोऽक्रोधवशाज्जुहावाग्नि समाहित: ।
वानरैस्तद्बलं भग्नं दृष्ट्वा संहृष्टमानसा: ।

अङ्गदप्रमुखा: सर्वे विविशुर्देवतालयम् ।
आस्फोटयामास बाहू समीपे तस्य रक्षस: ।
हनूमान्वाक्यमेतच्च सरोषं प्राह रावणम् । [ 5 ]
विभास्यते भयं गृह्य शूरत्वं राक्षसेश्वर ।
न हि सत्त्ववतामेव चरितं वै यथा तव ।
कुतस्ते तपस: शक्ति: शक्तिर्वा राक्षसेश्वर ।
न त्वं धर्मकृतं कर्म प्राप्स्यसे राक्षसाधम ।
न चाप्यौशनसं मन्त्रं वेत्सि त्वं राक्षसेश्वर । [ 10 ]
रामवीर्यविषं येन जरत्यङ्गेषु ते युधा ।
नैव ते वरदानानि न तपो न च शिक्षितम् ।
भवत्यर्थाय लङ्केश न ते सिद्धिर्नरान्तक ।
उत्तिष्ठोत्तिष्ठ युध्यस्व न मे जीवन्विमोक्ष्यसे ।
अगृहीतायुधं भीतं न हन्यात्त्वद्विधं रणे । [ 15 ]
एवं वाक्शल्यनुन्नोऽपि रथमिच्छन्हुताशनात् ।
जुहावाहुतिमेवाथ न चुकोप कथंचन ।
ततो वायुसुत: श्रीमान्सर्वान्वानरयूथपान् ।
उवाच वाक्यं कालज्ञ: शृण्वतोऽस्य च रक्षस: ।
यूयं मन्दोदरीं शीघ्रमानयध्वं प्लवंगमा: । [ 20 ]
नान्यथा शक्यते कर्तुं मन्युरस्य दुरात्मन: ।
इति तस्य वच: श्रुत्वा वालिपुत्रोऽब्रवीदिदम् ।
आनयाम्यहमेवैक: सर्वे तिष्ठन्तु वानरा: ।
भार्यामस्य प्रियां त्वद्य पश्यतां व: प्लवंगमा: ।
भवन्तोऽस्याग्निकार्यं वै विध्वंसयत माचिरम् । [ 25 ]
इत्युक्त्वा प्रविवेशाथ रावणस्य निवेशनम् ।
घातयित्वा स रक्षांसि विद्राव्य च सहस्रधा ।
अङ्गद: प्लवगश्रेष्ठ: सिंहो गिरिगुहामिव ।
ततस्तां पुरमध्यस्थां केशेष्वादाय वीर्यवान् ।
निर्जगाम गृहीत्वा च व्याघ्रो मृगवधूमिव । [ 30 ]
तां विवर्णशिरोमाल्यां प्रभ्रष्टोत्तरवाससम् ।
आनीय रावणस्यान्तमिदमाहाङ्गदो वच: ।

इमां मन्दोदरीं भार्यां क्रूरकर्मन्दुरात्मवान् । [135]
न हि मुष्णन्ति शूरा ये मैथिलीं त्वं यथा पुरा ।
या ते पुष्टिर्बलं शौर्यं तेन तिष्ठ त्वमग्रतः ।
कृत्वा शिरसि पादं ते नयाम्येनां प्रियां तव ।
अङ्गदस्याज्ञया तत्र प्रविष्टा यूथनायकाः ।
कोलाहलं प्रकुर्वन्तस्ताडयन्तो निशाचरान् । [140]
यज्ञपात्राणि संगृह्य चिक्षिपुर्दहने तथा ।
वारिकुम्भांश्च सौवीरं तुरंगानां च कोटिकाम् ।
दन्तिनां त्वथ शीर्षाणि क्षिपन्त्यग्नौ हरीश्वराः ।
शृगालान्रासभानुष्ट्रान्सूकरान्कुक्कुटानपि ।
वह्निकुण्डे क्षिपन्ति स्म तस्यैव परिचारकान् [145]
स्रुवमाक्षिप्य हस्ताग्राद्रावणस्य रुषा ततः ।
तेनैव संजघानाशु हनूमान्यूथपाग्रणीः ।
घ्नन्ति तं दग्धकाष्ठैश्च वानरेन्द्रा यतस्ततः ।
तथापि रावणो ध्यानं न जहाति जयाशया ।
प्रविश्यान्तःपुरं तस्मिन्नङ्गदो वेगवत्तरः । [150]
केशपाशे गृहीत्वाथ राज्ञीं मन्दोदरीं शुभाम् ।
आनयित्वा तु वेगेन विक्रोशन्तीमनाथवत् ।
पट्टांशुकं स्तनाभ्यां च स्रस्तं देव्यास्तदा भुवि ।
स्तनतो मौक्तिका हारा निगलन्ति तथा द्रुतम् ।
प्रभ्रष्टं तिलकं तस्या व्यालोलं केशपाशकम् । [155]
विददाराथ दोर्भ्यां कञ्चुकं रत्नचित्रितम् ।
सीमन्तरत्नजालानि ताराजालमिवापरम् ।
स्रस्तं पपात भूमौ तु मल्लिकाकुसुमैः सह ।
श्रोणीसूत्रं परिच्छिन्नं नीवी प्रस्खलिताभवत् ।
कङ्कणे कुण्डले तस्याः पतिते राजवेश्मनि । [160]
देवगन्धर्वकन्याश्च नीता हृष्टैः प्लवंगमैः ।
मन्दोदरी रुरोदाथ पीनस्तनभरालसा ।
क्रोशन्ती करुणं देवी जगाद दशकन्धरम् ।
उत्तिष्ठोत्तिष्ठ संमूढ निर्लज्जोऽसि जुहोषि किम् ।
नयन्ति वानरा मां हि त्वयि जीवति रावण । [165]
हन्यते पश्यतो यस्य भार्या पापैश्च शत्रुभिः ।
मर्तव्यं तेन तत्रैव जीवितान्मरणं वरम् ।
हा पुत्र मेघनादाद्य विध्वस्ताहं त्वया विना ।
यदि त्वं जीवसि श्रेष्ठ कथं वीर प्लवंगमाः ।
प्रविशन्ति हि लङ्कायां स्पृशन्ति तव मातरम् । [170]
तच्छ्रुत्वा रावणः क्रुद्धो दृष्ट्वा स्पृष्टां प्रियां तदा ।
उत्तस्थौ खड्गमाकृष्य वालिपुत्रजिघांसया ।

---

[ Cf. l. 74–108 of No. 63. ]

—D3 om. l. 134. —(l. 135) D3 पार्श्वान् (for भार्यां). T3 क्रूरकर्मा. D3 नयामि तव पश्यतः (for the post. half). —(l. 136) D3 गृह्णंति (for मुष्णन्ति). —(l. 137) D3 शक्तिर् (for पुष्टिर्) and वीर्यं (for शौर्यं). D3 तिष्ठस्व मे (for तिष्ठ त्वम्). —(l. 138) D3 ते पादं (by transp.) —After l. 138, D3 ins.:

11* तच्छ्रुत्वा रावणः क्रुद्धो दृष्ट्वा पृष्ठा प्रियां तदा ।
अङ्गदं मुष्टिना जघ्ने मूर्छितः स पपात ह ।
तमादाय भुजाभ्यां तु ताडयित्वा तु रावणम् ।
लाङ्गूलेनाञ्जनापुत्रः खं पुनश्चोत्पपात ह ।
अन्ये स्रुवोदकं हव्यं दर्भान्पावकमेव च । [5]
बलिकर्म च विध्वस्य खमुत्पेतुर्महाजवाः ।
अङ्गदश्चेतनां प्राप्य कृच्छ्राद्यूथपतिं गतः ।
आजग्मुस्त्वरिताः सर्वे यत्र रामो व्यवस्थितः ।
आचख्युस्ते यथावृत्तं युद्धं वानरपुंगवाः ।
ततो मन्दोदरी दीना रावणं वाक्यमब्रवीत् । [10]

[ Cf. l. 113–120 of No. 63. ]

—(l. 139) D9 प्राविशन् (for प्रविष्टा). —(l. 140) D9 रुदयंतो (for ताडयन्तो). —(l. 141) D9 संक्षिप्य (for संगृह्य). D4.9 तदा. —D9 om. l. 142–143. —(l. 142) D4 -कुंभानि. D4 कुरंगानां च कीलकं (corrupt) (for the post. half). —(l. 144) D9 शरभान् (for रासभान्) and उद्गतान् (for कुक्कुटान्). —(l. 146) D9 आछिद्य; T3 आविध्य (for आक्षिप्य). D4.9 हस्ताच्च (for हस्ताग्राद्). D9 तदा (for ततः). D4 [अ]थ वै रुषा (for रुषा ततः). —(l. 147) D9 तेनैव घातयामास विजयी प्लवगाग्रणीः. —(l. 148) D9 दंतैश्च; T3 तं दर्भ- (for तं दग्ध-). D4 घ्नंति तं ते तदा काष्ठैः (for the prior half). D4.9 वानराश्च (for वानरेन्द्रा). —D9 om. l. 149. —(l. 150) D4 [अं]तःपुरे. D9 (with hiatus) तत्र (for तस्मिन्) and वेगवत्तदा (for °त्तरः). —(l. 151) D4.9 केशपक्षे. D4 च; D9 तु (for [अ]थ). —(l. 152) D4.9 आ(D4 अ)नयद्रावणाभ्याशं(D4 °सं) (for the prior half) and विलंपंतीम् (for विक्रोशन्तीम्). —(l. 153) D4 T3 तथा (for तदा). —(l. 154) D4 वि- (for नि-) and तदा (for तथा). D9 गलिता स्थापितास्तदा (for the post. half). —(l. 155) D4.9 विभ्रष्टं (for प्र°). D4 व्यालोलः केशपाशकः; D9 मुखं चैवापि केशतः (for the post. half). —(l. 156) D4.9 [अं]गदो भग्नं (D9 वीरः); T3 [अ]थ दोर्लग्नं (for [अ]थ दोर्भग्नं). D4 -भूषितं (for -चित्रितम्). —(l. 157) D4 श्रीमत्तद् (for सीमन्त-). D4.9 -जालं तु (D9 om. तु [subm.]) (for -जालानि). D4 मुक्ता- (for तारा-). T3 [अं]बरं (for [अ]परम्). D9 रत्नजालमिवापतत् (for the post. half). —(l. 158) D9 कुस्थितैः (for मल्लिका-). —(l. 159) T3 -भ्रष्टं (for -च्छिन्नं). —(l. 161) D4 दृष्ट्वा; D9 हृष्टाः (for हृष्टैः). —(l. 162) D9 -पयोधरा (for -भरालसा). —(l. 164) D9 om. (hapl.) second [उ]त्तिष्ठ. D4 किं मूढ (for संमूढ) and [ऽ]त्र (for ऽसि). —(l. 165) T3 हरयो (for वानरा). D9 तु (for हि). —(l. 166) D4 पादैश्च (for पापैश्च). D9 हन्यंते तव दारास्तु पश्यतस्तव शत्रुभिः. —(l. 167) D9 जीवनान् (for जीवितान्). —(l. 169) D4 त्वयि जीविते (hypm.) (for त्वं जीवसि). D4 कर्तुं; D9 त्वद्य (for वीर). —After l. 170, D4.9 ins.:

12* राज्ञीं मन्दोदरीं प्रेक्ष्य रुदन्तीं च दशाननः ।

—D4.9 om. l. 171. —(l. 171) T2 स्पृष्ट्वा (for स्पृष्टां).

तमङ्गदं जघानाशु हृदये निशितासिना ।
मुञ्चेमां धूर्तं दयितामित्युवाच च तं श्वसन् ।
ततोऽङ्गदेन सा त्यक्ता रुधिराक्तेन वक्षसा । [175]
रावणोऽथाब्रवीद्देवीं याहि त्वं स्वं निवेशनम् ।
सा तु तद्वचनं श्रुत्वा रुदन्ती मुक्तमूर्धजा ।
प्रविवेश गृहं गुप्तं प्रभ्रष्टाभरणा सती ।
ततोऽङ्गदं समीक्ष्यैव ताडितं च वरासिना ।
हनूमान्रावणं मूर्ध्नि ताडयामास मुष्टिना । [180]
तेन मुष्टिप्रहारेण रावणो भिन्नमस्तकः ।
सुस्राव रुधिरं भूरि गिरेः प्रस्रवणं यथा ।
आश्वास्य चाङ्गदस्तं तु तलाघातेन रावणम् ।
ताडयामास संक्रुद्धः स्कन्धदेशे महाबलः ।
द्वयोर्घातेन पौलस्त्यः किंचिद्भ्रान्तिमुपागमत् । [185]
तत्रोत्थाय दशग्रीवो गदयाङ्गदमाशु वै ।
हनूमन्तं च खड्गेन जघानाद्भुतविक्रमः ।
नीलं च मुसलेनाथ नलं नागमुखेन च ।
अङ्कुशेन गजं घोरं शक्त्या शतबलिं तथा ।
मुद्गरेण महावीर्यो मैन्दं द्विविदमेव च । [190]
ततो हरीश्वरा भग्ना निष्क्रान्ता रावणालयात् ।
वेगान्निवेशनं प्राप्ताः सुग्रीवस्य समीपगाः ।
ततो हनूमान्कपियूथनायको
विज्ञापयामास च राघवं तदा ।
विध्वंसितस्तस्य मखो दुरात्मनः [195]
प्रविश्य पातालगृहं कपीश्वरैः ।

Colophon

रावणोऽपि महातेजाः प्रविश्यान्तःपुरं तदा ।
देवीं मन्दोदरीं राज्ञीमुवाच तदनन्तरम् ।
त्यज शोकं विशालाक्षि विषादं मा कृथाः प्रिये ।
दैवायत्तमिदं सर्वं जीवद्भिः किं न दृश्यते । [200]
एष गच्छाम्यहं भद्रे रणशीर्षं तदद्भुतम् ।
रामं च लक्ष्मणं चैव हनिष्यामि कपीश्वरम् ।
मां च रामो दृढैर्बाणैः पातयेद्यदि भूतले ।
तथा त्वया विधातव्या मदीयाः सत्क्रियाः प्रिये ।
वैदेहीं घातयित्वा च मर्तव्या त्वं मया सह । [205]
तच्छ्रुत्वा तु वचस्तस्य रावणस्य दुरात्मनः ।
उवाचाश्रुमुखी दीना रावणं मयपुत्रिका ।
श्रोतव्यं मद्वचः कान्त कर्तव्यमधुना त्वया ।
किं न पश्यसि मां राजन्ननाथां त्वयि जीवति ।
वानरैः परिकर्षन्तीमितश्चेतश्च धावतीम् । [210]
पतितां च निराशां मां निरपेक्षां च कातराम् ।
शोकावृतपरिभ्रष्टां रूढामिव जले लताम् ।
हतपुत्रसुहृत्पक्षां त्वामेव शरणं गताम् ।
अज्ञानबलसम्पन्नैः पुरुषैर्लोकवर्तिभिः ।
पुत्रदारप्रियार्थं हि यतितव्यमिति स्थितिः । [215]
त्वं पुनः पुत्रदारस्य सुहृद्बन्धुजनस्य च ।
कृत्वा विनाशं लब्धोऽसि किं सुखं तद्ब्रवीहि मे
न कृतं धर्मशीलस्य भ्रातुर्वाक्यं त्वया हि तत् ।
न च मद्वचनं राजञ्श्रुतं न सुहृदां तथा ।
अथ शास्त्रविदां सम्यक्श्रुतं न च हितैषिणाम् । [220]
शिष्येणोशनसः साक्षात्कथमात्मा विनाशितः ।
कथं लोकापवादात्ते भयं लज्जा न ते पुनः ।
अपवादभयात्सन्तस्त्यजन्ति सुखमागतम् ।

—(l. 172) D9 आदाय (for आकृष्य). —(l. 173) D4 क्रुद्धो (for तम्). —(l. 174) D9 मे (for [इ]मां). D4.9 धर्म- (for धूर्तं). D9 विनि-; T3 ततः (for च तं). —(l. 175) T2.3 राक्षसी (for वक्षसा). —(l. 176) D4 [s]पि (for sथ). D9 भार्यां (for देवीं). D4 T3 स्व-; D9 सन्- (for स्वं). —(l. 177) T2.3 रुदती. —(l. 178) D4 राज्ञो; D9 शुभ्रं (for गुप्तं). D4 विभ्रष्ट- (for प्रभ्रष्ट-). D9 -[आ]भरणी. —(l. 179) D9 [अ]थ (for [ए]व). —(l. 182) D9 भूयो गिरिः (for भूरि गिरेः). D4 गिरिः प्रस्रवणैर्यथा (for the post. half). —(l. 183) D4 om. तं (subm.). D4 ततो घातेन (for तलाघा°). —(l. 185) D9 तयोर्. D4 ग्लानिम्; D9 मोहम् (for भ्रान्तिम्). —(l. 186) D4 तत्रास्थाय; D9 तथोत्थाय. —(l. 188) D4.9 [आ]शु (for [अ]थ). —(l. 189) D4 -बलं (for -बलिं). D9 स्वशक्त्या च बलिं तथा (for the post. half). —(l. 191) D9 निहता रावणाद्भयात् (for the post. half). —(l. 192) D4 निशांते भवनं प्राप्ताः (for the prior half). D9 निवेशनं (for समीपगाः). —(l. 193) D9 -यूथनाथो. —(l. 195) D9 विध्वंसितं तस्य यशो.

Colophon. —*Kāṇḍa name*: D4 लंकाकांडे. —*Sarga name*: D4 होमविध्वंसः. —*Sarga no.* (figures, words or both): D4 om.; D9 83; T2 109; T3 113.

—(l. 197) T3 तथा (for तदा). —(l. 198) D9 दीनाम् (for राज्ञीम्). —(l. 200) D9 विद्वद्भिः (for जीवद्भिः). —(l. 201) D4.9 अभिद्रुतः (for तदद्भुतम्). —T3 om. l. 202. —(l. 202) D4 हरिष्यामि (for हनि°). —(l. 203) D4.9 वा (for च). D9 द्रुतं (for दृढैर्) and संयुगे (for भूतले). —(l. 204) D4.9 तदा. D9 चोत्तरक्रिया (for सत्क्रियाः प्रिये). —(l. 205) D9 तु (for च). D4.9 मर्तव्यं तु. D4 त्वया (for मया). —(l. 206) D4.9 इति श्रुत्वा (for तच्छ्रुत्वा तु) and महात्मनः (for दुरा°). —(l. 207) D4 मुमुखी; D9 [आ]र्तस्वरं (for [अ]श्रुमुखी). D9 मृतपुत्रका (for मयपुत्रिका). —(l. 208) D9 श्रुत्वा (for कान्त). —D4.9 om. l. 209–226. —(l. 209) T3 सनाथां (for अ°) and जीवतीं (for जीवति). —(l. 210) D3 परिक्लिश्यंतीम् (for परिकर्षन्तीम्). —(l. 211) D3 विवशां च (for निराशां मां) and निरपेक्षा हि वानराः (for the post. half). —(l. 212) D3 शोकसागरसंमग्नं मूढनागमिव श्वसन्. —D3 om. l. 213. —(l. 214) D3 विक्रांतबलसंमत्तैः (for the prior half). —(l. 215) D3 -सुखार्थं (for -प्रियार्थं). —(l. 218) D3 T3 श्रुतं (for कृतं). D3 तवानघ (for त्वया हि तत्). —(l. 219) D3 च (for second न) and त्वया (for तथा). —(l. 221) D3 गुरूणां शतशः (for शिष्येणोशनसः). —(l. 222) D3 [अ]थ वा

धर्ममूलं सुखं सर्वं यशो धर्मात्प्रवर्तते ।
अयशो यस्य लोकेऽस्मिन्पुंसश्चरति शाश्वतम् । [ 225 ]
तस्य लोकावुभौ नष्टौ सुखं नैवात्र कुत्रचित् ।
न रामः क्षीयते युद्धे त्वयान्यैश्च कदाचन ।
रामो देवः परः साक्षात्पुराणपुरुषोत्तमः ।
मत्स्यः कूर्मो वराहश्च नृसिंहो वामनस्तथा ।
जामदग्न्यश्च संजातस्त्वदर्थे रामतां गतः । [ 230 ]
त्वं न वेत्सि महाप्राज्ञ कस्तेन सह विग्रहः ।
विरोचनो हतो येन हिरण्यकशिपुर्हतः ।
बलिर्बद्धो दृढं पाशैर्धराक्रान्ता त्रिविक्रमैः ।
येन शौरिस्वरूपेण मुरः पूर्वं निपातितः ।
पार्ष्णिघातेन घोरेण लवणोऽपि निपातितः । [ 235 ]
येन त्वं निर्जितो बद्धो देवतारे दशानन ।
स हतः कार्तवीर्योऽपि पितृवैरेण येन वै ।
महीं निःक्षत्रियां कृत्वा काश्यपाय त्रिसप्तधा ।
जित्वा दत्ता च विप्राय रेणुकातनयेन हि ।
सोऽप्यात्मरूपसदृशो जितो रामेण लीलया । [ 240 ]
त्रियम्बकं धनुर्भग्नं विश्वामित्रप्रसादतः ।
दिव्यवस्त्राणि संत्यज्य राजभोग्यानि सर्वतः ।
वल्कलानि परीधाय घोरं वनमुपागतः ।
येन वन्द्यैः पदैः पुण्यैः पवित्रं दण्डकं कृतम् ।
तस्मिन्नेव वने घोरे राक्षसा निहतास्तदा । [ 245 ]
समाराध्यस्य शूरस्य कस्माद्भार्या हृता बलात् ।
मम पुत्रविनाशार्थमात्मनो निधनाय च ।
अविचार्य कृतं कर्म स्वकुलक्षयकारकम् ।
वालिना त्वं धृतः पूर्वं लीलया दिग्जये विभो ।
कक्षे दृढे निधाय त्वां वाली बभ्राम सागरान् । [ 250 ]
स बाणेन हतो वाली सुग्रीवश्चापि हर्षितः ।
पपात विद्धो वाली च शरभेणेव केसरी ।
कस्तेन संगतो नाथ प्रसादय रघूत्तमम् ।
सीतां प्रयच्छ रामाय स्वयं राज्यं निवेद्य च ।
विभीषणं च संस्थाप्य वयं यामो वनं गृहात् । [ 255 ]
माल्यवांश्च गतः पूर्वं मायावी तत्र मत्पिता ।
त्वं नो चेद्बुध्यसे मोहाद्रामेण सह रावण ।
देहं त्यक्त्वा रणे तूर्णं ह्यमृतस्त्वं भविष्यसि ।
कथं नाथ त्वया सार्धं प्रवेक्ष्यामि हुताशनम् ।
न स्पृशेत्पावको मां च ह्यक्षयाहं यतः सदा । [ 260 ]
न वै त्यजति रूपं मां न जहाति च यौवनम् ।
मरणं न जरा चैव कथं यामि त्वया सह ।
दासभावोऽस्तु रामस्य विभीषणगृहेऽथवा ।

---

(for न ते). —(l. 224) $D_8$ प्र**ते (for प्रवर्तते). —After l. 224, $D_8$ ins.:

13* तस्माद्यशोविनाशात्तु हानिस्तेजस्विनां स्मृता ।

—(l. 226) $D_8$ स नैवास्येत (for सुखं नैवात्र). —After l. 226, $D_8$ ins.:

14* जहि राक्षसराजेन्द्र शत्रूनुत्तिष्ठ मा चिरम् ।
श्रेयो हि मरणं पुंसामपवादान्मनस्विनाम् ।
इति तस्या वचः श्रुत्वा करुणं परिदेवितम् ।
दृष्ट्वा चास्याः परामर्शं रावणः क्रोधमूर्छितः ।
साभिमानैर्वचोभिस्तां सान्त्वयन्निदमब्रवीत् । [ 5 ]
निर्वापयन्निवाकाले दह्यमानां वनस्थलीम् ।

—(l. 227) $D_9$ रामो न (by transp.). $D_{4.9}$ जीयते (for क्षीयते). —(l. 228) $D_9$ देववरः (for देवः परः). $D_9$ $T_3$ पुराणः. —(l. 229) $D_4$ [ऽ]थ वाराहः (for वराहश्च) and स्वसौ (for तथा). —(l. 230) $D_9$ संभूतस् (for संजातस्) and त्वदर्थं (for °दर्थे). —After l. 230, $D_4$ ins.:

15* सर्वदेवात्मको ह्येष सर्वलोकनमस्कृतः ।

—(l. 231) $D_{4.9}$ किं (for त्वं). $D_9$ किं (for कस्) and सम- (for सह). —(l. 233) $D_4$ दृढैः; $D_9$ द्रुतैः (for दृढं). $D_{4.9}$ $T_3$ त्रिभिः पदैः($D_4$ क्रमैः) (for त्रिविक्रमैः). —$D_9$ om. (hapl.) l. 234–235. —After l. 234, $D_4$ ins.:

16* पदादौ येन घातेन दैतेयाः पातितार्णवे ।

—(l. 235) $D_4$ पार्ष्णिघातप्रहारेण (for the prior half) and वि- (for ऽपि). —(l. 236) $D_9$ राज्ञा (for त्वं निर्-). $D_{4.9}$ रैवते वै($D_9$ त्वं) (for देवतारे). —(l. 237) $D_9$ संयुगे (for येन वै). —(l. 238) $D_9$ प्रदत्तवान् (for त्रिसप्तधा). —(l. 239) $D_4$ जिता (for जित्वा). $D_9$ त्रिःसप्तकृत्वः पूर्वं तु (for the prior half). $D_4$ च; $D_9$ वै (for हि). —(l. 241) $D_9$ त्रैयंबकं. $D_4$ $T_2$ त्र्यंबकं धनुर् (subm.). —(l. 242) $D_9$ -भोगांश्च (for -भोग्यानि). —$D_9$ om. l. 243. —(l. 244) $D_{4.9}$ पुंसां (for पुण्यैः). —(l. 245) $T_2$ घोरा (for घोरे). $D_9$ $T_3$ तथा. —(l. 246) $D_4$ तस्य रामस्य (for समाराध्यस्य). —$D_4$ om. l. 247–248. —(l. 247) $D_9$ (with hiatus) -विनाशाय (for °शार्थम्). —(l. 249) $D_4$ जितः (for धृतः). $D_9$ वालिना निर्जितस्त्वं हि (for the prior half). $D_{4.9}$ दिग्जये लीलया (by transp.). $D_9$ पुरा (for विभो). —(l. 250) $D_{4.9}$ कक्षा- (for कक्षे). $D_{4.9}$ $T_2$ पुटे (for दृढे). $D_4$ निबद्धा (for निधाय). $D_4$ सागरं; $T_2$ सागरात्. —(l. 251) $D_9$ [अ]भिषिचितः; $T_3$ [अ]पि तोषितः (for [अ]पि हर्षितः). $D_4$ स वाली निहतो बाणैः सुग्रीवश्चाभिषेचितः. —$D_9$ om. l. 252. —(l. 253) $D_{4.9}$ संगरो (for °तो). —(l. 254) $D_4$ प्रापय (for प्रयच्छ). —(l. 255) $D_4$ संभाष्य (for संस्थाप्य). —(l. 256) $D_4$ तु (for च). —(l. 257) $D_4$ चेन्नो (by transp.). $D_{4.9}$ युध्यसे (for बुध्यसे). $D_9$ राजन् (for मोहाद्). —(l. 258) $D_4$ शूरः; $D_9$ रूपं; $T_3$ दूरं (for तूर्णं). $D_4$ [अ]मूर्तस्; $D_9$ [अ]रूपस् (for [अ]मृतस्). —(l. 260) $D_4$ नास्पृशत्. $D_9$ तदा (for सदा). $T_2$ स्यां (for [अ]हं). $D_4$ त्यक्ष्यामि जीवितं यतः (for the post. half). —(l. 261) $D_4$ वै रूपं; $D_9$ मां तेजो (for रूपं मां). —(l. 262) $D_4$ [अ]पि मे (for जरा). —(l. 263) $D_{4.9}$ दास्यो भवाम($D_4$ °मो) रामस्य (for the

इत्येवं भाषमाणां तां समालिङ्ग्याथ रावणः ।
मन्दोदरीं पुनर्वाक्यं बभाषे च रणोत्सुकः । [ 265 ]
किं करोषि शुभे दीना मयि जीवति भामिनि ।
न मे कश्चित्समो युद्धे त्रिषु लोकेषु भामिनि ।
सेन्द्राः सुरगणाः सर्वे तिष्ठन्ति हि वशे मम ।
किमल्पसारैः शक्योऽहं जेतुं मानुषवानरैः ।
मयाद्य क्षयितं तेषां बलं सर्वं वनौकसाम् । [ 270 ]
न तु शक्ष्यामि तन्वङ्गि न्यकारं सोढुमीदृशम् ।
आनयिष्याम्यहं शत्रुं निर्जितं तु रथे स्थितः ।
चिरप्रमादपतितां विद्यां गुरुगृहादिव ।
तीव्रक्रोधस्य पश्याद्य संग्रामे युध्यतः परैः ।
दृष्टिं दृष्टिविषस्येव मम वीर्यं दुरासदम् । [ 275 ]
मा भैः शत्रुशिरांस्यद्य निहत्याहं यशस्विनि ।
मन्दोदरि करिष्यामि तवाद्याश्रुप्रमार्जनम् ।
अथवा घातयित्वा च कथमिन्द्रजितं रणे ।
विना शक्रजिता भद्रे जीवने न च मे स्पृहा ।
त्वया सहाबले गेहे धिक्कृतः किं वसाम्यहम् । [ 280 ]
विदार्यमाणो गात्राणि यास्यामि परमं पदम् ।
विमुच्य त्वां च संसारं गमिष्ये मुक्तिवल्लभाम् ।
सदानन्दमयी शुद्धा सेव्यते या मुमुक्षुभिः ।
तां गतिं तु गमिष्यामि हतो रामेण संयुगे ।
प्रक्षाल्य कल्मषानीह मुक्तिं यास्यामि दुर्लभाम् । [ 285 ]
भवतीं राज्ञि संत्यज्य मम पुत्रो दिवं गतः ।
प्रतीक्षतीत्यसौ मां च कथं तिष्ठामि भूतले ।
मत्सुतो मुक्तिमापन्नः शरैः संताप्य लक्ष्मणम् ।
मम शक्रजितश्चैक्यं वैकुण्ठे संभविष्यति ।
राजहंसविनिर्मुक्ता यथा भातीह पङ्कजी । [ 290 ]
तथा मया विना भद्रे त्वं स्थास्यसि महीतले ।
कापि षट्पदहीना तु यथा वै पुष्पमञ्जरी ।
शोभते फाल्गुने मासे तथा त्वं हि मया विना ।
अथवा पद्मिनी पङ्के विना सूर्येण नश्यति ।
मया विना तथा भद्रे भविष्यसि वरानने । [ 295 ]
यथा वने हरेर्भार्या शृगालैरभिभूयते ।
पतिपुत्रपरिभ्रष्टा स्थास्यसि त्वं महीतले ।
अहं मुक्तिं प्रयास्यामि सीतां रामो रमिष्यति ।
इत्युक्त्वा वचनं धीमान्प्रेम्णा मन्दोदरीं गतः ।
रावणश्चक्रमे युद्धं रामेण सह संयुगे । [ 300 ]
दृढाङ्गं रथमास्थाय वृतो घोरैश्च राक्षसैः ।
चक्रैः षोडशभिः प्रोतं सवरूथं सकूबरम् ।
ध्वजदण्डत्रयोपेतं राहोः शीर्षसमन्वितम् ।
घण्टाकोटिद्वयोपेतं निबद्धमृक्षचर्मणा ।
युक्तं हयसहस्रेण कामरूपधरेण च । [ 305 ]
सारथ्यकर्मदक्षेण रक्षितं कालकेतुना ।
निश्चक्रामाथ सहसा रावणो भीषणाकृतिः ।
चक्रदण्डगदाशक्तिपरिघैर्मुद्गरैर्युतः ।
संनद्धः कवची खड्गी शरी धन्वी तथैव च ।
तस्य निष्क्रममाणस्य दग्धुकामस्य रोदसी । [ 310 ]
रूपमासीन्महाघोरं कालस्येव युगक्षये ।
निमित्तानि च तत्रासन्भयशंसीनि सर्वतः ।
प्रतिलोमं ववौ वायुर्मन्दरश्मिर्दिवाकरः ।
सागरश्चुक्षुभे चैव चकम्पे च वसुंधरा ।
जानुभिः पेतुरश्वाश्च बाष्पबिन्दूनथामुचन् । [ 315 ]
तानुत्पातानचिन्त्यैव रावणः क्रोधमूर्छितः ।
सशरं धनुरादाय रणभूमिं विवेश ह ।

---

prior half). $D_9$ तथा (for ऽथवा). —(l. 265) $D_{4.9}$ स (for च). — $D_{4.9}$ om. l. 266-277. —(l. 266) $D_3$ किं त्वं विशुच्यसे दीने (for the prior half). —(l. 267) $D_3$ सुंदरि (for भामिनि). —(l. 268) $D_3$ तिष्ठंते वशगा मम (for the post. half). —(l. 270) $D_3$ क्षमितं; $T_2$ क्षपितं (for क्षयितं). $D_3$ सर्वं सत्त्ववशात्प्रिये (for the post. half). —(l. 271) $T_2$ दकारं (corrupt) (for न्य°). $D_3$ क्षमितुं त्वहमीदृशं (for the post. half). —(l. 272) $T_3$ निर्जित्य (for °तं). $D_3$ जित्वा रामं रणात्स्वयं (for the post. half). —(l. 273) $T_2$ -प्रसाद- (for -प्रमाद-). $D_3$ -गलितां (for -पतितां) and -कुलाद् (for -गृहाद्). —(l. 275) $D_3$ विषं (for दृष्टिं). —(l. 276) $D_3$ निकृत्तानि (for निहत्याहं). —After l. 277, $D_3$ ins.:

17* इति तां शोकसंतप्तां शमयित्वा स रावणः ।
रथमारुह्य वेगेन निर्जगाम रणं प्रति ।

—(l. 278) $D_{4.9}$ घा($D_9$ पा)तयित्वा कथं पुत्रान् (for the prior half). —(l. 279) $D_4$ जीविते मे स्पृहा भवेत् (for the post. half). —(l. 280) $D_9$ वनं भद्रे (for [अ]बले गेहे). $D_{4.9}$ विकृतः (for धिक्कृतः). $D_9$ विशाम्यहं; $T_3$ वने स्पृहा (for वसाम्यहम्). —$D_9$ om. l. 281. —(l. 281) $T_3$ परमां गतिं. —(l. 283) $D_4$ पुरा; $D_9$ परा (for सदा). —(l. 284) $D_4$ तु गतिं (by transp.). $D_9$ राघव- (for रामेण). —(l. 286) $D_4$ वापि (for राज्ञि). $D_9$ त्वां च राज्यं च संत्यज्य; $T_2$ त्वां मां च संपरित्यज्य (for the prior half). $D_4$ मुमुक्षू रणकोविदः (for the post. half). —$D_4$ om. (hapl.?) l. 287–350. —(l. 287) $D_9$ प्रतीक्षते च मां सोपि (for the prior half). —(l. 288) $D_9$ मुक्ततां प्राप्तः (for मुक्तिमापन्नः) and संतर्प्य (for संताप्य). —(l. 289) $D_9$ महेंद्रस्य जितो धैर्यं (for the prior half). $T_3$ वैकुंठं. $D_9$ [ऽ]ष (for सं-). —(l. 290) $D_9$ राजहंसो विनिर्मुक्तो यथा व्रजति पंकजं. —(l. 291) $D_9$ विना मया (by transp.). —$D_9$ om. (hapl.) from the post. half up to the prior half of l. 295. —(l. 296) $D_9$ चैव (for वने). —(l. 297) $D_9$ स्थास्यसे. —(l. 299) $T_3$ प्रियां (for प्रेम्णा). $D_9$ वचः (for गतः). —(l. 300) $D_9$ रावणो निर्ययौ योगं (for the prior half). —(l. 306) $D_9$ रहितं कालहेतुना (for the post. half). —(l. 308) $D_9$ -धरा- (corrupt) (for -गदा-). —$D_9$ om. l. 309-317. —(l. 312) $D_3$ क्षय- (for भय-). —(l. 313) $D_3$ प्रतिलोमो. $D_3$ च भास्करः (for दिवाकरः). —(l. 315) $D_3$ मुमुचुर्बाष्पमेव च (for the post. half). —(l. 317) $D_3$ सः (for ह). —After l. 317, $D_3$ ins.:

रावणेन समं तूर्णमसिरोमा पुरो ययौ ।
सर्परोमा महाक्रूरस्तथा वृश्चिकरोमकः ।
अग्निवर्णोऽद्भुताकारो रावणाग्रे विनिर्गतः । [320]
एतैश्चतुर्भिः सचिवैर्दशग्रीवो विराजते ।
यथा भूतैर्महादेवः श्मशानवनवासिभिः ।
आयान्तं रावणं दृष्ट्वा भीषणं रणकर्कशम् ।
संतत्रास तदा सेना वानरी रामपालिता ।
हनूमानपि चोत्पत्य रावणं योद्धुमाययौ । [325]
असिरोम्णा समाहूतो गन्धवाहसुतो बली ।
तेनव सह संचक्रे हनूमान्युद्धमद्भुतम् ।
असिरोमा तदोत्पत्य संगतो वायुसूनुना ।
दुरासदो लोमभिस्तैः करवालैरिव स्थितैः ।
न शिरो दृश्यते तस्य न मुखं न पदद्वयम् । [330]
न बाहू न च वै पृष्ठमुदरं नैव दृश्यते ।
निष्क्रम्य गहनात्तस्माद्धनूमानग्रतः स्थितः ।
जग्राह च शिलां घोरां क्रोशमात्रां कपीश्वरः ।
तां शिलां पातयामास खड्गरोम्णस्तदोरसि ।
असिरोमा पपाताथ चूर्णीभूतो महीतले । [335]
अङ्गदेन समाहूतः सर्परोमा महाबलः ।
ददंश चाङ्गदं दन्तैः फणैः फूत्कारदारुणैः ।
अङ्गदं मोहयामास वेष्टनैर्नागलोमकैः ।
ततः क्रोधाज्जघानोच्चैस्तलेनैव महाबलः ।
वालिपुत्रो महाशूरः सर्परोमाणमग्रतः । [340]
सर्परोमा पपातोर्व्यां गतसत्त्वो गतेन्द्रियः ।
नीलेन तु समाहूतो रणे वृश्चिकरोमकः ।
नीलोपरि पपाताशु हतो वृश्चिकरोमकः ।
दशग्रीवस्य पुरतो ह्यग्निवर्णो महासुरः ।
राघवाभिमुखो याति त्रासयन्सर्ववानरान् । [345]
तं ज्वलन्तं तदा दृष्ट्वा राघवो विस्मयं ययौ
अग्निः किं रावणस्यार्थे दग्धुं मां किल निर्गतः ।
इति शङ्कावृतं राममुवाच स विभीषणः ।
राक्षसो ह्यग्निवर्णोऽयं निर्दहेत्पर्वतानपि ।
बिभीषणवचः श्रुत्वा राघवो रणकोविदः । [350]
वारुणास्त्रेण संयुक्तैरिषुभिः संववर्ष तम् ।
रामास्त्रेण हतो भूमौ वह्निरोमा पपात ह ।
ततो जगर्जुः सहसा प्लवंगमा
　　हतान्निरीक्ष्याथ च राक्षसान्रणे ।
विवर्णभूतोऽपि बभूव रावणो
　　बाणैः सुघोरैश्च ववर्ष राघवम् । [355]

Colophon

हतं संस्कृत्य पुत्रं तु शक्रजेतारमाहवे ।
कुम्भकर्णं महावीर्यं भ्रातरं विपुलौजसम् ।
प्रहस्तादीनमात्यांश्च सर्वान्संस्कृत्य पातितान् ।
राज्याशां जीविताशां च त्यक्त्वैश्वर्यस्पृहां तदा । [360]
बन्धुशोकसमाविष्टः क्रोधात्मा क्रोधमाहरत् ।
यथा मध्यंगतो भानुर्दुर्निरीक्ष्यो दिनस्य तु ।
तथा क्रोधप्रदीप्ताङ्गो रावणः संबभूव ह ।
आत्मानमात्मनाश्वास्य रावणः क्रोधमूर्छितः ।
संग्रामाभिमुखो राममब्रवीत्परुषं वचः । [365]
राम त्वं हि समाश्वस्तः समाश्वस्तस्ततो ह्यहम् ।
स्थितस्त्वया समं योद्धुं तिष्ठेदानीं स्थिरो भव ।
विरथो नास्मि संवृत्तस्त्वत्सकाशादरिंदम ।
क्रमेण परिबद्धश्च तेनाहमपयातवान् ।
नाहं बिभेमि देवानां समस्तानामपि प्रभुः । [370]
किं पुनर्वानराणां तु यानेतानाश्रितो भवान् ।
यत्ते वीर्यं बलं तेजः सम्पदस्तेषु या प्रभो ।

---

18* अभ्यद्रवत काकुत्स्थं स्वर्भानुरिव भास्करम् ।

—(l. 318) D9 T3 -लोमा (for -रोमा). T2 पुरा (for पुरो). —(l. 323) D9 कर्कशं तथा (for रणकर्कशम्). —(l. 324) D9 संत्रस्ता सा (for संतत्रास). —(l. 326) D9 समायातो. —(l. 327) T3 तस्यैव (for तेनैव). D9 सहसा (for सह सं-). —D9 om. l. 328–329. —(l. 329) T3 रोमभल्लैः (for लोमभिस्तैः). —(l. 331) D9 वक्त्रम् (for पृष्ठम). —(l. 332) D9 तस्य ग्रहतो; T3 गगनात्तस्माद् (for गहनात्तस्माद्). —(l. 334) D9 तथा (for तदा). —(l. 338) D9 -रोमकः (for -लोमकैः). —(l. 339) D9 तं तु कोपाज् (for ततः क्रोधाज्). D9 च (for [ए]व) and महासुरे (for °बलः). —(l. 341) D9 [ऽ]जितेंद्रियः. —(l. 342) D9 च (for तु). —T3 om. (hapl.) l. 343. —(l. 343) D9 नीलेन च (for नीलोपरि). —(l. 347) D9 उद्यतः स्वयं (for किल निर्गतः). —(l. 348) D9 शंकान्वितं (for शङ्कावृतं). D9 T3 च (for स). —(l. 349) D9 सर्ववानरान् (for पर्वतानपि). —(l. 350) D9 रणपंडितः. —(l. 351) D9 तं ववर्ष. D4 च; D9 ह (for तम्). —(l. 352) T3 ततो (for हतो). D4.9 रामास्त्रप्रहतो. —(l. 353) D9 सहिताः (for सहसा). —(l. 354) D4 हंतुं निरीक्ष्याप्यथ रावणं रणे. —(l. 355) D9 -रूपोथ (for -भूतोऽपि). T3 बभौ च (for बभूव).

Colophon. — *Kāṇḍa name*: D4 लंकाकांडे. —*Sarga name*: D4 रावणयुद्धप्रवेशः. —*Sarga no.* (figures, words or both): D4 om.; D9 84; T2 110; T3 114. —After colophon, T2 (marg.) ins. रावणतृतीययुद्धं.

—(l. 357) D4.9 संस्मृत्य (for संस्कृत्य). D4 च (for तु). —(l. 358) D9 प्रथित- (for विपुल-). —(l. 359) D4.9 संस्मृत्य (for संस्कृत्य). —(l. 360) D4 T3 तथा; D9 च तां (for तदा). —(l. 361) D9 क्रूरात्मा (for क्रोधात्मा). D4 क्रूरात्मा क्रोधमान्भवत् (for the post. half). —(l. 362) D9 मध्यगतो (for मध्यं°). D4.9 जनस्य (for दिनस्य). —(l. 363) D4 -परीत- (for -प्रदीप्त-). D4.9 स (for सं-). —(l. 366) D4 तथापि; D9 तथा हि (for ततो हि). —(l. 368) D4.9 च (for न). —(l. 369) D9 श्रमेण; T3 क्रमेन (for क्रमेण). —D9 om. l. 370–372. —(l. 370) D4 नाहं बिभे सुराणां हि (for the prior half). —(l. 371) D4 येषामाश्रयिता भवान् (for the post. half). —(l. 372) T3 संपदस्ति मया प्रभो (for the post. half). —(l. 373)

तद्दर्शय ममाद्य त्वं पुरुषो भव राघव ।
काकुत्स्थोऽपि महातेजाः श्रुत्वा रावणभाषितम् ।
न किंचिदुक्त्वा धर्मात्मा तस्थौ संग्राममूर्धनि । [375]

## 63

After 6.90. $1^{ab}$, Ś Ñ2 B2 (after first occurrence of $1^{ab}$) D2.8.12 ins.:

उवाच हितमत्यर्थं राघवो रघुनन्दनम् ।
तदेतन्मे मतमहो यथा वदसि लक्ष्मण ।
न प्रतिज्ञां प्रकुर्वन्ति वितथां साधवो जनाः ।
प्रतिज्ञातं मया तस्य रावणस्य दुरात्मनः ।
अहमेनं वधिष्यामि सत्यमेतद्वदामि वः । [5]
विध्वंसये शरैस्तीक्ष्णैर्दिवसो ह्यतिवर्तते ।
प्रतिज्ञां रघुशार्दूल सफलां कर्तुमर्हसि ।
एवमुक्त्वा ततो राम इक्ष्वाकुकुलनन्दनम् ।
विभीषणमिदं वाक्यं प्रत्युवाच महायशाः ।
क्वासौ लङ्केश्वरः क्षुद्रो रावणो युद्धदुर्मदः । [10]
रणभूमिं परित्यज्य क्वास्ते किं चास्य चेष्टितम् ।
मयि छिद्रे प्रहर्ता च कृतपापश्च राक्षसः ।
बोद्धव्यं च त्वया वीर शीघ्रमेव ममाज्ञया ।
रामस्य वचनं श्रुत्वा तत्कालार्थसमन्वितम् ।
उवाच वचनं धीमान्राममेतद्विभीषणः । [15]
प्रविवेश पुरीं तूर्णं लङ्कामेव सहानुगः ।
सोऽवतीर्य रथात्तत्र वधमिच्छंस्तवानघ ।
चिन्तयामास स तदा वरदानमथाद्भुतम् ।
यद्दत्तं शम्भुना पूर्वं सर्वशत्रुविनाशनम् ।
अमेयं सप्तभिर्लोकैः ससुरासुरमानवैः । [20]
रथं सर्वायुधोपेतं दिव्यमद्भुतदर्शनम् ।
युक्तमश्वैर्महावेगैः कामगैः कामरूपिभिः ।
अभेद्यं कवचं चापि सर्वास्त्रैरपि संवृतम् ।
तस्य होमस्य कालोऽयं देवायतनमास्थितः ।
जुहोत्यग्निं समाधिस्थो रौद्रमन्त्रैर्महायशाः । [25]
तस्य यावत्तु तत्कर्म न सिध्यति दुरात्मनः ।
तस्य तावत्त्वया राम विघ्नः कार्यो बलीयसः ।
अवध्यः समरे तस्मिन्कृते कर्मणि रावणः ।
चारैर्मम समाख्यातं यत्र संपरिवर्तते ।
विभीषणस्य तद्वाक्यमतिघोरं भयावहम् । [30]
श्रुत्वा रामो महातेजाः सुग्रीवमभिवीक्ष्य च ।
आज्ञापयामास तदा विघ्नं कुरु भयंकरम् ।
सुषेणं च गवाक्षं च गवयं च महाबलम् ।
अङ्गदं च हनूमन्तं शरभं गन्धमादनम् ।
ऋक्षसेनापतिं चैव नीलं चैव महाबलम् । [35]
लब्धाज्ञास्ते महावीर्या यूथपाः कृतनिश्चयाः ।
उत्तस्थुस्ते बलैः सार्धं गर्जन्त इव तोयदाः ।
ते शिलापादपधरा महाकाया महाबलाः ।
गर्जन्तो भेजिरे सर्वे जङ्गमा इव पर्वताः ।

---

D4 दर्शयस्व (hypm.) (for दर्शय). D9 पौरुषं भज राघव (for the post. half). —(l. 374) T3 महाबाहुः. —After l. 375, D9 ins.:

19* लक्ष्मणस्तु वचः श्रुत्वा संव्रीडितमनास्तदा ।
रोषेणैव शरान्वीरो विससर्ज महाबलः ।
विसृजन्तं शरान्घोरान्समतिक्रम्य लक्ष्मणम् ।
विवृत्य नयने धीरो रावणो लोकरावणः ।

**63**

(l. 1) D8 अभ्यर्थं (for अत्यर्थं). L (ed.) राघवं. D2 रघुनंदनः. Ñ2 B2 लक्ष्मणं समितिंजयः (for the post. half). —(l. 2) Ñ2 B2 D2 एवमेतन्महाबाहो (for the prior half). —(l. 4) Ñ2 B2 यत्तु and रावणं लोकरावणं (for तस्य and the post. half respy.). —(l. 5) Ñ2 B2 D2 एव (for एनं) and ब्रवीमि (for वदामि). —(l. 6) Ñ2 B2 विध्वंसयन्; L (ed.) विध्वंसय (for विध्वंसये). Ñ2 B2 D2 दिवसे ह्यनिवर्तिते (for the post. half). —(l. 7) Ñ2 B2 प्रतिज्ञां सफलामद्य करिष्ये नात्र संशयः. —(l. 8) Ñ2 D2 -कुलनंदनः. —For l. 9–15; l. 16–29; l. 30–68; l. 70 and 72; l. 109–112 and l. 121–123, cf. l. 38–44; l. 46–60; l. 63–74 and 94–122; l. 128 and 129; l. 135–138 and l. 209–211 of No. 62. —(l. 9) Ś D8 महाबलः (for °यशाः). —(l. 10) D2 को (for क्व). Ś क्रुद्धो; Ñ2 B2 क्रूरो (for क्षुद्रो). —(l. 11) Ñ2 B2 वा (for च). —(l. 12) L (ed.) छिद्र- (for छिद्रे). Ś D8.12 मयि छिद्रप्रहर्ता वा (for the prior half). Ñ2 B2 D2 रावणः (for राक्षसः). —(l. 13) Ś D2.8.12 योद्धव्यं; B2 योद्धव्यस् (for बोद्धव्यं). Ñ2 B2 तु (for च) and एतन् (for एव). —(l. 15) B2 वीरो (for धीमान्). Ñ2 B2 एव (for एतद्). —(l. 16) B2 transp. तूर्णं and लङ्काम्. —(l. 17) B2 इच्छुस् (for इच्छंस्). —(l. 18) Ñ2 B2 दुष्टात्मा; L (ed.) काकुत्स्थ (for स तदा). —(l. 19) Ñ2 सृष्टं (for दत्तं). —(l. 20) Ñ2 B2 D2 अजेयं. Ñ2 B2 -मानुषैः (for -मानवैः). —(l. 21) B2 अश्रुत- (for अद्भुत-). —(l. 22) Ñ2 -रूपिणं (for -रूपिभिः). —(l. 23) Ñ2 B2 अभि- (for अपि). —(l. 24) Ñ2 B2 आश्रितः (for आस्थितः). —(l. 25) D2 रौद्रैर् (for रौद्र-). —(l. 26) D2 तावत्तु यत् (for यावत्तु तत्). Ś D8.12 सं- (for न). —(l. 27) D2 वीर (for राम). Ñ2 B2 तावत्त्वया महावीर (for the prior half). —(l. 28) Ñ2 B2 D2 राक्षसः (for रावणः). —(l. 29) Ñ2 B2 [अ]सौ (for सं-). —(l. 31) D2 L (ed.) स्वबलं चापि (L [ed.] °भि-) (for सुग्रीवमभि-). Ś D8.12 स्वबलं तमवेक्ष्य च (for the post. half). —(l. 32) Ś D8.12 विघ्नंकरभयंकरान्; L (ed.) विघ्नार्थं दश यूथपान् (for the post. half). —B2 om. l. 33. —(l. 33) L (ed.) माल्यवंतं सुषेणं च गवाक्षं गवयं तथा. —(l. 35) D2 ऋक्षं. Ñ2 B2 [अ]पि (for second [ए]व). —(l. 36) Ś Ñ2 लब्ध्वाज्ञास; L (ed.) लब्ध्वाज्ञास् (for लब्धाज्ञास्). —(l. 37) B2 D2 हरिभिः (for ते बलैः). —Ñ2 reads l. 38–39 twice. —(l. 39) D2 लेभिरे; L (ed.) रेजिरे (for भेजिरे). Ñ2

क्षणात्संप्राप्य नगरीं लङ्कां रावणपालिताम् । [ 40 ]
प्राकारमपि चाप्लुत्य विविशुस्ते प्लवंगमाः ।
ददृशुर्देवतागारे रावणं रक्षिरक्षितम् ।
स्रुचहस्तं समासीनं प्राङ्मुखं रक्तवाससम् ।
रक्तोष्णीषधरं वीरं किरीटोच्छ्रितशृङ्गिणम् ।
हारनिर्झरतोयाढ्यं महावदनकन्दरम् । [ 45 ]
वासोमनःशिलाघोरं रौद्रं रौद्रपराक्रमम् ।
दृष्ट्वा तस्याद्भुतं कर्म वानराः कृतनिश्चयाः ।
हनूमन्तं पुरस्कृत्य सर्वे युद्धाय तस्थिरे ।
राक्षसास्तु महावीर्याः प्रासासिपरिघायुधाः ।
दंशितास्तस्थिरे सर्वे युद्धायामितविक्रमाः । [ 50 ]
ते बलेऽन्योन्यमासाद्य घोरवानरराक्षसे ।
चक्रुस्ते कदनं घोरमद्भुतं लोमहर्षणम् ।
पादपैः शैलशृङ्गैश्च शिलाभिर्दशनैर्नखैः ।
वानरा राक्षसाञ्जघ्नुस्तलैर्मुष्टिभिरेव च ।
राक्षसाः क्रोधरक्ताक्षास्तथा वानरपुंगवान् । [ 55 ]
नाराचैर्बिभिदुस्तीक्ष्णैश्चिच्छिदुश्च महासिभिः ।
ते छिन्ना भिन्नसर्वाङ्गा वानरास्त्यक्तजीविताः ।
निपेतुर्भूतले भिन्नाः केचिद्रुधिरमुद्वमन् ।
रक्षांसि च तथा पेतुर्वानरैर्भीमविक्रमैः ।
चूर्णितानि शितैः शैलैः पादपैर्मुष्टिभिस्तथा ।
दारितानि मुखैश्चैव दन्तैरपि सुदारुणैः । [ 60 ]
तत्प्रवृत्तं महद्युद्धं कबन्धशतसंकुलम् ।
शूराणां हर्षजननं भीरूणां भयवर्धनम् ।
युद्धं पौरुषशिष्याणां निष्कर्षार्थं मनस्विनाम् ।
यशःपताकाहर्षाणां स्वर्गद्वारमपावृतम् ।
हर्षणं सुरनारीणां सर्वदुष्टविमोक्षणम् । [ 65 ]
तस्मिन्युद्धे महाघोरे रक्षोवानरसंक्षये ।
प्रावर्तत नदी घोरा शोणितोदकवाहिनी ।
शूरप्रमोदजननी भीरूणां भयवर्धिनी ।
प्रमोदानन्दजननी गृध्रकङ्कोत्सवा तदा ।
दुर्गमा ह्यल्पसत्त्वानां सेव्या तेजस्विनां तथा । [ 70 ]
उत्तेरुस्तां नदीं सर्वे यूथपास्ते महौजसः ।
दृष्ट्वापि स्वबलं भग्नं हतवीरं गतप्रभम् ।
राक्षसेन्द्रो न चुक्षोभ जुहावाग्निं समाहितः ।
वानरैस्तद्बलं भग्नं दृष्ट्वा संहृष्टमानसाः । [ 75 ]
अङ्गदप्रमुखाः सर्वे विविशुर्देवतालयम् ।
आस्फोटयामासुस्तदा समीपे तस्य रक्षसः ।
हनूमान्वाक्यमेतच्च सरोषं प्राह रावणम् ।
किमास्सेऽद्य भयं त्यक्त्वा शूरस्त्वं राक्षसाधम ।

(first time) तोयदाः (for पर्वताः).—(l. 42) $B_2$ ऋक्ष- (for रक्षि-).—(l. 43) $\tilde{N}_2$ $B_2$ $D_2$ स्रुव- (for स्रुच-).—After the prior half of l. 44, $\tilde{N}_2$ $B_2$ $D_2$ ins.:

1* पुरा ज्वलितपावकम् ।
विद्युद्भास्वरसंयुक्तं संध्यायामिव तोयदम् ।
तं बाहुपादपधरं.

[ (l. 1) L (ed.) ज्वालित-.—(l. 2) $\tilde{N}_2$ विद्युद्भासमु * * * (for the prior half).]

—(l. 46) $\tilde{N}_2$ $B_2$ $D_2$ L (ed.) वासोमनःशिलाधा( L [ed.] °लध ;रं (for the prior half).—After the prior half, $D_2$ ins.; $\tilde{N}_2$ $B_2$ subst. for the post. half of l. 46 and the prior half of l. 47:

2* गिरिं नीलमिव स्थितम् ।
दृष्ट्वा तमद्भुताकारं.

—$D_2$ om. l. 49–51.—(l. 49) $\tilde{N}_2$ $B_2$ च (for तु).—(l. 51) $\tilde{N}_2$ $B_2$ च ते (for बले). $\tilde{N}_2$ $B_2$ L (ed.) रणे वानरराक्षसाः( L [ed.] °रक्षसां ) (for the post. half).—(l. 52) $\tilde{N}_2$ च; $B_2$ तु (for ते). L (ed.) चक्राते (for चक्रुस्ते). $\tilde{N}_2$ $D_{12}$ रोमहर्षणं; $D_2$ घोरदर्शनं (for लोमहर्षणम्).—(l. 56) $B_2$ विविधैस् (for बिभिदुस्). $B_2$ om. च (subm.).—(l. 57) $B_2$ $D_2$ छिन्नभिन्न- (for छिन्ना भिन्न-).—(l. 58) $\tilde{N}_2$ $B_2$ भग्ना (for भिन्नाः). L (ed.) रुधिरकर्दमे. $\tilde{N}_2$ $B_2$ वमंतो रुधिरं बहु (for the post. half).—(l. 59) Ś$_1$ भिन्न- (for भीम-).—(l. 60) $\tilde{N}_2$ $B_2$ $D_2$ शूलैः (for शैलैः). L (ed.) चूर्णिता विविधैः शैलैः (for the prior half).—(l. 61) L (ed.) दारिताश्च नखैस्तीक्ष्णैर् (for the prior half). $\tilde{N}_2$ $B_2$ चैव (for अपि).—(l. 62) $\tilde{N}_2$ $B_2$ $D_2$ -भट- (for -शत-).—$\tilde{N}_2$ $B_2$ om. l. 64–66. L (ed.) om. l. 64–65.—(l. 65) $D_2$ -तर्पाणां (for -हर्षाणां). Ś$_1$ ध्वज-; Ś$_2$ स्वर्ग (for स्वर्ग-).—(l. 66) $D_2$ पुर- (for सुर-). L (ed.) -दुःख- (for -दुष्ट-).—After l. 68, $\tilde{N}_2$ $B_2$ $D_2$ ins.:

3* नानापताकासंवृत्ता द्विपदेहशिलावृता ।
विकोशासिचरन्मीना मांसक्लेदककर्दमा ।
रथचक्रमहाग्राहा पाशपट्टिशभोगिनी ।
शीर्णाभरणरत्नाढ्या हतशूरमुखाम्बुजा ।
चर्मकच्छपसंबाधा वस्त्रफेनावगाहिनी । [5]

[ (l. 1) $\tilde{N}_2$ $B_2$ -तटा (for -वृता).—(l. 2) $D_2$ -[अ]सिवरा- (for -[अ]सिचरन्-).—(l. 5) $D_2$ -संयुक्ता (for -संबाधा).]

—(l. 69) Ś$_2$ $D_{2,12}$ -वर्धनी (for -वर्धिनी).—(l. 70) $\tilde{N}_2$ $B_2$ $D_2$ क्रव्याद- (for प्रमोद-). $\tilde{N}_2$ $B_2$ $D_2$ -[उ]त्सवासवा ($D_2$ °वांभसा) (for -[उ]त्सवा तदा).—(l. 71) $\tilde{N}_2$ $B_2$ दुर्गमामल्प-. $\tilde{N}_2$ $B_2$ सेव्यां (for सेव्या).—(l. 72) $D_2$ ते (for तां) and सर्वां (for सर्वे).—After l. 72, $\tilde{N}_2$ $B_2$ $D_2$ ins.:

4* नरा विच्छिन्नपाप्मानो नदीं वैतरणीमिव ।
राक्षसा हतभूयिष्ठा विरथा हततेजसः ।
त्यक्तसंग्रामसंघास्ते भेजिरे सर्वतो दिशः ।

—(l. 73) Ś $D_{8,12}$ वानराश्च (for दृष्ट्वापि स्व-). $\tilde{N}_2$ $B_2$ $\tilde{N}_3$ $D_8$ हतप्रभं.—(l. 77) $D_2$ यदा (for तदा).—(l. 78) $\tilde{N}_2$ $B_2$ $D_2$ सरोषः (for सरोषं). $D_8$ प्राणहारकं (for प्राह रावणम्). Ś—(l. 79) $D_2$ किमासने भयं त्वद्य (for the prior half).

